# सूचना.

——oo——

पूर्वीं प्रसिद्ध केलेल्या जाहिरातीमध्ये "सुभाषितरत्नभाण्डागारा"चे मान ४०० पृष्ठांचे लिहिले होते. परतु छापण्यास आरभ केल्यानतर कित्येक उदार मित्रांकडून इतका नवीन सग्रह आला, व अजूनही येत आहे कीं, अशा दाट छापणीचीं ४५० पृष्ठे भरलीं, तरी अद्यापि आणखी इतकाच ग्रथ वाढेल असा अजमास आहे. याकरितां हा भाग येथेंच पुरा करणे प्राप्त झाले. बाकी राहिलेल्या ग्रंथाचा सग्रह दुसऱ्या भागामध्ये आम्हीं करणार आहों. तथापि या प्रथम भागामध्ये आलेले कोणतेही प्रकरण अपुतें राहिले आहे असे समजू नये. प्रत्येक प्रकरण पूर्ण आहे आणि राहिलेली प्रकरणे भिन्न विषयांचीं असल्यामुळे या भागाला कोणत्याही प्रकारें तुटकपणा येत नाहीं.

दुसऱ्या भागामध्ये, यांतलीं राहिलेली, आणि प्राचीन प्राचीन अतिदुर्मिळ अशी वग (बंगाल) इत्यादि देशांतून कित्येक मोठ्या विद्वान् गृहस्थांच्या खटपटीने आणविलेली सुभाषिते येतील.

अशा मोठ्या ग्रंथाच्या अवलोकनाला कांहीं विशेष सोई असली पाहिजे, ह्मणून दोन्ही भागांमध्ये आलेल्या पद्याची सूची, आणि तीत जेथच्या तेथे सुमारे ५०० कवीचीं नांवे दिलीं जातील.

सस्कृत भाषेच्या विद्यार्थ्यांस अत्युपयोगी आणि अत्यावश्यक असा त्यांत एक निबंधही येईल. त्यांत संस्कृत कवी, त्यांचे ग्रथ व काल इत्यादिकाविषयीं आलीकडील शोधांवरून लिहिलेली माहिती आढळेल.

या ग्रंथाच्या छपाईविषयीं इतके सांगणे जरूर आहे की हा भाग रा० बाबाजी काशिनाथजी यांच्या मुबई येथील कारखान्यांत बनविलेल्या देशी कागदांवर छापला आहे. दक्षिणेमध्ये देशी कागदांवर छापलेला ग्रथ असा हा पहिलाच. हा कागद विलायती कागदापेक्षां किंचित् महाग आहे पण चिवट असून दिसण्यामध्येही सुरेख आहे. विशेष उत्तेजन मिळाल्यास याहून गुळगुळीत व सफाईदार कागद या कारखान्यांत बनवितां येतील अशी आमची खात्री आहे.

जावजी दादाजी.
जनार्दन महादेव गुर्जर.

# विज्ञप्तिः ।

—oo—

शास्त्राब्धिं सकलं विलोड्य नितरां ग्रन्थः कृतोऽयं मया
लोकानन्दकरः समस्तसुकलासंतानजैवातृकः ।
अस्यास्वाद्य सुभाषितामृतरसानानन्दपूर्णान्तरा
इत्थं संप्रति नाकवासनिरतान्देवान्हसन्तु ध्रुवम् ॥ शार्ङ्गधरस्य ॥
ते सज्जनाः सुकविशाखिकविल्वपुष्पाण्यादाय गुम्फितवतः सुगुणैर्ममैतत् ।
संधारयन्तु कुसुमोज्ज्वलहाररूपं कण्ठे सुभाषितमपास्तसमस्तदोषम् ॥ शार्ङ्गधरस्य ॥

---

दृष्टं किमपि लोकेऽस्मिन्न निर्दोषं न निर्गुणम् ।
आवृणुध्वमतो दोषान्विवृणुध्वं गुणान्बुधाः ॥ चण्डकौशिके ॥

# विषयानुक्रमः ।

## प्रकरणम् १— मङ्गलाचरणम् ।



## प्रकरणम् २— सामान्यप्रकरणम् ।

# प्रकरणम् ३ – राजप्रकरणम् ।

# प्रकरणम् ४— चित्रप्रकरणम् ।

# प्रकरणम् ५— अन्योक्तिप्रकरणम् ।

---

## प्रकरणम् ८— नवरसप्रकरणम् ।

॥ श्रीः ॥

# सुभाषितरत्नभाण्डागारम् ।

## प्रकरणम् १ ।

### परब्रह्म ।

अथ स्वस्थाय देवाय नित्याय हतपाप्मने[1] । त्यक्तक्रम[2]विभागाय चैतन्यज्योतिषे नमः ॥ १ ॥ दिक्कालाद्यनवच्छिन्ना[3]नन्तचिन्मात्रमूर्तये । स्वानुभूत्येकमानाय[4] नमः शान्ताय तेजसे ॥ २ ॥ मध्याह्नार्कमरीचिका[5]स्विव पयःपूरो यदज्ञानतः खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति[6] । यत्तत्त्वं विदुषां निमीलति[7] पुनः स्रग्भोगि[8]भोगोपमं सान्द्रानन्द[9]मुपास्महे तदमलं स्वात्मावबोधं[10] महः[11] ॥ ३ ॥ यस्माद्विश्वमुदेति यत्र रमते यस्मिन्पुनर्लीयते भासा यस्य जगद्विभाति सहजानन्दोज्ज्वलं यन्महः । शान्तं शाश्वतमक्रियं[12] यमपुनर्भावाय[13] भूतेश्वरं द्वैतध्वान्तमपास्य यान्ति कृतिनः प्रस्तौमि तं पूरुषम् ॥ ४ ॥ यः सृष्टिस्थितिसंहृतीर्वितनुते ब्रह्मादिमूर्तित्रिकैर्यस्याधीनतया स्थितानि सदसत्कर्माण्यपि प्राणिनाम् । नित्येच्छाकृतिबुद्धिमानथ परो जीवात्परात्मा स्वयं सोऽयं वो विदधातु पूर्णमचिराच्चेतोगतं यद्भवेत् ॥ ५ ॥ शक्यं यन्न विशेषतो निगदितुं प्रेम्णैव यच्चिन्तितं मृद्वङ्गीवदनेन्दुमण्डलमिव स्वान्ते विधत्ते मुदम्[14] । यन्मुग्धानयनान्तचेष्टितमिवाध्यक्षे[15]ऽपि नो लक्षितं तत्तेजो विनयादमन्द[16]हृदयानन्दाय वन्दामहे ॥ ६ ॥ विश्वेशो वः स पायात्त्रिगुणसचिवतां[17] योऽवलम्ब्यानुवारं[18] विश्वं ध्रीचीन[19]सृष्टिस्थितिविलयमजः स्वेच्छया निर्मिमीते । यस्येयत्तां[20] अतीत्य प्रभवति महिमा कोऽपि लोकव्यतीत[21]स्त्यक्तो यश्चक्षुराद्यैरपि निपुणतमैर्वीक्षणादिक्रियासु ॥ ७ ॥

---

१ नाशितकिल्बिषाय २ विधि ३. अविषयीकृता ४ प्रमाणम् ५ आकाशे दृश्यमानगलज्जलायमानरश्मिसमूह मृगतृष्णेति यावत् ६. ब्रह्माभिन्नतया तत्त्वेन भ्रमविषयीभवति ७ खवाय्वादिरूपतद्भिन्नत्वेन भ्रमाविषयीभवति ८ भ्रमेण गृहीतो मालाया सर्पकाय इव ९. निर्विद्यानन्दस्वरूपम् १० ब्रह्मात्मकज्ञानस्वरूपम् ११ तेजः. १२ निश्चलम् १३ पुनरुत्पत्त्यभावाय १४ आनन्दम् १५ समीपस्थेऽपि. १६ बहु १७. सत्त्वरजस्तम सहायताम् १८. वारवारम्. १९. चराचरनिष्ठम् २०. सीमाम् २१. सकललोकातीत

## गणेशः ।

वन्दे वन्दारुमन्दारमिन्दुभूषणनन्दनम् । अमन्दानन्दसंदोहबन्धुरं सिन्धुराननम् ॥ १ ॥ आलम्बे जगदालम्बे हेरम्बचरणाम्बुजे । शुष्यन्ति यद्रजःस्पर्शात्सद्यः प्रत्यूहवार्धयः ॥ २ ॥ गजाननाय महसे प्रत्यूहतिमिरच्छिदे । अपारकरुणापूरतरङ्गितदृशे नमः ॥ ३ ॥ नमस्तस्मै गणेशाय यत्कण्ठः पुष्करायते । मदाभोगघनध्वानो नीलकण्ठस्य ताण्डवे ॥ ४ ॥ अगजाननपद्मार्कं गजाननमहर्निशम् । अनेकदं तं भक्तानामेकदन्तमुपास्महे ॥ ५ ॥ चलत्कर्णानिलोद्धूतसिन्दूरारुणिताम्बरः । जयत्यकाले विसृजन्संध्यामिव गजाननः ॥ ६ ॥ एकदन्तद्युतिसितः शंभोः सूनुः श्रियेऽस्तु वः । विद्याकन्द इवोद्भिन्ननवाङ्कुरमनोहरः ॥ ७ ॥ अविरलविगलन्मदजलकपोलपालीनिलीनमधुपकुलः । उद्भिन्ननवश्मश्रुश्रेणिरिव द्विपमुखो जयति ॥ ८ ॥ एकरद द्वैमातुर निस्त्रिगुण चतुर्भुजापि पञ्चकर । जय षण्मुखनुत सप्तच्छदगन्धिमदाष्टतनुतनय ॥ ९ ॥ मङ्गलकलशद्वयमयकुम्भमदम्भेन भजत गजवदनम् । यद्दानतोयतरलैस्तिलतुलनालम्बि रोलम्बैः ॥ १० ॥ शिवयोः सुधाहरिद्रादीप्तिमतोः सारभृज्जगतिपित्रोः । त्रिभुवनविघ्नध्वंसी करिकल्पः कश्चिदरुणिमा जयति ॥ ११ ॥ युगपत्स्वगण्डचुम्बनलोलौ[17] पितरौ निरीक्ष्य हेरम्बः । तन्मुखमेलनकुतुकी स्वाननमपनीय परिहसन्पायात् ॥ १२ ॥ अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् । तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥ १३ ॥ अशेषविघ्नप्रतिषेधदक्षमन्त्राक्षतानामिव दिङ्मुखेषु । विक्षेपलीला करशीकराणां करोतु वः प्रीतिमिभाननस्य ॥ १४ ॥ दन्ताग्रनिर्भिन्नहिमाचलोर्वीरन्ध्रोत्थिते हीरमणिप्रभौघे । नागाननस्तम्भधिया कपोलौ घर्षन्पितृभ्यां हसितः पुनातु ॥ १५ ॥ दन्ताञ्चलेन धरणीतलमुन्नमय्य पातालकेलिषु धृतादिवराहलीलम् । उल्लाघनोत्फणफणाधरगीयमानक्रीडावदानमिभराजमुखं नमामः ॥ १६ ॥ आनन्दमात्रमकरन्दमनन्तगन्धं योगीन्द्रसुस्थिरमिलिन्दमपास्तबन्धम् । वेदान्तसूर्यकिरणैकविकासशीलं हेरम्बपादशरदम्बुजमानतोऽस्मि ॥ १७ ॥ गण्डस्थलीगलदमन्दमदप्रवाहमाद्यद्द्विरेफमधुरस्वरदत्तकर्णः । हर्षादिवालसनिमीलितनेत्रयुग्मो विघ्नच्छिदे भवतु भूतपतिर्गणेशः ॥ १८ ॥ लक्ष्मीं तनोतु सुतरामितरानपेक्षमङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् । हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं[23] विघ्नाद्रिभेदशतधारधुरंधरं नः ॥ १९ ॥ विघ्नध्वान्तनिवारणैकतरणिर्विघ्नाटवीहव्यवाड्विघ्नव्यालकुलाभिमानगरुडो विघ्नेभपञ्चाननः । विघ्नोत्तुङ्गगिरिप्रभेदनपविर्विघ्नाम्बुधौ वाडवो विघ्नाघौघघनप्रचण्डपवनो वि-

१ भक्तजनकल्पवृक्षम् २ सुन्दरम् ३. गजाननम् ४ जगदाधारभूते. ५. विघ्नसमुद्रा. ६ मृदङ्गवदाचरति ७ गिरिदभ्वनि ८ पार्वती. ९ मोक्षाद्यनेकवस्तुदातारम् १०. गणेशम्. ११ पार्वतीगङ्गारूपमातृद्वयसत्त्वादस्यर्थ १२ शुण्डामादाय पञ्चकरत्वमित्यर्थ १३ महादेव.. १४ भ्रमरै. १५ चूर्णम् १६. हस्ततुल्य. १७ लुब्धौ १८ विघ्न १९ शुण्डा. २०. दन्ताग्रेण २१ हर्षित. २२ कृतक्रीड २३ अधीनम् २४ वज्रम् २५ अग्नि

घ्नेश्वरः पातु वः ॥ २० ॥ उच्चैर्ब्रह्माण्डपिण्डद्वितयसहचरं कुम्भयुग्मं दधानः प्रेङ्खन्नागारिपक्षप्रतिभटविकटश्रोत्रतालाभिरामः । देवः शंभोरपत्यं भुजगपतितनुस्पर्धिवर्धिष्णुहस्तैस्त्रैलोक्याश्चर्यमूर्तिः स जयति जगतामीश्वरः कुञ्जरास्यः ॥ २१ ॥ दोर्द्योतद्दन्तखण्डः सकलसुरगणाडम्बरेषु प्रचण्डः सिन्दूराकीर्णगण्डः प्रकटितविलसच्चारुचान्द्रीयखण्डः । गण्डस्थानन्तघण्डः स्मरहरतनयः कुण्डलीभूतशुण्डो विघ्नानां कालदण्डः स भवतु भवतां भूतये वक्रतुण्डः ॥ २२ ॥ विघ्नेशो वः स पायाद्विहृतिषु जलधीन्पुष्करग्रेण पीत्वा तस्मिन्नुद्धृत्य हस्तं वमति तदखिलं दृश्यते व्योम्नि देवैः । क्वाप्यम्भः क्वापि विष्णुः क्वचन कमलभूः क्वाप्यनन्तः क्व च श्रीः क्वाप्यौर्वः क्वापि शैलाः क्वचन मणिगणाः क्वापि नक्रादिसत्त्वाः ॥ २३ ॥ उच्चैरुत्तालगण्डस्थलबहुलगलद्दानपानप्रमत्तस्फीतालिव्रातगीतिश्रुतिविधृतिकलोन्मीलितार्धाक्षिपक्ष्मा । भक्तप्रत्यूहपृथ्वीरुहनिवहसमुन्मूलनोच्चैरुदञ्चच्छुण्डादण्डाग्र उग्रार्भक इभवदनो वः स पायादपायात् ॥ २४ ॥ कल्याणं वो विधत्तां करटमदधुनीलोलकल्लोलमालाखेलल्लोलम्बकोलाहलमुखरितादिक्चक्रवालान्तरालम् । मत्तं वेतण्डरत्नं सततपरिचलत्कर्णतालप्ररोहद्वाताङ्कूराजिहीर्षादरविवृतफणाशृङ्गभूषाभुजंगम् ॥ २५ ॥ यः सिन्धौ फेनराशिर्भुवि कुमुदवनं व्योम्नि नक्षत्रलक्ष्मीरब्धौ मुक्तासमूहस्तरुषु सुमनसो मानसे हंससंघः । श्रीकण्ठे भूतिलेशः शिखरिषु मणयो दिक्षु नीहारपानः पाण्डुः शुण्डाग्रजन्मा जयति गणपतेः शीकराणां विलासः ॥ २६ ॥ सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हित्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसंकोचभाजि । गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणेर्वैनायक्यश्चिरं वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥ २७ ॥

---

## सरस्वती ।

धातुश्चतुर्मुखीकण्ठशृङ्गाटकविहारिणीम् । नित्यं प्रगल्भवाचालामुपतस्थे सरस्वतीम् ॥ १ ॥ सूक्ष्माय शुचये तस्मै नमो वाक्तत्त्वतन्तवे । विचित्रो यस्य विन्यासो विदधाति जगत्पटम् ॥ २ ॥ तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे । यत्प्रसादात्प्रलीयन्ते मोहान्धतमसश्छटाः ॥३॥ पातु वो निकषग्रावा मतिहेम्नः सरस्वती । प्राज्ञेतरपरिच्छेदं वचसैव करोति या ॥ ४ ॥ शारदा शारदाम्भोजवदना वदनाम्बुजे । सर्वदा सर्वदास्माकं संनिधिं संनिधिं क्रियात् ॥ ५ ॥ करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः । पश्यन्ति सूक्ष्ममतयः सा जयति सर-

---

१. तुल्यम्. २ आधुन्वन् ३ गरुड. ४ प्रतिस्पर्धि. ५ शुण्डादण्डः ६ भ्रमर. ७. शुण्डाग्रेण ८. शेष. ९ वाडव १० बहु ११. भ्रमरसमुदाय. १२ पर्वत.. १३. गण्डस्थल. १४. मदोदकसरित् १५ पुरातनम् १६ गजश्रेष्ठ. १७. ईषत् १८. अग्रभाग. १९. हिमम् २० मृदङ्ग २१. मयूर २२ भयात् २३ फणा २४ चालनम् २५ चतुष्पथम् २६ समूह. २७ स्वर्णादिपरीक्षणशिला. २८ अज्ञानम् २९ सर्वदात्री ३० उत्तमनिधिम्. ३१ कुशाग्रबुद्धय

स्वती देवी ॥ ६ ॥ शरणं करवाणि शर्मदं ते चरणं वाणि चराचरोपजीव्यम् । करुणामसृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहम् ॥ ७ ॥ आशासु राशीभवदङ्गवल्लीभासैव दासीकृतदुग्धसिन्धुम् । मन्दस्मितैर्निन्दितशारदेन्दुं वन्देऽरविन्दासनसुन्दरि त्वाम् ॥ ८ ॥ वचांसि वाचस्पतिमत्सरेण साराणि लब्धुं ग्रहमण्डलीव । मुक्ताक्षसूत्रत्वमुपैति यस्याः सा सम्प्रसादास्तु सरस्वती वः ॥ ९ ॥ ज्योतिस्तमोहरमलोचनगोचरं तज्जिह्वादुरासदरसं मधुनः प्रवाहम् । दूरे त्वचः पुलकबन्धि परं प्रपद्ये सारस्वतं किमपि कामदुघं रहस्यम् ॥ १० ॥ तव करकमलस्थां स्फाटिकीमक्षमालां नखकिरणविभिन्नां दाडिमीबीजबुद्ध्या । प्रतिकलमनुकर्षन्येन कीरो निषिद्धः स भवतु मम भूत्यै वाणि ते मन्दहासः ॥ ११ ॥ तमोगणविनाशिनी सकलकालमुद्द्योतिनी धरातलविहारिणी जडसमाजविद्वेषिणी । कलानिधिसहायिनी लसदलोलसौदामिनी मदन्तरवलम्बिनी भवतु कापि कादम्बिनी ॥ १२ ॥ या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना । या ब्रह्माच्युतशंकरप्रभृतिभिर्देवैः सदा वन्दिता सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥ १३ ॥

---

## शिवः ।

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे । त्रैलोक्यनगरारम्भमूलस्तम्भाय शंभवे ॥ १ ॥ वामाङ्गीकृतवामाङ्गि कुण्डलीकृतकुण्डलि । आविरस्तु पुरो वस्तु भूतिभूत्यम्बराम्बरम् ॥ २ ॥ निरुपादानसंभारमभित्तावेव तन्वते । जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ ३ ॥ पिनाकफणिबालेन्दुभस्ममन्दाकिनीयुता । पवर्गरचिता मूर्तिरपवर्गप्रदायिनी ॥ ४ ॥ स जयति हिमकरलेखा चकास्ति यस्योमयोत्सुकान्निहिता । नयनप्रदीपकज्जलजिघृक्षया रजतशुक्तिरिव ॥ ५ ॥ पाणिग्रहे पुलकितं वपुरैशं भूतिभूषितं जयति । अङ्कुरित इव मनोभूर्यस्मिन्भस्मावशेषोऽपि ॥ ६ ॥ मा वम संवृणु विषमिदमिति सातङ्कं पितामहेनोक्तः । प्रातर्जयति सलज्जः कज्जलमलिनाधरः शंभुः ॥ ७ ॥ जयति प्रियापदान्ते गरलग्रैवेयकः स्मरारातिः । विषमविशिखे विशन्निव शरणं गलबद्धकरवालः ॥ ८ ॥ संध्यासलिलाञ्जलिमपि कङ्कणफणिपीयमानमविजानन् । गौरीमुखार्पितमना विजयाहसितः शिवो जयति ॥ ९ ॥ प्रणयकुपितप्रियापदलाक्षासंध्यानुबन्धमधुरेन्दुः । तद्वलयकनकनिकषग्रावग्रीवः शिवो जयति ॥ १० ॥ जयति जटाकिञ्जल्कं गङ्गामधु मुण्डवलयबीजमयम् । गलगरलपङ्कसंभवमम्भोरुहमाननं शंभोः

---

१ [illegible]. २. स्फटिकमयीम् ३. जपमालाम् ४ मिश्राम्. ५. प्रतिक्षणम् ६. अज्ञानम्, (पक्षे) अन्धकार ७ [illegible] ; (पक्षे डलयोः सावर्ण्यात्) जलम्. ८ विद्वज्जन, (पक्षे) चन्द्रः ९ मेघमाला. १०. [illegible]. ११ [illegible]. १२. दिगम्बरम् १३ उपकरणम्, (पक्षे) तुलिकादिकम् १४ सपत्तिः, (पक्षे) स[illegible] १५. नानाप्रकारम्; (पक्षे) आलेख्यम् १६ चन्द्रकला, (पक्षे) आलेख्यक्रियाकौशलम्. १७ मोक्ष. १८. [illegible] १९. भस्म २०. [illegible] २१ मदन. २२. आरम्भ. २३ केसर

॥ ११ ॥ प्रतिबिम्बितगौरीमुखविलोकनोत्कम्पशिथिलकरगलितः । स्वेदभरपूर्यमाणः शंभोः सलिलाञ्जलिर्जयति ॥ १२ ॥ आदाय चापमचलं कृत्वाहीनं गुणं विषमदृष्टिः । यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीन्नमस्तस्मै ॥ १३ ॥ उपहरणं विभवानां संहरणं सकलदुरितजालस्य । उद्धरणं संसाराच्चरणं वः श्रेयसेऽस्तु विश्वपतेः ॥ १४ ॥ पार्श्वस्थपृथ्वीधरराजकन्याप्रकोपविस्फूर्जथुकातरस्य । नमोऽस्तु ते मातरिति प्रणामाः शिवस्य संध्याविषया जयन्ति ॥१५॥ क्व तिष्ठतस्ते पितरौ ममेवेत्यपर्णयोक्ते परिहासपूर्वम् । क्व वा ममेव श्वशुरौ तवेति तामीरयत्सस्मितमीश्वरोऽव्यात् ॥ १६ ॥ वक्त्राणि पञ्च कुचयोः प्रतिबिम्बितानि दृष्ट्वा दशाननसमागमनभ्रमेण । भूयोऽपि शैलपरिवृत्तिभयेन गाढमालिङ्गितो गिरिजया गिरिशः पुनातु ॥१७॥ पौलस्त्यपीनभुजसपदुदस्यमानकैलाससंभ्रमविलोलदृशः प्रियायाः । श्रेयांसि वो दिशतु निह्नुतकोपचिह्नमालिङ्गनोत्पुलकमासितमिन्दुमौलेः ॥ १८ ॥ संध्यानतौ नरपुरंध्रितनोः सरोषमुत्सारिते गिरिजया निजपाणिपद्मे । उत्सर्पिकङ्कणफणीन्द्रफणार्पणेन पूर्णाञ्जलिर्जयति बालमृगाङ्कमौलेः ॥ १९ ॥ रचयति सहसा यच्चित्रमेतत्प्रपञ्चं प्रशमयति च तद्वत्केनचित्कौतुकेन । अविदितमपरैस्तच्चण्डमुण्डादिनानादनुजदलनदक्षं शर्वसर्वस्वमव्यात् ॥ २० ॥ च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं समं वक्रीकृत्य प्रहसितमुखी शैलतनया । अवोचद्यं पश्येत्यवतु गिरिशः सा च गिरिजा स च क्रीडाचन्द्रो दशनकिरणैः पूरिततनुः ॥ २१ ॥ अरुणनयनं सभ्रूभङ्गं दरस्फुरिताधरं सुतनु शशिनः क्लिष्टां कान्तिं करोतु तवाननम् । कृतमनुनयैः कोपोऽयं ते मनस्विनि वर्धतामिति गदितयाश्लिष्टो देव्या शिवाय शिवोऽस्तु वः ॥ २२ ॥ प्रणयकुपितां दृष्ट्वा देवीं ससंभ्रमविस्मितस्त्रिभुवनगुरुर्भीत्या सद्यः प्रणामपरोऽभवत् । नमितशिरसो गङ्गालोके तया चरणाहताववतु भवतस्त्र्यक्षस्यैतद्विलक्षमवस्थितम् ॥ २३ ॥ कस्त्वं शूली मृगय भिषजं नीलकण्ठः प्रियेऽहं केकामेकां कुरु पशुपतिर्नैव दृष्टे विषाणे । स्थाणुर्मुग्धे न वदति तरुर्जीवितेशः शिवाया गच्छारण्यं प्रतिवचनजडः पातु वश्चन्द्रचूडः ॥ २४ ॥ वन्दे देवं जलधिशरधिं देवतासार्वभौमं व्यासप्रष्ठा भुवनविदिता यस्य वाहाधिवाहाः । भूषापेटी भुवनमधरं पुष्करं पुष्पवाटी शाटीपालाः शतमखमुखाश्चन्दनद्रुर्मनोभूः ॥२५ ॥ नमस्तुभ्यं देवासुरमुकुटमाणिक्यकिरणप्रणालीसंभेदस्नापितचर-

१. त्रिलोचनो हिमाचल धनु, वासुकिं ज्याम्, विष्णु शर च विधाय त्रिपुरासुरं जघानेति प्रकृतोऽर्थः चलनशून्य धनु, अहीनो धनुर्दण्डादन्यूनो गुण, विषमा लक्ष्यादन्यत्र निहिता दृष्टि, न च्युत शरो यस्य तथाविध., तथापि लक्ष्यभङ्ग इति विरोधाभास. २ दातारम्. ३ वज्रनिर्घोष ४ त्रिशूली, (पक्षे) शूलरोगवान् ५ वैद्यम् ६. शिव; (पक्षे) मयूर. ७ शृङ्गे ८ शिव, (पक्षे) छिन्नवृक्षप्रकाण्डम् ९ पार्वत्या; (पक्षे) क्रोष्ट्र्या १० त्रिपुरसंहारे शरीकृतस्य विष्णोर्विश्रान्तिस्थानत्वात् ११ व्यासप्रमुखा. १२. वाहनानां वेदानामित्यर्थ अधिवाहा वाहनाधिकृता १३ सर्पभूषणत्वादित्यर्थ. १४ पातालम् १५ पुष्पस्थानीयचन्द्रोद्गमाधारत्वात् १६ दिगम्बरत्वेन दिशामेव शाटीरूपत्वात् १७ इन्द्रादयो दिक्पाला इत्यर्थ. १८. चन्दनस्थानीयभस्मसंबन्धित्वात् मदनभस्मना शिवेनाङ्गानामनुलेपनस्य प्रसिद्धे १९ ओघ.

णाय स्मरजिते । महाकल्पस्वाहाकृतभुवनचक्रोऽपि नयने निरोद्धुं भूयस्तत्प्रसरमिव कामं हुतवते ॥ २६॥ मौनादस्तमितैव चाटुभणितिः स्वस्तैकहस्ताद्गतं दूरेऽप्यञ्जलिबन्धनं प्रणमनं स्तब्धार्धमूर्ध्नः कुतः । इत्थं सघटितैकविग्र[1]हतया व्यग्रो[2] गिरिग्रामणीर्जायां जातरुषं जयत्यनुनयन्देवस्त्रिलोकीगुरुः ॥ २७ ॥ यस्मिन्बुद्बुदसंकरा इव बहु ब्रह्माण्डखण्डाः क्वचिद्भान्ति क्वापि च शीकरा इव विरिञ्च्याद्याः स्फुरन्ति भ्रमात् । चिद्रूपा लहरीव विश्वजननी शक्तिः क्वचिद्द्योतते स्वानन्दामृतनिर्भरं शिवमहापाथोनिधिं तं नुमः ॥ २८ ॥ कल्पान्ते शमितत्रिवि[3]क्रममहाकङ्का[4]लबद्धस्फुरच्छेषस्यूतनृसिंहपाणिनखरप्रोत्क्षिप्तकोला[5]मिषः । विश्वैकार्णवताविशेषमुदितौ तौ मत्स्यकूर्मावुभौ कर्षन्धीवरतां गतस्य तु सतां मोहे महाभैरवः ॥ २९ ॥ भीतिर्नास्ति भुजंगपुंगवविषात्प्रीतिर्न चन्द्रामृतान्नाशौचं हि कपालदामलुलनाच्छौचं न गङ्गाजलात् । नोद्वेगश्चितिभस्मना न च सुखं गौरीस्तनालिङ्गनादात्मारामतया हिताहितसमः स्वस्थो हरः पातु वः ॥ ३० ॥ वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोद[6]सी यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः । अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥ ३१ ॥ आनन्दश्लथिताः समाधिषु मुखे गौर्या विलासोच्छसाः संभ्रान्ताः क्षणमुद्गताः क्षणमथ स्मेरा निजे वैकृ[7]ते । क्रूराः कृष्टशरासने मनसिजे दग्धे घृणाकूणितास्तत्कान्तारुदितेऽश्रुपूरतरलाः शंभोर्दृशः पान्तु वः ॥३२॥ स्वर्भानुः सुरवर्त्मनानुसरति ग्रासाभिलाषादसाविन्दोरिन्दुमुखि ग्रसेत किमुत भ्रान्त्या भवत्या मुखम् । इत्थं नाथगिरा नभोर्पितदृशो वक्त्रे भवान्या भृशं मानिन्याः कृतचुम्बनस्त्रिनयनः स्तादिष्टसिद्ध्यै सताम् ॥३३॥ विष्णोश्चागमनं निशम्य सहसा कृत्वा फणीन्द्रं [10]गुणं कौपीनं परिधाय चर्म करिणः शंभुः पुरो धावति । दृष्ट्वा विष्णु[11]रथं सकम्पहृदयः सर्पोऽपतद्भूतले कृत्ति[12]र्विस्खलिता ह्रियानतमुखो नग्नो हरः पातु वः ॥३४॥ भस्मान्धोरगफूत्कृतिस्फुटभवद्भालस्थवैश्वानरज्वालास्विन्नसुधांशुमण्डलगलत्पीयूषधारारसैः । संजीवद्गजचर्मगर्जितभयभ्राम्यद्वृषाकर्षणव्यासक्तः सहसाद्रिजोपहसितो नग्नो हरः पातु वः॥३५॥ एकोऽन्ते द्विसमस्त्रिलोचन इति ख्यातश्चतुर्भिः स्तुतो वेदैः पञ्चमुखः षडाननपिता सप्तर्षिभिर्वन्दितः । अष्टाङ्गो नवतुल्य आमरगणे वासो दशाशा दधत्स्वश्चैकादश सोऽवतान्न विजितो यो द्वादशात्मांशुभिः ॥ ३६ ॥ लीलाद्यूतजितां कलाधरकलां मौलौ दृढं कीलितां स्वीकर्तुं ग[13]णैर्मुन्नमय्य भुजयोर्विक्षेपयन्त्यास्तदा । पार्वत्याः कुचकुम्भपार्श्वयुगले सप्रेमदत्तेक्षणः कालक्षेपणमिन्दुमोचनविधौ देवः स नो रक्षतु ॥ ३७ ॥ भूत्यालेपनभूषितः प्रविलसन्नेत्राग्निदीपाङ्कुरः कण्ठे पन्नगपुष्पदामसुभगो गङ्गाजलैः पूरितः । ईषत्ताम्रजटाग्रपल्लवयुतो न्यस्तो जग-

१ कलह. २ आकुल ३ वामन. ४ अस्थिपञ्जर. ५ वराह ६ द्यावापृथिव्यौ. ७. विकारे. ८ दयासंकोचिता. ९ गद्दु. १० सूत्रम्. ११. गरुडम् १२ गजचर्म. १३. नन्दिनम्.

न्मण्डपे शंभुर्मङ्गलकुम्भतामुपगतो भूयात्सतां श्रेयसे ॥३८॥ मल्लीमाल्यधिया सुधाकरकलां कण्ठश्रियं कज्जलभ्रान्त्या भालविलोचनानलशिखां सिन्दूरपूराशया । कैलासे प्रतिबिम्बितात्स्ववपुषो गृह्णन्हसन्त्या मुहुः पार्वत्या प्रतिकर्मकर्मणि चिरं मुग्धो हरः पातु वः ॥३९॥ दास्येऽहं परिरम्भणानि कितवं द्यूते जितानि त्वया धैर्यं धेहि यतः कृतः शतमहोरात्राणि तत्रावधिः। इत्युक्तः शिवया निशादिवसकृज्ज्योतिर्मयाक्षिद्वयद्रागुन्मेषनिमेषकोटिघटनाव्यग्रो हरः पातु वः ॥ ४० ॥ मौलौ किं नु महेश मानिनि जलं कि वक्त्रमम्भोरुहं किं नीलालकवेणिका मधुकरी किं भ्रूलता वीचिका। कि नेत्रे शफरी किमु स्तनयुगं प्रेङ्खद्रथाङ्गद्वयं साशङ्कामिति वञ्चयन्गिरिसुतां गङ्गाधरः पातु वः ॥ ४१ ॥ देव्याः प्राक्परिरम्भणे किल करौ द्वौ द्वौ पुनस्तत्करौ रोद्धुं तन्मुखमुन्मुखं रचयितुं द्वौ चाधरास्वादने । द्वौ नेत्रान्तपलालकोपनयने मोक्तुं च नीवीं दृढां द्वावित्थं सफलीकृताखिलकरः पायात्स वः शंकरः ॥ ४२ ॥ न क्रोधः क्रियतां प्रिये स तु भवन्मौलिस्थगङ्गोदरे मुग्धे मानसपूजितं त्यज कृतं युष्मन्नियोगद्वयम् । वक्रे श्लेषममुं निराकुरु कदाश्लिष्टोऽसि वक्रो मया वामाङ्गचेति हृतोत्तरः स्मरहरः स्मेराननः पातु वः ॥ ४३ ॥ अङ्गं येन रथीकृतं नयनयोर्युग्मं रथाङ्गीकृतं पात्रं स्वं रथकर्मसारथिकृतं श्वासास्तुरंगीकृताः । कोदण्डीकृतमात्मवीर्यमचिरान्मौर्वीकृतं भूषणं वामाङ्गं विशिखीकृतं दिशतु नः क्षेमं स धन्वी पुमान् ॥ ४४ ॥ नृत्यारम्भरसत्रसद्गिरिसुतारिक्तार्धसंपूर्तये निर्व्यूढभ्रमिविभ्रमाय जगतामीशाय तुभ्यं नमः । यच्चूडाभुजगेश्वरप्रभृतिभिस्ताद्दग्भ्रमन्तीर्दिशः पश्यद्भिर्घनघूर्णमानवदनैः शान्तोऽपि न श्रद्दधे ॥ ४५ ॥ उद्दामभ्रमिवेगविस्तृतजटावल्लीप्रणालीपतत्स्वर्गङ्गाजलदण्डिकावलयितं निर्माय तत्पञ्जरम् । संभ्राम्यद्भुजदण्डपक्षपटलद्वन्द्वेन हंसायितस्त्रैलोक्यव्ययनाटिकानयनटः स्वामी जगत्त्रायताम् ॥४६॥ यन्नाट्यभ्रमिघूर्णमानवसुधाचक्राधिरूढे भृशं मेरौ पार्श्वनिवासिवासरनिशाचित्रे परिभ्राम्यति। तैजस्यस्तडिनो भवन्तु शतशो दृष्टा हि तास्ताः कथं तामस्योऽपि स वः पुनातु जगतामन्त्येष्टियज्वा विभुः ॥४७॥ तत्कालारभटीविजृम्भणपरित्रासादिव भ्रश्यता वामार्धेन तदेकशेषकरणं बिभ्रद्वपुर्भैरवम् । तुल्यं चाब्धिभुजंगभूषणमसौ भोगीन्द्रकङ्कालकैर्बिभ्राणः परमेश्वरो विजयते कल्पान्तकर्मान्तिकः ॥४८॥ चञ्चच्चन्द्रिकचन्द्रचारुकुसुमो माद्यज्जटापल्लवो दृप्यद्दारुणदन्दशूकमणिमांस्तत्पञ्चशाखालयः। स्थाणुर्मे फलदो भवत्वतितरां गौरीमुखेन्दुद्रवत्पीयूषद्रवदोहदादिव दधद्देवद्रुमत्वं सदा ॥ ४९ ॥ वक्त्राम्भोरुहि विस्मिताः स्तवकिता वक्षोरुहि स्फारिताः श्रोणीसीमनि गुम्फिताश्चरणयोरक्ष्णोः पुनर्विस्तृताः। पार्वत्याः प्रतिगात्रचित्रगतयस्तन्वन्तु भद्राणि वो विद्धस्यान्तिकपुष्पसायकशरैरीशस्य दृग्भङ्गयः ॥५०॥ शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढो-

१ अक्षधूर्त २ चक्रवाक ३ आलिङ्गने ४. सर्प. ५ समाप्त ६ भ्रमणम्. ७. जलस्य निर्गमनमार्गे मकरमुखादिरूपा ८. माला ९ कर्बुरवर्ण. १०. रात्रि ११ नाट्यभेद. १२ सर्प. १३ सम्प्रदानम्

ल्लसद्रोमाश्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः । आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान्सस्मितं शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥९१॥ दिक्कालात्मसमैव यस्य[1] विभुता यस्तत्र[2] विद्योतते यत्रा[3]मुष्य[4] सुधीभवन्ति किरणा राशेः स[5] यासाम[6]भूत् । यस्तत्[7]पित्तमुषः[8]सु[9] योऽ[10]स्यै[11] हविषे यस्[12]तस्यै[13] जीवातवे वोढा यद्[14]गुणमेध[15] मन्मथरिपोस्ताः पान्तु नो मूर्तयः ॥९२॥ जीर्णेऽप्युत्कटकालकूटगरले ल्लुष्टे तथा मन्मथे नीते भासुरभालनेत्रतनुतां कल्पान्तदावानले । यः शक्त्या समलंकृतोऽपि शशिनं शैलात्मजां स्वर्धुनी धत्ते कौतुकराजनीतिनिपुणः पायात्स वः शंकरः ॥९३॥ किं गोत्रं किमु जीवनं किमु धनं का जन्मभूः किं वयः किं चारित्र्यममुष्य के सहचरा के वंशजाः प्राक्तनाः । का माता जनकः शिवस्य क इति प्रह्वेण[16] पृथ्वीभृता पृष्टाः सस्मितनम्रमूकवदनाः सप्तर्षयः पान्तु वः ॥९४॥ तातं तत्ताततातं कथय हरकुलेऽलंकृते संप्रदाने तच्छ्रुत्वा चन्द्रमौलिर्नतवदनकजो जातलज्जो बभूव । ब्रह्मावादीत्तदानीं शृणुत हरकुलं वेदकण्ठोग्रकण्ठौ श्रीकण्ठान्नीलकण्ठः प्रहसितवदनः पातु वश्चन्द्रचूडः ॥ ९५ ॥ या[17] सृष्टिः स्रष्टुराद्या वहति विधिहुतं या[18] हविर्या[19] च होत्री ये[20] द्वे कालं विधत्तः श्रुतिविषयगुणा या[21] स्थिता व्याप्य विश्वम् । यामाहुः[22] सर्वबीजप्रकृतिरिति यया[23] प्राणिनः प्राणवन्तः प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः ॥ ९६ ॥ एकैश्वर्यस्थितोऽपि प्रणतबहुफलो यः स्वयं कृत्तिवासाः कान्तासंमिश्रदेहोऽप्यविषयमनसां यः पुरस्ताद्यतीनाम् । अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः सन्मार्गालोकनाय व्यपनयतु स नस्तामसीं वृत्तिमीशः ॥ ९७ ॥ कैलासाद्द्रागुदस्ते[24] परिचलति गणेषूल्लसत्कौतुकेषु क्रोडं[25] मातुः कुमारे विशति विषभुजि[26] प्रेक्ष्यमाणे सरोषम् । पादावष्टम्भसीदद्वपुषि दशमुखे याति पातालमूलं क्रुद्धोऽप्याश्लिष्टमूर्तिर्भयधनम्[27]उमया पातु हृष्टः शिवो नः ॥ ९८ ॥ क्रोधेद्धैर्दृष्टिपातैस्त्रिभिरुपशमिता वह्नयोऽमी त्रयोऽपि[28] त्रासार्ता ऋत्विजोऽधश्चपलगणहृतोष्णीषपट्टाः पतन्ति । दक्षः स्तौत्यस्य पत्नी विलपति कृपणं[29] विद्रुतं चापि देवैः शंसन्नित्याट्टहासो मखमथनविधौ पातु देव्यै शिवो वः ॥ ९९ ॥ आसीने पूष्णि[30] तूष्णीं व्यसनिनि शशिनि व्योम्नि कृष्णे सतृष्णे दैत्येन्द्रे जातनिद्रे द्रवति मघवति क्लान्तकान्तौ कृतान्ते । अब्रह्मण्यं ब्रुवाणे कमलपुटकुटीश्रोत्रिये[31] शान्त्युपाये पायाद्वः कालकूटं झटिति कवलयँल्लीलया नीलकण्ठः ॥ ६० ॥ केयं मूर्ध्न्यन्धकारे[32] तिमिरमिह कुतः सुभ्रु कान्तेन्दुयुक्ते कान्ताप्यत्रास्ति काचिन्ननु भवतु मया दृष्टमेतावदेव । नाहं द्वन्द्वं करोमीत्यपनय शिरसस्तूर्णमेनामिदानीमित्थं

१ आकाशस्य २ सूर्ये ३ चन्द्रे ४ सूर्यस्य ५ चन्द्र ६ अपाम् ७. अग्निः ८ अपाम् ९ शुचिरुदकम् १० यजमान ११. अग्ने १२ वायु १३. यजमानस्य १४ पृथिव्या १५ वायु १६ नम्रेण १७. उदकरूपा १८ अग्निरूपा. १९ यजमानरूपा २० सूर्यचन्द्ररूपे २१. आकाशरूपा २२ पृथ्वीरूपा २३ वायुरूपा २४ ऊर्ध्वान्ताचले २५ भुजान्तरे २६ सर्पे २७. भयागारम् २८. दक्षिणगार्हपत्याहवनीयाख्या २९ दीनस्वरेण ३० मृग्ये ३१ ब्राह्मणे ३२ अन्धकरिपौ (पक्षे) तमसि

प्रोक्तो भवान्या प्रतिवचनजितः पातु वश्चन्द्रचूडः ॥ ६१ ॥ धन्या केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या नामैवास्यास्तदेतत्परिचितमपि ते विस्मृतं कस्य हेतोः। नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दुर्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥६२॥ हर्षादम्भोजजन्म[1]प्रभृतिदिविषदां संसदि प्रीतिमत्या श्वश्र्वा मौलौ पुरारेर्दुहितृपरिणये साक्षतं चुम्ब्यमाने। तद्वक्त्रं मौलिवक्त्रे मिलितमिति भृशं वीक्ष्य चन्द्रः सहासो दृष्ट्वा तद्वृत्तमाशु स्मितसुभगमुखैः पातु वः पञ्चवक्त्रः ॥ ६३ ॥ कल्पान्तक्रूरकेलिः क्रतुकदनकरः कुन्दकर्पूरकान्तिः क्रीडन्कैलासकूटे कलितकुमुदिनीकामुकः कान्तकायः। कङ्कालक्रीडनोत्कः कलितकलकलः कालकालीकलत्रः कालिन्दीकालकण्ठः कलयतु कुशलं कोऽपि कापालिको नः ॥ ६४ ॥ दृष्टः सप्रेम देव्या किमिदमिति भयात्संभ्रमाच्चासुरीभिः शान्तान्तस्तत्त्वसारैः सकरुणमृषिभिर्विष्णुना सस्मितेन। आदायास्त्रं सगर्वैरुपशमितवधूसभ्रमैर्दैत्यवीरैः सानन्दं देवताभिर्मयपुरदहने धूर्जटिः पातु युष्मान् ॥ ६५ ॥ क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं गृह्णन्केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण। आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥ ६६ ॥ कल्याणं वः क्रियासुर्मिलदटनि[2]युगस्थास्नु[3]गीर्वाणभोगिस्त्रैणव्यत्यस्तकल्पद्रुमनवसुमनोनागहारावलीनि। नालीका[4]श्लिष्टलक्ष्मीकरचलनलिनोद्गीतमाध्वीक[5]धारातिम्यत्फालेक्षणानि त्रिपुरहरधनुर्ज्यालताकर्षणानि ॥ ६७ ॥ कल्पान्ते क्रोधनस्य त्रिपुरविजयिनः क्रीडया संचरिष्णोः कृत्वापि प्राणिजातैर्निजमुखकुहरातिथ्यमप्राप्ततृप्तेः। दिग्भित्तीः प्रेक्ष्य शून्याः प्रलयजलनिधिं प्रेक्षितात्मीयमूर्तिग्रासव्यासक्तमोघश्रमजनितरुषः पान्तु वो गर्जितानि ॥६८॥ पर्यङ्क[7]ग्रन्थिर्वन्धद्विगुणितभुजगाश्लेषसंवीत[8]जानोरन्तःप्राणावरोधव्यु[9]परतसकलज्ञानरुद्धेन्द्रियस्य। आत्मन्यात्मानमेव व्यपगतकरणं[11] पश्यतस्तत्त्वदृष्ट्या शम्भोर्वः पातु शून्ये[12]क्षणघटितलय[13]ब्रह्मलग्नः समाधिः ॥ ६९ ॥ जटाजूटः ॥

स धूर्जटिजटाजूटो जायतां विजयाय वः। यत्रैकपलित[14]भ्रान्तिं करोत्यद्यापि जाह्नवी ॥ ७० ॥ चूडापीड[15]कपालसंकुलगलन्मन्दाकिनीवारयो विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः। पान्तु त्वामकठोरकेतकशिखासंदिग्धमुग्धेन्दवो भूतेशस्य भुजंगवल्लिवलयस्रङ्नद्धजूटा जटाः ॥ ७१ ॥ गङ्गावारिभिरुक्षिताः फणिफणैरुत्पल्लवास्तच्छिखारत्नैः कोरकिताः शितांशुकलया स्मेरैकपुष्पश्रियः। आनन्दाश्रुपरिप्लुताक्षिहुतभुग्धूमैर्मिलद्दोहला नाल्पं कल्पलताः फलं ददतु वोऽभीष्टं जटा धूर्जटेः॥७२॥गङ्गा॥चूडाशीतकरस्तनंधयसुधानीरन्ध्र[16]गन्धस्पृशः क्रीडाकङ्कणप-

१ ब्रह्मा २ धनुष्कोटि ३ स्थिरतरम् ४ विष्णुरूप शर ५ पुष्परस ६. वन्ह्यात्मक तृतीयलोचनम्. ७. योगशास्त्रप्रसिद्धासनविशेष ८. सधि ९ आवृत १०. निवृत्त ११ चक्षुरादीन्येकादशेन्द्रियाणि बुद्धिरहंकारश्चेति त्रयोदशविधम् १२ प्रपञ्चाभावः. १३ चित्तैकाग्रता १४.केशादौ जरसा यच्छौक्ल्यं तत् १५ तिर्यङ्नद्धमाला १६ निबिड

न्नगेश्वरफणापीतावशिष्टा मुहुः । अङ्कासीनगिरीन्द्रजास्तनतटीहारावलीलोलनाः संतापं शमयन्तु वो हरजटागङ्गातरंगानिलाः ॥७३॥ वायुर्वाति यदङ्गसंगमवशाच्छ्रीशंभुरूपप्रदे गौरी रुप्यति तुष्यति त्वहिपतिर्विन्ध्याटवी शोचते । चन्द्रस्त्रस्यति कुप्यते हरिरपि ब्रह्मा परं शङ्कते सा गङ्गा निखिलं कलङ्कनिचयं भङ्क्तं तरंगैर्नयेत् ॥७४॥ शार्ङ्गी ब्रह्मकमण्डलोरधिगतैर्यैः प्रापि तीर्थाङ्कितां यैर्मृत्युंजयतामनायि गरलग्रस्तो जटाजूटगैः । येभ्योऽशिक्षत माधुरी मृदुजटाजूटे मठे चन्द्रमास्तानीमानि पयांसि गौतमि तव श्रेयांसि यच्छन्तु नः ॥ ७५ ॥ यन्नाम्नः प्रथमाक्षरं विजयते भानौ द्वितीयाक्षरं नित्यं नृत्यति सत्कवीन्द्रवदने भूत्वान्तवर्णद्वयम् । रामो रावणमाजघान समरे शंभोः शिरःशालिनी सा सर्वाक्षरमालिनी भवतु मे भाग्याय भागीरथी ॥७६॥ मुक्ताभा नृकपालशुक्तिषु जटावल्लीषु मल्लीनिभा वह्नौ लाजनिभा दृशोर्मणिनिभा भोगोत्करो भोगिनाम् । नृत्यावर्तविवर्तनेरितपयः संमूर्च्छितोच्छालिताः खेलन्तो हरमूर्ध्नि पान्तु भवतो गङ्गापयोबिन्दवः ॥७७॥ एषा धर्मपताकिनी तटतरुच्छायावसन्नाकिनी शुष्यत्पातकिनी भगीरथतपःसाफल्यसंदायिनी । प्रेमारूढपिनाकिनी गिरिसुतासाकेकरालोकिनी पापाडम्बरडाकिनी त्रिभुवनानन्दाय मन्दाकिनी ॥ ७८ ॥ स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः । भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घा दरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥७९॥ शैवालश्रेणिशोभां दधति हरजटावल्लभो हन्त यस्यास्तद्वासोल्लासवेलाद्वरशफरतुलां यत्र धत्ते कलावान् । उन्मीलद्भोगिभोगावलिसुभगसिताम्भोजसंभाविताम्भा गङ्गानङ्गारिसङ्गा महति तव विधौ मङ्गलान्यातनोतु ॥ ८० ॥ दृष्टाः संकष्टदाहाः श्रवणपथगताः पुण्यपुञ्जावगाहाः स्पृष्टाः संसारपाथोनिधिपतितधरोद्धारधुर्या वराहाः । पीतास्तापोपशान्तिप्रजननपटवस्ते सुधावारिवाहाः कल्याणं कल्पयन्तां कलिकलुषहरा विष्णुपद्याः प्रवाहाः ॥ ८१ ॥ **शशिलेखा** ॥ पूर्णनखेन्दुद्विगुणितमञ्जीरा प्रेमशृङ्खला जयति । हरशशिलेखा गौरीचरणाङ्गुलिमध्यगुल्फेषु ॥ ८२ ॥ जयति परिमुषितलक्ष्मा भयादनुपसर्पतेव हरिणेन । इह केसरिकरजाङ्कुरकुटिला हरमौलिविधुलेखा ॥ ८३ ॥ श्रीकण्ठस्य कपर्दबन्धनपरिश्रान्तोरगग्रामणीसंदष्टां मुकुटावतंसकलिकां वन्दे कलामैन्दवीम् । या बिम्बप्रतिपूरणाय परितो निष्पीड्य संदंशिकायन्त्रेणेव ललाटलोचनशिखिज्वालाभिरावर्त्यते ॥८४॥ **लोचनम्** ॥ जयति ललाटकटाक्षः शशिमौलेः पक्ष्मलः प्रियाप्रणतौ । धनुषि स्मरेण निहितः सकण्टकः केतकेषुरिव ॥ ८५ ॥ अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं स्वान्ते शान्तिप्रणयिनि समुन्मीलदानन्दसान्द्रम् । प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्रव्याजव्यक्तीकृतमिव जगद्व्यापि चन्द्रार्धमौलेः ॥ ८६ ॥ एकं

१ प्राकृतम् २ अनूपसदृश कश्चिन्नद्यादेरुपान्तदेश ३ बलवान् ४. सान्द्रस्निग्ध. ५ जटाजूटः. ६. कर्तरिका ७. शान्तिमति ८ व्याप्तम् ९ अधोगामि

ध्याननिमीलनान्मुकुलितं चक्षुर्द्वितीयं पुनः पार्वत्या वदनाम्बुजस्तनतटे शृङ्गारभारालसम् । अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं शंभोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ ८७ ॥ पक्ष्मालीपिङ्गलिम्नः कण इव तडितां यस्य कृत्स्नः समूहो यस्मिन्ब्रह्माण्डमीषद्विघटितमुकुले कालयज्वा जुहाव । अर्चिर्निःशेषचूडाशशिगलितसुधाघोरहंकारि कोणं तार्तीयं यत्पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥८८॥ **कण्ठः**॥ पातु वो नीलकण्ठस्य कण्ठः श्यामाम्बुदोपमः । गौरीभुजलता यत्र विद्युल्लेखेव राजते ॥ ८९ ॥ कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलिं प्रति । यः कर्णे विकचोत्पलन्ति कुचयोरंसे च कालागरुस्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः ॥ ९० ॥ कस्तूरीयन्ति भाले तदनु नयनयोः कज्जलीयन्ति कर्णप्रान्ते नीलोत्पलीयन्त्युरसि मरकतालंकृतीयन्ति देव्याः । रोमालीयन्ति नाभेरुपरि हरिमणीमेखलीयन्ति मध्ये कल्याणं कुर्युरेते त्रिजगति पुरजित्कण्ठभासां विलासाः ॥९१॥ **शिरोमालिका** ॥ पित्रोः पादाब्जसेवागतगिरितनयापुत्रपत्रोतिभीतक्षुभ्यद्भूषाभुजगश्वसनगुरुमरुद्दीप्तनेत्राग्नितापात् । स्विद्यन्मौलीन्दुखण्डस्नुतबहुलसुधासेकसंजातजीवा पूर्वाधीतं पठन्ती ह्यवतु विधिशिरोमालिका शूलिनो वः ॥९२॥ **गणाः** ॥ सध्यताण्डवडम्बरप्रणयिनो देवस्य चण्डीपतेर्भ्रष्टाः पाण्डुविशीर्णमुण्डचयनव्यग्रा गणाः पान्तु वः । यैरौत्सुक्यवशीकृतैर्ग्रहगणाद्ग्राहौ गृहीते जवात्सूर्याचन्द्रमसोर्मिथः स्मितवतोर्जातं करास्फालनम् ॥९३॥ **नन्दी**॥ कण्ठालंकारघण्टावणघणरणिताध्मातरोदःकटाहः कण्ठेकालाधिरोहोचितघनसुभगं भावुकस्निग्धपृष्ठः । साक्षाद्धर्मो वपुष्मान्धवलककुदनिर्धूतकैलासकूटः कूटस्थो वः ककुद्मान्निबिडतरतमःस्तोमतृण्यां वितृण्यात् ॥९४॥ **ताण्डवम्** ॥ देवा दिक्पतयः प्रयात परतः खं मुञ्चताम्भोमुच. पाताल व्रज मेदिनीमविशत क्षोणीतलं भूधराः । ब्रह्मन्नुन्नय दूरमात्मभुवनं नाथस्य नो नृत्यतः शंभो. सकटमेतदित्यवतु वः प्रोत्सारणं नन्दिन. ॥९५॥ दोर्दण्डद्वयलीलया चलगिरिभ्राम्यत्तदुच्चैरवध्वानोद्गीतजगद्भ्रमत्पदभरालोलत्फणाग्र्योरगम् । भृङ्गापिङ्गजटाटवीपरिसरोद्गङ्गोर्मिमालाचलच्चन्द्रं चारु महेश्वरस्य भवतां स्वश्रेयसे ताण्डवम् ॥ ९६ ॥ सध्याताण्डवडम्बरव्यसनिनो भर्गस्य चण्डभ्रमित्यानृत्यद्भुजदण्डमण्डलभुवो झञ्झानिला पान्तु व. । येषामुद्धतताण्डवेन झटिति व्यूहेषु भूमिभृतामुड्डीनेषु बिडौजसा पुनरसौ दम्भोलिरालोकितः ॥ ९७ ॥ पादस्याविर्भवन्तीमवनतिमवने रक्षतः स्वैरपातै. संकोचेनैव दोर्ष्णां मुहुरभिनयतः सर्वलोकातिगानाम् । दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीतेरित्याधारानुरोधात्त्रिपुरविजयिनः पातु वो दुःखनृत्यम् ॥ ९८ ॥ मूर्धव्याधूय-

१. षडानन २ वाहनम् मयूर इत्यर्थ ३ पूरित ४ द्यावापृथिव्यौ ५ शकर ६ सुभग भवतीति तत्. ७ परिभूत ८ निश्चल निर्विकारतया चिरजीवीत्यर्थ ९ अज्ञाननिवह १०. तृणसमूह ११. खादतु १२. इन्द्रेण १३ वज्रम् १४ पृथिव्या. १५. यथेष्ट क्षेपणे. १६. अतिक्रान्तचतुर्दशभुवनानाम्. १७ आधारस्य पृथिव्यादेरनुरोधादनुसारात्.

मानध्वनदमरधुनीलोलकल्लोलजालोद्भूताम्भःक्षोदंदरभात्प्रसभमभिनभः क्षिप्तनक्षत्रलक्ष्म् । ऊर्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यन्नभस्वत्प्रवेशभ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिव शाम्भवं ताण्डवं वः ॥ ९९ ॥ शर्वाणीपाणितालैश्चलवलयझणत्कारिभिः श्लाघ्यमानं स्थाने संभाव्यमानं पुलकितवपुषा शंभुना प्रेक्षकेण । खेलत्पिञ्छालि केकाकलकलकलितं क्रौञ्चभिद्बर्हियूनो हेरम्बाकाण्डबृंहातरलितमनसस्ताण्डवं त्वां धिनोतु ॥ १०० ॥ पायादायासखेदक्षुभितफणिफणारत्ननिर्यत्ननिर्यच्छायामायापतङ्गद्युतिमुदितवियद्वाहिनीचक्रवाकम् । अभ्रान्ताभ्रान्तचूडातुहिनकरकरानीकनालीकनालच्छेदामोदानुधावद्वुधिरमिव खगे धूर्जटेस्ताण्डवं नः ॥ १०१ ॥ उच्चैरुत्तालखेलद्भुजवनपवनोद्धूतशैलौघपातस्फारोदञ्चत्पयोधिप्रकटितमुकुटस्वर्धुनीसंगमानि । जीयासुस्ताण्डवानि स्फुटविकटजटाकोटिसंघट्टिभूरिभ्राम्यन्नक्षत्रचक्रव्यवसितसुमनोवृष्टिपातानि शंभोः ॥१०२॥ देवस्त्रैगुण्यभेदात्सृजति वितनुते संहरत्येष लोकानस्यैव व्यापिनीभिस्तनुभिरपि जगद्व्याप्तमष्टाभिरेव । वन्द्यो नास्येति पश्यन्निव चरणगतः पातु पुष्पाञ्जलिर्वः शंभोर्नृत्यावतारे वलयमणिफणाफूत्कृतैर्विप्रकीर्णः ॥१०३॥ अर्धनारीश्वरः ॥ एकः स्तनस्तुङ्गतरः परस्य वार्तामिव प्रष्टुमगान्मुखाग्रम् । यस्याः प्रियार्धस्थितिमुद्वहन्त्याः सा पातु वः पर्वतराजपुत्री ॥१०४॥ यस्योपवीतगुण एव फणाकृतैकवक्षोरुहः कुचपटीयति वामभागे । तस्मै ममास्तु तमसामवसानसीम्ने चन्द्रार्धमौलिशिरसे महसे नमस्या ॥१०५॥ स्वेदार्द्रवामकुचमण्डनपत्रभङ्गसंशोषिदक्षिणकराङ्गुलिभस्मरेणुः । स्त्रीपुंनपुंसकपदव्यतिलङ्घिनी वः शंभोस्तनुः सुखयतु प्रकृतिश्चतुर्थी ॥१०६॥ संभोगानतिरिच्यमानविभवो यद्विप्रलम्भो रसस्तद्दिव्य मिथुन परस्परपरिप्यूतं नमस्कुर्महे । एकस्याः प्रतिबिम्बसभृतविपर्यासे मुहुर्दर्पणे सव्याङ्गस्थितिकौतुक शमयति स्वामी स यत्रापरः ॥ १०७ ॥ स्वच्छन्दैकस्तनश्रीरुभयमतमिलन्मौलिचन्द्रः फणीन्द्रप्राचीनावीतवाही सुखयतु भगवानर्धनारीश्वरो वः । यस्यार्धे विश्वदाहव्यसनविसृमरज्योतिरर्धे कृपोद्यद्बाष्प चान्योन्यवेगप्रहतिसिमसिमाकारि चक्षुस्तृतीयम् ॥ १०८ ॥

---

## पार्वती ।

हरकण्ठग्रहानन्दमीलिताक्षी नमाम्युमाम् । कालकूटस्य संस्पर्शाज्जातमूर्च्छागमामिव ॥ १ ॥ पार्वतीमोपधीमेकामपर्णा मृगयामहे । शूली हालाहलं पीत्वा यया मृत्युंजयोऽभ-

---

१. कणा २ पार्वती ३ उचितम् ४ बर्हपङ्क्तय ५ षडाननः ६. अकालेभवम् ७. गर्जितम्. ८. क्षुब्धचेतस . मेघनिर्घोषभ्रान्त्येति भाव ९. प्रक्षेप १०. सुरसरित् ११. बाण १२ कञ्चुकीभवति. १३ यज्ञोपवीतम् १४ प्रसारी १५ पर्वतसबन्धिनीम्, (पक्षे) पर्वतपुत्रीम्. १६ पर्णरहिताम्, (पक्षे) एतन्नाम्नीं पार्वतीम् १७. शूलरोगवान्; (पक्षे) त्रिशूलधारी. १८. मृत्युनाशक , (पक्षे) एतन्नाम्ना प्रसिद्ध शिवः.

वत् ॥ २ ॥ चण्डीजङ्घाकाण्डः शिरसा चरणस्पृशि प्रिये जयति । [1]शंकरपर्यन्ताजितो वीरस्तम्भः स्मरस्येव ॥ ३ ॥ उन्नालनाभिपङ्केरुह इव येनावभाति शंभुरपि । जयति पुरुषायितायास्तदाननं शैलकन्यायाः ॥ ४ ॥ अङ्कनिलीनगजानन[2]शङ्का[3]कुल[4]बाहुलेयहृतवसनौ । सस्मितहरकरकलितौ हिमगिरितनयास्तनौ जयतः ॥ ५ ॥ [6]कण्ठोचितोऽपि [7]हुंकृतिमात्रनिरस्तः [8]पदान्तिके पतितः । यस्याश्चन्द्रशिखः स्मरभल्लनिभो जयति सा चण्डी ॥ ६ ॥ तद्वः प्रमार्ष्टु विपदः प्रणतार्तिहन्त्र्या न्यस्तं पदं महिषमूर्धनि चण्डिकायाः । वैरी यदीयनखरांशुपरीतशृङ्गः शक्रायुधाङ्कितनवाम्बुधरप्रभोऽभूत् ॥ ७ ॥ दृष्ट्वा षडाननजनुर्मुदितान्तरेण पञ्चाननेन सहसा चतुराननाय । शार्दूलचर्म भुजगाभरणं सभस्म दत्तं निशम्य गिरिजाहसितं पुनातु ॥ ८ ॥ पुरारितनुहारिणी दुरितसघसंहारिणी भजन्मतिविवर्धिनी प्रबलदानवान्मर्दिनी । तुषारगिरिनन्दिनी मुनिहृदन्तरालम्बिनी कुमारमुखचुम्बिनी हरनितम्बिनी पातु वः ॥ ९ ॥ औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः । दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सगमे सरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः ॥ १० ॥ आदौ प्रेमकषायिता हरमुखव्यापारलोला शनैर्व्रीडाभारविघूर्णिता मुकुलिता धूमोद्गमव्याजतः । पत्युः संमिलिता दृशा सरभसव्यावर्तनव्याकुला पार्वत्याः परिणीतिमगलविधौ दृष्टिः शिवायास्तु वः ॥ ११ ॥ प्रत्यासन्नविवाहमङ्गलविधौ देवार्चनव्यग्रया दृष्ट्वाग्रे [9]परिणेतुरेव लिखितां गङ्गाधरस्याकृतिम् । [11]उन्मादस्मितरोषलज्जितधिया गौर्या कथंचिच्चिराद्वृद्धस्त्रीवचनात्प्रिये विनिहितः पुष्पाञ्जलिः पातु वः ॥ १२ ॥ [12]रामाद्याचय मेदिनी [13]धनपतेर्बीजं [14]बलाल्लाङ्गलं [15]प्रेतेशान्महिषं तवास्ति वृषभः [16]फालं त्रिशूलं तव । शक्ताहं तव चान्नदानकरणे स्कन्दोऽस्ति गोरक्षणे खिन्नाहं हर भिक्षया कुरु कृषिं गौरीवचः पातु वः ॥ १३ ॥ भो हेरम्ब किमम्ब रोदिषि कथं कर्णौ लुठ[17]त्यग्निभूः किं ते स्कन्द विचेष्टितं मम पुरा संख्या कृता चक्षुषाम् । नैतत्तेऽप्युचितं गजास्य चरितं नासां मिमीतेऽम्ब मे तावेवं सहसा विलोक्य हसती पायादपायादुमा ॥ १४ ॥ मातस्तातजटासु किं सुरसरित्किं शेखरे चन्द्रमा किं भाले हुतभुग्लुठत्युरसि किं नागाधिपः किं कटौ । कृत्तिः किं जघनद्वयान्तरगतं यद्दीर्घमालम्बते श्रुत्वा पुत्रवचोऽम्बिका स्मितमुखी लज्जावती पातु वः ॥ १५ ॥ धूमव्याकुलदृष्टिरिन्दुकिरणैराह्लादिताक्षी पुनः पश्य-

---

१ स्वत सुखविशेषजनकतया तुच्छविषयपराङ्मुखस्याप्येतादृश्यवस्थासपादनादिति भाव २ स्तनयो कुम्भिकुम्भसाम्यादिति भाव ३ कथ मा विहायैनमेव सगोप्य बहुकाल स्तन्य प्रयच्छतीति धियेति भाव. ४ कार्तिकेय ५ गजाननिर्णयार्थमिति भाव. ६ आलिङ्गनार्होऽपि, ( पक्षे ) अर्धचन्द्राकारतया कण्ठलक्ष्ययोग्योऽपि ७ न तु करतर्जनादिना; ( पक्षे ) बाणादिना. ८ प्रणामार्थमिति भाव ; ( पक्षे ) वेगवशादिति भाव. ९ समीपवर्ती. १०. भर्तु ११ चित्तविभ्रम.. १२ परशुरामात् १३ कुबेरात् १४. बलभद्रात्. १५ यमात् १६. कृषक. १७ स्कन्द.

न्तीव समुत्सुका नतमुखी भूयो ह्रिया ब्रह्मणः । सेर्ष्या पादनखेन्दुदर्पणगते गङ्गां दधाने
हरे स्पर्शादुत्पुलका करग्रहविधौ गौरी शिवायास्तु वः ॥ १६ ॥ गो[1]नासाय नियो-
जितागदरजा सर्पाय बद्धौषधिः कण्ठस्थाय विषाय वीर्यमहतः पाणौ मणीन्बिभ्रती । भर्तु-
र्भूतगणाय गोत्रजरती[2]निर्दिष्टमन्त्राक्षरा रक्षत्वद्रिसुता विवाहसमये प्रीता[3] च भीता[4] च वः
॥ १७ ॥ स्वेदस्यन्दितसान्द्रचन्दनचयं दोर्वल्लिबन्धश्रमादूर्ध्वश्वासपरिस्खलत्स्मरकथं संदष्ट[5]-
दन्तच्छदम् । सीत्काराञ्चित[6]लोचनं सपुलकं भ्रान्तभ्रु नृत्यत्करं पार्वत्याः सुरतं मुदे रसवता-
मास्तां मृडानीपतेः ॥ १८ ॥ स्वेदस्ते कथमीदृशः प्रियतमे त्वन्नेत्रवह्नेर्विभो कस्माद्वेपित-
मेतदिन्दुवदने भोगीन्द्रभीतेस्तव । रोमाञ्चः कथमेष देवि भगवन्गङ्गाम्भसां सीकरैरित्थं
भर्तरि भाव[7]गोपनपरा गौरी चिरं पातु वः ॥ १९ ॥ शम्याकस्य रजः प्रमृज्य चरणे दत्तो
मया यावको[8] निर्मृज्य स्तनकुड्मले च भसित[9] पत्राङ्कुरो निर्मितः । स्वच्छन्दं विहरेति ज-
ल्पितगिरं साकूतमालीजन दृष्ट्या केवलमाघ्नती कुटिलया दाक्षायणी पातु वः ॥ २० ॥
वक्त्रं शीतकरोऽधरो घन[10]रसः कामप्रदो विग्रहः[11] श्वासो गन्धवह सरोरुह[12]सुहृत्पाणिः स्मि-
ताभा[13] शुचिः । वक्षः पीनपयोधरो[14]धिकरणं[15] पृथ्वी नितम्बस्थलीत्यष्टौ धूर्जटिमूर्तयः स्मरभया-
द्दुर्गाश्रिता. पान्तु वः ॥ २१ ॥ पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां शंभोः
सस्पृहलोचनत्रयपथं यान्त्या तदाराधने । ह्रीमत्या शिरसीहितं[16] सपुलकस्वेदोद्गमोत्कम्पया
विश्लिष्यन्कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः ॥ २२ ॥ कैलासालयभाललोचनरुचा
निर्वर्तितालक्तकव्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम् । स्पर्धाबन्धसमृ-
द्धयेव सुदृढं रूढा यया नेत्रयोः कान्तिः कोकनद[17]ानुकारसरसा सद्यः समुत्सार्यते ॥ २३ ॥
लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोल-
स्थलम् । पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितव्रीडया प्रोन्मृष्टः करपल्लवेन कुटिला ताम्र-
च्छविः पातु वः ॥ २४ ॥ सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे सत्रासा भुजगे स-
विस्मयरसा चन्द्रेऽमृतस्यन्दिनि । सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे पार्वत्या
नवसंगमप्रणयिनी दृष्टिः शिवायास्तु वः ॥ २५ ॥ भिक्षुः क्वास्ति बलेर्मखे पशुपतिः किं
नास्त्यसौ गोकुले मुग्धे पन्नगभूषणः सखि सदा शेते च तस्योपरि । आर्ये मुञ्च विषादं[18]
माशु कमले नाहं प्रकृत्या चला[19] चेत्थं वै गिरिजासमुद्रसुतयोः संभाषणं पातु वः ॥ २६ ॥

---

१. गोनासातिरिक्तसर्पभयनिवृत्तये इत्यर्थं गोनास सर्पजातिविशेष २. वृद्धा ३ यावज्जीवनकृततपसः फलोन्मुखत्वं समीक्ष्येत्यर्थं ४ भूतगणादिसाहित्यमालोक्येत्यर्थं ५ चुम्बितावित्यर्थं. ६ निमीलित ७ स्वाभिप्राय. ८ लाक्षारस ९ भस्म. १० उदकम् ११ शरीरम् यजमानरूपम् १२ कमलानां मित्रम् सूर्य इत्यर्थं; पाणिपक्षे सरोरुहाना सदृशा कान्तिर्यस्य १३ तेजस् १४ स्तनौ, (पक्षे) मेघा १५. स्थानम्. आकाशं मेघाना स्थानमिति प्रसिद्धम् १६. इष्ट १७. रक्तोत्पलम् १८. खेदम्, (पक्षे) विषमत्तीति विषादस्तं शिवम् १९ चञ्चला; (पक्षे) लक्ष्मी

हे गङ्गाधरपत्नि चक्रिवधु किं कुत्रास्त्यसौ नर्तको वृन्दारण्यभुवि क्क सर्पकुतुकी स्यात्कालियस्य ह्रदे । भिक्षुः कुत्र गतोऽस्ति यज्ञसदने क्कासौ विषादी बकीक्रोडे स्यादिति पद्मजागिरिजयोर्वाग्भङ्गयः पान्तु वः ॥ २७ ॥ भिक्षार्थी स क्क यातः सुतनु बलिमखे ताण्डवं क्काद्य भद्रे मन्ये वृन्दावनान्ते क्क नु स मृगशिशुर्नैव जाने वराहम् । बाले कश्चिन्न दृष्टो जरठवृषपतिर्गोप एवास्य वेत्ता लीलासंलाप इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां नः ॥२८॥ दीप्तक्षुद्वेगयोगाद्वदनलहलहच्छम्बजिह्वाग्रलीढब्रह्मब्रह्माण्डबिन्दुप्रबलतरभवज्जाठराग्निस्फुलिङ्गाम् । काली कङ्कालशेषामतुलगलचलन्मुण्डमालाकरालां गुञ्जासंवादिनेत्रामजिननिवसिनां नौमि पाशासिहस्ताम् ॥ २९ ॥ उद्वाहारोपिताद्रीक्षतनिजपदयोः सगतामिन्दुमौलावानम्रेयां सुधांशोर्व्यधित किल कलां तूर्णमेवान्नपूर्णाम् । सक्तानामक्षतानाममृतदृगनलोपाधितः पक्कभावान्नानार्थैरन्नपूर्णाप्रणतजनततेः पूर्णतामातनोतु ॥ ३० ॥ जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः । भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापीसंभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥३१॥ विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे । वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं [2]पौरुषोपघ्ननिघ्नं निर्विघ्नं निघ्नती वः शमयतु दुरितं [3]भूरिभावा भवानी ॥ ३२ ॥ वक्षःपीठे निरीक्ष्य स्फटिकमणिशिलामण्डलं स्वच्छभासि स्वां छायां साभ्यसूया त्वमियमिति मुहुः सत्यमाश्वासितापि । वामे मे दक्षिणेऽस्याः [4]श्रवासि कुवलय नाहमित्यालपन्ती दत्ताश्लेषा सहासं मदनविजयिना पार्वती वः पुनातु ॥३३॥ रामार्चिताङ्घ्रिरभिरामाकृतिः कृतविरामा [5]सुपर्वविपदां कामार्तिहृत्सफलकामा निदेशरतकामादिनिर्जरवधूः । भामा हरस्य नुतभामा जपासदृशभा माननीयचरिता सा मामवत्वखिलसामादृतस्तुतिरसामान्यमुक्तिसुखदा ॥३४॥ वालीयुतश्रवणपालीयुगा ललितचूलीविराजिवकुला केलीगतानुगमरालीकुला मधुरमालीभिराहृतकथा । नालीकदृक्कुसुमनालीकपाणिरिह कालीयशासिसहजा तालीदलाभतनुमाली सदा भवतु काली शुभाय मम सा ॥३५॥

---

## षण्मुखः ।

अर्चिष्मन्ति विदार्य वक्त्रकुहराण्यासृक्कतो वासुकेरङ्गुल्या विषकर्बुरान्गणयतः संस्पृश्य दन्ताङ्कुरान् । एकं त्रीणि च सप्त पञ्च षडिति प्रध्वस्तसख्याक्रमा वाचः क्रौञ्चरिपोः शिशुत्वविकलाः श्रेयांसि पुष्णन्तु वः ॥ १ ॥

---

१ पलायिते २ पौरुषोपघ्नाना पराक्रमिणा निघ्न आयत्तस्तम् ३ प्रभूतप्रभावा ४ कर्णे ५ दैत्यकृतदेवविपत्तीनाम् ६ स्त्री ७ क्रोध. असुरवधकालोत्पन्न इत्यर्थ. ८. अरुणेत्यर्थ ९ केशगुच्छ. १०. कर्णमूलम् ११. सखीभि १२ अमोघदर्शनेत्यर्थ १३. कमलम् १४. कालीय. सर्पस्त शास्तीति स कृष्णस्तत्सहजा भगिनी. यशोदोदरे दुर्गाप्रादुर्भावस्य भागवते प्रसिद्धत्वात्

## हरिहरौ ।

[1]अबलाढ्यविग्रहश्री[2]रमर्त्यनतिर[3]क्षमालयोपेतः । [4]पञ्चक्रमोदितमुखः पायात्[5]परमेश्वरो मुहु[6]रनादिः ॥ १ ॥ [7]पन्नगधारिकराग्रो [8]गङ्गार्या लक्षितो[9]ऽङ्गदोग्रभुजः । [10]शशिखण्डशेखर [11]उमापरिग्रहो मुहुरनादिरवतु त्वाम् ॥ २ ॥ [12]गवीशपत्रो [13]नगजार्तिहारी [14]कुमारतातः [15]शशिखण्डमौलिः । [16]लङ्केशसंपूजितपादपद्मः पायादनादिः परमेश्वरो नः ॥ ३ ॥ पायात्कुमारजनकाख्य उमाविलासः [17]शङ्खप्रभश्च [18]निधनेर्श[19]गवीशयो[20]र्नः । गङ्गां च पन्नगधरश्च [21]पिनाकसक्त आद्याक्षरेण सहितो रहितो भवन्तम् ॥ ४ ॥ स्फटिकमरकतश्रीहारिणोः प्रीतियोगात्तदवतु वपुरेकं कामकंसद्विषोर्वः । भवति गिरिसुतायाः सार्धमम्भोधिपुत्र्या सदृशमहसि कण्ठे यत्र सीमाविवादः ॥ ५ ॥ संप्राप्तं [22]मकरध्वजेन [23]मथनं त्वत्तो मदर्थे पुरा तद्युक्तं [24]बहुमार्गगां मम पुरो निर्लज्ज वोढुस्तव । तामेवानुनयस्व भावकुटिलां हे [25]कृष्णकण्ठग्रहं मुञ्चेत्याह रुषा यमद्रितनया लक्ष्मीश्च पायात्स वः ॥ ६ ॥ यौ तौ शङ्खकपालभूषितकरौ मालास्थिमालाधरौ देवौ द्वारवतीश्मशाननिलयौ नागारिगोवाहनौ । द्वित्र्यक्षौ बलिदक्षयज्ञमथनौ श्रीशैलजावल्लभौ पापं वो हरतां सदा हरिहरौ श्रीवत्सगङ्गाधरौ ॥ ७ ॥ लोले ब्रूहि कपालिकामिनि पिता कस्ते पतिः पाथसां कः प्रत्येति जलादपत्यजननं प्रत्येति यः [26]प्रस्तरात् । इत्थं पर्वतसिन्धुराजसुतयोराकर्ण्य वाक्चातुरीं संस्मेरस्य हरेर्हरस्य च मुदो निघ्नन्तु विघ्नं तु वः ॥ ८ ॥ यस्मादासीत्कुमारः कुवलयदलवल्लीलयोवाह गङ्गां [27]वामा यस्याङ्गसङ्गा पिहितजनचयो यो गवीशध्वजोऽपि । लङ्केशाद्येकनाथो [28]हिमकररुचिभृद्भूविशेषाश्रमोऽसौ वर्णस्याद्यस्य लोपादपहरतु हरिः पातक वः स्मरारिः ॥ ९ ॥

---

१ पार्वती अर्धाङ्गीकरणात्, ( पक्षे ) बलाढ्यो बलिष्ठ २ देवसपूजित ; ( पक्षे ) मृत्युलोकसपूजित . तस्य रक्षणात् ३ अक्षमाला जपमाला; (पक्षे) क्षमालय पृथ्वी ४ पञ्चानन , ( पक्षे ) चक्रेण मोदित मुख यस्य स ५ परमेश्वर. शिव , रमेश्वरो विष्णु ६ न विद्यते आदिर्यस्य स ; ( पक्षे ) आद्यवर्णरहित . ७ सर्पभूषण ; ( पक्षे ) पर्वतधारी गोवर्धनोद्धारणात् ८ भागीरथ्या , ( पक्षे ) गाया एतन्नामकच्छन्दोविशेषस्य ९ अङ्गदभूषणाङ्ग ; ( पक्षे ), गदाभूषित १० चन्द्रमौलि , ( पक्षे ) मयूरपिच्छैर्भूषित ११ उमा पार्वती, मा लक्ष्मी १२ गवीशो वृषो वाहन यस्य, ( पक्षे आद्याक्षरस्य लोपात् ) वीशो गरुडो वाहन यस्य. १३ पार्वतीदु खनाशक , ( पक्षे ) गजेन्द्रपीडाहारक १४ कार्तिकेयपिता, ( पक्षे ) मदनपिता १५. चन्द्र शिरसि यस्य; ( पक्षे ) मयूरपिच्छानि शिरसि यस्य १६ रावणपूजितचरणकमल ; ( पक्षे ) को ब्रह्मा, ईश शिव , एताभ्या पूजितपादपद्म:. १७ शङ्खस्य कान्तिरिव कान्तिर्यस्य स ; ( पक्षे ) खप्रभ आकाशतुल्य . सर्वव्यापकत्वात् १८ यम , ( पक्षे ) कुबेर १९ गवीशो नन्दी, ( पक्षे ) वीशो गरुड २० यमकुबेरार्थे शत्रु प्रति विजिगीषोर्गमनम्, नन्दीगरुडार्थे वाहनम् २१ पिनाक आयुधविशेष ; ( पक्षे ) नाक स्वर्ग . २२ शिवपक्षे मदनेन, विष्णुपक्षे समुद्रेण २३ विनाश , ( पक्षे ) विलोडनम् २४ नदीम् गङ्गामित्यर्थ ; ( पक्षे ) वेश्याम् कृष्णस्य कुब्जादासीमित्यर्थ . २५ कृष्णकण्ठ नीलकण्ठ ग्रह निर्बन्ध मुञ्च; ( पक्षे ) कृष्ण कण्ठग्रह मत्कण्ठग्रह मुञ्च २६ पाषाणात् पार्वत्या पर्वतगर्भसजननत्वात् २७ स्त्री, ( पक्षे ) मा लक्ष्मी . २८. चन्द्र ; ( पक्षे ) मीन .

## त्रिमूर्तयः ।

नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने । गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ १ ॥ नमो विश्वसृजे पूर्वं विश्वं तदनु बिभ्रते । अथ विश्वस्य संहर्त्रे तुभ्यं त्रेधास्थितात्मने ॥ २ ॥ रजोजुषे जन्मनि सत्त्ववृत्तये स्थितौ प्रजानां प्रलये तमःस्पृशे । अजाय सर्गस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मने नमः ॥ ३ ॥ श्यामश्वेतारुणाङ्गा जलधरणिधरोत्फुल्लपङ्केरुहस्था मोमासाविन्द्युपेता रथचरणपिनाकोग्रहुंकारशस्त्राः । देवा द्वित्र्यष्टनेत्रा जगदवनसमुच्छेदनोत्पत्तिदक्षाः प्रीता वः पान्तु नित्यं हरिहरविधयस्तार्क्ष्यगोहंसपत्राः ॥ ४ ॥

---

## विष्णुः ।

आदिमध्यान्तरहितं दशाहीनं पुरातनम् । अद्वितीयमहं वन्दे मद्वस्त्रसदृशं हरिम् ॥१॥ जयति स भगवान्कृष्णः शेते यः शेषभोगशय्यायाम् । मध्येपयः पयोधेरपर इवाम्भोनिधिः कृष्णः ॥२॥ अतिविपुलं कुचयुगलं रहसि करैरामृशन्मुहुर्लक्ष्म्याः । तदपहृतं निजहृदयं जयति हरिर्मृगयमाण इव ॥ ३ ॥ जयति स नाभिर्जगतां स्वनाभिरन्ध्रोद्भवज्जगद्बीजः । दामोदरो निजोदरगह्वरनिर्विष्टजगदण्डः ॥ ४ ॥ श्रीकरपिहितं चक्षुः सुखयतु वः पुण्डरीकनयनस्य । जघनमिवेक्षितुमागतमब्जनिभं नाभिसुषिरेण ॥ ५ ॥ श्यामं श्रीकुचकुङ्कुमपिञ्जरितमुरो मुरद्विषो जयति । दिनमुखनभ इव कौस्तुभविभाकरो यद्विभूषयति ॥ ६ ॥ प्रतिबिम्बितप्रियातनु सकौस्तुभं जयति मधुभिदो वक्षः । पुरुषायितमभ्यस्यति लक्ष्मीर्यद्वीक्ष्य मुकुरमिव ॥ ७ ॥ केलिचलाङ्गुलिलम्भितलक्ष्मीनाभिर्मुरद्विषश्चरणः । स जयति येन कृता श्रीरनुरूपा पद्मनाभस्य ॥ ८ ॥ रोमावली मुरारेः श्रीवत्सनिवेशिताग्रभागा वः । उन्नालनाभिनलिनच्छायेवोत्तापमपहरतु ॥ ९ ॥ श्रीधाम्नि दुग्धोदधिपुण्डरीके यश्चञ्चरीकद्युतिमातनोति । नीलोत्पलश्यामलदेहकान्तिः स वोऽस्तु भूत्यै भगवान्मुकुन्दः ॥ १० ॥ वक्षःस्थली रक्षतु सा जगन्ति जगत्प्रसूतेर्गरुडध्वजस्य । श्रियोऽङ्गरागेण विभाव्यते या सौभाग्यहेम्नः कषपट्टिकेव ॥ ११ ॥ जयत्युपेन्द्रः स चकार दूरतो विभित्सया यः क्षणलब्धलक्ष्मया । दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥ १२ ॥ नमामि

---

१ मा लक्ष्मी, उमा पार्वती २ चक्रम्. ३ गरुड. ४ वस्त्रस्य प्रान्तभागस्था. सूत्रवर्तिका. ५ लक्ष्मी. ६. रतरीतिवसनविहीनतया लज्जावशादिति भाव ७ पिहितेऽपि चक्षुर्गोलकेऽन्यमार्गेण पुण्डरीकनयनमुत्पादयित्वा जघनविलोकनं कृतमित्यर्थ ८ रन्ध्रम्. ९ रक्तीकृतम् दृढालिङ्गनादिति भाव. १०. प्रात कालीननभस. स्वतो नीलिमवत्त्वात् ११ कौस्तुभमणिरेव सूर्यो यस्मिन् १२. विपरीतरतम् १३ दर्पणम् १४ स्पृष्ट. १५. चरणरूपपद्मनाभित्वेनेति भाव १६ रोमावल्यां नालच्छायोत्प्रेक्षा. श्रीवत्से च नलिनच्छायोत्प्रेक्षा १७ महासंतापम् १८ भृङ्ग १९. निकषप्रावा

र्भर्वोश्वरणाम्बुजद्वयं सशेखरैर्मौखरिभिः कृतार्चनम् । समस्तसामन्तकिरीटवेदिकाविटङ्कपीठो-
ल्लुठितारुणाङ्गुलि ॥ १३ ॥ पद्मापयोधरतटीपरिरम्भलग्नकाश्मीरमुद्रितमुरो मधुसूदनस्य । व्यक्ता-
नुरागमिव खेलदनङ्गखेदस्वेदाम्बुपूरमनुपूरयतु प्रियं वः ॥ १४ ॥ कचकुचचुबुकाग्रे पाणिषु
व्यापृतेषु प्रथमजलधिपुत्रीसंगमेऽनङ्गधाम्नि । ग्रथितनिबिडनीवीबन्धनिर्मोक्षणार्थं चतुरधिक-
कराशः पातु वश्चक्रपाणिः ॥ १५ ॥ विरमति महाकल्पे नाभीपथैकनिकेतनस्त्रिभुवनपुरः
शिल्पी यस्य प्रतिक्षणमात्मभूः । किमधिकरणा कीदृक्कस्य व्यवस्थितिरित्यसावुदरमविशद्द्रष्टुं
तस्मै जगन्निधये नमः ॥ १६ ॥ लक्ष्मीपाणिद्वयविरचितं मूलमूर्ध श्रुतीनां व्यक्तं वन्दे चर-
णकमलद्वन्द्वमाद्यस्य पुंसः । यत्रैकस्य व्यथितवलिना पाद्यतोयैर्वितीर्णैरार्द्रस्यैव प्रणतितरलः
क्षालनं पद्मयोनिः ॥ १७ ॥ दृक्पातः कमलासनेऽस्तु भवतु ज्ञानं मनाङ्मारुते श्रीकण्ठोऽयमितः
सुरानिति नतांस्ताक्ष्र्येण विज्ञापितः । प्रेयस्याः क तदासनं क च रुतं कण्ठः क चेत्युल्लसल्ल-
क्ष्म्यावासितमानसो विजयते सुप्तप्रबुद्धो हरिः ॥ १८ ॥ निर्मग्नेन मयाम्भसि स्मरभरार्दा-
लिः समालिङ्गिता केनालीकमिदं तवाद्य कथितं राधे मुधा ताम्यसि । इत्युत्स्वप्नपरंपरासु
शयने श्रुत्वा वचः शार्ङ्गिणः सव्याजं शिथिलीकृतः कमलया कण्ठग्रहः पातु वः ॥ १९ ॥
यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति
नैयायिकाः । अर्हन्नित्यथ जैनशासनरताः कर्मेति मीमांसकाः सोऽयं वो विदधातु वाञ्छित-
फलं त्रैलोक्यनाथो हरिः ॥ २० ॥ येनोत्थाप्य समूलमन्दरगिरिश्छत्रीकृतो गोकुले राहुर्येन
महाबलो सुररिपुः कार्यादशेषीकृतः । कृत्वा त्रीणि पदानि येन वसुधा बद्धो बलिर्लीलया
सोऽयं पातु युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ॥ २१ ॥ मुग्धे मुञ्च विषादमत्र बलभि-
त्कम्पो गुरुस्त्यज्यतां सद्भावं भज पुण्डरीकनयने मान्यानिमान्मानय । इत्थं शिक्षयतः स्व-
यंवरविधौ धन्वन्तरेर्वाक्छलादन्यत्र प्रतिषेधमात्मनि विधिं शृण्वन्हरिः पातु वः ॥ २२ ॥
नाभीपद्मवसच्चतुर्मुखमुखोद्गीतस्तवाकर्णनप्रोन्मीलत्कमनीयलोचनकलाखेलन्मुखेन्दुद्युतिः । स-
क्रोधं मधुकैटभौ सकरुणस्नेह सुतामम्बुधेः सोत्प्रासप्रणय सरोजवसतिं पश्यन्हरिः पातु वः
॥ २३ ॥ निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः कोकप्रीतिचकोरपारणपटुज्योति-
ष्मती लोचने । याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो नाभीपल्वलपुण्डरीकमुकुलः कम्-
म्बोः सपत्नीकृतः ॥ २४ ॥ भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी ध्यानालम्बन-
ता समाधिनिरतैर्नीते हितप्राप्तये । लावण्यैकमहानिधी रसिकतां लक्ष्मीदृशोस्तन्वती युष्मा-

१. विष्णो २. सुरतायास. ३ ब्रह्मणि, (पक्षे) लक्ष्म्या आसने ४ वायौ, (पक्षे) लक्ष्म्या रुदने. ५ शिव, (पक्षे) लक्ष्म्या कण्ठ ६ सखी लक्ष्मीरित्यर्थ ७ असत्यम्. ८ कुप्यसि ९ खेदम्; (पक्षे) शिवम् १० बल भिनत्तीति तम्, (पक्षे) इन्द्रम् ११ बहु, (पक्षे) बृहस्पति १२ सुष्टुभावम्, (पक्षे) सद्भावेन १३ कमललोचने, (पक्षे) विष्णौ. १४. शङ्खस्य. १५ भक्तिप्रह्वादि विशेषणानि नेत्रपक्षे तनुपक्षे च योज्यानि

कं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥ २५ ॥ चत्वारः प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणयः श्रियः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः । भालेष्वब्जभुवो लिखन्ति युगपद्ये पुण्यवर्णावलीः कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः ॥ २६ ॥ आकल्पं मुरजिन्मुखेन्दुमधुरोन्मीलन्मरुन्माधुरीधीरोदात्तमनोहरः सुखयतु त्वां पाञ्चजन्यध्वनिः । लीलालङ्घितमेघनादविभवो यः कुम्भकर्णव्यथादायी दानवदन्तिनां दशमुखं दिक्चक्रमाक्रामति ॥ २७ ॥ भ्राम्यन्मन्दरकन्दरोदरदरीव्यावृत्तिभिर्वारिधेः कल्लोलैरलमाकुलं कलयतो लक्ष्म्या मुखाम्भोरुहम् । औत्सुक्यात्तरलाः स्मराद्विकसिता भीत्या समाकुञ्चिताः क्रोधेनाज्वलिता मदान्मुकुलिताः शौरेर्दृशः पान्तु वः ॥ २८ ॥ पर्यङ्कीकृतनागनायकफणाश्रेणीमणीनां गणे संक्रान्तप्रतिबिम्बसंवलनया बिभ्रद्वपुर्विक्रियाम् । पादाम्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः शतैः कायव्यूहमिवाचरन्नुपचिताकूतो हरिः पातु वः ॥ २९ ॥ प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणामात्मव्यापारगुर्वी जनितजललवा जृम्भितैः साङ्गभङ्गैः । नागाङ्कं मोक्तुमिच्छोः शयनमुरु फणाचक्रवालोपधानं निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥ ३० ॥ श्रीराजीवाक्षवक्षःस्थलनिलयरमाहस्तवास्तव्यलोलल्लीलाब्जान्निःसरन्ती मधुरमधुझरी नाभिपद्मे मुरारेः । स्तोकं लोकमात्रा द्विर्युगमुखशिशोराननेष्वर्प्यमाणं शङ्खप्रान्तेन दिव्यं पय इति विबुधैः शङ्क्यमाना पुनातु ॥ ३१ ॥ **गरुडः** ॥ सौवर्णाङ्कितपर्णमारुतत्वटाहिव्रातकान्ताकुचस्फूर्जन्मौक्तिकभूषणः खगपतिः पूर्णेन्दुबिम्बाननः । पद्माधीश्वरपादपद्मयुगलस्पर्शामलाङ्गानतः पायाद्वो विनतासुतो हरिकृपालोकैकपात्रीकृतः ॥ ३२ ॥

---

## लक्ष्मीः ।

जयन्ति जगतां मातुः स्तनकुङ्कुमबिन्दवः । मुकुन्दाश्लेषसंक्रान्तकौस्तुभश्रीविडम्बिनः ॥ १ ॥ पायात्पयोधिदुहितुः कपोलामलचन्द्रमाः । यत्र संक्रान्तबिम्बेन हरिणा हरिणायितम् ॥ २ ॥ देवेऽर्पितचरणसृजि बहुमाये वहति कैटभीरूपम् । जयति सुरासुरहसिता लज्जाजिह्मेक्षणा लक्ष्मीः ॥ ३ ॥ तल्पीकृताहिरगणितगरुडो हाराभिहतविधिर्जयति । फणशतपीतश्वासो रागान्धायाः श्रियः केलिः ॥ ४ ॥ स्मेराननेन हरिणा सस्पृहमाकारवेदिनाकलितम् । जयति पुरुषायितायाः कमलायाः कैटभीध्यानम् ॥ ५ ॥ कमलासनकमलेक्षणकमलारिकिरीटकमलभृद्वाहैः । नुतपदकमला कमला करधृतकमला करोतु मे कमलम् ॥ ६ ॥ दन्तैः कोरकिता स्मितैर्विकसिता भ्रूविभ्रमैः पत्रिता दोर्भ्यां पल्लविता नखैः कुसुमिता ली-

---

१ पश्यत २ अदत्तपरपुत्रिकाप्रार्थकत्वेन ३. संबद्ध ४ बहुशरीरताम् ५ समृद्धकामभाव ६ उन्मीलनम् ७ पुटविदारणम् ८ शेषशिरःस्थानामित्यर्थः ९ शेषनागक्रोडरूपम् १० बृहत् ११ मण्डल. १२ ईषत्संकुचिता. १३ बहु १४ ब्रह्मण. १५. हरिण इवाचरितम्

लाभिरुद्वेलिता । उत्तुङ्गस्तनमण्डलेन फलिता भक्ताभिलाषे हिता काचित्कल्पलता सुरासुरनुता पायात्सुधाब्धेः सुता ॥ ७ ॥ उत्तुङ्गस्तनमण्डलोपरिलसत्प्रालम्बमुक्तामणेरन्तर्बिम्बितमिन्द्रनीलनिकरच्छायानुकारी द्युतिः । लज्जाव्याजमुपेत्य नम्रवचना स्पष्टं मुरारेर्वपुः पश्यन्ती मुदिता मुदेऽस्तु भवतां लक्ष्मीर्विवाहोत्सवे ॥ ८ ॥ आख्याते हसितं पितामह इति त्रस्तं कपालीति च व्यावृत्तं गुरुरित्ययं दहन इत्याविष्कृता भीरुता । पौलोमीपतिरित्यसूयितमथ व्रीडाविनम्रश्रिया पायाद्वः पुरुषोत्तमोऽयमिति यो न्यस्तः स पुष्पाञ्जलिः ॥ ९ ॥ क्रीडाभिन्नहिरण्यशुक्तिकुहरे रक्तात्मनावस्थितान्हारं हारमुदारकुङ्कुमरसानव्याजभव्यान्नखैः । वीरश्रीकुचकुम्भसीम्नि लिखतो वीरस्य पत्रावलीस्तत्कालोचितभावबन्धमधुरं मन्दस्मितं पातु वः ॥१०॥ यादृग्जानासि जाम्बूनदगिरिशिखरे कान्तिरिन्दोः कलानामित्यौत्सुक्येन पत्यौ स्मितमधुरमुखाम्भोरुहं भूषमाणे । लीलादोलायमानश्रुतिकमलमिलद्भृङ्गसंगीतसाक्षी पायादम्भोधिजायाः कुसुमशरकलानाट्यनान्दीनकारः ॥ ११ ॥ उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः । भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः शय्यामालिङ्ग्य नीत वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ १२ ॥

## ब्रह्मा ।

तं वन्दे पद्मसद्मानमुपवीतच्छटाछलात् । गङ्गास्रोतस्त्रयेणैव यः सदैव निषेव्यते ॥ १ ॥ कृतकान्तकेलिकुतुकश्रीशीतश्वाससेकनिद्राणः । घोरितविततालिरुतो नाभिसरोजे विधिर्जयति ॥ २ ॥

## दशावताराः ।

वेदानुद्धरते जगन्निवहते भूलोकमुद्बिभ्रते दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते । पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते म्लेच्छान्मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥ १ ॥ यस्यालीयत शल्कसीम्नि जलधिः पृष्ठे जगन्मण्डलं दंष्ट्रायां धरणी नखे दितिसुताधीशः पदे रोदसी । क्रोधे क्षत्रगणः शरे दशमुखः पाणौ प्रलम्बासुरो ध्याने विश्वमसावधार्मिककुलं कस्मैचिदस्मै नमः ॥ २ ॥ पौठीनः कमठः किटिर्नरहरिः खर्वाकृतिर्भार्गवो रामः कंसनिषूदनो दशबलः कल्की च नारायणः । युष्माकं स विभूतयेऽस्तु भगवान्सेतुर्भवाम्भोनिधावुत्ताराय युगे युगे युगपतिस्त्रैलोक्यनाथो हरिः ॥ ३ ॥ वेदा येन समुद्धृता वसुमती पृष्ठे धृताप्युद्धृता दैत्येशो नखरैर्हतः फणिपतेर्लोकं बलिः प्रापितः । क्ष्माक्षत्रा जगती दशास्यरहिता माता कृता रोहिणी हिंसा दोषवती धराप्ययवना पायात्स नारायणः

१ लाङ्गलम् २ धारयते ३ त्वक् ४. प्राणे. ५ मत्स्य ६ वराह.. ७ बुद्ध .

॥ ४ ॥ **मत्स्यः** ॥ मग्ने मेरौ पतति तपने तोयबिन्दाविवेन्दावन्तर्लीने जलधिसलिले व्याकुले देवलोके। मात्स्यं रूपं मुखपुटतटाकृष्टनिर्मुक्तवार्धि श्रीकान्तस्य स्थलजलगतं वेत्यलक्ष्यं पुनातु ॥ ५ ॥ वियत्पुच्छातुच्छोच्छलितजलगर्भे निधिरपामपां नाथः पाथःपृथुललवदुःस्थो वियदभूत् । निधिर्भासामौर्वो दिनपतिरभूदौर्वदहनश्चलत्काये यस्मिन्स जयति हरिर्मीनवपुषा ॥ ६ ॥ जीयासुः शकलाकृतेर्भगवतः पुच्छच्छटाछोटनोदुद्यन्तः शतचन्द्रिताम्बरतलं ते बिन्दवः सैन्धवाः । यैर्व्यावृत्य पतद्भिरौर्वशिखिनस्तेजोजटालं वपुः पानाध्मानवशादरोचकरुजां चक्रे चिरायार्पदम् ॥ ७ ॥ दिश्याद्वः शकलाकृतिः स भगवान्नैःश्रेयसीं संपदं यस्य स्फूर्जदतुच्छपुच्छशिखरप्रेङ्खोलनक्रीडनैः । क्षुभ्यद्वार्धिसमुच्छलज्जलभरैर्मन्दाकिनीसंगतैर्गङ्गासागरसंगमप्रणयिनी जाता विहायःस्थली ॥ ८ ॥ मायामीनतनोस्तनोतु भवतां पुण्यानि पङ्कस्थितिः पुच्छाच्छोटसमुच्छलज्जलगुरुप्राग्भाररिक्तोदधेः। पातालावर्टमध्यसंकटतया पर्याप्तकष्टस्थितेर्वेदोद्धारपरायणस्य सततं नारायणस्य प्रभोः ॥ ९ ॥ जृम्भाविस्तृतवक्त्रपङ्कजविधेर्हृत्वा श्रुतीः सागरे लीनं त्रस्तसमस्तनक्रनिकरं शङ्खं जघानाजिरे । पुच्छोत्क्षिप्तजलोत्करैः प्रतिदिश संतर्प्य यो वै धरां पायाद्वः स मृणालकोमलतनुर्मीनाभिधानो हरिः ॥ १० ॥ हंहो मीनतनो हरे किमुदधे किं वेपसे शैत्यतः स्विन्नः किं वडवानलात्पुलकितः कस्मात्स्वभावादहम् । इत्थं सागरकन्यकामुखशशिव्यालोकनेनाधिकप्रोद्यत्कामजचिह्ननिह्नुतिपरः शौरिः शिवायास्तु वः ॥ ११ ॥ चन्द्रादित्योरुनेत्रः कमलभववैभवस्फारपृष्ठप्रतिष्ठो भास्वत्कालाग्निजिह्वः पृथुलगलगुहादृष्टनिःशेषविश्वः । आद्भिः पुच्छोत्थिताभिश्चकितसुरवधूनेत्रसंसूचिताभिर्मत्स्यश्छिन्नाब्धिवेलं गगनतलमलं क्षालयन्वः पुनातु ॥ १२ ॥ यं दृष्ट्वा मीनरूपं स्फुरदनलशिखायुक्तसंरक्तनेत्रं लोलद्विस्तीर्णकर्णक्षुभितजलनिधिं नीलजीमूतवर्णम् । श्वासोच्छ्वासानिलौघैः प्रचलितगगनं पतिवारिं मुरारिं दिङ्मूढोऽभूत्स शङ्खः स भवतु भवतां भूतये मीनरूपः ॥ १३ ॥ दिङ्मूढं तं सुरारिं किल शिर्तिदशनैः पीड्यमानं रटन्तं हृत्वा तीरे पयोधेः करतलकलितं पूरयामास शङ्खम् । नादेनाक्ष्योभ्य विश्वं प्रमुदितविबुधं त्रस्तदैत्यं सदेवैर्दत्तार्घः पद्मयोनेः प्रहसितवदनः पातु वो दत्तवेदः ॥१४॥ **कूर्मः** ॥ निर-

१ बहु २ उदकम्. ३ विपुल ४ दरिद्र ५ सूर्य ६ वडवानल. यदा पानीय मीनाकृत्या भगवता स्वपुच्छेनोच्छालित तदा सर्वमपि सामुद्र जल वियति गतम् तत्र च रविर्वर्तत एव स वडवानलाकृत्यादृश्यतेत्यर्थ ७. समुद्रे पानीयाभावात्समुद्रस्याकाशकल्पना तत्र च वाडवाग्ने सूर्योपमेति भाव. ८ मत्स्याकृते ९ इतस्तत आलोडनम् १० ऊर्ध्वं गच्छन्त ११ तेजोव्याप्तम् १२ अग्निसयोगाभाव. १३. अरुचिरोगाणाम् १४ यो निदाघज्वरादिरुगाक्रान्तो बहुपानीय पिबति तस्य पश्चात्पानीयस्यारुचिर्जायते तथैतस्य वाडवाग्नेरपीति भाव. १५ दोला १६ आकाशस्थली यत सागरजल मत्स्यपुच्छेनोच्छालित सुरनद्या सङ्गमवाप ततो गङ्गासागरसगमतीर्थे नभस्यपि जज्ञ इति भाव. १७ उल्लोलनम् १८ भूरन्ध्रम्. १९ सकीर्णतया २०. वेदान्. २१ रणाङ्गणे. २२ भृत्वा २३ अपलपनम् २४ गरिष्ठे २५. ब्रह्मणो जातम् ब्रह्माण्डमित्यर्थ.. २६ सविस्मय दृष्टाभि. २७. व्याकुल. २८. तीक्ष्णदन्तै २९ वादयामास.

वधि च निराश्रयं च यस्य स्थितम्[1] अनिवर्तितकौतुकप्रपञ्चम् । प्रथम इह भवान्स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ॥ १५ ॥ नमस्कुर्मः कूर्मं नमदमरकोटीर[2]निकरप्रसर्पन्माणिक्यच्छविमिलितमाञ्जिष्ठ[3]वपुषम् । जरीजृम्भ[4]डिम्भ[5]द्युमणि[6]रमणीयांशुलहरीपरीरम्भस्फूर्जद्दलभिदुपलाद्रि[7]प्रतिभटम् ॥ १६ ॥ निष्प्रत्यूहमनल्पकल्पचरितस्त्रैलोक्यरक्षागुरुः क्रीडाकूर्मकलेवरः स भगवान्दिश्यादमन्दां मुदम् । कल्पान्तोदधिमध्यमज्जनवशाद्व्यासर्पितः संलुठत्पृष्ठे यस्य बभूव सैकतकणच्छायं धरित्रीतलम् ॥ १७ ॥ पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनैर्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः । यत्संस्कारकलानुवर्तनवशाद्वेलाछलेनाम्भसां यातायातमतान्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥ १८ ॥ यो धत्ते शेषनागं तदनु वसुमती स्वर्गपातालयुक्तां युक्तां सर्वैः समुद्रैर्हिमगिरिकनकप्रस्थमुख्यैर्नगेन्द्रैः । एतद्ब्रह्माण्डमस्यामृतघटसदृशं भाति वशे[11] मुरारेः पायाद्वः कूर्मदेहः प्रकटितमहिमा माधवः कामरूपी ॥ १९ ॥ वराहः ॥ हरेर्लीलावराहस्य दंष्ट्रादण्डः स पातु वः । हेमाद्रिकलसा यत्र धात्री छत्रश्रियं दधौ ॥ २० ॥ स जयति महावराहो जलनिधिजठरे चिरं निमग्नोऽपि । येनान्त्रैरिव सह फणिगणैर्बलादुद्धृता धरणी ॥ २१ ॥ पातु वः कपटकोल[12]केशवो यस्य निश्वसितमारुतोद्धता । उच्छ्रितिप्रपतनैरचीक्लृपत्[13]कलिकन्दुक[14]तुलामिला मुहुः ॥२२॥ न पङ्कैरालेपं कलयति धरित्रीव्ययभयान्न मुस्तामादत्तेऽप्युरगनगरभ्रंशभयतः । न धत्ते ब्रह्माण्डस्फुटनसघृणो घर्घररवं महाक्रोडः पायादिति सकलसंकोचितमुखः ॥ २३ ॥ पातु त्रीणि जगन्ति संततमकूपारात्समभ्युद्धरन्धात्रीं कोलकलेवरः स भगवान्यस्यैकदंष्ट्राङ्कुरे । कूर्मः कन्दति[16] नालति[17] द्विरसनः पत्रन्ति[18] दिग्दन्तिनो मेरुः कोशति[19] मेदिनी जलजति[20] व्योमापि रोलम्बति[21] ॥ २४ ॥ पातु श्रीस्तनपत्रभङ्गिमकरीमुद्राङ्कितोरःस्थलो देवो वः स जगत्पतिर्मधुवधूवक्त्राब्जचन्द्रोदयैः[22] । क्रीडाक्रोडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भूर्भाति स्म प्रलयाब्धिपल्वलतलोत्खातैकमुस्ताकृतिः ॥ २५ ॥ दृप्यद्दैत्यनितम्बिनीजनमनःसंतोषसंकोचनः कुर्याद्विश्वमनश्वरं स भगवान्क्रोडावतारो हरिः । यद्दंष्ट्राङ्कुरकोटिकोटरकुटीकोणान्तरस्थेयसी पृथ्वी भात्यवदातकेतकदलालीनेव भृङ्गाङ्गना ॥ २६ ॥ अष्टौ यस्य दिशो दलानि विपुलः कोशः सुवर्णाचलः कान्त केसरजालकर्मकिरणा भृङ्गाः पयोदावली । नालं

१ अवस्थानम् २ मुकुट ३ लोहितम् ४ अतिशयेन विक्रमन् ५ तरुण ६ सूर्य ७. इन्द्ररत्नगिरि: पूर्वाचल इत्यर्थ: ८ आकुञ्चनप्रसारणादि ९ पृष्ठ इति शेष: १० तदुपरि ११ पृष्ठे १२ वराह १३. अकारेत् १४ यथा कन्दुकक्रीडया शिशुभिरुत्क्षिप्यतेऽपक्षिप्यते च तथैव भूरपि श्वासवायुप्रेरितोर्ध्वाधःपतनैः कन्दुकतुलां तुल्यतीति भाव: १५ समुद्रात् १६. कन्द इवाचरति १७. नालमिवाचरति १८ पत्राणीवाचरन्ति १९ कोशक इवाचरति २०. कमल इवाचरति २१ भ्रमर इवाचरति २२ यथा चन्द्रोदयेऽब्जानि सङ्कोचमाप्नुवन्ति तथा हरेरुदयान्मधुवधूवक्त्राम्भोरुहाणि निःश्रीकाण्यभवन्निति भाव:. २३ भ्रमर २४ निष्कुटगमनम् २५ उज्ज्वलम्

शेषमहोरगः प्रविततं वारांनिधेर्लीलया तद्वः पातु समुद्धरन्कुवलयं क्रोडाकृतिः केशवः ॥२७॥ बिभ्राणोऽभिनवेन्दुकोटिकुटिलं दंष्ट्राङ्कुरं लीलया क्रोडाकारधरो हरिः स भगवान्भूयाद्विभूतिप्रदः । यस्योत्क्षिप्तवतः क्षमाकमलिनीमालम्बमानः क्षणं लोलद्वालमृणालनालतुलनां भेजे भुजङ्गेश्वरः ॥ २८ ॥ मुक्तैर्यास्यति कुत्रचिद्वसुमती दंष्ट्राङ्कुरस्थेयसी कुक्षौ क्षोभमवाप्स्यति त्रिभुवनं रुद्धैरमीभिः क्रमात् । इत्यस्वल्पविकल्पमीलितमते. कण्ठे लुठन्तो मुहुः क्रोडाकारधरस्य कैटभजितः श्वासानिलाः पान्तु वः ॥ २९ ॥ लीने श्रोत्रैकदेशे नभसि नयनयोस्तेजसि क्वापि नष्टे श्वासग्रासोपभुक्ते मरुति जलनिधौ पादरन्ध्रार्धपीते । पोत्रप्रान्तैकरोमान्तरविवरगतां मार्गतश्चक्रपाणेः क्रोडाकारस्य पृथ्वीमकलितविभवं वैभवं वः पुनातु ॥३०॥ सिन्धुष्वङ्गावगाहः खुरविवरविशत्तुच्छतोयेषु नाप्तः प्राप्ताः पातालपङ्के न लुठितरुचयः पोत्रमात्रोपयोगात् । दंष्ट्राविष्टेषु नाप्तः शिखरिषु च पुनः स्कन्धकण्डूविनोदो येनोद्धारे धरिञ्याः स जयति विभुताविघ्नितेच्छो वराहः ॥ ३१ ॥ नृसिंहः ॥ शत्रोः प्राणानिलाः पञ्च वयं दश जयोऽत्र कः । इति कोपादिवाताम्राः पान्तु वो नृहरेर्नखाः ॥३२॥ प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाछटः । श्वासक्षिप्तकुलक्ष्माभृत्पातु वो नरकेसरी ॥ ३३ ॥ व्याधूतकेसरसटाविकरालवक्त्र हस्ताग्रविस्फुरितशङ्खगदासिचक्रम् । आविष्कृतं सपदि येन नृसिहरूपं नारायणं तमपि विश्वसृजं नमामि ॥ ३४ ॥ वपुर्दलनसंभ्रमात्स्वनखरं प्रविष्टे रिपौ क्व यात इति विस्मयात्प्रहितलोचन' सर्वतः । वृथेति करताडनान्निपतितं पुरो दानवं निरीक्ष्य भुवि रेणुवज्जयति जातहासो हरिः ॥३५॥ चटच्चटिति चर्मणि च्छमिति चोच्छलच्छोणिते धगद्धगिति मेदसि स्फुटरवोऽस्थिनि ष्टागिति । पुनातु भवतो हरेरमरवैरिवीरोरसि क्वणत्करजपञ्जरक्रकचघर्षजन्मानलः ॥ ३६ ॥ ससत्वरमितस्ततस्ततविहस्तहस्ताटवीनिकृत्तसुरशत्रुहृत्क्षतजसिक्तवक्षःस्थलः । स्फुरद्वरगभस्तिभि. स्थगितसर्वसंसत्द्युतिः समस्तनिगमैस्तुतो नृहरिरस्तु न' स्वस्तये ॥ ३७ ॥ चञ्चच्चण्डनखाग्रभेदविगलद्दैत्येन्द्रवक्षःक्षरद्रक्ताभ्यक्तसुपाटलोद्भटसटासंभ्रान्तभीमाननः । तिर्यक्कण्ठकठोरघोषघटनासर्वाङ्गखर्वीभवद्दिग्मातङ्गनिरीक्षितो विजयते वैकुण्ठकण्ठीरवः ॥३८॥ दंष्ट्रासंकटवक्त्रकन्दरलसज्जिह्वस्य हव्याशनज्वालाभासुरभूरिकेसरसटाभारस्य दैत्यद्रुह' । व्यावल्गद्बलवद्धिरण्यकशिपुक्रोडस्थलास्फालनस्फारप्रस्फुटदस्थिपञ्जरवक्रूरा नखाः पान्तु व' ॥ ३९ ॥ सोमार्धायितनिष्पिधानदशनः संध्यायितान्तर्मुखो बालार्कायितलोचनः सुरधनुर्लेखायितभ्रूलतः । अन्तर्नादनिरोधपीवरगलत्त्वक्कूपनिर्यत्तडित्तारस्फारसटावरुद्धगगन. पायान्नृसिह' स वः ॥ ४० ॥ विद्युच्चक्रकरालकेसरसटाभारस्य दैत्यद्रुहः शीर्ण-

१. वराहमुखाग्रे. २ विदारणम्. ३ भयात् ४. नखा ५ करपत्रकम् ६ विस्तीर्णौ ७ व्याकुलौ. ८. रुधिरम् ९ आच्छादिता १० सूर्य ११ वेदा १२. विदारणम् १३ सिक्ता १४. सकीर्ण. १५ उत्सङ्गस्थलम् १६ रोमकूपा. १७ रक्तीभवन्

न्नेत्रहुताशडम्बरभृतः सिंहाकृतेः शार्ङ्गिणः । विस्फूर्जद्गलगर्जितर्जितककुम्मातङ्गदर्पोदयाः संरम्भाः सुखयन्तु वः खरनखक्षुण्णद्विषद्वक्षसः ॥ ४१ ॥ दैत्यानामधिपे नखाङ्कुरकुटीकोणप्रविष्टात्मनि स्फारीभूतकरालकेसरसटासंघातघोराकृतेः । सक्रोधं च सविस्मयं च सगुरुव्रीडं च सान्तःस्मितं क्रीडाकेसरिणो हरेर्विजयते तत्कालमालोकितम् ॥ ४२ ॥ किं[1] किं सिंहस्ततः किं[2] नरसदृशवपुर्देव चित्रं गृहीतो नैतादृक्क्वापि जीवोऽद्भुतमुपनय मे देव संप्राप्त एषः । चापं चापं न चापीत्यहहहहहहहा कर्कशत्वं नखानामित्थं दैत्येन्द्रवक्षः खरनखमुखरैर्जल्पिवान्यः स वोऽव्यात् ॥ ४३ ॥ भूयः कण्ठावधूतिव्यतिकरतरलोत्तंस[3]नक्षत्रमालाबालेन्दुक्षुद्रघण्टारणितदशदिशादन्तिचीत्कारकारी । अव्याद्वो दैत्यराजप्रथमयमपुरीयानघण्टानिनादो नादो दिग्भित्तिभेदप्रसरसरभसः कूटकण्ठीरवस्य ॥ ४४ ॥ अन्तःक्रोधोज्जिहान[4]ज्वलनभवशिखाकारजिह्वावलीढप्रौढब्रह्माण्डभाण्डः पृथुभुवनगुहागर्भगम्भीरनादः । दृप्यत्पारीन्द्र[5]मूर्तिर्मुरजिदवतु वः सुप्रभामण्डलीभिः कुर्वन्निर्धूमधूम[6]ध्वजनिचित[7]मिव व्योम रोमच्छटानाम् ॥ ४५ ॥ **वामनः** ॥ अङ्घ्रिदण्डो हरेरूर्ध्वमुत्क्षिप्तो बलिनिग्रहे । विधिविष्टर[8]पद्मस्य नालदण्डो मुदेऽस्तु नः ॥ ४६ ॥ खर्वग्रन्थिविमुक्तसन्धिविलसद्वक्षःस्फुरत्कौस्तुभं[9] निर्यन्नाभिसरोजकुड्मलपुटीगम्भीरसामध्वनि[10]। पात्रावाप्तिसमुत्सुकेन बलिना सानन्दमालोकितं पायाद्वः क्रमवर्धमानमहिमाश्चर्यं मुरारेर्वपुः ॥ ४७ ॥ हस्ते शस्त्रकिणाङ्कितोऽरुणविभाकिर्मीरितोरःस्थलो नाभिप्रेङ्खद्दलिर्विलोचनयुगप्रोद्भूतशीतातपः । वार्यूर्मि[11]श्रितवह्निरेष तदिति व्याक्षिप्य वाक्यं[12] कवेस्तारैरध्ययनैर्हरन्बलिमनः पायाज्जगद्वामनः ॥४८॥ ब्रह्माण्डच्छत्रदण्डः शत[13]धृतिभवनाम्भोरुहोनालदण्डः क्षोणीनौकूप[14]दण्डः क्षरदमरसरित्पट्टिकाकेतुदण्डः । ज्योतिश्चक्राक्ष[15]दण्डस्त्रिभुवनविजयस्तम्भदण्डोऽङ्घ्रिदण्डः श्रेयस्त्रैविक्रम[16]स्ते वितरतु विबुधद्वेषिणां कालदण्डः ॥ ४९ ॥ यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतु[17]दण्डायमानादाश्च्योत[18]न्त्यावभासे सुरसरिदमला वैजयन्ती[19]व कान्ता । भूमिष्ठो यस्तथान्यो भुवनगृहमहास्तम्भशोभां दधानः पातामेतौ पयोजोदरललित[20]तलौ पङ्कजाक्षस्य पादौ ॥ ५० ॥ कस्त्वं ब्रह्मन्नपूर्वः क्व च तव वसतिर्याखिला ब्रह्मसृष्टिः कस्ते त्राता ह्यनाथः क्व च तव जनको नैव तातं स्मरामि । किं तेऽभीष्टं ददामि त्रिपदपरिमिता भूमिरल्पं किमेतत्त्रैलोक्यं भावगर्भं बलिमिदमवदद्वामनो वः

---

१ हिरण्यकशिपोस्तदनुचरस्य चोक्तिप्रत्युक्तय २ किं भयमित्यर्थ ३. उच्चै स्थायिनी ४ उत्पद्यमान ५ सिंह ६. अग्नि ७. व्याप्तम्. ८ आसनम् ९ यतो हरेर्भगवतो हृदये कौस्तुभमणिर्लोहितच्छविरस्त्यतस्तत्प्रभाभि. कर्बुरितत्व वक्ष स्थलस्यापीति भाव १० यतो हरेर्नाभौ कमल वर्ततेऽतस्तत्र तत्सुरभिगन्धलोलुपतया भ्रमरागमन घटत एवेति भाव ११ लहरी १२ शुक्रस्य १३ ब्रह्मा १४ गुणवृक्ष. १५ नाभिक्षेप्यदारुदण्ड.. १६ त्रिषु लोकेषु पादन्यासो यस्य तस्य १७ ज्योति शास्त्रप्रसिद्धो गगने प्रत्यक्षदृश्य उत्पातरूपो मणिकेतु. १८ गच्छन्ती १९ पताका. २० आरक्तानलाविति भाव

स पायात् ॥ ९१ ॥ **परशुरामः** ॥ कुलाचला यस्य महीं द्विजेभ्यः प्रयच्छतः सीमदृषत्त्वमापुः[1] । बभूवुरुत्सर्गजलं समुद्राः स रैणुकेयः श्रियमातनोतु[2] ॥ ९२ ॥ किं दोर्भ्यां किमु कार्मुकोपनिषदा[3] भर्गप्रसादेन किं किं वेदाधिगमेन भास्वति भृगोर्वंशे च किं जन्मना । किं वानेन ममाद्भुतेन तपसा[4] पीडां कृतान्तोऽपि चेद्विप्राणां कुरुते किमप्यनुशयो रामस्य पुष्णातु वः ॥ ९३ ॥ नाशिष्यः किमभूद्भवः किमभवन्नापुत्रिणी रेणुका नाभूद्विश्वमकार्मुकं किमिति वः प्रीणातु रामत्रपा । विप्राणां प्रतिमन्दिरं मणिगणोन्मिश्राणि दण्डाहतो नाब्धीनां स मया यमोऽपि महिषेणाम्भांसि नोद्वाहितः ॥ ९४ ॥ पायाद्वो जमदग्निवंशतिलको वीरव्रतालंकृतो रामो नाम मुनीश्वरो नृपवधे भास्वत्कुठारायुधः । येनाशेषहताहिताङ्गरुधिरैः संतर्पिताः पूर्वजा भक्त्या चाश्वमखे समुद्रवसना भूर्हन्तकारीकृता ॥ ९५ ॥ द्वारे कल्पतरुर्गृहे सुरगवी चिन्तामणीरङ्गदे पीयूषं सरसीषु विप्रवदने विद्याश्चतस्रो दश । एवं कर्तुमयं तपस्यति भृगोर्वंशावतंसो मुनिः पायाद्वोऽखिलराजकक्षयकरो भूदेवभूषामणिः ॥ ९६ ॥ **रामचन्द्रः** ॥ वन्दामहे महेशानचण्डकोदण्डखण्डनम् । जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥ ९७ ॥ स्वर्णैणाजिनशयनो योजितनयनो दशास्यदिग्भागे । मुहुरवलोकितचापः कोऽपि दुरापः स नीलिमा शरणः ॥ ९८ ॥ कनकनिकषभासा सीतयालिङ्गिताङ्गो नवकुवलयदामश्यामवर्णाभिरामः । अभिनव इव विद्युन्मण्डितो मेघखण्डः शमयतु मम तापं सर्वतो रामचन्द्रः ॥ ९९ ॥ उत्फुल्लामलकोमलोत्पलदलश्यामाय रामामनःकामाय प्रथमाननिर्मलगुणग्रामाय रामात्मने । योगारूढमुनीन्द्रमानससरोहंसाय संसारविध्वंसाय स्फुरदोजसे रघुकुलोत्तंसाय पुंसे नमः ॥ ६० ॥ यो रामो न जघान वक्षसि रणे तं रावणं सायकैर्हृद्यस्य प्रतिवासरं वसति सो तस्या ह्यहं राघवः । मय्यास्ते भुवनावली परिवृता द्वीपैः समं सप्तभिः स श्रेयो विदधातु नस्त्रिभुवनत्राणैकचिन्तापरः ॥ ६१ ॥ राज्यं येन पटान्तलग्नतृणकं त्यक्तं गुरोराज्ञया पाथेयं परिगृह्य कार्मुकवरं घोरं वनं प्रस्थितः । स्वाधीनः शशिमौलिचापविषये प्राप्तो न वै विक्रियां पायाद्वः स बिभीषणाग्रजनिहा रामाभिधानो हरिः ॥ ६२ ॥ कारुण्यामृतनीरमाश्रितजनश्रीचातकानन्ददं शार्ङ्गाखण्डलचापमम्बुजभवाग्नीन्द्रादिवर्हीष्टदम् । चारुस्मेरमुखोल्लसज्जनकजासौदामिनीशोभितं श्रीरामाम्बुदमाश्रये-

१ यदा ब्राह्मणेभ्यो भूर्दत्ता तदा तेषां स्वस्वभूमिसीमार्थं कुलपर्वता एवासन्निति भावः. २ यदा याचकेभ्यो दानं दीयते तदा दानात्प्राग्दातृभिरुत्सर्गजलं दीयते अतस्तेनैतावद्दानं दत्तं येन समुद्रा उत्सर्गजलतया भूवन्निति भावः. ३ धनुर्वेदविद्याज्ञानरहस्येन ४ यतो महतामनुग्रहस्तदा सफलः स्याद्यद्युपकारः कस्यचित्कर्तुं शक्येत परं मया तत्पीडापि निवारिता न भवत्यतः शंभुप्रसादेन किमित्यर्थः ५ यतस्तपसासाध्यमपि साध्यते परं यदि मया तत्कृत्यं नासाधि तदानेन तपसा किमिति भावः ६ शत्रवः ७ ब्राह्मणेभ्यो देयत्वेन विहितेत्यर्थः. "ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयम् । अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः" इत्युक्तत्वात्. ८ समूहः. ९ सीता. १० विभीषणस्याग्रजन्मा रावणस्तं हन्तीति सः.

ऽखिलजगत्संसारतापापहम् ॥ ६३ ॥ कूर्मो मूलवदालवालवदपांराशिर्लतावद्दिशो मेघाः पल्लववत्प्रसूनफलवन्नक्षत्रसूर्येन्दवः । स्वामिन्व्योमतरुः क्रमो मम कियान्श्रुत्वेति गां मारुतेः सीतान्वेषणमादिशन्दिशतु वो रामः सलज्जश्रियः ॥ ६४ ॥ एतौ द्वौ दशकण्ठकण्ठकदलीकान्तारकान्तिच्छिदौ वैदेहीकुचकुम्भकुङ्कुमरजःसान्द्रारुणाङ्काङ्कितौ । लोकत्राणविधानसाधुसवनप्रारम्भयूपौ भुजौ देयास्तामुरुविक्रमौ रघुपतेः श्रेयांसि भूयांसि वः ॥ ६५ ॥ कल्याणानां निधानं कलिमलमथनं पावनं पावनानां पाथेयं यन्मुमुक्षोः सपदि परपदप्राप्तये प्रस्थितस्य । विश्रामस्थानमेकं कविवरवचसां जीवनं सज्जनानां बीजं धर्मद्रुमस्य प्रभवतु भवतां भूतये रामनाम ॥ ६६ ॥ कल्याणोल्लाससीमा कलयतु कुशलं कालमेघाभिरामा काचित्साकेतधामा भवगहनगतिक्लान्तिहारिप्रणामा । सौन्दर्यह्रीणकामा धृतजनकसुतासादरापाङ्गधामा दिक्षु प्रख्यातभूमा दिविषदभिनुता देवता रामनामा ॥ ६७ ॥ योऽद्धा योद्धावधीत्तान्सपदि पलभुजः संपराये परा ये येनायेनाश्रितानां स्तुतिरवनमितेशानचापेन चापे । लङ्कालंकारहर्ता ककुभि ककुभि यः कान्तया सीतयासीदूनो दूनोऽथ हृष्टः स विभुरवतु वः स्वःसंभार्यः सभार्यः ॥६८॥ (सीता) ॥ उन्मृष्टं कुचसीम्नि यत्र मकरं दृष्ट्वा हठालिङ्गनात्कोपो मास्तु पुनर्लिखाम्यमुमिति स्मेरे रघूणां वरे । कोपेनारुणितास्रुपातदलितः प्रेम्णा च विस्तारितो दत्तो मैथिलकन्यया दिशतु नः क्षेमं कटाक्षाङ्कुरः ॥ ६९ ॥ (हनूमान् )॥ कृतक्रोधे यस्मिन्नमरनगरीमङ्गलरवा नवातङ्का लङ्का समजनि वनं दृश्वति सति । सदा सीताकान्तप्रणतिमतिविख्यातमहिमा हनूमानव्याद्वः कपिकुलशिरोमण्डनविधिः ॥ ७० ॥ (रामकृष्णौ) ॥ मर्दितरावणकंसौ शरयूयमुनाविहारिणौ देवौ । अर्पितविप्रकुमारौ हरिपतिहरिकेतनप्रियौ वन्दे ॥ ७१ ॥ यः पूतनामारणलब्धकीर्तिः काकोदरो येन विनीतदर्पः । यशोदयालंकृतमूर्तिरव्यात्पतिर्यदूनामथवा रघूणाम् ॥ ७२ ॥ **कृष्णः** ॥ इन्दीवरदलश्याममिन्दिरानन्दकन्दलम् । वन्दारुजनमन्दारं वन्देऽहं यदुनन्दनम् ॥ ७३ ॥ देव पायादपायान्नः स्मेरेन्दीवरलोचनः । संसारध्वान्तविध्वंसहंसः कंसनिषूदनः ॥ ७४ ॥ पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः । त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः ॥ ७५ ॥ दर्पणार्पितमालोक्य मायास्त्रीरूपमात्मनः । आत्मन्येवानुरक्तो वः शिवं दिशतु केशवः ॥ ७६ ॥ हृदय कौस्तुभोद्भासि हरेः पुष्णातु वः श्रियम् । राधाप्रवेशरोधाय दत्तमुद्रमिव श्रिया ॥ ७७ ॥ अवलोकितमनुमोदितमालिङ्गितमङ्गनाभिरनुरागैः । अधिवृन्दाव-

---

१ नाचम् २ निश्चिनम् ३ राक्षसान्. ४ युद्धे ५ दर्पिष्ठा ६ भाग्येन. ७ प्राप्तवान् ८. दु स्थितमना ९ स्वर्गस्वामी १० मकरम् ११ नवसाहसा १२ अर्जुन १३ पूतनाया मारणे लब्धा कीर्तिः; (पक्षे) परिभ्रनामा रणे लब्धा कीर्तिश्च येन १४ काकोदरनामा राक्षस., (पक्षे) धृष्ट काक. १५ यशोदया मात्रालंकृतो देहो यस्य, (पक्षे) यशसा दयया चालंकृतो देहो यस्य

नकुञ्जं मरकतपुञ्जं नमस्यामः ॥ ७८ ॥ मकरीविरचनभङ्ग्या राधाकुचकलशपीडनव्यसनी । ऋजुमपि रेखां लुम्पन्वह्लववेपो हरिर्जयति ॥ ७९ ॥ कठिनतरदामवेष्टनलेखासंदेहदायिनो यस्य । राजन्ति वलिविभङ्गाः स पातु दामोदरो भवतः ॥ ८० ॥ खिन्नोऽसि मुञ्च शैलं बिभृमो वयमिति वदत्सु शिथिलभुजः । भरभुग्नवितथबाहुषु गोपेषु हसन्हरिर्जयति ॥ ८१ ॥ नीतं नवनवनीतं कियदिति पृष्टो यशोदया कृष्णः । इयदिति गुरुजनसंसदि करधृतराधापयोधरः पातु ॥८२॥ स्तनंधयं तं जननीमुखाब्जं विलोक्य मन्दस्मितमुज्ज्वलाङ्गम् । स्पृशन्तमन्यं स्तनमङ्गुलीभिर्वन्दे यशोदाङ्कगतं मुकुन्दम् ॥८३॥ भुजप्रभादण्ड इवोर्ध्वगामी स पातु वः कंसरिपोः कृपाणः । यः पाञ्चजन्यप्रतिबिम्बभङ्ग्या धाराम्भसः फेनमिव व्यनक्ति ॥ ८४ ॥ विहाय पीयूषरसं मुनीश्वरा ममाङ्घ्रिराजीवरसं पिबन्ति किम् । इति स्वपादाम्बुजपानकौतुकी स गोपबालः श्रियमातनोतु वः ॥ ८५ ॥ विलिख्य सत्याकुचकुम्भसीम्नि पत्रावलिन्यासमिषेण राधाम् । लीलारविन्देन तया सरोषं पायाद्धिटः कोऽप्यभिहन्यमानः ॥८६॥ कुञ्चिताधरपुटेन पूरयन्वंशिकाप्रचलदङ्गुलिपङ्क्तिः । मोहयन्निखिलवामलोचनाः पातु कोऽपि नवनीरदच्छविः ॥ ८७ ॥ अतसीकुसुमोपमेयकान्तिर्यमुनातीरकदम्बमूलवर्ती । नवगोपवधूविनोदशाली वनमाली वितनोतु मङ्गलं वः ॥ ८८ ॥ पुञ्जीभूतं प्रेम गोपाङ्गनानां मूर्तीभूतं भागधेयं यदूनाम् । एकीभूतं गुप्तवित्त श्रुतीनां श्यामीभूतं ब्रह्म मे संनिधत्ताम् ॥ ८९ ॥ आनन्दमादधतमायतलोचनानामानीलमावलितकन्धरमात्तवंशम् । आपादमामुकुटमाकलितामृतौघमाकारमाकलयताममुमान्तरं नः ॥ ९० ॥ सकलभुवनबन्धोर्वैरमिन्दोः सरोजैरनुचितमिति मत्वा यः स्वपादारविन्दे । घटयितुमिव मायी योजयत्याननेन्दौ वटदलपुटशायी मङ्गलं नः क्रषीष्टाम् ॥ ९१ ॥ अभिनवनवनीतस्निग्धमापीतदुग्धं दधिकणपरिदिग्धं मुग्धमङ्गं मुरारेः । दिशतु भुवनकृच्छ्रच्छेदितापिच्छगुच्छच्छवि नवशिखिपिच्छालाञ्छितं वाञ्छितं वः ॥ ९२ ॥ कनककलशस्वच्छे राधापयोधरमण्डले नवजलधरश्यामामात्मद्युति प्रतिबिम्बिताम् । असितासिचय[1]प्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपञ्जयति जनितव्रीडाहासप्रियाहसितो हरिः ॥ ९३ ॥ ललित[2]गमना नार्यो[3] राजन्मनोजनितान्तभाः[4] सुरतिसदृशास्ताः[5] सन्मुख्यो[6] भवानपि तद्भुवे । वनभुवमितो गेहादेको न गच्छतु मां विनेत्यसकृदुदितः पुत्रः पित्रा जयत्यनघो हरिः ॥ ९४ ॥ देवः पायात्पयसि विमले[7] यामुने मज्जतीनां[8] याचन्तीना-

१ दुकूलम् २ गोपीपक्षे ललित गमन यासा ता , कृष्णपक्षे ललिते गे गाने मनो यस्य स. ३ स्त्रियः; (पक्षे) नास्त्यार्य श्रेष्ठो यस्मात्स ४ राजता मनोजेन मदनेन नितान्तात्यन्ता भाः कान्तिर्यासा ताः, (पक्षे) राजन्मनोजनि शोभमानमदनस्तान्तो म्लानो यस्यास्तादृशी भा यस्य स ५ शोभायमानया रत्या कामपत्न्या सदृश , (पक्षे ) सुष्ठु रतौ रमणे योग्य ६ सन्ति शोभनानि मुखान्याननानि यासा ता , ( पक्षे ) सत्सु प्रशस्तेषु केलिचतुरेषु मुख्य.. ७ स्वच्छे. ८ स्नान कुर्वन्तीनाम्.

मनुनयपदैर्वञ्चितान्यंशुकानि । लज्जालोलैरलसवलितैरुन्मिषत्पञ्चबाणैर्गोपस्त्रीणां नयनकुसुमैरञ्चितः केशवो नः ॥ ९५ ॥ शिरश्छायां कृष्णः क्षणमकृत राधाचरणयोर्भुजावल्लीच्छायामियमपि तदीयप्रतिकृतौ । इति क्रीडाकोपे निभृतमुभयोरप्यनुनयप्रसादौ जीयास्तामपि गुरुसमक्षं स्थितवतोः ॥ ९६ ॥ अवेमंव्यापाराकलनमतुरीस्पर्शमचिरादनुन्मीलत्तन्तुप्रकरघटनायासमसकृत् । विषीदत्पाञ्चालीविपदपनयैकप्रणयिनः पटानां निर्माणं पैतगपतिकेतोरवतु नः ॥ ९७ ॥ कपोले पत्रालीं पुलकिनि विधातुं व्यवसितः स्वयं श्रीराधायाः करकलितवर्तिर्मधुरिपुः । अभूद्वक्त्रेन्दौ यन्निहितनयनः कम्पितभुजस्तदेतत्सामर्थ्यं तदभिनवरूपस्य जयति ॥ ९८ ॥ जयश्रीविन्यस्तैर्महितै इव मन्दारकुसुमैः स्वयं सिन्दूरेण द्विपरणमुदा मुद्रित इव । भुजापीडक्रीडाहतकुवलयापीडकरिणः प्रकीर्णासृग्बिन्दुर्जयति भुजदण्डो मुरजितः ॥ ९९ ॥ क्व यासि खलु चौरिके प्रमुषितं स्फुटं दृश्यते द्वितीयमिह मामकं वहति कन्दुकं कञ्चुके । त्यजेति नवगोपिकाकुचयुगं प्रमथ्नन्बलाल्लसत्पुलकपञ्जरो जयति गोकुले केशवः ॥ १०० ॥ मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमैर्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय । इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥ १०१ ॥ कौन्तेयस्य सहायतां करुणया गत्वा विनीतात्मनो येनोल्लङ्घितसत्पथः कुरुपतिश्चक्रे कृतान्तातिथिः । त्रैलोक्यस्थितिसूत्रधारतिलको देवः स वः संपदे साधूनामसुराधिनाथमथनः स्ताद्देवकीनन्दनः ॥ १०२ ॥ आताम्रे नयने स्फुरत्कुचभरः श्वासो न विश्राम्यति स्वेदाम्भःकणदन्तुरं तव मुखं हेतुस्तु नो लक्ष्यते । धिक्को वेद मनः स्त्रिया इति गिरा रुष्टां प्रियां भीषयंस्तस्यास्तत्क्षणकातरेक्षणपरिस्पृष्टो हरिः पातु वः ॥ १०३ ॥ संसक्तानिव पातुमौपनिषदव्याहारमाध्वीरसानुन्मार्ष्टुं व्रजसुन्दरीकुचतटीपाटीररेणूनिव । उन्मीलन्मुरलीनिनादबहुलामोदोपसीदद्रवीजिह्वालीढमलीकवल्लवशिशोः पादाम्बुजं पातु वः ॥ १०४ ॥ कृष्णो गोरसचौर्यमम्ब कुरुते किं कृष्ण मातः सुरापानं न प्रकरोमि राम किमिदं नाहं परस्त्रीरतः । कि गोविन्द वदत्यसौ हलधरो मिथ्येति तां व्याहरन्गोपीगोपकदम्बकं विहसयन्मुग्धो मुकुन्दोऽवतु ॥ १०५ ॥ मातस्तर्णकरक्षणाय यमुनाकच्छं न गच्छाम्यहं कस्माद्वत्स पिनष्टि पीवरकुचद्वन्द्वेन गोपीजनः । भ्रूसञ्ज्ञाविनिवारितोऽपि बहुशो जल्पन्यशोदाग्रतो गोपीपाणिसरोजमुद्रितमुखो गोपीपतिः पातु वः ॥ १०६ ॥ कासि त्वं वद चौर्यकारिणि कुतः कस्त्वं पुरोयामिकः किं ब्रूषे मुषितौ सुवर्णकलशौ भूपस्य केन त्वया । कुत्र स्तः प्रकटौ तवाञ्चलतटे कुत्रेति तत्पश्यतामित्युक्ते धृ-

१ वेमा वस्त्रव्यूतिदण्डस्तद्व्यापाररहितम् २ कृष्णस्य ३ विक्षिप्तै ४ पूजित ५ चित्रित. ६. रक्तबिन्दु ७ व्याप्तमित्यर्थः. ८ रात्रौ ९. एकान्तक्रीडा. १०. युधिष्ठिरस्य ११ मारित. १२. वृषवालः. १३. नगररक्षकः.

तवच्छवीकुचयुगस्त्वां पातु पीताम्बरः ॥ १०७ ॥ कृष्ण त्वं पठ किं पठामि ननु रे शास्त्रं किमु ज्ञायते तत्त्वं कस्य विभोः स कस्त्रिभुवनाधीशश्च तेनापि किम् । ज्ञानं भक्तिरथो विरक्तिरनया किं मुक्तिरेवास्तु ते दध्यादीनि भजामि मातुरुदितं वाक्यं हरेः पातु वः ॥१०८॥ कृष्ण त्वं नवयौवनोऽसि चपलाः प्रायेण गोपाङ्गनाः कंसो भूपतिरब्जनालमृदुलग्रीवा वयं गोदुहः । तद्याचेऽञ्जलिना भवन्तमधुना वृन्दावनं मद्विना मा यासीरिति गोपनन्दवचसा नम्रो हरिः पातु वः ॥ १०९ ॥ कस्त्वं कृष्णमवेहि मां किमिह ते मन्मन्दिराशङ्कया युक्तं तन्नवनीतभाजनपुटे न्यस्तः किमर्थं करः । कर्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिता बाला वत्सगतिं विवेक्तुमिति संजल्पन्हरिः पातु वः ॥ ११० ॥ स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी क्षोणीमावृणुते तमालमलिनच्छाया तमःसंहतिः । तन्मे सुन्दर कृष्ण मुञ्च सहसा वर्त्मेति गोप्या गिरः श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥ १११ ॥ मातः किं यदुनाथ देहि चषकं किं तेन पातुं पयस्तन्नास्त्यद्य कदास्ति तन्निशि निशा का वान्धकारोदये । आमील्याक्षियुगं निशाप्युपगता देहीति मातुः पुनर्वक्षोजाम्बरकर्षणोद्यतकरः कृष्णः स पुष्णातु नः ॥ ११२ ॥ अर्धोन्मीलितलोचनस्य पिबतः पर्याप्तमेकं स्तनं सद्यः प्रस्नुतदुग्धदिग्धमपरं हस्तेन संमार्जितः । मात्रा चाङ्गुलिलालितस्य चुबुके स्मेरायमाने मुखे विष्णोः क्षीरकणाम्बुधामधवला दन्तद्युतिः पातु वः ॥११३॥ गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते कि त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा । इत्यामन्त्रणभङ्गिसूचितवृथाप्रस्थानखेदालसामाश्लिष्यन्पुलकोत्कराञ्चितवपुर्गोपी हरिः पातु वः ॥११४॥ रामो नाम बभूव हुं तदबला सीतेति हुं तौ पितुर्वाचा पञ्चवटीजने निवसतस्तामाहरद्रावणः । कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरितां सौमित्रे क्व धनुर्धनुर्धनुरिति प्रोक्ता गिरः पान्तु वः ॥ ११५ ॥ कोऽयं द्वारि हरिः प्रयाह्युपवनं शाखामृगस्यात्र किं कृष्णोऽहं दयिते बिभेमि सुतरां कृष्णादहं वानरात् । राधेऽहं मधुसूदनो व्रज लतां तामेव तन्वीमलमित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः ॥ ११६ ॥ पीठे पीठनिषण्णबालकगले तिष्ठन्सगोपालको यन्त्रान्तःस्थितदुग्धभाण्डमवभिद्याच्छाद्य घण्टारवम् । वक्त्रोपान्तकृताञ्जलिः कृतशिरःकम्प पिबन्यः पयः पायादागतगोपिकानयनयोर्गण्डूषफूत्कारकृत् ॥ ११७ ॥ पद्मे त्वन्नयने स्मरामि सतत भावो भवत्कुन्तले नीले मुह्यति किं करोमि महितैः क्रीतोऽस्मि ते विभ्रमैः । इत्युत्स्वप्नवचो निशम्य सरुषा निर्भर्त्सितो राधया कृष्णस्तत्परमेव तद्व्यपदिशन्क्रीडाविटः पातु वः ॥ ११८ ॥ दृष्ट्या केशव गोपरागहृतया किंचिन्न दृष्टं मया ते-

---

१ पानपात्रम् २ वानर ; (पक्षे) कृष्ण. ३ कृष्णवर्ण, (पक्षे) कृष्णनामा ४ भ्रमर, (पक्षे) मधुसूदननामा ५ आलम्ब्यमानो रज्जुपञ्जर शिक्य इति प्रसिद्ध ६ हे रमे, (पक्षे) पद्मरूपे ७ गोपे त्वयि यो राग आसक्तिस्तद्धृतयापहृतया, (पक्षे) गवां परागैर्धूलिभिर्व्याप्तया ८. युक्तायुक्तम्, (पक्षे) समविषमम्.

नात्र स्खलितास्मि नाथ पतितां[1] किं नाम नालम्बसे । एकस्त्वं विषमेषु[2]खिन्नमनसां सर्वाबला[3]नां गतिर्गोप्यैवं गदितः सलेशं[4]मवताद्गोष्ठे[5] हरिर्वश्चिरम् ॥ ११९ ॥ केयं भाग्यवती तवोरसि मणी ब्रूषेऽग्रवर्णे विना कृत्वास्याः प्रथमं विना क सहजो वर्णो मणेस्तादृशः । स्त्रीरूपं कथमस्य लिङ्गनियमात्पृच्छामि वध्वाकृतिं मुग्धे त्वत्प्रतिबिम्बमित्यपलपन्राधां हरिः पातु वः ॥ १२० ॥ यां दृष्ट्वा यमुनातरंगिणिनिभं व्यूहो गवां गाहते विद्युत्वानिति नीलकण्ठनिवहो यां द्रष्टुमुत्कण्ठते । उत्तंसाय तमालपल्लवमिति छन्दन्ति यां गोपिकाः कान्तिः कालियशासनस्य वपुषः सा पावनी पातु वः ॥ १२१ ॥ श्रीमद्गोपवधूस्वयंग्रहपरिष्वङ्गेषु तुङ्गस्तनव्यामर्दाद्गलितेऽपि चन्दनरजस्यङ्गे वहन्सौरभम् । कश्चिज्जागरजातरागनयनद्वन्द्वः प्रभाते श्रियं बिभ्रत्कामपि वेणुनादरसिको जाराग्रणीः पातु वः ॥ १२२ ॥ कण्ठालिङ्गनमङ्गलं घनकुचाभोगोपभोगोत्सवं श्रोणीसंगमसौभगं च सततं मत्प्रेयसीनां पुरः । प्राप्तुं कोऽयमितीर्ष्ययेव यमुनाकूले बलाद्यः स्वयं गोपीनामहरद्दुकूलनिचयं कृष्णः स पुष्णातु नः ॥ १२३ ॥ कृष्णेनाम्ब गतेन रन्तुमनसा मृद्भक्षिता स्वेच्छया सत्यं कृष्ण किमेष आह मुसली मिथ्याम्ब पश्याननम् । व्यादेहीति विकासिते च वदने दृष्ट्वा समस्तं जगन्माता यस्य जगाम विस्मयपदं पायात्स वः श्रीपतिः ॥ १२४ ॥ अम्ब श्राम्यसि तिष्ठ गोरसमहं मथ्नामि मन्थानकं प्रालम्ब्य स्थितमीश्वरं सरभसं दीनाननो वासुकिः । सासूयं कमलालया सुरगणः सानन्दमुद्यद्भयं राहुः प्रैक्षत यं स वोऽस्तु शिवदो गोपालबालो हरिः ॥ १२५ ॥ कालिन्द्याः पुलिनेषु केलिकुपितामुत्सृज्य रासे रसं[13] गच्छन्तीमनुगच्छतोऽश्रुकलुषां कंसद्विषो राधिकाम् । तत्पादप्रतिमानिवेशितपदस्योद्भूतरोमोद्गतेरक्षुण्णोऽनुनयः प्रसन्नदयितादृष्टस्य पुष्णातु वः ॥ १२६ ॥ कंसं ध्वंसयते मुरं तिरयते हंसं तथा हिंसते बाणं क्षीणयते बकं लघयते पौण्ड्रं तथा लुम्पते । भौमं क्षामयते बलाद्बलभिदो दर्पं पराकुर्वते क्लिष्टं शिष्टगणं प्रणम्रमवते कृष्णाय तुभ्यं नमः ॥ १२७ ॥ रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवामभ्यर्णे[16] परिरभ्य निर्भरमुरः प्रेमान्धया राधया । साधु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुतिव्याजादुद्भटचुम्बितस्मितमनोहारी हरिः पातु वः ॥ १२८ ॥ साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासितभ्रूवल्लीकमलीकदर्शितभुजामूलार्धदृष्टस्तनम् । गोपीनां निभृतं निरीक्ष्य ललितं कांचिच्चिरं चिन्तयन्नन्तर्मुग्धमनोहरो

१ पतिता ताम्, (पक्षे) पतन प्राप्ताम् २ विषमेषु पञ्चशरस्तेन खिन्नमनसाम्, (पक्षे) विषमेषु संकटेषु खिन्नमनसाम् ३ स्त्रीणाम्, (पक्षे) बलरहितानाम् ४ ससूचनम्. ५ गोस्थानम् ६ रमणीत्यर्थ. ७ बलभद्र. ८ विकासय ९ समुद्रमथने रज्जूकृतस्य मम पुनरपि स एव भयकर प्रसङ्ग आगत इति त्रासेन १०. मम सपत्नी काचिदुद्भविष्यतीत्यसूयया ११ अमृतप्राप्तिर्भविष्यतीति धिया १२ शिरश्छेदो भविष्यतीति बुद्धया १३. रागम् १४ सफल १५ गोपिकानाम् १६ समीपम् १७ प्रकटम् १८ उच्चै कृता १९ जृम्भणादिछलेनेत्यर्थ.. २० गोप्यभावम्

हरतु वः क्लेशं नवः केशवः ॥ १२९ ॥ तिर्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्गीतस्थानकृतावधानललनालक्षैर्न संलक्षिताः । संमुग्धं[1] मधुसूदनस्य मधुरे राधामुखेन्दौ मृदु[2] स्पन्दं[3] पल्लविताश्चिरं ददतु वः क्षेमं कटाक्षोर्मयः ॥ १३० ॥ दृष्टिव्याकुलगोकुलावनरसादुद्धृत्य[4] गोवर्धनं बिभ्रत्वल्लववल्लभाभिरधिकानन्दाच्चिरं चुम्बितः । कंदर्पेण तदर्पिताधरतटीसिन्दूरमुद्राङ्कितो बाहुर्गोपतनोस्तनोतु भवतां श्रेयांसि कंसद्विषः ॥ १३१ ॥ राधामुग्धमुखारविन्दमधुपस्त्रैलोक्यमौलिस्थलीनेपथ्योचितनीलरत्नमवनीभारावतारक्षमः । स्वच्छन्दव्रजसुन्दरीजनमनस्तोषप्रदोषश्चिरं कंसध्वंसनधूमकेतुरवतु त्वां देवकीनन्दनः ॥ १३२ ॥ किं विश्राम्यसि कृष्णभोगिभवने[11] भाण्डीरभूमीरुहि[12] भ्रातर्यासि न दृष्टिगोचरमितः सानन्दनन्दास्पदम् । राधाया वचनं तदध्वगमुखान्नन्दान्तिके गोपतो[13] गोविन्दस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा गिरः ॥ १३३ ॥ सान्द्रानन्दपुरंदरादिदिविषद्वृन्दैरमन्दादरादानम्रैर्मुकुटेन्द्रनीलमणिभिः[14] संदर्शितेन्दीवरम् । स्वच्छन्दं मकरन्दसुन्दरगलन्मन्दाकिनीमेदुरं श्रीगोविन्दपदारविन्दमशुभस्कन्दाय[15] वन्दामहे ॥ १३४ ॥ प्रातर्नीलनिचोलमच्युतमुरःसंवीतपीतांशुकं[16][17] राधायाश्चकितं विलोक्य हसति स्वैरं सखीमण्डले । व्रीडाचञ्चलमञ्चलं[18] नयनयोराधाय राधानने स्वादुस्मेरमुखोऽयमस्तु जगदानन्दाय नन्दात्मजः ॥ १३५ ॥ प्रीतिं वस्तनुतां हरिः कुवलयापीडेन सार्धं रणे राधापीनपयोधरस्मरणकृत्कुम्भेन संभेदवान् । [19]यन्त्रे बिभ्यति मीलति[20] क्षणमपि क्षिप्रं तदालोकनाद्व्यामोहेन जितं जितं जितमभूद्व्यालोलकोलाहलः[21] ॥ १३६ ॥ त्वामप्राप्य मयि स्वयंवरपरां क्षीरोदतीरोदरे शङ्के सुन्दरि कालकूटमपिबन्मूढो मृडानीपतिः । इत्थं पूर्वकथाभिरन्यमनसो विक्षिप्य वामाञ्चलं राधायाः स्तनकोरकोपरि लसन्नेत्रो हरिः पातु वः ॥१३७॥ वामांसस्थलचुम्बिकुण्डलरुचा जातोत्तरीयच्छविं वंशीगीतिभवत्त्रिभङ्गवपुषं भ्रूलास्यलीलापरम् । किंचित्स्रस्तशिखण्डशेखरमतिस्निग्धालिनीलालकं राधादिप्रमदाशतावृतमहं वन्दे किशोराकृतिम् ॥१३८॥ अन्तर्मोहनमौलिघूर्णनचलन्मन्दारविस्रंसनः[22][23] स्तब्धाकर्षणदृष्टिहर्षणमहामन्त्रः[24] कुरंगीदृशाम् । दृप्यद्दानवदूयमानदिविषद्दुर्वारदुःखापदां भ्रंशः कंसरिपोर्व्यपोहयतु वोऽश्रेयांसि वंशीरवः ॥१३९॥ अस्मिन्कुञ्जे विनापि प्रचलितपवनाद्वर्तते कोऽपि नूनं पश्यामः किं न गत्वेत्यनुसरति गणे भीतभीतेऽर्भकाणाम् । तस्मिन्राधासखो वः सुखयतु विलसल्लीलया कैटभारिर्व्यातन्वानो मृगारिप्रबलघुरघुरारावरौद्रान्निनादान् ॥१४०॥ अङ्गुल्या

---

१. तरुण २ अव्यक्तम् ३ किंचिच्चलनं यथा स्यात्तथा. ४ इन्दुदर्शनात्तरंगा अतीभवन्तीति कटाक्षाणा तरंगसाम्यमिति भाव. ५. रक्षणम् ६ अनुराग ७ नीलत्वादधरपानकर्तृत्वाच्च ८. वृन्दाटव्यामित्यर्थः. ९. अलकार. १० रात्रिमुखे हि नार्यस्तुष्यन्तीति भावः. ११. कृष्णश्चासौ भोगी सर्पश्च तस्य भवने; (पक्षे) कृष्णस्य भोगिन शृङ्गारिणो विलासगृहे १२ भाण्डीरनाम्नि वटवृक्षे १३ सगोपनं कुर्वत. १४. संदर्शित इन्दीवरभ्रमो यत्र १५ नाशाय. १६ वस्त्रम्. १७. परिधानीकृत. १८. कटाक्ष १९. वाहने २०. मृते सति. २१. चञ्चल.. २२. साधु साध्विति शिरःकम्पनम् २३ गुम्फितम्. २४. अनिच्छोरित्यर्थः.

कः [1]कपाटं प्रहरति कुटिले [2]माधवः किं वसन्तो नो [3]चक्री किं कुलालोः नहि धर[4]णिधरः किं द्विजिह्वःफणीन्द्रः । नाहं घोरा[5]हिमर्दी किमुत खगपतिर्नो [6]हरिः कि कपीन्द्र इत्येवं सत्यभामाप्रतिवचनजितः पातु वश्चक्रपाणिः ॥१४१॥ वृन्दारण्ये चरन्ती विभुरपि सततं भूर्भुवःस्वः सृजन्ती नन्दोद्भूताप्यनादिः शिशुरपि निगमैर्लक्षिता वीक्षितापि । विद्युल्लेखावनद्धोन्नमदमलमहाम्भोदसच्छायकाया माया पायादपायादविहितमहिमा कापि पैताम्बरी वः ॥१४२॥ ( **रुक्मिणी** ) ॥ श्लाघ्याशेषतनुं सुदर्शनकरः सर्वाङ्गलीलाजितत्रैलोक्यां चरणारविन्दललितेनाक्रान्तलोको हरिः । बिभ्राणां मुखमिन्दुसुन्दररुचं चन्द्रात्मचक्षुर्दधत्स्थाने यां स्वतनोरपश्यदधिकां सा रुक्मिणी वोऽवतात् ॥१४३॥(**राधा**)॥ राधा पुनातु जगदच्युतदत्तचित्ता मन्थानमाकलयती दधिरिक्तपात्रे । यस्याः स्तनस्तवकचूचुकलोलदृष्टिर्देवोऽपि दोहनधिया वृषभं दुदोह ॥१४४॥ सुधाधाम्नः कान्तिस्तव वदनपङ्केरुहगुणैर्जितेव म्लानत्वं व्रजति सहसा प्राणदयिते । वदत्येवं कान्ते दिवसविरहातङ्कचकिता तदङ्गे संलग्ना तव दिशतु राधा प्रियशतम् ॥ १४५ ॥(**नन्दकः**)॥ सान्द्रां मुद यच्छतु नन्दको वः सोल्लासलक्ष्मीप्रतिबिम्बगर्भः । कुर्वन्नजस्रं यमुनाप्रवाहसलीलराधास्मरणं मुरारेः ॥१४६॥ **बुद्धः** ॥ षट्चक्रे क्रमभावेनोपरिगतं हृत्पद्ममध्यस्थितं संपश्यञ्शिवरूपिणं ल[11]यवशादात्मानमध्याश्रि[12]तैः । युष्माकं मधुसूदनो बुधवपुर्धारी स भूयान्मुदे यस्तिष्ठेत्[13]कमलासने [14]कर्तरुचिर्बुद्धैकलि[15]ङ्गाकृतिः ॥ १४७ ॥ रेतोरक्तमयान्यमूनि [16]भविनां विण्मूत्रपूर्णोदराण्यालोक्येव कलेवराणि विगलत्तोयार्द्ररन्ध्राणि यः । मायाजालनि[17]यन्त्रितानि घृणया नोन्मीलयत्यक्षिणी निर्व्याजप्रणि[18]धाननिश्चलमतिर्बुध्यै स बुद्धोऽस्तु वः ॥१४८ ॥ ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षण पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि । मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः पुमाञ्शश्वन्मारवधूभिरित्यभिहितो बुद्धो जिनः पातु व ॥ १४९ ॥ बध्वा पद्मासनं यो नयनयुगमिद न्यस्य नासाग्रदेशे धृत्वा [19]मूर्तौ च शान्तौ शमरसमिलितौ चन्द्रसूर्याख्यवातौ । पश्यन्नन्तर्विशुद्धं किमपि च परम ज्योतिराकारहीन सौख्याम्भोधौ निमग्नः स दिशतु भवतां ज्ञानबोध बुधोऽयम् ॥ १५० ॥ कामेनाकृष्य चापं हतपटुपटहं वल्गुभिर्मारवीरैर्भ्रूभङ्गोत्क्षेपजृम्भास्मितललितदृशा दिव्यनारीजनेन । सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद्वासवेन ध्यायन्यो योगपीठादचलित इति वः पातु दृष्टो मुनीन्द्रः ॥ १५१ ॥ **कल्किः** ॥

---

१ द्वारम् २ लक्ष्मीपति , ( पक्षे ) वसन्त . ३ चक्रधारी, ( पक्षे ) कुलाल . ४ विष्णु, ( पक्षे ) शेष ५ कृष्णपक्षे अहि कालिय ; गरुडपक्षे अहि सर्प.. ६ विष्णु , (पक्षे) वानर ७ आधारचक्र मणिपूरचक्रमधिष्ठानचक्रमाज्ञाचक्र बिन्दुचक्र लयचक्र चेति षट्चक्राणि. ८ परिपाटी ९ वासना १०. व्याप्तम् ११ चित्तैकाग्र्यवशात् १२ स्थित १३. "जङ्घाया मध्यभागे तु सश्लेषो यत्र जङ्घया । पद्मासनमिति प्रोक्त तदासनविचक्षणै. ॥" १४ ज्ञानी १५. ज्ञानम् १६. ससारिणाम् १७ बद्धानि १८. चेत समाधिना.१९. शरीरे

उद्यतकरकरवालः शकतिमिरध्वंसने महानिपुणः । कल्किहरिर्वः पायादपायतः कलिनिशा-न्तोत्थः ॥ १५२ ॥ प्रेङ्खद्वाजितरंगमुन्मदगजग्राहप्रगल्भं भटव्यावल्गत्स्फुटपुण्डरीकनिलयं झिण्डीर[1]पिण्डावलिम् । म्लेच्छानीकमहार्णवं सुविपुलं सङ्ग्रामकल्पावधौ यश्चौर्वाग्निरिवाभव-द्द्येतु स वः कल्कानि[3] कल्की हरिः ॥ १५३ ॥

---

## सूर्यः ।

खण्डिता[4]नेत्रकंजालिमञ्जुरञ्जनपण्डिताः । मण्डिताखिलदिक्प्रान्ताश्चण्डांशोः पान्तु भा-नवः ॥ १ ॥ शुकतुण्डच्छविसवितुश्चण्डरुचः पुण्डरीकवनबन्धोः । मण्डलमुदितं वन्दे कुण्ड-लमाखण्डला[6]शायाः ॥ २ ॥ अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः । मरुदुल्ला-सितसौरभकमलाकरहासकृद्रविर्जयति ॥ ३ ॥ कटुभिरपि कठोरचक्रवाकोत्वरविरहज्वरशा-न्तिशीतवीर्यैः । तिमिरहतमयं महोभिरञ्जयति जगन्नयनौघमुष्णभानुः ॥ ४ ॥ यद्बिम्बम-म्बरमणिर्यदपां प्रसूतिर्नक्तं निषिञ्चति यदग्निशिखासु भासः । ज्योत्स्ना निशासु हिमधाम्नि च यन्मयूखाः पूषा पुराणपुरुषः स नमोऽस्तु तस्मै ॥५॥ यो रक्ततामतितरामतुलो दधानो दिक्प्रौ-ढदारनृहमोहनवाससवासः । योषिद्द्वयीपतिविडम्बनभृत्स शश्वत्पायादपायसमुदायहरो रविर्नः ॥ ६ ॥ सिन्दूरस्पृहया स्पृशन्ति करिणां कुम्भस्थमाधोरणा भिल्लीपल्लवशङ्कया विचिनुते सान्द्रद्रुमद्रोणिषु । कान्ताकुङ्कुमकाङ्क्षया करतलं मन्द्रं च लग्नं च यत्तत्तेजः प्रथमोद्भवं भ्रम-करं सौरं चिरं पातु वः ॥ ७ ॥ जम्भाराती[7]भकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं रक्तैः सिक्ता इवौघैरुदयगिरितटीधातुधाराद्रवस्य । आयान्त्या तुल्यकालं कमलवनरुचेश्चारुणा वो विभूत्यै भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥ ८ ॥ भक्तिप्रह्वाय दातुं मुकुल-पुटपुटीकोटरक्रोडलीनां लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये । कालाकारान्ध-काराननपतितजगत्साध्वसध्वंसकल्पाः कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्क-रस्य ॥ ९ ॥ साटोपव्योमहट्टो[8]षितरजनिवणिङ्न्यायकोन्मुक्ततारा मुक्ताहारापहारात्तरलखगरव-प्रोत्थिता कीर्तिशान्त्यै । कर्षन्नम्भोजकुम्भोदरकुहरबहिर्निःसरत्पङ्कदालीकालव्यालीं करेणा-कलयतु दिनकृत्कल्मषोन्मूलनं वः ॥ १० ॥ चक्री[9] चक्रारपङ्क्तिं[10] हरिरपि[11] च हरीन्[12] धूर्जटि-र्धूर्ध्वजान्ता[13]नक्षं[14] नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं[15] कुबेरः । रंहः[16] सङ्घः सुराणां जगदु-पकृतये नित्ययुक्तस्य यस्य स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः ॥११॥ किं छत्रं किं नु रत्नं[17] तिलकमुत तथा कुण्डलं कौस्तुभो वा चक्रं वा वारिजं[18] वेत्यमरयुव-

---

१. फेनपिण्ड . २ खण्डयतु ३. पापानि. ४ नायिकाविशेषा ५ कमलम्. ६. पूर्वदिश . ७ इन्द्र . ८ क्रयविक्रयस्थानम् ९ विष्णु . १०. कीलक ११ इन्द्र १२ अश्वान् १३. यानमुख. १४ चक्र. १५ युगधर १६. वेग . १७ चूडारत्नम्. १८. यतो विष्णोर्नाभिदेशे कमल वर्तते

तिभिर्यद्दलिद्वेपिदेहे[१] । ऊर्ध्वं मौलौ ललाटे श्रवसि हृदि करे नाभिदेशे च दृष्टं पायात्तद्वोऽर्कबिम्बं स च दनुजरिपुर्वर्धमानः क्रमेण ॥ १२ ॥

---

## चन्द्रः ।

रविमावसते सतां क्रियायै सुधया तर्पयते सुरान्पितॄंश्च । तमसां निशि मूर्छतां विहन्त्रे हरचूडानिहितात्मने नमस्ते ॥ १ ॥ स्वर्भानुप्रतिवारपारणमिलद्दन्तौघयन्त्रोद्भवश्वभ्रालीपतयालुदीधितिसुधासारस्तुपारद्युतिः । पुष्पेध्वासनतत्प्रियापरिणयानन्दाभिषेकोत्सवे देवः प्राप्तसहस्रधारकलशश्रीरस्तु नस्तुष्टये ॥ २ ॥

---

## पृथिवी ।

स्वर्गौकोभिरदोनिवासिपुरुपारब्धातिशुद्धाध्वरस्वाहाकारवषट्क्रियोत्थममृतं स्वादीय आदीयते । आम्नायप्रवणैरलक्कृतिजुषेऽमुष्मै मनुष्यैः शुभैर्दिव्यक्षेत्रसरित्पवित्रवपुषे देव्यै पृथिव्यै नमः ॥ १ ॥

इति श्रीसुभाषितरत्नभाण्डागारे प्रथमं प्रकरणं समाप्तम् ।

---

१ वामनाकृत्या २ गिलनम् ३ छिद्रकरणसाधनम् ४. दन्तदशनकृतविवरपरंपरा ५. पतनशीला. ६ मदन. ७. विवाह. ८ देवै.

# प्रकरणम् २।



## सुभाषितप्रशंसा।

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती। तस्माद्धि काव्यं मधुरं तस्मादपि सुभाषितम्॥ १॥ सुभाषितेन गीतेन युवतीनां च लीलया। मनो न भिद्यते यस्य स योगी ह्यथवा पशुः॥ २॥ सुभाषितमयद्रव्यसंग्रहं न करोति यः। प्रस्ताव[1]यज्ञे संप्राप्ते कां प्रदास्यति दक्षिणाम्॥ ३॥ संसारकटुवृक्षस्य द्वे फले ह्यमृतोपमे। सुभाषितरसास्वादः संगतिः सुजने जने॥ ४॥ सुभाषितरसास्वादजातरोमाञ्चकञ्चुकाः। विनापि कामिनीसङ्गं कवयः सुखमेधते॥ ५॥ पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम्। मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते॥ ६॥ धर्मो यशो नयो दाक्ष्यं मनोहारि सुभाषितम्। इत्यादिगुणरत्नानां संग्रही नाव[2]सीदति॥ ७॥ संगीतमपि साहित्यं सरस्वत्याः स्तनद्वयम्। एकमापातमधुरमन्यदालोचनामृतम्॥ ८॥ शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणी। साहित्यरसमाधुर्यं शंकरो वेत्ति वा न वा॥ ९॥ द्राक्षाम्लानमुखी जाता शर्करा चाश्म[3]तां गता। सुभाषितरसस्याग्रे सुधा भीता दिवं गता॥ १०॥ संसदि तदेव भूषणमुपकारकमवसरे धनं मुख्यम्। सूक्तं दधति सु[4]वर्णं कल्याणमनर्घ्यमिह धन्याः॥ ११॥ कथमिह मनुष्यजन्मा सप्रविशति सदसि विबु[5]धगमितायाम्। येन न सुभाषितामृतमाह्लादि निपीतमातृप्तेः॥ १२॥ अ[6]कलितशब्दालंकृतिरनु[7]कूला स्ख[8]लितपदनिवेशापि। अभिसारिकेव कथयति सू[9]क्तिः सोत्क[10]र्षशृङ्गारा॥ १३॥ आस्वादितदयिताधरसुधारसस्यैव सूक्तयो मधुराः। अकलितरसालमुकुलो न कोकिलः क[11]लमुद[12]ञ्चयति॥ १४॥ यस्य वक्त्रकु[13]हरे सुभाषित नास्ति नाप्यवसरे प्रजल्पति। आगतः सदसि धीमतामसौ ले[14]प्य-निर्मित इवावभासते॥ १५॥ सुभाषितं हारि विशत्यधोगलान्न दुर्जनस्यौ[15]करिपोरिवामृतम्। तदेव धत्ते हृदयेन सज्जनो हरिर्महार[16]त्नमिवातिनिर्मलम्॥ १६॥ नायं प्रयाति विकृ[17]तिं निरसो न यः स्यान्न क्षीयते बहुजनैर्नितरां निपीतः। जा[18]ड्यं निहन्ति रुचिमेति करोति तृप्तिं नून सुभाषितरसोऽन्यरसा[19]तिशायी॥ १७॥ किं

---

१ प्रसङ्ग २ नश्यति ३ पाषाणताम् ४ काञ्चनम्, (पक्षे) सुष्ठु पदैर्युक्तम् ५ पण्डितपूर्णायाम् ६. न कलिता शब्दस्यालङ्कृतिर्यया अनुप्रासादिशब्दालङ्कृतिशून्येत्यर्थ, (पक्षे) अकलित शब्दो यथैतादृश लङ्कृतिर्भूषण यस्या सशब्दभूषणवत्त्वेऽन्यस्य ज्ञान भविष्यतीति धियेति भाव ७ द्रुतं रसप्रत्यायिका; (पक्षे) नायकचित्तानुकूल्यवती ८ कोमल सुस्निग्धपदाना ग्रथनं यत्र, (पक्षे) स्थानादन्यत्र पतन यथा स्यात्तथा चरणविन्यासो यस्या ९ सुभाषितम्, (पक्षे) शोभनोक्तिमती १०. उत्कृष्टशालिशृङ्गाररसवती, (पक्षे) अहमस्याय ममेति रतिपरिपोषवती. ११ मधुरम् १२ वदति १३ निले १४ पङ्क १५. ग्राहो १६. कौस्तुभमणि १७ विकारम् १८ मान्द्यम् १९ अन्यरसानतिक्रम्य वर्तत इत्यर्थ

हारैः किमु कङ्कणैः किमसमैः कर्णावतंसैरलं केयूरैर्मणिकुण्डलैरलमलं साडम्बरैरम्बरैः । पुंसामेकमखण्डितं पुनरिदं मन्यामहे मण्डनं यन्निष्पीडितपार्वणामृतकरैस्पर्धोपमाः सूक्तयः ॥ १८ ॥ खिन्नं चापि सुभाषितेन रमते स्वीयं मनः सर्वदा श्रुत्वान्यस्य सुभाषितं खलु मनः श्रोतुं पुनर्वाञ्छति । अज्ञाञ्ज्ञानवतोऽप्यनेन हि वशीकर्तुं समर्थो भवेत्कर्तव्यो हि सुभाषितस्य मनुजैरावश्यकः संग्रहः ॥ १९ ॥

## विद्याप्रशंसा ।

अपूर्वः कोऽपि कोषोऽयं विद्यते तव भारति । व्ययतो वृद्धिमायाति क्षयमायाति संचयात् ॥ १ ॥ अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् । सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥ २ ॥ सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् । अहार्यत्वादनर्घ्यत्वादक्षयत्वाच्च सर्वदा ॥३॥ हर्तुर्न गोचरं याति दत्ता भवति विस्तृता। कल्पान्तेऽपि न या नश्येत्किमन्यद्विद्यया समम् ॥ ४ ॥ ज्ञातिभिर्वण्ट्यते नैव चौरेणापि न नीयते । दाने नैव क्षयं याति विद्यारत्नं महाधनम् ॥ ५ ॥ संयोजयति विद्यैव नीचगापि नरं सरित् । समुद्रमिव दुर्धर्षं नृपं भाग्यमतःपरम् ॥ ६ ॥ विद्या शस्त्रं च शास्त्रं च द्वे विद्ये प्रतिपत्तये । आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥ ७ ॥ शुनः पुच्छमिव व्यर्थं जीवितं विद्यया विना । न गुह्यगोपने शक्तं न च दंशनिवारणे ॥ ८ ॥ सद्विद्या यदि का चिन्ता वराकोदरपूरणे । शुकोऽप्यशनमाप्नोति हरे राम इति ब्रुवन् ॥ ९ ॥ न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि । व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम् ॥ १० ॥ मातेव रक्षति पितेव हिते नियुङ्क्ते कान्तेव चापि रमयत्यपनीय खेदम् । लक्ष्मीं तनोति वितनोति च दिक्षु कीर्तिं किं किं न साधयति कल्पलतेव विद्या ॥ ११ ॥ विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः । विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं विद्या राजसु पूज्यते न हि धनं विद्याविहीनः पशुः ॥१२॥

## काव्यप्रशंसा ।

कान्ष्टच्छामः सुराः स्वर्गे निवसामो वयं भुवि । किं वा काव्यरसः स्वादुः किंवा स्वादीयसी सुधा ॥१॥ निर्वद्यानि पद्यानि यद्यनार्यस्य का क्षतिः । भिक्षुकक्षे विनिक्षिप्तः किमिक्षुर्नीरसो भवेत् ॥ २ ॥ याता यान्ति च यातारो लोकाः शोकाधिका भुवि । काव्यसंबन्धिनी कीर्तिः स्थायिनी निरपायिनी ॥ ३ ॥ नवोक्तिर्जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो

१ कर्णभूषणै २ वस्त्रादिभि. ३ पूर्ण. ४. किरणा ५ नास्त्युत्तम यस्मात्. ६. ज्ञानाय. ७. मक्षिका ८ क्षुल्लकम् ९ नियोजयति. १०. अन्तर्हितम ११. उत्कृष्टानि.

रसः । विकटाक्षरसंबन्धः कृत्स्नमेकत्र दुष्करम् ॥ ४ ॥ सद्भिर्भाव्ये हिते काव्ये वृथा दुर्जनगर्जनम् । चण्डीशाङ्गीकृते चन्द्रेऽरुंतुदः[1] किं विधुंतुदः ॥ ५ ॥ त एव पदविन्यासास्ता एवार्थविभूतयः । तथापि नव्यं भवति काव्यं ग्रथनकौशलात् ॥ ६ ॥ सरसापि कवेर्वाणी हरिनामाङ्किता यदि । सादरं गृह्यते तज्ज्ञैः शुक्तिर्मुक्तान्विता यथा ॥ ७ ॥ काव्यस्याम्रफलस्यापि कोमलस्येतरस्य[2] च । बन्धच्छायाविशेषेण रसोऽप्यन्यादृशो भवेत् ॥ ८ ॥ शब्दशक्त्यैव कुर्वाणा सर्वदानव[3]निर्वृतिम् । काव्यविद्या[4] श्रुतिगता स्यान्मृतस्यापि जीवनी ॥ ९ ॥ श्लिष्टा[5] सभङ्गा[6] सद्वर्ण्या निर्दोषा सद्गुणा मृदुः । नानाभङ्गीविलासा चेत्कृति[7]र्विकृति[8]रन्यथा ॥ १० ॥ किं तेन किल काव्येन मृद्यमानस्य यस्य ताः । उदधेरिव नायान्ति रसामृतपरंपराः ॥ ११ ॥ अध्वनि[9] पदग्रह[10]परं मदयति हृदयं न वा न वा श्रवणम् । काव्यमभिज्ञसभायां मञ्जीरं केलिवेलायाम् ॥ १२ ॥ अविदितगुणापि सुकवेर्भणितिः[11] कर्णेषु किरति[12] मधुधाराम् । अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥ १३ ॥ ख्यातिं गमयति सुजनः सुकविर्विदधाति केवलं काव्यम् । पुष्णाति कमलमम्भो लक्ष्म्या तु रविर्नियोजयति ॥ १४ ॥ कृतमन्दपद[13]न्यासा विकच[14]श्रीश्चारु[15]शब्दभङ्गवती । कस्य न कम्पयते [16]कं जरेव जीर्णस्य सत्कवेर्वाणी ॥ १५ ॥ सरसा सालंकारा सुपदन्यासा सुवर्णमयमूर्तिः । आर्या तथैव भार्या न लभ्यते पुण्यहीनेन ॥ १६ ॥ सा कविता सा वनिता यस्याः श्रवणेन दर्शनेनापि । कविहृदयं विटहृदयं सरलं तरलं च सत्वरं भवति ॥१७॥ भ्रमरहिता[17] सा कचवत्स्त्रीणां कुचवच्च सरसहिता[18] । लसदक्षरपीयूषा[19]धरवत्कविता महात्मनां जीयात् ॥१८॥ सत्पात्रार्पण[20]योचितसत्प्रतिबिम्बा[21]भिनववस्तु । कस्य न जनयति हर्षं सत्काव्यं मधुरवचनं च॥१९॥ सत्सूत्रसाविधानं सदलंकारं सुवृत्तमच्छिद्रम् । को धारयति न कण्ठे सत्काव्यं माल्यमर्घं च ॥ २० ॥ यदसेवनीयमसतां[22]ममृतप्रायं[23] सुवर्ण[24]विन्यासम् । सुरसार्थ[25]मयं काव्यं त्रिविष्टपं वा समं विद्मः ॥ २१ ॥ सत्कविरसनाशूर्पी[26] निस्तुष[27]तरशब्दशालिपा-

१. मर्मस्पृक् २. कठिनस्येत्यर्थ . ३ सर्वकाल नवसौख्यम्, ( पक्षे ) सर्वेषा रक्षसामानन्दम् ४. कविता; ( पक्षे ) काव्यस्य शुक्रस्य विद्या सजीविनीत्यर्थ ५ नानार्थशब्दयुक्ता ६ पदच्छेदवैचित्र्यादनेकार्थपदवती. ७. कविता ८ रोग दु खदत्वात्. ९ व्यङ्ग्यार्थशून्यं यत्तु ध्वनिरुत्तम काव्य तद्भिन्नमित्यर्थ ; ( पक्षे ) शिञ्जितशून्यम्. १० अनुप्रासमात्रार्थे पदग्रह परमुत्कृष्टो यत्र, ( पक्षे ) अत्यन्तचरणसलग्नम् ११ उक्ति . १२ वर्षति १३ सुप्तिङन्तादि; ( पक्षे ) चरण १४ प्रफुल्लशोभा, (पक्षे) विगता कचश्री· केशशोभा यस्या १५ चारवो ये शब्दभङ्गा रचनाविशेषास्तद्वती; ( पक्षे ) स्खलितशब्दवती. १६ शिर . १७ भ्रमरेभ्यो भृङ्गेभ्यो हिता, ( पक्षे ) भ्रमेण भ्रान्त्या रहिता. १८ सरैर्मालाभि सहिता; ( पक्षे ) सरसेभ्यो हिता १९ लसच्छोभायमानमक्षरमविनाशि पीयूष तद्वन्माधुर्य यस्मिन्, (पक्षे) लसन्त्यक्षराणि वर्णा एव पीयूष यस्याम् २० स्थापनम् २१. सम्यग्बोध . २२ सहृदयभिन्नानाम्, ( पक्षे ) पापवताम्. २३ अमृततुल्यम्; ( पक्षे ) अमृतबहुलम्. २४. शोभनाक्षराणा विन्यासो ग्रथन यत्र; ( पक्षे ) सुवर्णमयम् २५ शोभनरसार्थप्रचुरम्, (पक्षे) देवसमूहबहुलम्. २६ प्रस्फोटनम् २७ निर्दोष

केन। तृप्तो दयिताधरमपि नाद्रियते का सुधा दासी ॥२२॥ काव्यस्याक्षरमैत्रीभाजो न च कर्कशा न च ग्राम्याः। शब्दा अपि पुरुषा अपि साधव एवार्थबोधाय ॥२३॥ अन्तर्गूढानर्थानव्यञ्जयतः प्रसादरहितस्य। संदर्भस्य नदस्य च न रसः प्रीत्यै रसज्ञानाम् ॥ २४॥ आन्तरमिवापि बहिरिव व्यञ्जयितुं रसमशेषतः सततम्। असती सुकवीसूक्तिः काचघटीति त्रयं वेद ॥ २५ ॥ न ब्रह्मविद्या न च राज्यलक्ष्मीस्तथा यथेयं कविता कवीनाम्। लोकोत्तरे पुंसि निवेश्यमाना पुत्रीव हर्षं हृदये करोति ॥ २६ ॥ अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्मभूमिः। वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूः पदानाम् ॥ २७ ॥ सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः। न शारदादेशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः ॥ २८ ॥ अर्थो गिरामपिहितः पिहितश्च कश्चित्सौभाग्यमेति मरहट्टवधूकुचाभः। नाङ्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः ॥ २९॥ रे रे खलाः शृणुत मद्वचनं समस्ताः स्वर्गे सुधास्ति सुलभा न तु सा भवद्भिः। कुर्मस्तदत्र भवतामुपकारकारि काव्यामृतं पिबत तत्परमादरेण ॥ ३० ॥ वाणी ममैव सरसा यदि रञ्जयित्री न प्रार्थये रसविदामवधानदानम्। सायंतनीषु मकरन्दवतीषु भृङ्गाः किं मल्लिकासु परमन्त्रणमारभन्ते ॥ ३१ ॥ सरसपरिषत्कर्णश्राव्यं कवित्वरसायनं विरसमनसां नेतुं नेहामहे श्रवणाङ्कितम्। मृगमदरसं बिम्बौष्ठीनां कठोरकुचोचितं जघननिकटे क्लिन्नं लिम्पेज्जरन्महिषस्य कः ॥ ३२ ॥ अमृतजलधेः पायं पायं पयांसि पयोधरः किरति करकास्ताराकारा यदि स्फटिकावनौ। तदिह तुलनामानीयन्ते क्षणं कठिनाः पुनः सततममृतस्यन्दोद्गारा गिरः प्रतिभावताम् ॥ ३३ ॥ समुल्लासो वाचां सरसमधुनिष्यन्दलहरी समुन्मेषद्वेषी सकलरसपोषोपजनकः। न केषामाधत्ते मनसि परितोषं नवनवैर्विलासैरुन्मीलद्विकचितमधूलीपरिमलः ॥ ३४ ॥ यथा यूनस्तद्वत्परमरमणीयापि रमणी कुमाराणामन्तःकरणहरणं नैव कुरुते। मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियां किमस्या नाम स्यादरसपुरुषानादरभरैः ॥ ३५ ॥ परिच्छिन्नस्वादोऽमृतगुडमधुक्षौद्रपयसां कदाचिच्चाभ्यासाद्व्रजति ननु वैरस्यमधिकम्। प्रियाबिम्बौष्ठे वा रुचिरकविवाक्येऽप्यनवधिर्नवानन्दः कोऽपि स्फुरति तु रसोऽसौ निरुपमः ॥ ३६ ॥ असत्तेर्यः पात्रं तिलकयति य सूक्तिरचना य आद्यः स्वादूनां श्रुतिचुलुकलेह्येन मधुना। यदात्मानो विद्याः परिणमति यश्चार्थवपुषा स गुम्फो वाणीनां कविवृषनिषेव्यो विजयते ॥३७॥ नैव व्याकरणज्ञमेति पितरं न भ्रातरं तार्किकं दूरात्संकुचितेव गच्छति पुनश्चा-

१. निर्दोषकाव्यास्वादेनेत्यर्थ: २ एकवर्गपठितत्वादिरूपाम् ३ श्रुतिकटव, (पक्षे) क्रूरमतय ४ अविदग्धप्रयुक्ता., (पक्षे) ग्राममात्रवासिन. ५ व्याकरणसिद्धा; (पक्षे) निर्मलमतय ६ अभ्यन्तरे गूढस्थितान्, (पक्षे) अभ्यन्तरे निलीनान् ७ प्रतिपाद्यविषयान्, (पक्षे) पदार्थान् ८ व्यञ्जनाविषयानकुर्वत:, (पक्षे) अप्रकटयत ९ प्रसादेन काव्यगुणेन रहितस्य; (पक्षे) निर्मलतया रहितस्य. १० काव्यस्य ११ शृङ्गारादि, (पक्षे) जलम् १२ विदुषाम्. १३ मूरवल्ली १४. आनन्दस्य.

ण्डालवच्छान्दसाम् । मीमांसानिपुणं नपुंसकमिति ज्ञात्वा निरस्तादरा काव्यालंकरणज्ञमेत्य कविताकान्ता वृणीते स्वयम् ॥३८॥ रम्यार्थोक्तितनूज्ज्वला रसमयप्राणा गुणोल्लासिनी चेतोरञ्जकरीतिवृत्तिकवितापाकं वयो बिभ्रती । भावालंकरणोचितागमवती सर्वत्र निर्दोषता शय्यामभ्र्येति कामिनीव कविता कस्यापि पुण्यात्मनः ॥ ३९ ॥ निर्ह्रादः क्रकचः क्षतैः किरति किं कर्णामृतं वल्लकी किंवा मुञ्चति मालती परिमलं पाषाणनिष्पेषणैः । इत्थं तारसकर्कशां धियमसौ जल्पैर्विकाल्याकुलैराकूटं कमनीयकान्तिदमितं कार्यं कथं स्यन्दते ॥४०॥ यन्त्राकृष्टसुवर्णसूत्रमिव यत्पद्यं सुमेरोस्तटादुन्मीलत्कुरुविन्दकन्दल इव स्वच्छः पदार्थोदयः । तत्राप्युल्लसदंशुकान्तविलसत्कान्ताकुचान्तोपमं व्यङ्ग्य यत्र तदेव काव्यमितरद्वाग्देवतोपप्लवः ॥ ४१ ॥ प्रातः पङ्कजकुड्मलं द्युतिपरं तत्केसरोल्लासवानर्थोऽप्यन्तरसौरभप्रतिनिभं व्यङ्ग्यं चमत्कारि यत् । द्वित्रैर्यद्रसिकैश्चिरं सहृदयैर्भृङ्गैरिवास्वाद्यते तत्काव्यं न पुनः प्रमत्तकुकवेर्यत्किंचिदुज्जल्पितम् ॥ ४२ ॥ निन्द्यन्ते यदि नाम मन्दमतिभिर्वक्राः कवीनां गिरः स्तूयन्ते न च नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः । तद्वैदग्ध्यविदां सतामपि मनः किं नेहते वक्रतां धत्ते किं न हरः किरीटशिखरे वक्रां कलामैन्दवीम् ॥ ४३ ॥

---

## सामान्यकविप्रशंसा ।

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः । नास्ति येषां यशःकाये[2] जरामरणजं भयम् ॥ १ ॥ प्रस्तावे हेतुयुक्तानि यः पठत्याविशङ्कितः । स कविस्तानि काव्यानि काव्ये तस्य परिश्रमः ॥ २ ॥ सुकवेः शब्दसौभाग्यं सुकविर्वेत्ति नापरः । कलादवन्न[3] जानाति परः कङ्कणचित्रताम् ॥ ३ ॥ सन्ति श्वान इवासङ्ख्या जातिभाजो गृहे गृहे । उत्पादका न बहवः कवयः शरभा इव ॥ ४ ॥ कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः । न ह्यकूपारवत्कूपा[4] वर्धन्ते विधुकान्तिभिः ॥ ५ ॥ क्षमी दाता गुणग्राही स्वामी पुण्येन लभ्यते । अनुकूलः शुचिर्दक्षः कविर्विद्वान्सुदुर्लभः ॥ ६ ॥ कवीनां मानसं नौमि तरन्ति प्रतिभाम्भसि । यत्र हंसवयांसीव भुवनानि चतुर्दश ॥ ७ ॥ अपूर्वो भाति भारत्याः काव्यामृतफले रसः । चर्वणे सर्वसामान्ये स्वादुवित्केवल कविः ॥ ८ ॥ उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् । जानाति हि पुनः सम्यक्कविरेव कवेः श्रमम् ॥ ९ ॥ ते धन्यास्ते महात्मानो तेषां लोके स्थिरं यशः । यैर्निबद्धानि काव्यानि ये च काव्येषु कीर्तिताः ॥१०॥ अमृतोत्प्रेक्षणे रागं कुर्वन्त्युरगवज्जनाः । कविर्गरुडवन्मान्यमिन्द्रवज्रादि वृत्रकृत् ॥ ११ ॥ काव्यमय्यो गिरो यावच्चरन्ति विशदा भुवि । तावत्सारस्वतं स्थानं कविरासाद्य तिष्ठति ॥ १२ ॥ अनन्तपदविन्यासरचना[5]

---

१ गच्छति. २. कीर्तिशरीरे ३ स्वर्णकार ४. समुद्र. ५ अनेकपदानि, (पक्षे) विष्णुपदम् आकाशमित्यर्थः.

सरसा कवेः । बुधो यदि समीपस्थो न कुजन्मा पुरो यदि ॥ १३ ॥ कविः करोति पद्यानि लालयत्युत्तमो जनः । तरुः प्रसूते पुष्पाणि मरुद्वहति सौरभम् ॥ १४ ॥ कविः पिता पोषयति पालको रसिकः पतिः । कवितायुवतेर्नूनं सोदरास्तु विवेकिनः ॥ १५ ॥ तत्त्वं किमपि काव्यानां जानाति विरलो भुवि । मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥ १६ ॥ कतिपयनिमेषवर्तिनि जन्मजरामरणविह्वले जगति । कल्पान्तकोटिबन्धुः स्फुरति कवीनां यशःप्रसरः ॥ १७ ॥ कविवाक्यामृततीर्थस्नानैः पूता भृशं यशोदेहाः । येषां त एव भूपा जीवन्ति गतास्तथैवान्ये ॥ १८ ॥ काव्यप्रपञ्चचञ्चू रचयति काव्यं न सारविद्भवति । तरवः फलानि सुवते विन्दति सारं मतङ्गसमुदायः ॥ १९ ॥ विगुणोऽपि काव्यबन्धः साधूनामाननं गतः स्वदते । फूत्कारोऽपि सुवंशैरनूद्यमानः श्रुतिं हरति ॥ २० ॥ विद्वत्कवयः कवयः केवलकवयस्तु केवलं कपयः । कुलजा या सा जाया केवलजाया तु केवलं माया ॥ २१ ॥ अहमपि परेऽपि कवयस्तथापि परमन्तरं परिज्ञेयम् । ऐक्यं रलयोरपि यदि तत्किं करभायते कलभः ॥ २२ ॥ दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् । रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥ २३ ॥ शीलाविज्जामारुलामोरिकाद्याः काव्यं कर्तुं सन्तु विज्ञाः स्त्रियोऽपि । विद्यां वेत्तुं वादिनो निर्विजेतुं दातुं वक्तुं यः प्रवीणः स वन्द्यः ॥ २४ ॥ लङ्कापतेः संकुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः । स सर्व एवादिकवेः प्रतापो न कोपनीयाः कवयः क्षितीन्द्रैः ॥ २५ ॥ जयन्ति ते पञ्चमनादमित्रचित्रोक्तिसंदर्भविभूषणेषु । सरस्वती यद्वदनेषु नित्यमाभाति वीणामिव वादयन्ती ॥ २६ ॥ कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु । कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागुरुधूपवासः ॥ २७ ॥ महीपतेः सन्ति न यस्य पार्श्वे कवीवरास्तस्य कुतो यशांसि । भूपाः कियन्तो न बभूवुरुर्व्यां नामापि जानाति न कोऽपि येषाम् ॥ २८ ॥ किं चारुचारित्रविलासशून्याः कुर्वन्ति भूपाः कविसंग्रहेण । किं जातु गुञ्जाफलभूषणानां सुवर्णकारेण वनेचराणाम् ॥ २९ ॥ तर्केषु कर्कशतराः स्युरथापि पुंसां काले भवन्ति मृदवः कवितासु वाचः । दैत्येन्द्रशैलकुलिशं दयिताकपोले नाथस्य कोमलमुदाहरणं नखं नः ॥ ३० ॥ अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः परभणितिषु तृप्तिं यान्ति सन्तः कियन्तः । निजघनमकरन्दस्पन्दपूर्णालवालः कनककलशसेकं नेहते किं रसालः ॥ ३१ ॥ पदव्यक्तिव्यक्तीकृतसहृदयानन्दसरणौ कवीनां काव्येन स्फुरति बुधमात्रस्य धिषणा । नवक्रीडावेशव्यसनपिशुनो यः कुलवधूकटाक्षाणां पन्थाः स खलु गणिकानामविषयः ॥ ३२ ॥ अयं मे वाग्गुम्फो विशदपदवैदग्ध्यमधुरः स्फुरद्बन्धो वन्ध्यो जडहृदि कृतार्थः कविहृदि । कटाक्षो वामाक्ष्या दरद-

---

१. काव्यिनः ; ( पक्षे ) शुक्रस्य २ पण्डित , ( पक्षे ) बुधग्रह ३ नीचः ; ( पक्षे ) कु पृथ्वी तस्या जन्म यस्य मङ्गल इत्यर्थः ४ सौगन्ध्यम् ५. कीर्तिप्रकाश . ६. वित्त . ७ वाल्मीके .

लितनेत्रान्तगलितः किशोरे निःसारः स तु किमपि यूनः स्थगयति ॥३३॥ भुजतरुवनच्छायां येषां निषेव्य महौजसां जलधिरशना मेदिन्यासीदसावकुतोभया। स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रहं प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे ॥ ३४ ॥ यदि प्रभुरुदारधीः सुरसकाव्यकौतूहलस्तथैव च सभासदः सदसि तद्गुणग्राहिणः। सुवर्ण[1]सदलंकृतिर्भवति तत्र नृत्योद्यता मदीयरसनानटी रसं[2]घटीयमानन्दभूः ॥३५॥ वदन्तु कैति[3]चिड्ठठात्खफछटेति वर्णच्छटान्वटः पट इतीतरे[4] पटु रटन्तु वाक्पाटवात्। वयं बकुलमञ्जरीगलदलीनमाध्वीझरीधुरीणपदरीतिभिर्भणितिभिः प्रमोदामहे ॥३६॥ हे राजानस्त्यजत सुकविप्रेमबन्धे विरोधं शुद्धा कीर्तिः स्फुरति भवतां नूनमेतत्प्रसादात्। तुष्टैर्बद्धं तदलघु रघुस्वामिनः सच्चरित्रं क्रुद्धैर्नीतास्त्रिभुवनजयी हास्यमार्गं दशास्यः ॥ ३७॥ अर्थान्केचिदुपासते कृपणवत्केचित्त्वलंकुर्वते वेश्यावत्खलु धातुवादिन इवोद्बध्नन्ति केचिद्रसान् । अर्था[5]लंकृति[6]सद्र[7]सद्रवमुचां वाचां प्रशस्तिस्पृशां कर्तारः कवयो भवन्ति कतिचित्पुण्यैरगण्यैरिह ॥३८॥ मन्दं निक्षिपते पदानि[8] परितः शब्दं[9] समुद्वीक्षते नानार्था[10]हरणं च काङ्क्षति मुदालंकार[11]माकर्षति। आदत्ते सकलं सुवर्ण[12]निचयं धत्ते रसान्त[13]र्गतं दोषान्वेषण[14]तत्परो विजयते चोरोपमः सत्कविः ॥३९॥ स्वेच्छाभङ्गुरभाग्यमेघतडितः शक्या न रोद्धुं श्रियः प्राणानां सततं प्रयाणपटहश्रद्धा न विश्राम्यति। त्राणं येऽत्र यशोमये वपुषि वः कुर्वन्ति काव्यामृतैस्तानाराध्य गुरून्विधत्त सुकवीन्निर्गर्वमुर्वीश्वराः ॥ ४० ॥ कल्याणं भगवत्कथाकथनतः काव्यं विधातुः कवेस्तस्यैवाङ्गतया क्वचिद्रचयतः शृङ्गारवीरादिकम्। को दोषो भविता यदत्र कविताशीलैः समाश्रीयते पन्था व्यासवसुंधरा[15]श्रुतिभवग्रन्थादिषु प्रेक्षितः ॥ ४१ ॥ ते भूमीपतयो जयन्ति नतयो येषां द्विषद्भूभृतां ते वन्द्या यतयो विशन्ति मतयो येषां परे ब्रह्मणि । ते श्लाघ्या कवयो वयोमदभरव्याजृम्भमाणाङ्गनाढक्पाता इव तोषयन्ति हृदयं येषां गिरां संचयः ॥ ४२ ॥ भूतावेशनिवेशिताशय इव श्लोकं करोत्याशु यः श्लाघन्ते कविरद्भुतोऽयमिति तं मिथ्या जना विस्मिताः । द्वित्राण्येव पुरः पदानि रचयन्पश्चात्समालोचयन्दूरं यः कवितां निनीषति कविः कामीव स स्तूयताम् ॥ ४३ ॥ सत्यं सन्ति गृहे गृहेऽपि कवयो येषां वचश्चातुरी स्वे हर्म्ये कुलकन्यकेव लभते स्वल्पैर्गुणैर्गौरवम्। दुष्प्रापः स तु कोऽपि कोविदमतिर्यद्वाग्रसग्राहिणी पण्यस्त्रीव कलाकलाप-

---

१ शोभनान्यक्षराणि; ( पक्षे ) हेम २ काव्यरस ; ( पक्षे ) उदकम् ३ वैयाकरणा . ४. नैयायिका. ५ द्रव्यम्, ( पक्षे ) काव्यार्थान्. ६ भूषणानि, ( पक्षे ) काव्यालकरणानि ७ पारद , ( पक्षे ) काव्यरस.. ८ सुप्तिङन्तादीनि, ( पक्षे ) पादविक्षेपे चरणान् ९ शब्द शुद्धो वापशब्दो वेति सम्यग्विचारयति, ( पक्षे ) ध्वनिमाकर्णयति १०. श्लेषेण ध्वनिना वानेकार्थाना सपादनम्, ( पक्षे ) सुवर्णरूप्यादीना हरणम् ११. उपमाद्यलकारम्, ( पक्षे ) कङ्कणादिभूषणम् १२ सुष्टु वर्णाना सचयम्; ( पक्षे ) हेमसचयम्. १३ शृङ्गारादिरसमिश्रम्, ( पक्षे ) रसा पृथ्वी तदन्तर्गतम् १४ काव्यदोषाणा गवेषणे तत्परः, ( पक्षे ) दोषा रात्रिस्तस्यामन्वेषण आसक्त . १५ वसुधरा पृथ्वी तस्या श्रुतिर्लक्षणया वल्मीकं तत्र भवो वाल्मीकि..

सरसा कवेः । बुधो यदि समीपस्थो न कुजन्मा पुरो यदि ॥ १३ ॥ कविः करोति पद्यानि लालयत्युत्तमो जनः । तरुः प्रसूते पुष्पाणि मरुद्वहति सौरभम् ॥ १४ ॥ कविः पिता पोषयति पालको रसिकः पतिः । कवितायुवतेर्नूनं सोदरास्तु विवेकिनः ॥ १५ ॥ तत्त्वं किमपि काव्यानां जानाति विरलो भुवि । मार्मिकः को मरन्दानामन्तरेण मधुव्रतम् ॥ १६ ॥ कतिपयनिमेषवर्तिनि जन्मजरामरणविह्वले जगति । कल्पान्तकोटिबन्धुः स्फुरति कवीनां यशःप्रसरः ॥ १७ ॥ कविवाक्यामृततीर्थस्नानैः पूता भृशं यशोदेहाः । येषां त एव भूपा जीवन्ति गतास्तथैवान्ये ॥ १८ ॥ काव्यप्रपञ्चचञ्चू रचयति काव्यं न सारविद्भवति । तरवः फलानि सुवते विन्दति सारं मतङ्गसमुदायः ॥ १९ ॥ विगुणोऽपि काव्यबन्धः साधूनामाननं गतः स्वदते । फूत्कारोऽपि सुवंशैरनूद्यमानः श्रुतिं हरति ॥ २० ॥ विद्वत्कवयः कवयः केवलकवयस्तु केवल कपयः । कुलजा या सा जाया केवलजाया तु केवलं माया ॥ २१ ॥ अहमपि परेऽपि कवयस्तथापि परमन्तरं परिज्ञेयम् । ऐक्यं रलयोरपि यदि तत्किं करभायते कलभः ॥ २२ ॥ दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् । रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥ २३ ॥ शीलाविज्जामारुलामोरिकाद्याः काव्यं कर्तुं सन्तु विज्ञाः स्त्रियोऽपि । विद्यां वेत्तुं वादिनो निर्विजेतुं दातुं वक्तुं यः प्रवीणः स वन्द्यः ॥ २४ ॥ लङ्कापतेः संकुचितं यशो यद्यत्कीर्तिपात्रं रघुराजपुत्रः । स सर्व एवादिकवेः प्रतापो न कोपनीयाः कवयः क्षितीन्द्रैः ॥ २५ ॥ जयन्ति ते पञ्चमनादमित्रचित्रोक्तिसंदर्भविभूषणेषु । सरस्वती यद्वदनेषु नित्यमाभाति वीणामिव वादयन्ती ॥ २६ ॥ कुण्ठत्वमायाति गुणः कवीनां साहित्यविद्याश्रमवर्जितेषु । कुर्यादनार्द्रेषु किमङ्गनानां केशेषु कृष्णागुरुधूपवासः ॥ २७ ॥ महीपतेः सन्ति न यस्य पार्श्वे कवीवरास्तस्य कुतो यशांसि । भूपाः कियन्तो न बभूवुरुर्व्यां नामापि जानाति न कोऽपि येषाम् ॥ २८ ॥ किं चारुचारित्रविलासशून्याः कुर्वन्ति भूपाः कविसंग्रहेण । कि जातु गुञ्जाफलभूषणानां सुवर्णकारेण वनेचराणाम् ॥ २९ ॥ तर्केषु कर्कशतराः स्युरथापि पुंसां काले भवन्ति मृदवः कवितासु वाचः । दैत्येन्द्रशैलकुलिशं दयिताकपोले नाथस्य कोमलमुदाहरणं नखं नः ॥ ३० ॥ अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः परभणितिषु तृप्तिं यान्ति सन्तः कियन्तः । निजघनमकरन्दस्पन्दपूर्णालवालः कनककलशसेकं नेहते किं रसालः ॥ ३१ ॥ पदव्यक्तिव्यक्तीकृतसहृदयानन्दसरणौ कवीनां काव्येन स्फुरति बुधमात्रस्य धिषणा । नवक्रीडावेशव्यसनपिशुनो यः कुलवधूकटाक्षाणां पन्थाः स खलु गणिकानामविषयः ॥ ३२ ॥ अयं मे वाग्गुम्फो विशदपदवैदग्ध्यमधुरः स्फुरद्बन्धो वन्ध्यो जडहृदि कृतार्थः कविहृदि । कटाक्षो वामाक्ष्या दरद-

---

१ कवयितु, (पक्षे) शुक्रस्य २ पण्डित, (पक्षे) बुधग्रह. ३ नीचः, (पक्षे) कु पृथ्वी तस्या जन्म यस्य मङ्गल इत्यर्थ. ४ सौगन्ध्यम् ५. कीर्तिप्रकाश. ६ वित्त. ७ वाल्मीके.

लितनेत्रान्तगलितः किशोरे निःसारः स तु किमपि यूनः स्थगयति ॥३३॥ भुजतरुवनच्छायां येषां निषेव्य महौजसां जलधिरशना मेदिन्यासीदसावकुतोभया। स्मृतिमपि न ते यान्ति क्ष्मापा विना यदनुग्रहं प्रकृतिमहते कुर्मस्तस्मै नमः कविकर्मणे ॥ ३४ ॥ यदि प्रभुरुदारधीः सुरसकाव्यकौतूहलस्तथैव च सभासदः सदसि तद्गुणग्राहिणः। सुवर्ण[1]सदलंकृतिर्भवति तत्र नृत्योद्यता मदीयरसनानटी रसै[2]घटीयमानन्दभूः ॥३५॥ वदन्तु कैति[3]चिड्ढठात्खफछटेति वर्णच्छटान्वटः पट इतीर्तरे[4] पटु रटन्तु वाक्पाटवात्। वयं बकुलमञ्जरीगलदलीनमाध्वीझरीधुरीणपदरीतिभिर्भणितिभिः प्रमोदामहे ॥३६॥ हे राजानस्त्यजत सुकविप्रेमबन्धे विरोधं शुद्धा कीर्तिः स्फुरति भवतां नूनमेतत्प्रसादात्। तुष्टैर्बद्धं तदलघु रघुस्वामिनः सच्चरित्रं क्रुद्धैर्नीतास्त्रिभुवनजयी हास्यमार्गं दशास्यः ॥ ३७॥ अर्थान्केचिदुपासते कृपणवत्केचित्त्वलंकुर्वते वेश्यावत्खलु धातुवादिन इवोद्बध्नन्ति केचिद्रसान्। अर्थ[5]लंकृति[6]सद्र[7]सद्रवमुचां वाचां प्रशस्तिस्पृशां कर्तारः कवयो भवन्ति कतिचित्पुण्यैरगण्यैरिह ॥३८॥ मन्दं निक्षिपते पदानि[8] परितः शब्दं[9] समुद्वीक्षते नानार्था[10]हरणं च काङ्क्षति मुदालंकार[11]माकर्षति। आदत्ते सकलं सुवर्णनिचयं[12] धत्ते रसान्तर्गतं[13] दोषा[14]न्वेषणतत्परो विजयते चोरोपमः सत्कविः ॥३९॥ स्वेच्छाभङ्गुरभाग्यमेघतडितः शक्या न रोद्धुं श्रियः प्राणानां सततं प्रयाणपटहश्रद्धा न विश्राम्यति। त्राणं येऽत्र यशोमये वपुषि वः कुर्वन्ति काव्यामृतैस्तानाराध्य गुरून्विधत्त सुकवीन्निर्गर्वमुर्वीश्वराः ॥ ४० ॥ कल्याणं भगवत्कथाकथनतः काव्यं विधातुः कवेस्तस्यैवाङ्गतया क्वचिद्रचयतः शृङ्गारवीरादिकम्। को दोषो भविता यदत्र कविताशीलैः समाश्रीयते पन्था व्यासवसुंधरा[15]श्रुतिभवग्रन्थादिषु प्रेक्षितः ॥ ४१ ॥ ते भूमीपतयो जयन्ति नतयो येषां द्विषद्भूभृतां ते वन्द्या यतयो विशन्ति मतयो येषां परे ब्रह्मणि । ते श्लाघ्याः कवयो वयोमदभरव्याजृम्भमाणाङ्गनादृक्पाता इव तोषयन्ति हृदयं येषां गिरां संचयः ॥ ४२ ॥ भूतावेशनिवेशिताशय इव श्लोकं करोत्याशु यः श्लाघन्ते कविरद्भुतोऽयमिति तं मिथ्या जना विस्मिताः । द्वित्राण्येव पुरः पदानि रचयन्पश्चात्समालोचयन्दूरं यः कवितां निनीषति कविः कामीव स स्तूयताम् ॥ ४३ ॥ सत्यं सन्ति गृहे गृहेऽपि कवयो येषां वचश्चातुरी स्वे हर्म्ये कुलकन्यकेव लभते स्वल्पैर्गुणैर्गौरवम्। दुष्प्रापः स तु कोऽपि कोविदमतिर्यद्वाग्रसग्राहिणी पण्यस्त्रीव कलाकलाप-

१. शोभनान्यक्षराणि, (पक्षे) हेम २ काव्यरस, (पक्षे) उदकम् ३. वैयाकरणा ४. नैयायिका. ५ द्रव्यम्, (पक्षे) काव्यार्थान् ६ भूषणानि; (पक्षे) काव्यालकरणानि ७ पारद, (पक्षे) काव्यरसः. ८ सुप्तिङन्तादीनि, (पक्षे) पादविक्षेपे चरणान् ९ शब्द शुद्धो वापशब्दो वेति सम्यग्विचारयति, (पक्षे) ध्वनिमाकर्णयति १०. श्लेषेण ध्वनिना वानेकार्थानां सपादनम्, (पक्षे) सुवर्णरूप्यादीना हरणम्. ११. उपमाद्यलकारम्, (पक्षे) कङ्कणादिभूषणम् १२ सुष्ठु वर्णाना सचयम्, (पक्षे) हेमसचयम्. १३ शृङ्गारादिरसमिश्रम्; (पक्षे) रसा पृथ्वी तदन्तर्गतम् १४ काव्यदोषाणा गवेषणे तत्परः; (पक्षे) दोषा रात्रिस्तस्यामन्वेषण आसक्त.. १५ वसुधरा पृथ्वी तस्या श्रुतिर्लक्षणया वल्मीकं तत्र भवो वाल्मीकि..

कुशला चेतांसि हर्तुं क्षमा ॥४४॥ धन्यास्ते कवयो यदीयरसना रूक्षाध्वसंचारिणी धावन्तीव सरस्वती द्रुतपदन्यासेन निष्क्रामति । अस्माकं रसपिच्छिले पथि गिरां देवी नवीनोदयत्पीनोत्तुङ्गपयोधरेव युवतिर्मान्थर्यमालम्बते ॥ ४५ ॥ साहित्ये सुकुमारवस्तुनि दृढन्यासग्रहग्रन्थिले तर्के वा मयि संविधातरि समं लीलायते भारती । शय्या वास्तु मृदूत्तरच्छदपटा दर्भाङ्कुरैरास्तृता भूमिर्वा हृदयंगमो यदि पतिस्तुल्या रतिर्योषिताम् ॥ ४६ ॥ येषां कोमलकाव्यकौशलकलालीलावती भारती तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते । यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपितास्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः ॥ ४७ ॥ तर्के कर्कशवक्रवाक्यगहने या निष्ठुरा भारती सा काव्ये मृदुलोक्तिसारसुरभौ स्यादेव मे कोमला । या प्रायः प्रियविप्रयुक्तवनिताहृत्कानने कर्तरी प्रेयोलालितयौवने न मृदुला सा किं प्रसूनावली ॥ ४८ ॥ मातङ्गीमिव माधुरीं ध्वनिविदो नैव स्पृशन्त्युत्तमां व्युत्पत्तिं कुलकन्यकामिव रसोन्मत्ता न पश्यन्त्यमी । कस्तूरीघनसारसौरभसुहृद्व्युत्पत्तिमाधुर्ययोर्योगः कर्णरसायनं सुकृतिनः कस्यापि संजायते ॥ ४९ ॥ यत्सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषाम् । कासारे दिवसं वसन्नपि पयःपूरं परं पङ्किलं कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः ॥ ५० ॥ मौलौ मन्दारदामभ्रमदलिपटलीकावलीं श्रोणिबिम्बे कूजत्काञ्चीकलापं चरणकमलयोर्मञ्जुमञ्जीरसिञ्जान् । उत्सङ्गे कीरगीतिं स्तनभुवि मसृणं वल्लकीपञ्चमं वा यत्काव्ये दत्तकर्णा शिव शिव मनुते भारतीं भारमेव ॥ ५१ ॥ कस्यांचिद्वाचि कैश्चिन्ननु यदि विहितं दूषणं दुर्दुरूढैश्छिन्नं किं नस्तदा स्यात्प्रथितगुणवतां काव्यकोटीश्वराणाम् । वाहाश्चेद्रन्धवाहाधिकविहितजवाः पञ्चशश्चान्धखञ्जाः का हानिः शीरशाहक्षितिपकुलमणेरश्वकोटीश्वरस्य ॥ ५२ ॥

## विशिष्टकविप्रशंसा ।

**वाल्मीकिः** ॥ कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम् । चन्द्रिकामिव तन्वन्ति चकोरा इव साधवः ॥ १ ॥ सदूषणापि[1] निर्दोषा सखरापि[2] सुकोमला । नमस्तस्मै कृता येन रम्या रामायणी कथा ॥ २ ॥ योगीन्द्रश्छन्दसां स्रष्टा रामायणमहाकविः । वल्मीकजन्मा जयति प्राच्यः प्राचेतसो मुनिः ॥ ३ ॥ लौकिकानां हि साधूनामर्थं वागनुवर्तते । ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ ४ ॥ आदिकवीचतुरास्यौ कमलजवल्मीकजौ वन्दे । लोकश्लोकविधात्रोर्ययोर्भिदा लेशमात्रेण ॥ ५ ॥ तमृषि मनुष्यलोकप्रवेशविश्राम-

१ महिष २ दूषणो राक्षसविशेष, (पक्षे) काव्यदोषा.. ३. खरो राक्षसविशेष; (पक्षे) कर्कशत्वम्. ४ वाल्मीक्यादीनाम्.

शाखिनं वाचाम् । सुरलोकादवतारश्रान्तरखेदच्छिदं वन्दे ॥ ६ ॥ विहित[1]घनालंकारं विचि[2]-त्रवर्णावलीमयस्फुरणम् । शक्रायुधमिव वैक्रं[3] वल्मीकि[4]भुवं मुनिं नौमि ॥७॥ सति काकुत्स्थकुलोन्नतिकारिणि रामायणेऽपि किं काव्यम् । रोहति कुल्या गङ्गापूरे किं बहुरसे वहति ॥ ८ ॥ व्यासः ॥ नमः सर्वविदे तस्मै व्यासाय कविवेधसे । चक्रे सृष्टिं सरस्वत्या यो वर्षमिव भारतम् ॥ ९ ॥ श्रवणाञ्जलिपुटपेयं विरचितवान्भारताख्यममृतं यः । तमहमरागसतृष्णं कृष्णद्वैपायनं वन्दे ॥ १० ॥ व्यासगिरां निर्यासं सारं विश्वस्य भारतं वन्दे । भूषणतयैव संज्ञां यदङ्कितां[5] भारती वहति ॥ ११ ॥ **गुणाढ्यः** ॥ समुद्दीपित[6]कंदर्पा कृत[7]गौरीप्रसाधना । हरलीलेव लोकस्य विस्मयाय बृहत्कथा ॥ १२ ॥ अतिदीर्घजीवि[8]दोषाद्व्यासेन यशोऽपहारितं हन्त । कैर्नोच्येत गुणाढ्यः स एव जन्मान्तरापन्नः ॥ १३ ॥ **कालिदासः** ॥ कवयः कालिदासाद्याः कवयो वयमप्यमी । पर्वतौ परमाणौ च पदार्थत्वं प्रतिष्ठितम् ॥ १४ ॥ निर्गतामलवाक्यस्य कालिदासस्य सूक्तिषु । प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥ १५ ॥ कविरमरः कविरचलः कविरभिनन्दश्च कालिदासश्च । अन्ये कवयः कपयश्चापलमात्रं परं दधते ॥ १६ ॥ साकूत[9]मधुर[10]कोमल[11]विलासिनीकण्ठकूजितप्राये । शिक्षासमयेऽपि मुदे रतलीलाकालिदासोक्ती ॥ १७ ॥ पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासा । अद्यापि तत्तुल्यकवेरभावादनामिका सोऽर्थवती[12] बभूव ॥ १८ ॥ **भवभूतिः** ॥ सुकविद्वितयं मन्ये निखिलेऽपि महीतले । भवभूतिः शुकश्चायं वाल्मीकिस्तु तृतीयकः ॥१९॥ भवभूतेः[13] संबन्धाद्भूधरभूरेव[14] भारती[15] भाति । एतत्कृत[16]कारुण्ये किमन्यथा रोदिति ग्रावा[17] ॥ २० ॥ **बाणः** ॥ हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः । भवेत्कविकुरंगाणां चापलं तत्र कारणम् ॥ २१ ॥ शब्दार्थयोः समो गुम्फः पाञ्चाली रीतिरुच्यते । शीला भट्टारिका वाचि बाणोक्तिषु च सा यदि ॥ २२ ॥ जाता शिखण्डिनी[18] प्राग्यथा शिखण्डी तथावगच्छामि । प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूवेति ॥ २३ ॥ श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽलंकारे कतिचित्सदर्थविषये चान्ये कथावर्णके । आसर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरीसंचारे कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः ॥ २४ ॥ **दण्डी** ॥ जाते जगति

---

१. विहिता घना बहवोऽलंकारा उपमादयो येन तम्; ( पक्षे ) विहित घना मेघा एवालंकरणं येन तम् २ विचित्रा वर्णानामक्षराणा यावली पङ्क्तिस्तत्प्रचुर स्फुरण स्फूर्तिर्यस्य तम्, ( पक्षे ) वर्णा नीलपीतादयस्तत्पङ्क्तिविकार स्फुरणमुत्पत्तिर्यस्य तम् ३. वक्रोक्तिकुशलम्, ( पक्षे ) यथाश्रुतम् ४ वाल्मीकिम्; ( पक्षे ) वल्मीकाज्जातम् इन्द्रधनुषोऽपि तत एवोत्पत्तिरिति लौकिकम् ५ भारतचिह्निताम् ६ कामोद्दीपका, ( पक्षे ) भस्मीकृतमदन. ७ वर्णितगौरीमाहात्म्या; ( पक्षे ) अलंकृता पार्वती यया. ८. जीवित्वम् ९. साभिप्रायम्. १०. रसोत्कर्षधायकरसनिष्टगुणवत् ११. शब्दगुणशालि १२. अन्वर्था १३ शिवैश्वर्यस्य. १४ नगेन्द्रकन्या १५ सरस्वती. १६ भवभूतिकृतकरुणारसप्रधाने नाटके. उत्तररामचरित इत्यर्थ.. १७ " अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् " इति पद्ये. १८. द्रुपदपुत्री

वाल्मीकौ कविरित्यभिधाभवत् । कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि ॥ २५ ॥ त्रयोऽग्नयस्त्रयो वेदास्त्रयो देवास्त्रयो गुणाः । त्रयो दण्डिप्रबन्धाश्च[1] त्रिषु लोकेषु विश्रुताः ॥ २६ ॥ **सुबन्धुः** ॥ कवीनामगलद्दर्पो नूनं वासवदत्तया[2] । शक्त्येव पाण्डुपुत्राणां गतया [3]कर्णगोचरम् ॥२७॥ **मुरारिः** ॥ [4]भवभूतिमनादृत्य निर्वाणमतिना मया । [5]मुरारिपदचिन्तायामिदमाधीयते मनः ॥ २८ ॥ मुरारिपदभक्तिश्चेत्तदा माघे[6] रतिं कुरु । मुरारिपदभक्तिश्चेत्तदा माँघे[7] रतिं कुरु ॥ २९ ॥ देवीं वाचमुपासते हि बहवः सारं तु सारस्वतं जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः । अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरतामापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥ ३० ॥ **बिह्लणः** ॥ विद्वद्वृन्दतरंगिताग्रसरणिः कर्ता शिरोबिन्दुकं कर्मेति प्रतिबोधितान्वयविदो ये येऽपि तेभ्यो नमः । ये तु ग्रन्थसहस्रशाणकपणत्रुट्यत्कलङ्कैर्गिरामुल्लेखैः कवयन्ति बिह्लणकविस्तेष्वेव सनह्यति ॥ ३१ ॥ **जयदेवः** ॥ साध्वी माध्वीक चिन्ता न भवति भवतः शर्करे कर्कशासि द्राक्षे द्रक्ष्यन्ति के त्वाममृत मृतमसि क्षीर नीरं रसस्ते । माकन्द क्रन्द कान्ताधर धरणितलं गच्छ यच्छन्ति भावं यावच्छृङ्गारसारस्वतमिह जयदेवस्य विष्वग्वचांसि ॥ ३२ ॥ **जगन्नाथपण्डितः** ॥ कवयति पण्डितराजे कवयन्त्यन्येऽपि विद्वांसः । नृत्यति पिनाकपाणौ नृत्यन्त्यन्येऽपि भूतवेतालाः ॥ ३३ ॥ माधुर्यैरपि धुर्यैर्द्राक्षाक्षीरेक्षुमाक्षिकादीनाम् । वन्ध्यैव माधुरीयं पण्डितराजस्य कवितायाः ॥३४॥ गिरां देवी वीणागुणरणनहीनादरकरा यदीयानां वाचाममृतमयमाचामति रसम् । वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपतेरधुन्वन्मूर्धानं नृपशुरथवायं पशुपतिः ॥३५॥ मधु द्राक्षा साक्षादमृतमथ वामाधरसुधा कदाचित्केषांचित्खलु हि विदधीरन्नपि मदम् । ध्रुवं ते जीवन्तोऽप्यहह [11]मृतका मन्दमतयो न येषामानन्दं जनयति जगन्नाथभणितिः ॥ ३६ ॥ **भट्टारहरिचन्द्रः** ॥ [12]पदबन्धोज्ज्वलो [13]हारी कृत[14]वर्णक्रमस्थितिः । भट्टारहरिचन्द्रस्य पद्यबन्धो नृपायते ॥ ३७ ॥ **सातवाहनः** ॥ [15]अविनाशिनमग्राम्यमकरोत्सातवाहनः । विशुद्ध[16]जातिभिः कोशं[17] रत्नैरिव सुभाषितैः ॥३८॥ **प्रवरसेनः** ॥ कीर्तिः प्रवरसेनस्य प्रयाता [18]कुमुदोज्ज्वला । सागरस्य परं [19]पारं कपिसेनेव सेतुना[20] ॥ ३९ ॥ **भासः** ॥ [21]सूत्रधारकृतारम्भैर्ना-

---

१ दशकुमारचरित मल्लिकामारुत काव्यादर्शश्च २ एतन्नाम्ना प्रबन्धेन, ( पक्षे ) इन्द्रदत्तया ३ इन्द्रियविशेषम्, ( पक्षे ) कुरुसेनानायक ४ शिवैश्वर्यम्, ( पक्षे ) एतन्नामान कविम् ५. विष्णु, ( पक्षे ) कविविशेष . ६ माघकाव्ये ७ अघे पातके मा प्रीतिं कुर्वित्यर्थः.. ८. हे मधो. ९. आक्रोश कुरु. १०.सर्वत ११. शवा १२ सुप्तिङन्ताद्यक्षरसमूह ; ( पक्षे ) चरण.. १३ मनोहर, ( पक्षे ) मुक्ताहारैर्युक्त . १४. अक्षराणि, ( पक्षे ) ब्राह्मणक्षत्रियादि . १५ चिरस्थायिनम्, ( पक्षे ) नाश न गच्छन्तम् १६. मात्राछन्दादि, ( पक्षे ) मूल्यवन्तम् १७ ग्रन्थविशेष ; ( पक्षे ) भाण्डागारम् १८. कुमुदवच्छुभ्रा, ( पक्षे ) कुमुदो नाम कपि. शोभते यत्र १९ दिगन्तरे, ( पक्षे ) समुद्रमुल्लङ्घ्य लङ्कादेशे. २०. काव्यविशेष, ( पक्षे ) सेतुबन्ध . २१ नाटकाचार्य, ( पक्षे ) वास्तुविद्याज्ञाता.

टकैर्बहुभूमिकैः । सपताकैर्यशो लेभे भासो देवकुलैरिव ॥ ४० ॥ **मयूरः** ॥ तावत्कविविहंगानां ध्वनिर्लोकेषु शस्यते । यावन्नो विशते श्रोत्रे मयूरमधुरध्वनिः ॥ ४१ ॥ **गोविन्दराजः** ॥ इन्दुप्रभारसविदं विहगं विहाय कीराननने स्फुरसि भारति का रतिस्ते । आद्यं यदि श्रयसि जल्पतु कौमुदीनां गोविन्दराजवचसां च विशेष एषः ॥ ४२ ॥ **रत्नखेटदीक्षितः** ॥ विपश्चितामपश्चिमे विवादकेलिनिश्चले सपत्नजित्ययत्नतस्तु रत्नखेटदीक्षिते । बृहस्पतिः क्व जल्पति प्रसर्पति क्व सर्पराट् संमुखस्तु षण्मुखः सुदुर्मुखश्चतुर्मुखः ॥ ४३ ॥ **धनदः** ॥ यथेयं वाग्देवी सुकविमुखवासव्यसनिनी कुहूकण्ठी कण्ठे विलसति तथा चेंदनवधि । तदा भूमीभागे निरुपमतमः किंचिदिव वा समाधत्ते साम्यं धनदभणितीनां मधुरिमा ॥ ४४ ॥ **सुदर्शनः** ॥ न मुग्धदयिताधरे न विषभाजि रत्नाकरे न राहुमुखकोटरे न किल तार्क्ष्यपक्षान्तरे । सुदर्शनकवीश्वरे रसिकचक्रचूडामणौ गुणौकसि सुधा बुधास्त्यजत सान्द्रचन्द्रभ्रमम् ॥४५॥ **गणेश्वरः** ॥ गणेश्वरकवेर्वचोविरचनैकवाचस्पतेः प्रसन्नगिरिनन्दिनीचरणपल्लवं ध्यायतः । तथा जयति भारती भगवती यथा सा सुधीः सुधीभवति सुभ्रुवामधरमाधुरी म्लायति ॥ ४६ ॥ **नरहरिः** ॥ यशोधननिधेर्यदा नरहरेर्वचो वर्ण्यते तदा गतमदा मदालसमरालवालारवाः । न विभ्रमचरीकरीभवति चाधरी माधुरी सुधाकरसुधाझरी मधुकथा वृथा जायते ॥ ४७ ॥ **ज्योतिरीशः** ॥ यश्चत्वारि शतानि बन्धघटनालंकारभाञ्जि द्रुतं श्लोकानां विदधाति कौतुकवशादेकाहमात्रे कविः । ख्यातः क्ष्मातलमण्डलेष्वपि चतुःषष्टे कलानां निधिः संगीतागमनागरो विजयते श्रीज्योतिरीशः कृती ॥ ४८ ॥ **शाकल्लमल्लः** ॥ एकोऽभूत्पुलिनात्ततस्तु नलिनाच्चान्योऽपि नाकोरभूत्प्राढ्चास्ते त्रय एव दिव्यकवयो दीव्यन्तु देव्या गिरा । अर्वाचो यदि गद्यपद्यरचनाचातुर्यवागुद्धतास्तान्सर्वानतिशय्य खेलतितरां शाकल्लमल्लः कविः ॥ ४९ ॥ **राजशेखरः** ॥ बभूव वल्मीकभवः कविः पुरा ततः प्रपेदे भुवि भर्तृमेदुताम् । स्थितः पुनर्यो भवभूतिरेखया स वर्तते संप्रति राजशेखरः ॥ ५० ॥ पातुं श्रोत्ररसायनं रचयितुं वाचः सतां संमता व्युत्पत्तिं परमामवाप्तुमवधिं लब्धुं रसस्रोतसः । भोक्तुं स्वादु फलं च जीविततरोर्यद्यस्ति ते कौतुकं तद्भ्रातः शृणु राजशेखरकवेः सूक्तीः सुधास्यन्दिनीः ॥ ५१ ॥ **विज्जका** ॥ नीलोत्पलदलश्यामां विज्जकां मामजानता । वृथैव दण्डिना प्रोक्तं सर्वशुक्ला सरस्वती ॥ ५२ ॥ **विजया** ॥ सरस्वतीव कर्णाटी विजयांका जयत्यसौ । या वैदर्भगिरां वासः कालिदासादनन्तरम् ॥ ५३ ॥ **कविवृन्दम्** ॥ अहो प्रभावो वाग्देव्या यन्मातङ्गदिवाकरौ । श्रीहर्षश्चाभवत्साम्यः समो बाणमयूरयोः ॥ ५४ ॥ सरस्वतीपवित्राणां जातिस्तत्र न देहिनाम् । व्याससपर्धी कुलालोऽभूद्यद्द्रोणो भारते कविः

---

१ प्रस्तावना; (पक्षे) अट्टालादि गृहावयवविशेष २ नाटकावयवविशेष, (पक्षे) ध्वज ३ पूर्वी इत्यर्थ. ४. वासुकि. ५. व्यास. ६. ब्रह्मदेव. ७. वाल्मीकि.

॥ ९५ ॥ उपमा कालिदासस्य भारवेरर्थगौरवम्। दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥ ९६ ॥ माघेन विघ्नितोत्साहा नोत्सहन्ते पदक्रमे। स्मरतो भारवेरेव कवयः कपयो यथा ॥ ९७ ॥ श्रीरामायणभारतबृहत्कथानां कवीन्नमस्कुर्मः। त्रिस्रोता इव सरसा सरस्वती स्फुरति यैर्भिन्ना ॥ ९८ ॥ प्राचेतसव्यासपराशराद्याः प्राञ्चः कवीन्द्रा जगदञ्चितास्ते। गोष्ठी नवीनापि महाकवीनां पूज्या गुणज्ञैर्भुवनोपकर्त्री ॥ ९९ ॥ यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो भासो हासः कविकुलगुरुः कालिदासो विलासः। हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः केषां नैषा कथय कविताकामिनी कौतुकाय ॥ ६० ॥ भासो रामिलसोमिलौ वररुचिः श्रीसाहसाङ्कः कविर्मेत्स्यो भारविकालिदासतरलाः स्कन्दः सुबन्धुश्च यः। दण्डी बाणदिवाकरौ गणपतिः कान्तश्च रत्नाकरः सिद्धा यस्य सरस्वती भगवती के तस्य सर्वेऽपि ते ॥ ६१ ॥ वाचः पल्लवयत्युमापतिधरः संदर्भशुद्धिं गिरां जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुतेः। शृङ्गारोत्तरसत्प्रमेयरचनैराचार्यगोवर्धनः स्पर्धी कोऽपि न विश्रुतः श्रुतिधरो धोईकविक्ष्मापतिः ॥ ६२ ॥ माघश्चोरो मयूरो मुररिपुरपरो भारविः सारविद्यः श्रीहर्षः कालिदासः कविरथ भवभूत्याह्वयो भोजराजः। श्रीदण्डी डिण्डिमाख्यः श्रुतिमुकुटगुरुर्भल्लटो भट्टबाणः ख्याताश्चान्ये सुबन्ध्वादय इह कृतिभिर्विश्वमाह्लादयन्ति ॥ ६३ ॥

---

## कुकविनिन्दा।

अप्रगल्भाः[१] पदन्यासे जनैर्नीरागहेतवः[२]। सन्त्येके बहुलालापाः[३] कवयो बालका इव ॥ १ ॥ कविभिर्नृपसेवासु चित्तालंकारहारिणी। वाणी वेश्येव लोभेन परोपकरिणी कृता ॥ २ ॥ अन्यवर्णपरावृत्त्या[६] बन्धचिह्ननिगूहनैः[७]। अनाख्यातः सतां मध्ये कविश्चोरो विभाव्यते ॥ ३ ॥ प्रायः कुकवयो लोके रागाधिष्ठितदृष्टयः[८]। कोकिला इव जायन्ते वाचालाः कामकारिणः ॥ ४ ॥ किं कवेस्तस्य काव्येन सर्ववृत्तान्तगामिनी। कथेव भारती यस्य न प्राप्नोति दिगन्तरम् ॥ ५ ॥ किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः। परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ ६ ॥ मुखमात्रेण काव्यस्य करोत्यहृदयो जनः। छायामच्छामपि श्यामां राहुस्तारापतेरिव ॥ ७ ॥ श्लोकार्थस्वादकाले तु शब्दोत्पत्तिविचिन्तकाः। नीवीविमोक्षवेलायां वस्त्रमौल्यविचिन्तकाः ॥ ८ ॥ गणयन्ति नापशब्दं[९] न वृत्तभङ्गं[१०]

---

१ कविविशेष २ विषमग्रन्थस्य शीघ्रोच्चारत ३ सुप्तिङन्तादि, (पक्षे) अङ्घ्रि ४ जनाना नीरागो विरमता तस्य हेतव, (पक्षे) जनन्या मातृ रागहेतव प्रीतिहेतुभूता ५ बहुला आलापा येषाम्, (पक्षे) वक्री या लाला ता पिबन्ति ते ६ वर्णान्तरपरिवर्तने. ७. गोपनै. ८. रक्ततया, (पक्षे) कोपेन. ९. दु शब्दम्. १०. इन्द्रवज्रादि, (पक्षे) शीलम्

क्षयं न चार्थस्य[1] । रसिकत्वेनाकुलिता वेश्योपतयः[2] कुकवयश्च ॥ ९ ॥ बालाकटाक्षसूत्रितमसतीनेत्रत्रिभागकृतभाष्यम् । कविमाणवका दूती व्याख्यातृमधीयते भावम्[3] ॥१०॥ स्वयमपि भूरि[4]च्छिद्रश्चापलम्[5]अपि सर्वतोमुखं[6] तन्वन् । तितउ[7]स्तुषस्य पिशुनो दोषस्य विवेचने[8]ऽधिकृतः ॥ ११ ॥ दुर्जनहुताशदग्धं काव्यसुवर्णं विशुद्धिमुपयाति । दर्शयितव्यं तस्मान्मत्सरिमनसः प्रयत्नेन ॥१२॥ कविरनुहरति च्छायामर्थं कुकविपदचोरः । सकलप्रबन्धहर्त्रे साहसकर्त्रे नमस्तुभ्यम् ॥१३॥ विपुलहृदयाभियोग्ये खिद्यति काव्ये जडो न मौर्ख्ये स्वे । निन्दति कञ्चुकिकारं प्रायः शुष्कस्तनी नारी ॥ १४ ॥ अतिरमणीये काव्ये पिशुनोऽन्वेषयति दूषणान्येव । अतिरमणीये वपुषि व्रणमिव हि मक्षिकानिकरः ॥ १५ ॥ द्राघीयसा[9] धाष्टर्यगुणेन युक्ताः कैः कैरपूर्वैः परकाव्यखण्डैः । आडम्बरं ये वचसां वहन्ति ते केचिदार्याः कवयो जयन्ति ॥ १६ ॥ कर्णामृतं सूक्तिरसं विमुच्य दोषेषु यत्नः सुमहान्खलस्य । अवेक्षते केलिवनं प्रविष्टः क्रमेलकैः[11] कण्टकजालमेव ॥ १७ ॥ काव्यं करोषि किमु ते सुहृदो न सन्ति ये त्वामुदीर्णपवनं न निवारयन्ति । गव्यं घृतं पिब निवातगृहं प्रविश्य वाताधिका हि पुरुषाः कवयो भवन्ति ॥ १८ ॥ हठादाकृष्टानां कतिपयपदानां रचयिता जनः स्पर्धालुश्चेदहह कविता वश्यवचसा । भवेदद्य श्वो वा किमिह बहुना पापिनि कलौ घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः ॥ १९ ॥ स्तुवद्भवनिवर्तके सति हरौ कविः सूक्तिभिः करोति वरवर्णिनीचरितवर्णनं गर्हितम् । अनीतिरवनीपतिर्बत शुनीतनुं मौक्तिकैर्विभूषयति देवतामुकुटभागयोग्यैर्यथा ॥ २० ॥ श्रीनाथस्तवनानुरूपकवनां वाणीं मनोहारिणीं कष्टं हा कवयः कदर्यकुटिलक्ष्मीपाल[12]सात्कुर्वते । दूरोपाहृतसारसैन्धवपयो देवाभिषेकोचितं संसेके विनियुञ्जते सुमतयः शाखालवालस्य किम् ॥ २१ ॥ लीलालुण्ठितशारदापुरमहासंपद्भराणां पुरो विद्यासद्मविनिर्गलत्कणमुषो वल्गन्ति चेत्पामराः । अद्य श्वः फणिनां शकुन्तशिशवो दन्तावलानां वृकाः सिंहानां च सुखेन मूर्धसु पदं धास्यन्ति शालावृकाः ॥ २२ ॥ स्वाधीनो रसनाञ्चलः परिचिताः शब्दाः कियन्तः क्वचित्क्षोणीन्द्रो न नियामकः परिषदः शान्ताः स्वतन्त्रं जगत् । तद्यूयं कवयो वयो वयमिति प्रस्तावनाहुंकृतिः स्वच्छन्दं प्रतिसद्म गर्जत वयं मौनव्रतालम्बिनः ॥ २३ ॥

---

१ वाच्यस्य, (पक्षे) द्रव्यस्य २. जारा ३ एवमतितीक्ष्णमतिभि सूत्रेण, ततोऽल्पमतिभिर्भाष्येन, ततोऽप्यल्पमतिभिर्व्याख्यानेन यथावबुध्यते ग्रन्थादि, तथा तीक्ष्णमतिभि कैश्चित्कविभि स्वल्पव्यवहारज्ञानेन, ततोऽल्पमतिभिरधिकतज्ज्ञानेन, ततोऽल्पमतिभिरधिकतरतज्ज्ञानेन काव्य क्रियत इति न व्यवहारज्ञान कुत्रापि व्यभिचरतीति भावः ४ बहुवाच्य, (पक्षे) बहुरन्ध्रः ५ मौखर्यम्, (पक्षे) चापल्यम् ६ सकलजनसमक्षम्; (पक्षे) सर्वदिग्विषयम् ७. चालनी. ८. निर्णये, (पक्षे) स्वीकारे. ९. अतिदीर्घेण. १०. प्रागल्भ्यम्. ११. उष्ट्र. १२. राजवर्णनपराम्.

## पण्डितप्रशंसा ।

पण्डिते हि गुणाः सर्वे मूर्खे दोषाश्च केवलाः । तस्मान्मूर्खसहस्रेषु प्राज्ञ एको न लभ्यते ॥ १ ॥ गीतशास्त्रविनोदेन कालो गच्छति धीमताम् । व्यसनेन तु मूर्खाणां निद्रया कलहेन वा ॥ २ ॥ यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि । निरस्तपादपे देशे एरण्डोऽपि द्रुमायते[1] ॥ ३ ॥ किं कुलेन विशालेन विद्याहीनस्य देहिनः । अकुलीनोऽपि विद्यावान्देवैरपि स पूज्यते ॥ ४ ॥ रोहणं सूक्तिरत्नानां वन्दे वृन्दं विपश्चिताम् । यन्मध्यपतितो नीचः काचोऽप्युच्चैर्महीयते[2] ॥ ५ ॥ विद्वानेव विजानाति विद्वज्जनपरिश्रमम् । न हि वन्ध्या विजानाति गुर्वीं[3] प्रसववेदनाम् ॥ ६ ॥ प्राज्ञो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥ ७ ॥ विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥ ८ ॥ अलंकरोति यः श्लोकं शुक एव न मध्यमः । अलं[4] करोति यः श्लोकं शुक[5] एव नमध्यमः ॥ ९ ॥ सदोषमपि[6] निर्दोषं भवत्यग्रे विपश्चितः । रामस्येवा[7]र्जुनवपुः कवेश्च सरसं वचः ॥ १० ॥ गुणदोषौ[8] बुधो गृह्णन्निन्दुक्ष्वे[9]डाविवेश्वरः । शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥ ११ ॥ स्थिरा शैली[10] गुणवतां खलबुद्ध्या न बाधते । रत्नदीपस्य हि शिखा वात्ययापि न नश्यते ॥ १२ ॥ वेश्यानामिव विद्यानां मुखं कैः कैर्न चुम्बितम् । हृदयग्राहिणस्तासां द्वित्राः सन्ति न सन्ति वा ॥ १३ ॥ विदुषां वदनाद्वाचः सहसा यान्ति नो बहिः । याताश्चेन्न पराञ्चन्ति द्विरदानां रदा इव ॥ १४ ॥ अर्थाहरणकौशल्यं किं स्तुमः शास्त्रवादिनाम् । अव्ययेभ्योऽपि[11] ये चार्थान्निष्कर्षन्ति सहस्रशः ॥ १५ ॥ विद्याविनयोपेतो हरति न चेतांसि कस्य मनुजस्य । काञ्चनमणिसंयोगो नो जनयति कस्य लोचनानन्दम् ॥ १६ ॥ सत्यं तपो ज्ञानमहिंसता च विद्वत्प्रणाम च सुशीलता च । एतानि यो धारयते स विद्वान्न केवलं यः पठते स विद्वान् ॥ १७ ॥ कवीश्वराणां वचसां विनोदैर्नन्दन्ति विद्यानिधयो न चान्ये । चन्द्रोपला एव करैर्हिमांशोर्मध्ये शिलानां सरसा भवन्ति ॥ १८ ॥ गीर्भिर्गुरूणां परुषाक्षराभिस्तिरस्कृता यान्ति नरा महत्त्वम् । अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो वसन्ति ॥ १९ ॥ शास्त्राण्यधीत्यापि भवन्ति मूर्खा यस्तु क्रियावान्पुरुषः स एव । सुचिन्तितं चौषधमातुराणां न नाममात्रेण करोत्यरोगम् ॥ २० ॥ न पण्डिताः साहसिका भवन्ति श्रुत्वापि ते संतुलयन्ति तत्त्वम् । तत्त्वं समादाय समाचरन्ति स्वार्थं प्रकुर्वन्ति परस्य चार्थम् ॥ २१ ॥ [12]उ-

---

१ वृक्षवदाचरति. २ पूज्यते ३ महतीम् ४ पर्याप्त करोति तिरस्करोतीत्यर्थः. ५. नमध्यम शुको नकारो मध्ये यस्यैवंविध. शुनक श्वा इति भाव.. ६. दोषसहितम्, ( पक्षे ) दोषा हस्तस्तत्सहितम् ७ परशुरामस्य ८. सहस्रार्जुनशरीरम्. ९ गरलम् १०. रीति . ११. अव्ययेभ्य.. अव्ययानामनेकार्थत्वात्, (पक्षे) व्ययरहितेभ्य.. कृपणेभ्य इति यावत् १२ उच्चारितः.

दीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति नोदिताः[1] । अनुक्तमप्यूहति[2] पण्डितो जनः परेङ्गितज्ञानफला[3] हि बुद्धयः ॥ २२ ॥ इभतुरगशतैः प्रयान्तु मूढा धनरहिता विबुधाः प्रयान्तु पद्भ्याम् । गिरिशिखरगतापि काकपङ्क्तिः पुलिनगतैर्न[4] समा हि राजहंसैः॥२३॥ शिशुरपि निपुणो गुरोर्गरीयान्न[5][6] तु वपुषैव महान्महत्प्रतिष्ठः । मणिरणुरपि भूषणाय पुंसां न तु पृथुलैव शिला विलासहेतुः ॥२४॥ सन्तश्चेदिह गुणबिन्दवो बुधस्तान्संतुष्टः कवलयति स्फुटेऽपि दोषे । संयुक्तानपि पयसः कणान्विचिन्वन्नम्भस्तो ग्रसति हि मङ्क्षु मल्लिकाक्षः[7]॥२५॥ अन्या जगद्धितमयी[8] मनसः प्रवृत्तिरन्यैव कापि रचना वचनावलीनाम् । लोकोत्तरा च कृतिराकृतिरङ्गहृद्या विद्यावतां सकलमेव गिरां दवीयः[9] ॥ २६ ॥ अधिगतपरमार्थान्पण्डितान्मावमंस्थास्[10]तृणमिव लघुलक्ष्मीर्नैव तान्संरुणद्धि[11] । मदमिलितमिलिन्दश्यामगण्डस्थलानां न भवति बिसतन्तुर्वारणं वारणानाम्[12] ॥ २७ ॥ शास्त्रोपस्कृत[13]शब्दसुन्दरगिरः शिष्यप्रदेयागमा विख्याताः कवयो[14] वसन्ति विषये[15] यस्य प्रभोर्निर्धनाः । तज्जाड्यं[16] वसुधाधिपस्य कवयो ह्यर्थं विनापीश्वराः कुत्स्याः स्युः कुपरीक्षका न मणयो यैरर्घतः[17] पातिताः ॥ २८ ॥ हर्तुर्याति न गोचरं किमपि[18] शं[19] पुष्णाति सर्वात्मना ह्यर्थिभ्यः प्रतिपाद्यमानं[20]अनिशं[21] प्राप्नोति वृद्धिं पराम् । कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमेतद्धनं येषां तान्प्रति मानमुज्झत[22] नृपाः कस्तैः सह स्पर्धते[23] ॥ २९ ॥

---

## कुपण्डितनिन्दा ।

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् । लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १ ॥ मूर्खचिह्नानि षडिति गर्वो दुर्वचनं मुखे । विरोधी विषवादी च कृत्याकृत्यं न मन्यते ॥ २ ॥ मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः । अशुभं वाक्यमादत्ते पुरीषमिव[24] सूकरः ॥ ३ ॥ उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये । पयःपानं भुजंगानां केवलं विषवर्धनम् ॥ ४ ॥ वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह । न मूर्खजनसंपर्कः सुरेन्द्रभवनेष्वपि[25] ॥ ५ ॥ मूर्खोऽपि मूर्खं दृष्ट्वा च चन्दनादतिशीतलः । यदि पश्यति विद्वांसं मन्यते पितृघातकम् ॥ ६ ॥ अन्तःसार[26]विहीनस्य सहायः किं करिष्यति । मलयेऽपि स्थितो वेणुर्वेणुरेव न चन्दनः ॥ ७ ॥ यस्य नास्ति विवेकस्तु केवलं यो बहु-

---

१ प्रेरिताः २ तर्कयति ३ अभिप्राय ४ सैकतगतैः ५ शास्त्रवेत्ता ६ श्रेष्ठ ७ राजहंस. ८ लोकहितप्रचुरा ९ अतिदूरम् १०. अवमानं मा कुरु ११. रोधं न कुरुते. १२. गजानाम् १३ शास्त्रसंस्कारेण शुद्धा ये शब्दास्तैः सुन्दरा गिरो येषां ते १४ पण्डिताः १५ देशे १६ मौर्ख्यम् १७ मूल्यतः. १८ अचिन्त्यम् १९ सुखम् २० दीयमानम् २१ निरन्तरम् २२ त्यजत २३ स्पर्धां करोति २४. विष्ठा २५ सुरेन्द्राणां भवनेषु स्वर्गादिलोकेष्वपीति भावः २६ मज्जास्थिरांशो बलं वा

श्रुतः । न स जानाति शास्त्रार्थान्दर्वी पाकरसानिव ॥ ८ ॥ रूपयौवनसंपन्ना विशालकुलसंभवाः । विद्याहीना न शोभन्ते निर्गन्धाः किंशुका इव ॥ ९ ॥ विद्याविधिविहीनेन किं कुलीनेन देहिनाम् । अकुलीनोऽपि यो विद्वान्दैवतैरपि पूज्यते ॥ १० ॥ मदोपशमनं शास्त्रं खलानां कुरुते मदम् । चक्षुःप्रकाशकं तेज उलूकानामिवान्धताम् ॥ ११ ॥ ज्ञानविद्याविहीनस्य विद्याजालं निरर्थकम् । कण्ठसूत्रं विना नारी अनेकाभरणैर्युता ॥ १२ ॥ मूर्खः स्वल्पव्ययत्रासात्सर्वनाशं करोति ह । कः सुधीः संत्यजेद्भाण्डं शुल्कस्यैवातिसाध्वसात् ॥ १३ ॥ माता शत्रुः पिता वैरी येन बालो न पाठितः । न शोभते सभामध्ये हंसमध्ये बको यथा ॥ १४ ॥ पुस्तकेषु च नाधीतं नाधीतं गुरुसंनिधौ । न शोभन्ते सभामध्ये जारगर्भा इव स्त्रियः ॥ १५ ॥ बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः । अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ १६ ॥ अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः । ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति[3] ॥ १७ ॥ गुणिगणगणनारम्भे न पतति कठिनी[4] सुसंभ्रमाद्यस्य । तेनाम्बा यदि सुतिनी[5] वद वन्ध्या कीदृशी भवति ॥ १८ ॥ निर्गुण इति मृत इति च द्वावेकार्थाभिधायिनौ विद्धि । पश्य धनुर्गुणशून्यं निर्जीवं यदिह शंसन्ति ॥ १९ ॥ सुगृहीतमलिनपक्षा लघवः परभेदिनस्तीक्ष्णाः । पुरुषा अपि विशिखा अपि गुणच्युता कस्य न भयाय ॥ २० ॥ अन्तर्भूतो[6] निवसति जडे[7] जडैः शिशिरमहासि हरिण इव । अजडे शशीव तपने स तु प्रविष्टोऽपि निःसरति ॥ २१ ॥ साहित्य[9]संगीत[10]कलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः[8] । तृणं न खादन्नपि जीवमानस्तद्भाग[11]धेयं[12] परमं पशूनाम् ॥ २२ ॥ जडेषु जातप्रतिभाभिमानाः खलाः कवीन्द्रोक्तिषु के वराकाः । प्राप्ताग्निनिर्वापणगर्वमम्बु रत्नाङ्कुरज्योतिषि किं करोति ॥ २३ ॥ येषां न विद्या न तपो न दानं ज्ञानं न शीलं न गुणो न धर्मः । ते मृत्युलोके भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति ॥ २४ ॥ मुक्ताफलैः किं मृगपक्षिणां च मिष्टान्नपानं किमु गर्दभाणाम् । अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं धर्मकथाप्रसङ्गः ॥ २५ ॥ अज्ञातपाण्डित्यरहस्यमुद्रा ये काव्यमार्गे दधतेऽभिमानम् । ते गारुडीयाननधीत्य मन्त्रान्हालाहलास्वादनमारभन्ते ॥ २६ ॥ अवद्यजम्बाल[13]गवेषणाय कृतोद्यमानां खलसैरिभाणाम् । कवीन्द्रवाडिजेरनिर्झरिण्यां संजायते व्यर्थमनोरथत्वम् ॥ २७ ॥ वरं दरिद्रः श्रुतिशास्त्रपारगो न चापि मूर्खो बहुरत्नसंयुतः । सुलोचना जीर्णपटापि शोभते न नेत्रहीना कनकैरलंकृता ॥ २८ ॥ विविनक्ति न बुद्धिदुर्विधः[14] स्वयमेव स्वहितं पृथग्जनः[15] । यदुदीरितमप्यदः परैर्न विजानाति

---

१ नेतव्यानेतव्यवस्तुसबन्धी राजग्राह्यो भाग २ विकृतिमात्र गतम्. ३. रञ्जयितुमसमर्थो भवति. ४ कनिष्ठिकाङ्गुलि ५ पुत्रिणी ६ परं शिष्याज्ञावमान इत्यर्थ. ७ मूर्खे, (पक्षे) जलरूपत्वात् ८. मूर्ख; (पक्षे) पशुत्वात् ९ साहित्यशास्त्रम् १०. गायनम् ११ शृङ्गम् १२ दैवम् १३. कर्दम. १४. बुद्धिशून्य. १५. पामरजन.

तदद्भुतं महत् ॥ २९ ॥ विदुरेष्य[1]दपायमात्मना परतः श्रद्दधतेऽथ वा बुधाः । न परोपाहितं न च स्वतः प्रमिमीते[2]ऽनुभवादृतेऽल्पधीः ॥ ३० ॥ अथ वाभिनिविष्ट[3]बुद्धिषु व्रजति व्यर्थकतां सुभाषितम् । रविरागिषु शीतरोचिषः[4] करजालं कमलाकरेष्विव ॥ ३१ ॥ इतरकर्मफलानि यदृच्छया[5] विलिख तानि सहे चतुरानन । अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख मा लिख मा लिख ॥३२॥ कतिचिदुद्धतनिर्भरमत्सराः कतिचिदात्मवचःस्तुतिशालिनः । अहह केऽपि निरक्षरकुक्षयस्तदिह संप्रति कं प्रति मे श्रमः ॥ ३३ ॥ ये के विचित्ररसशालिषु सत्कवीनां सूक्तेषु कर्णपथगामिषु नाद्रियन्ते । ते मालतीपरिमलेष्वपि कन्दलत्सु नासापुटं करतलेन पिदध्युरेव ॥ ३४ ॥ मद्वाणि मा कुरु विषादमनादरेण मात्सर्यमग्नमनसां सहसा खलानाम् । काव्यारविन्दमकरन्दमधुव्रतांस्त्वमास्येषु धास्यसितमां कियतो विशालान् ॥३५॥ अरण्यरुदितं कृतं शवशरीर[6]मुद्वर्तितं[7] स्थले[8]ऽब्जमवरोपितं सुचिरमूखरे वर्षितम् । श्वपुच्छमवनामितं बधिरकर्णजापः[9] कृतो धृतोऽन्धमुखदर्पणो यदबुधो जनः सेवितः ॥ ३६ ॥ प्रसह्य[10] मणिमुद्धरेन्मकरवक्त्रदंष्ट्राङ्कुरात्समुद्रमपि संतरेत्प्रचलदूर्मिमालाकुलम् । भुजंगमपि कोपितं शिरसि पुष्पवद्धारयेन्न तु प्रतिनिविष्ट[11]मूर्खजनचित्तमाराधयेत् ॥३७॥ लभेत सिकतासु[12] तैलमपि यत्नतः पीडयन्पिबेच्च मृगतृष्णिकासु[13] सलिलं पिपासार्दितः । कदाचिदपि पर्यटञ्शशविषाणमासादयेन्न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ३८ ॥ यदा किंचिज्ज्ञोऽहं द्विप[14] इव मदान्धः समभवं तदा सर्वज्ञोऽस्मीत्यभवद[15]वलिप्तं मम मनः । यदा किंचित्किंचिद्बुधजनसकाशादवगतं तदा मूर्खोऽस्मीति ज्वर[16] इव मदो मे व्यपगतः ॥ ३९ ॥ शिरः शार्वं[17] स्वर्गात्पशुपतिशिरस्तः[18] क्षितिधरं महीध्रादुत्तुङ्गादवनिमवनेश्चापि जलधिम् । अधोऽधो गङ्गेयं पदमुपगता स्तोकमधुना विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥ ४० ॥ वितरति[19] गुरुः प्राज्ञे विद्यां यथैव तथा जडे[20] न तु खलु तयोर्ज्ञाने शक्तिं करोत्युपहन्ति[21] वा । भवति च पुनर्भूयान्[22]भेदः फलं प्रति तद्यथा प्रभवति रुचां बिम्बोद्ग्राहे[23] मणिर्न मृदां[24] चयः ॥ ४१ ॥ अविनयभुवामज्ञानानां शमाय भवन्नपि प्रकृतिकुटिलाद्विद्याभ्यासः खलत्वविवृद्धये । फणिभयभृतां मस्तूच्छेदक्षमस्तमसामसौ विषधरफणारत्नालोको भयं तु भृशायते ॥ ४२ ॥ व्यासादीन्कविपुंगवान्[25]नुचितै[26]र्वाक्यैः सलीलं हसन्नुच्चैर्जल्प निमील्य लोचनयुगं श्लोकान्सगर्वं पठ । काव्यं धिक्कुरु यत्परैर्विरचितं स्पर्धस्व सार्धं बुधैर्यद्यभ्यर्थयसे श्रुतेन रहितः पाण्डित्यमाप्तुं बलात् ॥ ४३ ॥ ये संसत्सु विवादिनः परयशःशल्येन शूलाकुलाः कुर्वन्ति स्वगुणस्तवेन

---

१. आगामिनम् २ जानाति ३ दुराग्रहग्रस्तचित्तेषु ४. शीतभानोः ५ स्वेच्छया ६ प्रेतशरीरम्. ७. उद्वर्तनेन सुगन्धितम्. ८. पाषाणादिप्रचुरप्रदेशे. ९ कर्णमन्त्र. १०. बलात्कारं कृत्वा ११. ज्ञानलेशशून्यत्वेन विपरीतार्थग्राही. १२ वालुकासु १३. मरीचिकासु १४. गज १५ सगर्वम् १६ ज्वरे यथा मदो गच्छति तथेत्यर्थः. १७. शर्वसंबन्धि १८. मस्तकात्. १९. ददाति २०. मूर्खे. २१. नाशयति २२ महान्. २३. बिम्बग्रहणे. २४. मृत्पिण्ड. २५. कविश्रेष्ठान्. २६. अयोग्यैः.

गुणिनां यत्नाद्गुणाच्छादनम् । तेषां रोषकषायितोदरदृशां[1] कोपोष्णनिःश्वासिनां दीप्ता रत्नशिखेव कृष्णफणिनां[2] विद्या जनोद्वेगिनी[3] ॥ ४४ ॥ ग्रीवास्तम्भभृतः[4] परोन्नतिकथामात्रे[5] शिरः शूलिनः सोद्वेगभ्रमणप्रलापविपुलक्षोभाभिभूतस्थितेः । अन्तर्द्वेषविषप्रवेशविषमक्रोधोष्णनिःश्वासिनः कष्टा नूनमपण्डितस्य[6] विकृतिर्भीमज्वरारम्भभूः ॥ ४५ ॥ मूर्खत्वं हि सखे ममातिरुचिरं यस्मिन्नष्टौ गुणा निश्चिन्तो बहुभोजकोऽतिमुखरो रात्रिं दिवा सुप्यति । कार्याकार्यविचारणान्धबधिरो मानापमाने समः प्रायेणामयवर्जितो दृढवपुर्मूर्खः सुखं जीवति ॥ ४६ ॥ व्यालं बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते छेत्तुं वज्रमणीञ्शिरीषकुसुमप्रान्तेन संनह्यते । माधुर्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते नेतुं वाञ्छति यः खलान्पथि सतां सूक्तैः सुधास्यन्दिभिः ॥ ४७ ॥ शक्यो वारयितुं जलेन हुतभुक्छत्रेण सूर्यातपो नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ । व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ४८ ॥ काव्ये भव्यतमेऽपि विज्ञनिवहैरास्वाद्यमाने मुहुर्दोषान्वेषणमेव मत्सरजुषां नैसर्गिको दुर्ग्रहः । कासारेऽपि विकाशिपङ्कजचये खेलन्मराले पुनः क्रौञ्चश्चञ्चुपुटेन कुञ्चितवपुः शम्बूकमन्वेषते ॥ ४९ ॥ विद्ये हृद्यतरासि किं नु कृपणं संभावनैर्लज्जसे सन्त्यन्ये तव तोषणे हितधियो धन्या वदान्या भुवि । कान्तानां कुचकुम्भकौशलरुचां नो हानिरेतावता षण्ढानां हृदयेऽपि यत्प्रणयतेर्नानङ्गरागोदयः ॥ ५० ॥ पेटी चीवर पट्टवस्त्रपटल श्वेतातपत्र च्छग शाटीहारक घोटक स्फुटघटाटोपाय तुभ्यं नमः । येनानक्षरकुक्षयोऽपि जगतः कुर्वन्ति सर्वज्ञताभ्रान्ति येन विना तु हास्यपदवीं सन्तोऽपि कष्टं गताः ॥ ५१ ॥ प्रौढुण्यात्पण्डितानां कविवचसि कथं प्रत्ननूत्नत्वचिन्ता विद्येरन्यद्यवद्येन्यभिजहति तथा गृह्णते स्युर्गुणाश्चेत् । अन्यस्त्वन्यप्रमाणः परमवतनुते छिद्यते तावता किं नायं रत्नस्य दोषो दृषदिति यदिदं क्षिप्रमन्धाः क्षिपन्ति ॥ ५२ ॥

---

## छान्दसप्रशंसा ।

नाध्यापयिष्यन्निगमाञ्श्रमेणोपाध्यायलोका यदि शिष्यवर्गान् । निर्वेदवादं किल निर्वितानमुर्वीतलं हन्त तदाभविष्यत् ॥ १ ॥

---

१. रोषेण कषायित ताम्रमुदरं गर्भो यस्या एवंविधा दृग्येषाम् २. कृष्णसर्पाणाम् ३. त्रासदात्री. ४. ग्रीवास्तम्भ धारयत . ५ परोत्कर्ष. ६. मूर्खस्य ७ विकार ८ दारुणज्वरारम्भकभूमि ९ रोगवर्जित.. १०. सर्पम् ११ बिसम्. १२. हीरकादीन्. १३. सर्षपपुष्पम्. १४. सनद्धो भवति. १५. इच्छति. १६. अमृतस्राविभिः. १७. तीक्ष्ण. १८ प्रादुर्भवेत् १९. काव्ये. २० दोषा.. २१. वेदान्

## छान्दसनिन्दा ।

आः कष्टमप्रहृष्टा शिष्टा अपि वित्तचापलाविष्टाः । अध्यापयन्ति वेदानादाय चिराय मासि मासि भृतिं[१] ॥ १ ॥

---

## वैयाकरणप्रशंसा ।

वैयाकरणकिरा[२]तादपशब्दमृगाः क्व यान्ति संत्रस्ताः[३] । ज्योति[४]र्नट[५]विट[६]गायकभिषगाननगह्वराणि[७] यदि न स्युः ॥ १ ॥ यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् । स्वजनः श्वजनो मा भूत्सकलं शकलं सकृच्छकृत्[८] ॥ २ ॥ कृतदुरितनिराकरणं व्याकरणं चतुरधीरधीयानः । बुधगणगणनावसरे कनिष्ठिकायां परं जयति ॥ ३ ॥ सूत्रं[९] पाणिनिबद्धं[१०] कलयन्[११]पुरुषः समुद्वहति[१२] सुदृशम्[१३] । वर्णादीनां[१४] धर्मान्बुद्ध्वा[१५] विधिवत्[१६]प्रयुङ्क्ते[१७]ऽसौ ॥ ४ ॥ पातं[१८] जले विष्णुपदापगायाः[१९] पातञ्जले[२०] चापि नयेऽ[२१]वगाहम्[२२] । आचक्षते[२३] शुद्धिदमा प्रसूतेरा[२४] च क्षन्ते[२५] रागमधोक्षजे च ॥ ५ ॥ नृणामनभ्यस्तफणाभृदीशगिरां[२६] दुरापा[२७] बुधराजगोष्ठी[२८] । अबुद्धचाप[२९]श्रुतिपद्धतीनां युद्धक्षमेवोद्धतयोद्धसार्था ॥ ६ ॥ नाङ्गीकृतव्याकरणौषधानामपाटवं वाचि सुगाढमास्ते । कस्मिंश्चिदुक्ते तु पदे कथंचित्स्वैरं वपुः स्विद्यति वेपते च ॥ ७ ॥ शब्दशास्त्रमनधीत्य यः पुमान्वक्तुमिच्छति वचः सभान्तरे । बद्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना ॥ ८ ॥

---

## वैयाकरणनिन्दा ।

टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः सिङ्सोस्तिमास्झिसिप्थस्थमिब्वस्मस्ताहशिचष्टुनाष्टुरतङ्ञशश्छोऽत्यचोऽन्त्यादिटि । लोपोव्योर्वलिवृद्धिरेचियाचिभंदाधाघ्वदाप्छेचटेरित्यब्दा[३०]नखिलान्नयन्ति[३१] कतिचिच्छब्दान्पठन्तः कटून्[३२] ॥ १ ॥ सूत्रैः पाणिनिनिर्मितैर्बहुतरैर्निष्पाद्य शब्दावलिं वैकुण्ठस्त[३३]-

---

१. वेतनम्. २ भिल्ल . ३. भीता . ४. गणका ५ नाट्यकारा . ६. जारा. ७. गुहा ८. विष्ठा. ९. व्याकरणसूत्रम् ; ( पक्षे ) कङ्कणम् १०. पाणिनिना बद्ध रचितम्; ( पक्षे ) पाणौ हस्ते निबद्धम् विवाहकाले सूत्रनिर्मिते कङ्कणे वधूवरयोर्हस्तयोर्बध्नन्तीति प्रसिद्धि ११ अर्थज्ञानपूर्वक विचारयन्; ( पक्षे ) धारयन् १२ सम्यग्धारयति; ( पक्षे ) सम्यगुद्वहति -पाणिग्रहणपूर्वक स्वीकरोतीत्यर्थ. १३ शोभना दृष्टिम् शुद्धाशुद्धविवेचनशक्तिमित्यर्थ ; ( पक्षे ) शोभना दृग्यस्या एतादृशीं स्त्रियम् १४. अकारप्रभृतिवर्णादीनाम् ; (पक्षे) ब्राह्मणवर्णादीनाम् १५. ज्ञात्वा १६. यथाशास्त्रम्. १७ प्रयोगं करोति, ( पक्षे ) योजयति. १८ पतनम् १९. गङ्गाया २०. पतञ्जलिनिर्मिते २१ व्याकरणशास्त्रे २२ मज्जनम्; ( पक्षे ) अभ्यासम्. २३. वदन्ति. २४ जननादारभ्य. २५ मरणान्त च २६ माहेश्वरसूत्राणाम् २७ दुष्प्रापा. २८. पण्डितराजसभा २९ अज्ञातधनुर्वेदमार्गाणाम् ३० वर्षाणि ३१. यापयन्ति. ३२ कर्णकठोरान्. ३३ विष्णुस्तवम्.

वमक्षमा रचयितुं मिथ्याश्रमाः शाब्दिकाः । पक्वान्नं विविधं श्रमेण विविधापूपाग्र्यसूपान्वितं मन्दाग्नीननुरुन्धते[२] मितबलानाघ्रातुमप्यक्षमान् ॥ २ ॥ कुप्वोऽकऽपौचशेषोष्यसखिसस जुषोरुर्विरामोऽवसानं शश्छोऽटीत्यादिशब्दैः सदसि यदि शठाः[३] शाब्दिकाः पण्डिताः स्युः । तेषां को वापराधः कथयत सततं ये पठन्तीह थोन्तत्ताथय्याथय्यथय्याधिगधिगधिगाधिक्थय्यथय्येति[४] शब्दान् ॥ ३ ॥

## नैयायिकप्रशंसा ।

अद्भुतस्तर्कपाथोधिरगाधो[५] यस्य वर्धकः । अक्षपादोऽतमःस्पृष्टस्त्वकलङ्कः[६][७] कलानिधिः[८] ॥ १ ॥ अपरीक्षितलक्षणप्रमाणैरपरामृष्टपदार्थसार्थतत्त्वैः[९] । अवशीकृतजैत्रयुक्तिजालैरलमेतैरनधीततर्कविद्यैः[१०] ॥ २ ॥ मोह[११] रुणद्धि[१२] विमलीकुरुते च बुद्धिं सूते[१३] च संस्कृतपदव्यवहारशक्तिम् । शास्त्रान्तराभ्यसनयोग्यतया युनक्ति[१४] तर्कश्रमो न तनुते किमिहोपकारम् ॥ ३ ॥ ज्ञानाब्धिरक्षिचरणः[१५] कर्णभक्षकश्च[१६] श्रीपक्षिलोऽप्युदयनः स च वर्धमानः । गङ्गेश्वरः शशधरो बहवश्च नव्या ग्रन्थैर्व्यरुन्ध्यत इमे हृदयान्धकारम्[१७] ॥ ४ ॥ प्रायः काव्यैर्गमितवयसः पाणिनीयाम्बुराशेः सारज्ञस्याप्यपरिकलितन्यायशास्त्रस्य[१८] पुंसः । वादारम्भे वदितुमनसो वाक्यमेकं सभायां प्रह्वा[१९] जिह्वा भवति कियती पश्य कष्टामवस्थाम् ॥ ५ ॥

## नैयायिकनिन्दा ।

परामृशन्ति लिङ्गानि व्यभिचारविचारकाः । तार्किका यदि विद्वांसो विटैः किमपराध्यते ॥ १ ॥ कर्कशतर्कविचारव्यग्रः किं वेत्ति काव्यहृदयानि । ग्राम्य इव कृषिविलग्नश्चञ्चलनयनावचोरहस्यानि ॥ २ ॥ नैयायिकानां नलिनाम्बराणां जनुर्गतं रासभचिन्तयैव । तथापि वेश्यास्तनसन्निवेशस्तोतुः कवेः कोऽपि विशेष एव ॥ ३ ॥ न जिघ्रत्याम्नायं[२०] स्पृशति न तदङ्गान्यपि[२१] सकृत्पुराणं नादत्ते न गणयति किं च स्मृतिगणम् । पठञ्शुष्कं[२२] तर्कं परपरिभवार्थोक्तिभिरसौ नयत्यायुः सर्वं निहतपरलोकार्थयतनः ॥ ४ ॥ प्रयत्नैरस्तोकैः[२३] परिचितकुतर्कप्रकरणाः परं वाचो वश्यान्कतिपयपदौघान्विदधतः । सभायां वाचाटाः श्रुतिकटु रटन्तो घटपटान्न लज्जन्ते मन्दाः[२४] स्वयमपि तु जिह्रेति[२५] विबुधः ॥ ५ ॥

१. कृत्वेति शेष. २. अनुकुर्वन्ति. ३ धूर्ता. ४. गायकानां तालशब्दानुकरणमेतत्. ५ तर्कसमुद्र. ६. गौतम ; ( पक्षे ) क्षपा ददातीति क्षपादः स न भवतीति तथाविध.. चन्द्र इत्यर्थः. ७ अज्ञानेन; ( पक्षे ) राहुणा. ८. कलाना निधि·, ( पक्षे ) चन्द्र. ९. अज्ञातपदार्थसमूहतत्त्वै. १०. जययुक्ति ११. अज्ञानम्. १२ रोधयति· नाशयतीत्यर्थ. १३. उत्पादयति. १४. योजयति. १५. गौतम.. १६ कणाद. १७. बुद्धेरज्ञानम्. १८ अनभ्यस्त. १९. वक्रा २०. वेदम् २१. वेदाङ्गानि. २२. नीरसम्. २३ बहुभि·. २४.मूर्खाः. २५ लज्जां प्राप्नोति

कर्मब्रह्मविचारणां विजहतो भोगापवर्गप्रदां घोषं कंचन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः । प्रत्यक्षं न पुनाति नापहरते पापानि पीलुच्छेदाव्याप्तिर्नावति नैव पात्यनुमितिर्नो पक्षता रक्षति ॥ ६ ॥ हेतुः कोऽपि विशिष्टधीरनुमितौ न ज्ञानयुग्मं मरुत्त्वाचौ नेति च मोघवादमुखरा नैयायिकाश्चेद्बुधाः । मेषस्याण्डमियत्पलं वलिभुजो दन्ताः कियन्तस्तथेत्येवं संततचिन्तनैः श्रमजुषो न स्युः कथं पण्डिताः ॥ ७ ॥ साधु व्याकरणं हिताय विशदं काव्यं पिकीगीतवन्मीमांसा श्रुतितत्परा तदनुगं साङ्ख्यं सपातञ्जलम् । त्वं तु न्यायविशुद्धवैदिकविधिव्याकोपबौद्धागमव्याघाताय निगूढतर्कग्रहण कामोदमाधास्यसि ॥ ८ ॥

---

## मीमांसकप्रशंसा ।

भगवदनभ्युपगमनं दैवतचैतन्यनिह्नवश्चैषाम् । कर्मश्रद्धावर्धक तत्प्राधान्यप्रदर्शनायैव ॥ १ ॥ आगमरूपविचारिण्यधिकरणसहस्रशिक्षितविपक्षे । स्वामिनि जैमिनियोगिन्यपरज्जति हृदयमस्मदीयमिदम् ॥ २ ॥ शबरकुमारिलगुरवो मण्डनभवदेवपार्थसारथयः । अन्ये च विश्वमान्या जयन्ति संत्रायमाणतन्त्रास्ते ॥ ३ ॥ नैयायिका वा ननु शाब्दिका वा त्रयीशिरःसु श्रमशालिनो वा । वादाहवे बिभ्रति जैमिनीयन्यायोपरोधे सति मौनमुद्राम् ॥ ४ ॥ आदौ धर्मे प्रमाणं विविधविधिभिदाशेषतां च प्रयुक्तिं पौर्वापर्याधिकारौ तदनु वहुविधं चातिदेशं तथोहम् । बाधं तन्त्रं प्रसङ्गं नयननयशतैः सम्यगालोचयद्भ्यो भिन्ना मीमांसकेभ्यो विदधति भुवि के सादरं वेदरक्षाम् ॥ ५ ॥

---

## मीमांसकनिन्दा ।

ते मीमांसाशास्त्रलोकप्रसिद्धाः सर्वर्षीणां सेहिरे नैव सत्ताम् । चैतन्यस्यापह्नवं देवतानां चक्रुर्विश्वं नश्वरं मन्यमानाः ॥ १ ॥ मीमांसकाः कतिचिदत्र मिलन्ति वेदप्रामाण्यसाधनकृतोऽपि न तेऽभिवन्द्याः । उद्घोषितोऽप्युपनिषद्भिरशेषशेषी[14] ब्रह्मैव[15] नाभ्युपगतः पुरुषोत्तमो यैः ॥ २ ॥

---

## वैद्यप्रशंसा ।

गुरोरधीताखिलवैद्यविद्यः पीयूषपाणिः कुशलः क्रियासु । गतस्पृहो धैर्यधरः कृपालुः शुद्धोऽधिकारी भिषगीदृशः स्यात् ॥ १ ॥ रागादिरोगान्सततानुषक्तानशेषकायप्रसृतानशे-

---

१ कर्मचिन्तन ब्रह्मचिन्तन च २ परमाणुसमुदाय . ३ व्याप्तिविशिष्टपक्षधर्मताज्ञानविशिष्ट. ४. पूर्वोक्तगताशब्दद्वयम् ५ त्वगिन्द्रियप्रत्यक्ष . ६ जल्पाका . ७ काका . ८ लोपम्. ९. कृष्ण . १०. वेदत्रयी. ११ वादयुद्धे १२. न्यायरूपे प्रतिबन्धके १३. लोपम् १४ प्रतीतपदार्थै सहाविचाल्य.. १५. स एव ब्रह्मेति १६. अमृत पाणौ यस्य स . अमृतवदवश्यमारोग्यद इत्यर्थः..

षान् । औत्सु[1]क्यमोहा[2]रति[3]दाञ्जवान योऽपूर्ववैद्याय नमोऽस्तु तस्मै ॥२॥ मात्रोधि वैद्यकमथापि महामयेषु प्राप्तेषु यो भिषगिति प्रथितस्तमेव । ओंका[4]रयत्यखिल एव विशेषदर्शी लोकोऽपि तेन भिषगेष न दूषणीयः ॥ ३ ॥ मस्ते[5] दुःसहवेदनाकवलिते मग्ने स्वरेऽन्तर्गलं तप्तायां ज्वरपावकेन च तनौ तान्ते[6] हृषी[7]कव्रजे । दूने[8] बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः कः शक्तः कलितामयप्रशमनो वैद्यात्परो विद्यते ॥ ४ ॥ भ्रान्ता वेदान्तिनः किं पठथ शठतयाद्यापि चाद्वैतविद्यां पृथ्वीतत्त्वे लुठन्तो विमृशथ सततं कर्कशास्तार्किकाः किम् । वेदैर्नानागमैः किं ग्लपयथ हृदयं श्रोत्रिया[9]ः श्रोत्रशूलै[10]र्वैद्यं सर्वानवद्यं[11] विचिनुत शरणं प्राणसंप्रीणनाय[12] ॥ ५ ॥

---

## कुवैद्यनिन्दा ।

वैद्यराज नमस्तुभ्यं यमराजसहोदर । यमस्तु हरति प्राणान्वैद्यः प्राणान्धनानि च ॥ १ ॥ वैद्यराज नमस्तुभ्यं क्षपिताशेषमानव । त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते ॥ २ ॥ चितां प्रज्वलितां दृष्ट्वा वैद्यो विस्मयमागतः । नाहं गतो न मे भ्राता कस्येदं हस्तलाघवम् ॥ ३ ॥ कषायैरुपवासैश्च कृतामुल्लोघनां नृणाम् । निजौषधकृतां वैद्यो निवेद्य हरते धनम् ॥ ४ ॥ अज्ञातशास्त्रसद्भावा[13]ञ्शास्त्रमात्रपरायणान् । त्यजेद्दूराद्भिषक्पाशा[14]न्पाशान्वैवस्वता[15]निव ॥ ५ ॥ मिथ्यौषधैर्हन्त मृषाकषायैरसह्यलेह्यैरयथार्थतैलैः । वैद्या इमे वञ्चितरुग्णवर्गाः[16] पिचण्डभाण्डं[17] परिपूरयन्ति ॥ ६ ॥ नटोऽपि दद्याद्गणकोऽपि दद्यात्संप्रार्थितो पाशुपतोऽपि दद्यात् । वैद्यः कथं दास्यति याचमानो यो मर्तुकामादपि हर्तुकामः ॥ ७ ॥ न धातो[18]र्विज्ञानं न च परिचयो वैद्यकनये न रोगाणां तत्त्वावगतिरपि नो वस्तुगुणधीः । तथाप्येते वैद्या इति तरलयन्तो[19] जडजनानसून्[20]मृत्यो[21]र्भृत्या इव वसु[22] हरन्ते गदजुषाम्[23] ॥ ८ ॥ सत्कोणं लोलनेत्रं कुलयुवतिमुखं दृश्यते सानुकम्पै रण्डानामार्धलज्जाञ्चितमधिपुलकं स्पृश्यते पीनमङ्गम् । क्लीबानां खाद्यतेऽन्तश्चिरनिहितधनं काष्ठमूलाग्नितोयैः पूर्वा सिद्धां कलानां सकलगुणनिधिर्वैद्यविद्याभिवन्द्या ॥ ९ ॥

---

## गणकप्रशंसा ।

चतुरङ्गबलो राजा जगतीं वशमानयेत् । अहं पञ्चाङ्गबलवानाकाशं वशमानये ॥ १ ॥

---

१ अविचार्यकार्यप्रवृत्ति २ विचाराशक्ति. ३. असंतोष ४ आह्वयति. ५ मस्तके ६ म्लाने ७ इन्द्रिययमूहे ८ खिन्ने. ९ वेदाध्यायिन १० कर्णकटुभि ११. सर्वेषां मध्ये निर्दोषम्. १२ नीरोगताम् १३ वास्तवज्ञानर्थान् १४ कुत्सिता भिषजो भिषक्पाशास्तान् १५ यमसंबन्धिन १६ रोगिसमूह. १७. उदरभाण्डम् १८ पारदादे १९ आमयन्त. २० प्राणान् २१. यमस्य. २२. द्रव्यम् २३ रोगिणाम्.

एकासनस्था जलवायुभक्षा मुमुक्षव[1]स्त्यक्तपरिग्रहा[2]श्च । पृच्छन्ति तेऽप्यम्बरचारिचारं[3] दैवज्ञ-मन्ये किमुतार्थचित्ताः ॥ २ ॥ न दैवं न पित्र्यं च कर्मावसिद्ध्येन्न यत्रास्ति देशो ननु ज्योतिषज्ञः । न तारा न चारा नवानां ग्रहाणां न तिथ्यादयो वा यतस्तत्र बुद्धाः ॥ ३ ॥ दूतो न संचरति खे न चलेच्च वार्ता पूर्वं न जल्पितमिदं न च संगमोऽस्ति । व्योम्नि स्थितं रविशशिग्रहणं प्रशस्तं जानाति यो द्विजवरः स कथं न विद्वान् ॥ ४ ॥ असुखमथ सुखं वा कर्मणां पंक्तिवेला[4]स्विह नियतमेते भुञ्जते देहभाजः । तदिह पुरत एव प्राह मौहूर्तिकश्चेत्कथय फलममीषामन्ततः किं ततः स्यात् ॥ ५ ॥ वृद्धिह्रासौ[5] कुमुदसुहृदः[6] पुष्पवन्तो[7]परागः[8] शुक्रादीनामुदयविलयावित्यमी सर्वदृष्टाः । आविष्कुर्वन्त्यखिलवचनेष्वत्र कुम्भीपुलाकन्याया[9]ज्ज्योतिर्नयगतिविदां निश्चलं मानभावम् ॥ ६ ॥ भानोः शीतकरस्य वापि भुजंगग्रासे[10] पुरो निश्चिते तीर्थानामटनं जनस्य घटते तापत्रयोच्चाटनम् । इष्टे प्रागवधारिते सति धृतेस्तुष्टेश्च लाभो भवेद्दृष्टे तु व्यसने[11]ऽत्र तत्परिहृतिः[12] कर्तुं जपाद्यैः क्षमा ॥ ७ ॥

---

## कुगणकनिन्दा ।

गणिकागणकौ समानधर्मौ निजपञ्चाङ्गनिदर्शकावुभौ । जनमानसमोहकारिणौ तौ विधिना वित्तहरौ विनिर्मितौ ॥ १ ॥ विलिखति सदसद्वा जन्मपत्रं जनानां फलति यदि तदानीं दर्शयत्यात्मदाक्ष्यम्[13] । न फलति यदि लग्नं द्रष्टुरेवाह मोहं हरति धनमिहैवं हन्त दैवज्ञपाशः[14] ॥२॥ प्रमोदे[15] खेदे वाप्युपनमति पुंसो विधिवशान्मयैवं प्रागेवाभिहितमिति मिथ्या कथयति । जनानिष्टानिष्टाकलनपरिहारैकनिरतानसौ मेषादीनां परिगणनयैव भ्रमयति[16] ॥ ३ ॥ ज्योतिःशास्त्रमहोदधौ बहुतरोत्सर्गापवादात्मभिः कल्लोलैर्निबिडे कणान्कतिपयांल्लब्ध्वा कृतार्था इव । दीर्घायुः सुतसंपदादिकथनैर्दैवज्ञपाशा इमे गेहं गेहमनुप्रविश्य धनिना मोहं मुहुः कुर्वते ॥ ४ ॥

---

## सज्जनप्रशंसा ।

अहो किमपि चित्राणि चरित्राणि महात्मनाम् । लक्ष्मीं तृणाय मन्यन्ते तद्भारेण[17] नमन्त्यपि ॥ १ ॥ नाल्पीयसि निबध्नन्ति पदमुन्नतचेतसः[18] । येषां भुवनलाभेऽपि निःसीमानो मनोरथाः ॥ २ ॥ अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् । अहो सुमनसां प्रीतिर्वामदक्षिणयोः समा ॥ ३ ॥ वज्रादपि कठोराणि मृदूनि कुसुमादपि । लोकोत्तराणां चेतांसि

---

१. मोक्षेच्छव.. २. त्यक्त. परिग्रह कलत्र यैस्ते ३. आकाशसचारिग्रहगतिम्. ४ परिपाककालेषु ५. क्षयवृद्धी ६ चन्द्रस्य ७. सूर्याचन्द्रमसो . ८. ग्रहणम् ९ स्थालीपुलाकन्यायेन १०. ग्रहणे ११ दुःखे १२. परिहार १३. स्वचातुर्यम्. १४. कुदैवज्ञ . १५. हर्षे. १६. भ्रम करोति १७. लक्ष्मीभारेण. १८. उदारचेतस,

को हि विज्ञातुमर्हति ॥ ४ ॥ गवादीनां पयोऽन्येद्युः सद्यो वा जायते दधि । क्षीरोदधेस्तु नाद्यापि महतां विकृतिः कुतः ॥ ५ ॥ गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा । पापं तापं च दैन्यं च हन्ति सन्तो महात्मनः ॥ ६ ॥ छायावन्तो गतव्यालाः स्वारोहाः फलदायिनः । मार्गद्रुमा महान्तश्च परेषामेव भूतये ॥ ७ ॥ संपदो महतामेव महतामेव चापदः । वर्धते क्षीयते चन्द्रो न तु तारागणः क्वचित् ॥८॥ अपकुर्वन्नपि प्रायः प्राप्नोति महतः फलम् । और्वं दधतमेवाग्निं समर्पयति सागरः ॥ ९ ॥ महतां प्रार्थनेनैव विपत्तिरपि शोभते । दन्तभङ्गो हि नागानां श्लाघ्यो गिरिविदारणे ॥ १० ॥ गुणग्रामाभिसंवादि नामापि हि महात्मनाम् । यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ॥११॥ वहन्ति शोकशङ्कुं च कुर्वन्ति च यथोचितम् । कोऽप्येष महतां हन्त गाम्भीर्यानुगुणो गुणः ॥१२॥ श्लाघ्यः स एव गुणवान्रागद्वेषबहिष्कृतः । भूतार्थकथने यस्य स्थेयस्येव सरस्वती ॥ १३ ॥ नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी । गुणी च गुणरागी च विरलः सरलो जनः ॥ १४ ॥ महात्मानोऽनुगृह्णन्ति भजमानान्रिपूनपि । सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः ॥ १५ ॥ मुखेन नोद्गिरत्यूर्ध्वं हृदयेन न यात्यधः । जरयत्यन्तरे साधुर्दोषं विषमिवेश्वरः ॥ १६ ॥ विकृतिं नैव गच्छन्ति सङ्गदोषेण साधवः । आवेष्टितं महासर्पैश्चन्दनं न विषायते ॥ १७ ॥ मान्या एव हि मान्यानां मानं कुर्वन्ति नेतरे । शंभुर्बिभर्ति मूर्ध्नेन्दुं स्वर्भानुस्तं जिघृक्षति ॥ १८ ॥ सुजनं व्यजनं मन्ये चारुवंशसमुद्भवम् । आत्मानं च परिभ्राम्य परतापनिवारणम् ॥ १९ ॥ उदये सविता रक्तो रक्तश्चास्तमने तथा । संपत्तौ च विपत्तौ च महतामेकरूपता ॥ २० ॥ आरम्भन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च । महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ २१ ॥ सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम् । असद्भिः शपथेनापि जले लिखितमक्षरम् ॥ २२ ॥ हरेः पदाहतिः श्लाघ्या न श्लाघ्यं खररोहणम् । स्पर्धापि विदुषा युक्ता न युक्ता मूर्खमित्रता ॥ २३ ॥ साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम् । न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया ॥ २४ ॥ नारिकेलसमाकारा दृश्यन्तेऽपि हि सज्जनाः । अन्ये बदरिकाकारा बहिरेव मनोहराः ॥ २५ ॥ स्नेहच्छेदेऽपि साधूनां गुणा नायान्ति विक्रियाम् । भङ्गेनापि मृणालानामनुबध्नन्ति तन्तवः ॥ २६ ॥ परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम् । धर्मे स्वीयमनुष्ठानं कस्यचित्सुमहात्मनः ॥ २७ ॥ संपत्सु महतां चित्तं भवत्युत्पलकोमलम् । आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ २८ ॥ पतति व्यसने दैवाद्दारुणे दारुणात्मनि । संवर्मयति वज्रेण धैर्येण महता मनः ॥ २९ ॥ सन्तः स्वतः प्रकाशन्ते गुणा न परतो नृणाम् । आमोदो नहि कस्तू-

१ अन्यस्मिन्दिवसे. २. विकार. ३ जीर्णं करोति ४ राहु ५ ग्रहीतुमिच्छति ६. वेणु; (पक्षे) कुलम्. ७. सिंहस्य ८. पादताडनम् ९. विकारम्. १०. सबन्ध कुर्वन्ति. ११. काठिन्यम्.

र्याः शपथेन विभाव्यते ॥ ३० ॥ पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः । प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ३१ ॥ सकृत्कन्दुकपातेनोत्पतत्यार्यः पतन्नपि । तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥ ३२ ॥ दन्तीदन्तसमानं हि निःसृतं महतां वचः । कूर्मग्रीवेव नीचानां पुनरायाति याति च ॥ ३३ ॥ श्लोकस्तु श्लोकतां याति यत्र तिष्ठन्ति साधवः । लकारो लुप्यते तत्र यत्र तिष्ठन्त्यसाधवः ॥ ३४ ॥ किमत्र चित्रं यत्सन्तः परानुग्रहतत्पराः । न हि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥ ३५ ॥ काकैः सह प्रवृद्धस्य कोकिलस्य कलौ गिरः । खलसङ्गेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः ॥ ३६ ॥ यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः । चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ ३७ ॥ विवेकः सह संयत्या विनयो विद्यया सह । प्रभुत्वं प्रश्रयोपेतं चिह्नमेतन्महात्मनाम् ॥ ३८ ॥ उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम् । सुजनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः ॥ ३९ ॥ निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः । न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मनि ॥ ४० ॥ उपकारिषु यः साधुः साधुत्वे तस्य को गुणः । अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ ४१ ॥ हृदयानि सतामेव कठिनानीति मे मतिः । खलवाग्विशिखैस्तीक्ष्णैर्भिद्यन्ते न मनाग्यतः ॥ ४२ ॥ अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् । सदालोकहितासक्ता रत्नदीपा इवोत्तमाः ॥ ४३ ॥ ब्रूतेऽन्यस्यासतोऽप्यार्यो गुणान्दोषांश्च दुर्जनः । तुल्येऽप्यसत्त्वे किं त्वेको गच्छेदूर्ध्वमधोऽपरः ॥ ४४ ॥ सन्तो मनसि कृत्वैव प्रवृत्ताः कृत्यवस्तुनि । कस्य प्रतिशृणोति स्म कमलेभ्यः श्रियं रविः ॥ ४५ ॥ आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः । परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम् ॥ ४६ ॥ सन्त एव सतां नित्यमापदुद्धरणक्षमाः । गजानां पङ्कमग्नानां गजा एव धुरंधराः ॥ ४७ ॥ नूनं दुग्धाब्धिमन्थोत्थाविमौ सुजनदुर्जनौ । किं त्विन्दोः सोदरः पूर्वः कालकूटस्य चेतरः ॥ ४८ ॥ गोत्रस्थितिं न मुञ्चन्ति सदा संनतिमाश्रिताः । उदन्वन्तश्च सन्तश्च महासत्त्वतया तथा ॥ ४९ ॥ अपूर्वः कोऽपि कोपाग्निः सज्जनस्येतरस्य च । एकस्य शाम्यति स्नेहाद्वर्धतेऽन्यस्य वारितः ॥ ५० ॥ विगृहीतः पदाक्रान्तो भूयोभूयश्च खण्डितः । माधुर्यमेवावहति सुश्लोक इव सज्जनः ॥ ५१ ॥ प्रकृतिप्रत्ययोपेतः सद्वृत्तः साधुसंमतः । अर्थार्पणसमर्थश्च सुश्लोक इव सज्जनः ॥ ५२ ॥ आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न संपत्सु । अगु-

---

१. क्षणिका.. २. लकारलोपाच्छोक एवावतिष्ठते. ३. अव्यक्तमधुराः. ४. विनय ५ निष्कपटम्. ६. प्राणिषु. ७. चन्द्रकान्तिम्. ८ चाण्डालगृहे. ९. किंचिदपि. १०. मैत्रीम्, ( पक्षे ) घृतादिम् ११. योग्यताम्; ( पक्षे ) भाण्डम् १२ अवस्थान्तरम्; ( पक्षे ) सूत्रवर्तिम् १३. लोकाना हित तस्मिन्नासक्ता.; ( पक्षे ) आलोक' प्रकाशस्तदेव हित तस्मिन्नासक्ता.. १४. कुलमर्यादाम्; ( पक्षे ) पर्वतस्थितिम्, १५. सन्नमनम् १६. समुद्रा.. १७. प्राणिनः; ( पक्षे ) धैर्यम्. १८. खलस्य. १९. व्यक्ता भवति.

रोस्तथा न गन्धः प्रागस्ति यथाग्निपतितस्य ॥ ५३ ॥ शून्येऽपि च गुणवत्तामातन्वानः स्वकीयगुणजालैः । विवराणि मुद्रयन्द्रागूर्णायुरिव सज्जनो जयति ॥ ५४ ॥ तरुमूलादिषु निहितं जलमाविर्भवति पल्लवाग्रेषु । निभृतं यदुपक्रियते तदपि महान्तो वहन्त्युच्चैः ॥५५॥ संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् । तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ ५६ ॥ दुर्जनवचनाङ्गारैर्दग्धोऽपि न विप्रियं[3] वदत्यार्यः । अगुरुरपि दह्यमानः स्वभावगन्धं परित्यजति किं नु ॥ ५७ ॥ अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः । परपरिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा ॥ ५८ ॥ पतितोऽपि राहुवदने तरणिर्बोधयति पद्मखण्डानि । भवति विपद्यपि महतामङ्गीकृतवस्तुनिर्वाहः ॥ ५९ ॥ छिन्नोऽपि रोहति तरुश्चन्द्रः क्षीणोऽपि वर्धते लोके । इति विमृशन्तः सन्तः संतप्यन्ते न लोकेऽस्मिन् ॥ ६० ॥ वासरगम्यमनूरोरम्बरमवनी च वामनैकपदा । जलधिरपि पोतलङ्घ्यः सतां मनः केन तुलयामः ॥ ६१ ॥ गौरीपतेर्गरीयो गरलं गत्वा गले जीर्णम् । जीर्यति कर्णे महतां दुर्वादो नाल्पमपि विशति ॥ ६२ ॥ निजपदगतिगुणरञ्जितजगतां करिणां च सत्कवीनां च । वहतामपि महिमानं शोभायै सज्जना एव ॥ ६३ ॥ बाणं हरिरिव कुरुते सुजनो बहुदोषमप्यदोषमिव । यावद्दोषं जाग्रति मलिम्लुचा इव पुनः पिशुनाः ॥ ६४ ॥ महतोः सुवृत्तयोः सखि हृदयग्रहयोग्ययोः समस्थितयोः । सज्जनयोः स्तनयोरपि निरन्तरं संगतं भवति ॥ ६५ ॥ महतोऽपि हि विश्वासान्महाशया दधति नाल्पमपि लघवः । संवृणुतेऽद्रीनुदधिर्निदाघनद्यो न भेकमपि ॥ ६६ ॥ वैगुण्येऽपि हि महतां विनिर्मितं भवति कर्म शोभायै । दुर्वहनितम्बमन्थरमपि हरति नितम्बिनीनृत्यम् ॥ ६७ ॥ सज्जन एव हि विद्या शोभायै भवति दुर्जने मोघा । न विदूरदर्शनतया कैश्चिदुपादीयते गृध्रः ॥ ६८ ॥ भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य । वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्द्योतः ॥ ६९ ॥ वदनं प्रसादसदनं सदयं हृदयं सुधामुचो वाचः । करणं परोपकरणं येषां केषां न ते वन्द्याः ॥ ७० ॥ उपकारमेव तनुते विपद्गतः सद्गुणो महताम् । मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥ ७१ ॥ गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम् । तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ॥ ७२ ॥ अनवरतप-

---

१ लूता. २. एकान्ते. ३. अनिष्टम्. ४. दूषणम् ५. शोभिता ६. सूर्य . ७. विकासयति ८ सकटकाले. ९. अरुणस्य. १० नौका. ११ चरणा ; ( पक्षे ) सुसिद्धन्तज्ञानम् १२ महत्परिमाणम्; ( पक्षे ) प्रतिष्ठाम् १३. बाणासुरम् १४. गुणभिन्नो दोष , (पक्षे) बहुतरबाहुशालिनम्. १५. दोषशून्यम्; ( पक्षे ) बाहुरहितम् १६. समग्रदोषम्, (पक्षे) यावद्रात्रिम् १७. तद्विषयकगवेषणावन्तो भवन्ति, (पक्षे ) निद्राभाववन्तो भवन्ति १८. तस्करा . १९ श्रेष्ठयो'; ( पक्षे ) महापरिमाणशालिनो . २०. सुचरितयो'; ( पक्षे ) सुवर्तुलयो २१ आलिङ्गनयोग्ययो ;(पक्षे) वक्ष स्थितिशालिनोः. २२ श्रेष्ठानपि; (पक्षे) महापरिमाणानपि. २३. श्रेष्ठाः; ( पक्षे ) गभीराः. २४. नीचाः; ( पक्षे ) स्वल्पपरिमाणशालिनः.

रोपकरणव्यग्रीभवदमलचेतसां महताम् । आपातकाटवानि स्फुरन्ति वचनानि भेषजानीव ॥ ७३ ॥ न भवति स भवति न चिरं भवति चिरं चेत्फले विसंवादी । कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ ७४ ॥ इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः । तद्वत्सज्जनमैत्री विपरीतानां च विपरीता ॥ ७५ ॥ परिचरितव्याः सन्तो यद्यपि कथयन्ति नो सदुपदेशम् । यास्तेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥ ७६ ॥ सुजनो न याति वैरं परहितनिरतो विनाशकालेऽपि । छेदेऽपि चन्दनतरुः सुरभयति[1] मुखं कुठारस्य[2] ॥७७॥ अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः । हेम्नः कठिनस्यापि द्रवणोपायोऽस्ति न तृणानाम् ॥ ७८ ॥ अनुकुरुतः[3] खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः । विदधाति[4] रन्ध्रमेको गुणवानन्यस्तु[5] पिदधाति[6] ॥ ७९ ॥ आस्तामन्यत्सुजनाः परोपकारैककरणदुर्ललिताः । संतापितपिशुनेषु स्वगुणेष्वपि हन्त खिद्यन्ते ॥ ८० ॥ शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो[7] मेघः । नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ ८१ ॥ यदमी दशन्ति दशना रसना तत्स्वादु सौख्यमनुभवति । प्रकृतिरियं विमलानां क्लिश्यन्ति यदन्यकार्येषु ॥ ८२ ॥ तदपकृतं विधिनार्थिषु यत्सन्तः स्वल्पसंपदो विहिताः । तुच्छे पयसि घनानां सीदत्यतीव जीवलोकोऽयम् ॥ ८३ ॥ अमृतं किरति हिमांशुर्विषमेव फणी समुद्गिरति । गुणमेव वक्ति साधुर्दोषमसाधुः प्रकाशयति ॥ ८४ ॥ गुणिनामपि निजरूपप्रतिपत्तिः परत एव संभवति । स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥ ८५ ॥ उत्कर्षवान्निजगुणो[9] यथा यथा याति कर्णमन्यस्य[10] । धनुरिव सुवंशजन्मा[11] तथा तथा सज्जनो नमति ॥ ८६ ॥ दुर्जनवदनविनिर्गतवचनभुजंगेन सज्जनो दष्टः । तद्विषनाशनिमित्तं साधुः संतोषमौषधं पिबति ॥ ८७ ॥ कमठकुलाचलदिग्गजफणिपतिविधृतापि चलति वसुधेयम् । प्रतिपन्नममलमनसां न फलति पुंसां युगान्तेऽपि ॥८८॥ अन्तःकटुरपि लघुरपि सद्वृत्तं यः पुमान्न संत्यजति । स भवति सद्यो वन्द्यः सर्षप इव सर्वलोकस्य ॥ ८९ ॥ अद्यापि दुर्निवारं स्तुतिकन्या[12] भजति कौमारम्[13] । सद्भ्यो न रोचते सासन्तोऽप्यस्यै न रोचन्ते ॥ ९० ॥ मूकः परापवादे परदारनिरीक्षणेऽप्यन्धः । पङ्गुः परधनहरणे स जयति लोकत्रये पुरुषः ॥ ९१ ॥ पेशलमपि[14] खलवचनं दहतितरां मानसं सुतत्त्वविदाम् । परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥ ९२ ॥ भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे । चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥ ९३ ॥ उपरि करवाल[15]धाराकाराः क्रूरा भुजंगमपुंगवाः । अन्तः साक्षाद्द्राक्षादी-

१ सुगन्धयति २. परशो . ३. अनुकरणं कुरुत . ४ करोति ५ सूत्रयुक्त ,(पक्षे) विद्याविनयादिगुणयुक्त ६. आच्छादयति. ७ शब्दरहितः ८. वर्षति ९ रज्जु ; (पक्षे) विनयादि. १० कर्णप्रदेशे; (पक्षे) श्रवणतायाम्. ११.वेणु; (पक्षे) कुलम्. १२.स्तुतिरेव कन्या. १३.कुमारिकात्वम्. १४.कोमलम् १५.खड्गम्.

क्षागुरवो जयन्ति केऽपि जनाः ॥ ९४ ॥ स्वस्थानादपि विचलति मज्जति जलधौ च नीचमपि भजते। निजपक्षरक्षणमनाः सुजनो मैनाकशैल इव ॥ ९५ ॥ दुर्जनसहवासादपि शीलोत्कर्षं न सज्जनस्त्यजति। प्रतिपर्व तपनवासी निःसृतमात्रः शशी शीतः ॥ ९६ ॥ विप्रियमप्याकर्ण्य ब्रूते प्रियमेव सर्वदा सुजनः। क्षारं पिबति पयोधेर्वर्षत्यम्भोधरो मधुरमम्भः ॥ ९७ ॥ खलसख्यं प्राङ्मधुरं वयोऽन्तराले निदाघदिनमन्ते। एकादिमध्यपरिणतिरमणीया साधुजनमैत्री ॥ ९८ ॥ किं मधुना किं विधुना किं सुधया किं च वसुधयाखिलया। यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयोरयनम्[1] ॥ ९९ ॥ किमपेक्ष्य फलं पयोधरान्ध्वनतः[2] प्रार्थयते मृगाधिपः। प्रकृतिः[3] खलु सा महीयसः सहते नान्यसमुन्नतिं[4] यया ॥ १०० ॥ वचनैरसतां महीयसो न खलु व्येति गुरुत्वमुद्धतैः[5]। किमपैति रजोभिरौर्वैरैरवकीर्णस्य[6][7] मणेर्महार्घता ॥ १०१ ॥ प्रकटान्यपि नैपुणं[8] महत्परवाच्यानि[9] चिराय गोपितुम्। विवरीतुमथात्मनो गुणान्भृशमाकौशलमार्यचेतसाम् ॥ १०२ ॥ किमिवाखिललोककीर्तितं कथयत्यात्मगुणं महामनाः। वदितॄन्[10] न लघीयसोऽपरः स्वगुणं तेन वदत्यसौ स्वयम् ॥ १०३ ॥ विसृजन्त्यविकत्थिनः[11] परे विषमाशीविषवन्नराः[12] क्रुधम्। दधतोऽन्तर[13]सारूपतां ध्वनिसाराः पटहा इवेतरे ॥ १०४ ॥ जितरोषरया महाधियः सपदि क्रोधजितो लघुर्जनः। विजितेन जितस्य दुर्मतेर्मतिमद्भिः सह कैर्विरुध्यते ॥ १०५ ॥ इयमुन्नतसत्त्वशालिनां महतां कापि कठोरचित्तता। उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ १०६ ॥ आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरे जने। छेदतापननिघर्षताडनैर्नैर्विकृत्य[14]भावमुपयाति काञ्चनम् ॥ १०७ ॥ चातकस्त्रिचतुरान्पयःकणान्याचते जलधरं पिपासया। सोऽपि पूरयति विश्वमम्भसा हन्त हन्त महतामुदारता ॥ १०८ ॥ दोषजातमवधीर्य मानसे धारयन्ति गुणमेव सज्जनाः। क्षारभावमपनीय गृह्णते वारिधेः सलिलमेव वारिदाः ॥ १०९ ॥ सज्जनस्य हृदयं नवनीतं यद्वदन्ति कवयस्तदलीकम्। अन्यदेहविलसत्परितापात्सज्जनो द्रवति नो नवनीतम् ॥ ११० ॥ तुङ्गात्मनां तुङ्गतराः समर्था मनोरथान्पूरयितुं न नीचाः। धाराधरा एव धराधराणां निदाघदाहं शमितुं न नद्यः ॥ १११ ॥ प्रकाममभ्यस्यतु नाम विद्या सौजन्यमभ्यासवशादलभ्यम्। कर्णौ सपत्न्यः प्रविशालयेयुर्विशालयेदक्षियुगं न कोऽपि ॥ ११२ ॥ सन्तोऽपि सन्त' क्व किरन्तु तेजः क्व नु ज्वलन्तु क्व तनुं प्रथन्ताम्। विधाय रुद्धा न तु वेधसैव ब्रह्माण्डकोणे घटदीपकल्पाः ॥ ११३ ॥ वनेऽपि सिंहा मृगमांसभक्षिणो बुभुक्षिता नैव तृणं चरन्ति। एवं कुलीना व्य-

---

१ स्थानम् २. शब्दान्कुर्वतः ३ स्वभाव. ४ उत्कर्षम् ५ निष्ठुरैः. ६. भौमै. ७. छन्नस्य ८ कौशलम् ९. परदूषणानि. १०. वक्ता. ११. अनात्मश्लाघिन.. १२. क्रूरसर्पवत्. १३. अभ्यन्तरे. १४. विकृतिम्

[1]सनाभिभूता न नीचकर्माणि समाचरन्ति ॥ ११४ ॥ अहो महत्त्वं महतामपूर्वं[2] विपत्तिकालेऽपि परोपकारः । यथास्य[3]मध्ये पतितोऽपि राहोः कलानिधिः पुण्यचयं[4] ददाति ॥ ११५ ॥ पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः । नादन्ति सस्यं[5] खलु वारिवाहाः[6] परोपकाराय सतां विभूतयः[7] ॥ ११६ ॥ रत्नाकरः किं कुरुते स्वरत्नैर्विन्ध्याचलः किं करिभिः करोति । श्रीखण्डखण्डैर्मलयाचलः किं परोपकाराय सतां विभूतयः ॥ ११७ ॥ श्लाघ्यः स एको भुवि मानवानां स उत्तमः सत्पुरुषः स धन्यः । यस्यार्थिनो वा शरणागता वा नाशाभिभङ्गा विमुखाः प्रयान्ति ॥ ११८ ॥ सन्तस्तृणोत्सारणमुत्तमाङ्गात्सुवर्णकोट्यर्पणमामनन्ति । प्राणव्यये वापि कृतोपकाराः खलाः परे वैरमिवोद्वहन्ति ॥ ११९ ॥ कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव । मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव ॥ १२० ॥ क्षारं जलं वारिमुचः पिबन्ति तदेव कृत्वा मधुरं वमन्ति । सन्तस्तथा दुर्जनदुर्वचांसि पीत्वा च मुक्तानि समुद्गिरन्ति ॥ १२१ ॥ अयं स्वभावः स्वत एव यत्परश्रमापनोदप्रवणं महात्मनाम् । सुधां सुरेशः स्वयमर्ककर्कशप्रभाभितप्तामवति क्षितिं किल ॥ १२२ ॥ कर्णे जडानां वचनप्रपञ्चान्महात्मनः क्वापि न दूषयन्ति । भुजंगमानां गरलप्रसङ्गान्नापेयतां यान्ति महत्सरांसि ॥ १२३ ॥ अपांनिधिं वारिभिरर्चयन्ति दीपेन सूर्यं प्रतिबोधयन्ति । ताभ्यां तयोः किं परिपूर्णता स्याद्भक्त्या हि तुष्यन्ति महानुभावाः ॥ १२४ ॥ दानाय लक्ष्मीः सुकृताय विद्या चिन्ता परब्रह्मविनिश्चयाय । परोपकाराय वचांसि यस्य वन्द्यस्त्रिलोकीतिलकः स एव ॥ १२५ ॥ न दुर्जनानामिह कोऽपि दोषस्तेषां स्वभावो हि गुणासहिष्णुः । द्वेष्येव केषामपि चन्द्रखण्डविपाण्डुरा पुण्ड्रकशर्करापि ॥ १२६ ॥ अर्थः सुखं कीर्तिरपीह मा भूदनर्थ एवास्तु तथापि धीराः । निजप्रतिज्ञामनुरुध्यमाना महोद्यमाः कर्म समारभन्ते ॥ १२७ ॥ विपदि धैर्यमथाभ्युदये[10] क्षमा सदसि वाक्पटुता[11] युधि विक्रमः । यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्ध[12]मिदं हि महात्मनाम् ॥ १२८ ॥ अविरतं परकार्यकृतां सतां मधुरिमातिशयेन वचोऽमृतम् । अपि च मानसमम्बुनिधिर्यशो विमलशारदपार्वणचन्द्रिका ॥ १२९ ॥ आपद्गतः खलु महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् । कालागुरुर्दहनमध्यगतः समन्ताल्लोकोत्तरं परिमलं प्रकटीकरोति ॥ १३० ॥ यः प्रीणयेत्सुचरितैः पितरं स पुत्रो यद्भर्तुरेव हितमिच्छति तत्कलत्रम् । तन्मित्रमापदि सुखे च समक्रियं यदेतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ १३१ ॥ प्रेमैव मास्तु यदि चेत्पथि केन सार्धं तेनापि चेद्गुणवता न समं[13] कदाचित् । तेनापि चेद्ग-

१ सकटव्यासा. २ अलौकिकम्. ३ मुखमध्ये. ४. वृद्धिम् ५. धान्यम् ६ मेघ. ७. ऐश्वर्याणि ८. शिरस ९. त्रिलोक्या तिलको भूषणभूतः. १०. उदयकाले. ११. वक्तृत्वशक्ति.. १२ स्वभावसिद्धम् १३. सह.

वतु मास्तु कदापि भङ्गो[1] भङ्गोऽपि चेद्भवतु वश्यमवश्यमायुः ॥ १३२ ॥ चन्द्रः क्षयी प्रकृ[2]तिवक्रतनुर्जडात्मा[3] दोषाकरः[4] स्फुरति मित्रविपत्तिकाले[5]। मूर्ध्ना तथापि विधृतः परमेश्वरेण नैवाश्रितेषु महतां गुणदोषशङ्का ॥ १३३ ॥ लज्जागुणौघजननीं जननीमिव स्वामत्यन्तशुद्धहृदयामनुवर्तमानाम्। तेजस्विनः सुखमसूनपि संत्यजन्ति सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥१३४॥ अब्धौ विधौ वधुमुखे फणिनां निवासे स्वर्गे सुधा वसति वै विबुधा वदन्ति। क्षारं क्षयी पतिमृतं गरलं पतन्तं कण्ठे सुधा वसति वै खलु सज्जनानाम् ॥१३५॥ सत्पूरुषः खलु हिताचरणैरमन्दमानन्दयत्यखिललोकमनुक्त एव। आराधितः कथय केन करैरुदारैरिन्दुर्विकाशयति कैरविणीकुलानि ॥ १३६ ॥ दाता न दापयति दापयिता न दत्ते यो दानदापनपरो मधुरं न वक्ति। दानं च दापनमथो मधुरा च वाणी त्रीण्यप्यमूनि खलु सत्पुरुषे वसन्ति ॥ १३७ ॥ केनाञ्जितानि नयनानि मृगाङ्गनानां को वा करोति रुचिराङ्गरुहान्मयूरान्। कश्चोत्पलेषु दलसंनिचयं करोति को वा करोति विनयं कुलजेषु पुंसु ॥ १३८ ॥ अद्यापि नोज्झति हरः किल कालकूटं कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे। अम्भोनिधिर्वहति दुःसहवाडवाग्निमङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १३९ ॥ विश्वाभिरामगुणगौरवगुम्फितानां रोषोऽपि निर्मलधियां रमणीय एव। लोकप्रियैः परिमलैः परिपूरितस्य काश्मीरजस्य कटुतापि नितान्तरम्या ॥ १४० ॥ किं जन्मना च महता पितृपौरुषेण शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम्। कुम्भा न कूपमपि शोषयितुं समर्थाः कुम्भोद्भवेन मुनिनाम्बुधिरेव पीतः ॥ १४१ ॥ आरभ्यते न खलु विघ्नभयेन नीचैः प्रारभ्य विघ्नविहता विरमन्ति मध्याः। विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारभ्य चोत्तमजना न परित्यजन्ति ॥१४२॥ सौजन्यधन्यजनुषः पुरुषाः परेषां दोषानपास्य गुणमेव गवेषयन्ति। त्यक्त्वा भुजंगमविषाणि पटीरगर्भात्सौरभ्यमेव पवना परिशीलयन्ति ॥ १४३ ॥ उदधिरवधिरुर्व्यास्तं हनूमांस्ततार निरवधि गगनं चेत्काण्डकोशे विलीनम्। इति परिमितिमन्तो भान्ति सर्वेऽपि भावाः स तु निरवधिरेकः सज्जनानां विवेकः ॥ १४४ ॥ न हि भवति वियोगः स्नेहविच्छेदहेतुर्जगति गुणनिधीनां सज्जनानां कदाचित्। घनतिमिरनिबद्धो दूरसंस्थोऽपि चन्द्रः किमु कुमुदवनानां प्रेमभङ्गं करोति ॥ १४५ ॥ धवलयति समग्रं चन्द्रमाजीवलोकं किमिति निजकलङ्कं नात्मसंस्थं प्रमार्ष्टि। भवति विदितमेतत्प्रायशः सज्जनानां परहितनिरतानामादरो नात्मकार्ये ॥ १४६ ॥ प्रथमवयसि पीतं तोयमल्पं स्मरन्तः शिरसि निहितभारा नालिकेरा नराणाम्। उदकममृतकल्पं दद्युराजीवितान्तं न हि कृतमुपकारं साधवो विस्मरन्ति ॥ १४७ ॥ मनसि

१. विघातः २ प्रकृत्या स्वभावेन वक्रा तनुर्यस्य ३. जडस्वभाव, (पक्षे) डलयो सावर्ण्याज्जलात्मा जलरूप. ४ दोषा रात्रिस्तस्या कर.; (पक्षे) दोषाणामाकर.. खनिरिति यावत्. ५. मित्र सूर्यस्तस्य विपत्तिकालोऽस्तकालस्तस्मिन्; (पक्षे) मित्र सुहृत्तद्विपत्तिकाल. ६. केशान् ७ न त्यजति ८ सुन्दर. ९. केशरस्य. १०. अगस्त्येन. ११. मर्यादा. १२. तीर्णवान् १३. गाढान्धकार.. १४. नाशयतीत्यर्थः. १५. अमृततुल्यम्.

वचसि काये पुण्यपीयूषपूर्णास्त्रिभुवनमुपकारश्रेणिभिः[1] प्रीणयन्तः । परगुणपरमाणून्पर्वती-
कृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ १४८ ॥ उदयति यदि भानुः
पश्चिमे दिग्विभागे प्रचलति यदि मेरुः शीततां याति वह्निः। विकसति यदि पद्मं पर्वताग्रे
शिलायां न भवति पुनरुक्तं भाषितं सज्जनानाम् ॥ १४९ ॥ व्यतिकरितदिगन्ताः श्वेतमा-
नैर्यशोभिः सुकृतविलसितानां स्थानमूर्जस्वलानाम्। अकलितमहिमानः केतनं मङ्गलानां क-
थमपि भुवनेऽस्मिंस्तादृशाः संभवन्ति ॥ १५० ॥ वपुरविहितसिद्धा एव लक्ष्मीविलासाः
प्रतिजनकमनीयं कान्तिमत्केतयन्ति। अमलिनमिव रत्नं रश्मयस्ते मनोज्ञा विकसितमिव
पद्मं बिन्दवो माकरन्दाः ॥ १५१ ॥ वहति भुवनश्रेणीं शेषः फणाफणकस्थितां कमठपति-
ना मध्येपृष्ठं सदा स च धार्यते। तमपि कुरुते क्रोडाधीनं पयोनिधिरादरादहह महतां
निःसीमानश्चरित्रविभूतयः ॥ १५२ ॥ घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं छिन्नं छिन्नं
पुनरपि पुनः स्वादु चैवेक्षुकाण्डम्। दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं न प्राणान्ते
प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ १५३ ॥ केनादिष्टौ कमलकुमुदोन्मीलने पुष्पवन्तौ
विश्वं तोयैः स्नपयितुमसौ केन वा वारिवाहः। विश्वानन्दोपचयचतुरो दुर्जनानां दुरापः
श्लाघ्यो लोके जयति महतामुज्ज्वलोऽयं निसर्गः ॥१५४॥ उदन्वच्छन्ना भूः स च निधिरपां
योजनशतं सदा पान्थः पूषा गगनपरिमाण गणयति। इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलि-
ताः सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥१५५॥ यदेतन्नेत्राम्भस्तदपि च समासाद्य तरुणी
कपोले व्यासक्तं कुचकलशमस्याः कलयति। ततः श्रोणीबिम्बं व्यवसितविलासं तदुचितं
स्वभावस्वच्छानां पतनमपि भाग्यं तरयति ॥ १५६ ॥ यदिन्दोरन्वेति व्यसनमुदयं वा
निधिरपामुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिता। अयं कः संबन्धो यदनुहरते तस्य
कुमुदं विशुद्धाः शुद्धानां वमनमभिसंधिप्रणयिनः ॥ १५७ ॥ गुणायन्ते दोषाः सुजनवदने
दुर्जनमुखे गुणा दोषायन्ते तदिदमपि नो विस्मयपदम्। महामेघः क्षारं पिबति कुरुते वारि
मधुरं फणी क्षीरं पीत्वा वमति गरलं दुःसहतरम् ॥ १५८ ॥ प्रियप्राया वृत्तिर्विनयमधुरो
वाचि नियमः प्रकृत्या कल्याणी मतिरनवगीतः परिचयः। पुरो वा पश्चाद्वा तदिदमविप-
र्यासितरसं रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ १५९ ॥ असाधुः साधुर्वा भवति
खलु जात्यैव पुरुषो न सङ्गाद्दौर्जन्यं न हि सुजनता कस्यचिदपि। प्ररूढे संसर्गे मणिभुज-
गयोर्जन्मजनिते मणिर्नाहेर्दोषान्स्पृशति न हि सर्पो मणिगुणान् ॥ १६० ॥ असाधुः कुत्रापि
व्रजति खलु दोषं न गुणतां खलानां संसर्गैरपि कृतनिवासोऽपि निपुणः। यथा पक्षिव्यालैरपि-
हिततनुश्चन्दनतरुर्न वैकृत्यं याति क्षपयति च तापं सुमनसाम् ॥ १६१ ॥ करे श्लाघ्य-

१. अमृतम्. २. पङ्क्तिभिः. ३. आश्चर्यस्थानम्. ४. सर्प.. ५. आनन्दात्मिका. ६. संबन्धे. ७. सर्पस्य.

स्त्यागः शिरसि गुरुपादप्रणयिता मुखे सत्या वाणी विजयिभुजयोर्वीर्यमतुलम्। हृदि स्वस्था वृत्तिः श्रुतमधिगतैकव्रतफल विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ १६२ ॥ अचिन्त्याः पन्थानः किमपि महतामन्धकरिपोर्यदक्ष्णोऽभूत्तेजस्तदकृत कथाशेषमदनम्। मुनेर्नेत्रादत्रेर्यदजनि पुनर्ज्योतिरहह प्रतेने तेनेदं मदनमयमेव त्रिभुवनम् ॥ १६३ ॥ इहानेके सन्तः सततमुपकारिण्युपकृतिं कृतज्ञाः कुर्वन्तो जगति निवसन्तोऽपि सुधियः। कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥ १६४॥ अभेदेनोपास्ते कुमुदमुदरे वा स्थितवतो विपक्षादम्भोजादुपगतवतो वा मधुलिहः। अपर्याप्तः कोऽपि स्वपरपरिचर्यापरिचयप्रबन्धः साधूनामयमनभिसंधानमधुरः ॥ १६५ ॥ तृषार्तैः सारङ्गैः प्रति जलधरं भूरि विरुतं घनैर्मुक्ता धारा सपदि पयसस्तान्प्रति मुहुः। खगानां के मेघाः क इह विहगा वा जलमुचामयाच्यो नार्तानामनुपकरणीयो न महताम् ॥ १६६॥ शिला बाला जाता चरणरजसा यत्कुलशिशोः स एवायं सूर्यः सपदि निजपादैर्गिरिशिलाम्। स्पृशन्भूयो भूयो न खलु कुरुते कामपि वधूं कुले कश्चिद्धन्यः प्रभवति नरः श्लाघ्यमहिमा ॥१६७॥ बहिः सर्वाकारप्रगुणरमणीयं व्यवहरन्पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति। जनं विद्वानेकः सकलमभिसंधाय कपटैस्तटस्थः स्वानर्थान्घटयति च मौनं च भजते ॥१६८॥ परार्थव्यासङ्गादुपजहदपि स्वार्थपरतामभेदैकत्वं यो वहति गुरु भूतेषु सततम्। स्वभावादस्यान्तः स्फुरति ललितोदात्तमहिमा समर्थो यो नित्यं स जयतितरां कोऽपि पुरुषः ॥१६९॥ परीवादस्तथ्यो भवति वितथो वापि महतामतथ्यस्तथ्यो वा हरति महिमानं जनरवः। तुलोत्तीर्णस्यापि प्रकटितहताशेषतमसो रवेस्तादृक्तेजो न हि भवति कन्यां गतवतः ॥१७०॥ तमांसि ध्वंसन्ते परिणमति भूयानुपशयः सकृत्संवादेऽपि प्रथत इह चामुत्र च शुभम्। अथ प्रत्यासङ्गः कमपि महिमानं वितरति प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ॥ १७१ ॥ प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरं त्वसन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधन.। विपद्युच्चैः स्थेयं पदमनुविधेयं च महतां सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥१७२॥ प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधिः प्रियं कृत्वा मौनं सदसि कथनं नाप्युपकृतेः। अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥१७३॥ विजेतव्या लङ्का चरणतरणीयो जलनिधिर्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः। तथाप्येको रामः सकलमवधीद्राक्षसकुलं क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे

१ दानम्. २ निस्तुलम् ३. भूषणम् ४. शकरस्य ५ अकरोत् ६. वार्तावशिष्टो मदनो यस्मिस्तत्तथाविधम. ७. न्यायानुमार्गिणी. ८. वर्तनम् ९. पातकम् १०. प्राणव्यये ११. न याचयितव्याः १२ क्षीणधन १३ अनुमर्तव्यम् १४. उपदिष्टम्. १५ अतिकठिनम् १६ खड्गधाराताण्डवम्. १७ गुप्तम् १८. उपकारस्य. १९. रावण २०. कार्यसिद्धि २१. बले. २२. सामग्र्याम्.

॥ १७४ ॥ रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा निरालम्बो मार्गश्चरण[1]रहितः सारथि[2]रपि। रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ १७५ ॥ धनुः पौष्पं[3] मौर्वी[4] मधुकरमयी[5] चञ्चलदृशां दृशां कोणो बाणः सुहृदपि जडा[6]त्मा हिमकरः। तथाप्येकोऽनङ्गस्त्रिभुवनमपि व्याकुलयति क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ १७६ ॥ विपक्षः श्रीकण्ठो जडतनुरमात्यः शशधरो वसन्तः सामन्तः कुसुममिषवः सैन्यमबलाः। तथापि त्रैलोक्यं जयति मदनो देह[7]रहितः क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ १७७ ॥ घटो जन्म[8]स्थानं मृग[9]परिजनो भूर्जवसनं वने वासः कन्दैरशनमपि दुःस्थं वपुरिदम्। अगस्तिः पाथोधिं[10] यदकृत[11] कराम्भोजकुहरे क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ १७८ ॥ दाक्षिण्यं[12] स्वजने दया परजने शाठ्यं[13] सदा दुर्जने प्रीतिः साधुजने नयो[14] नृपजने विद्वज्जनेष्वार्जवम्। शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥ १७९ ॥ ये जाते व्यसने[15] निराकुल[16]धियः संपत्सु नाभ्युन्नताः प्राप्ते नैव पराङ्मुखाः प्रणयिनि प्राणप्रयोगैरपि। ह्रीमन्तैः[17] स्वगुणप्रकाशनविधावन्यस्तुतौ पण्डितास्ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः ॥ १८० ॥ क्षुद्राः[18] सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः[19]। दुःपूरोदरपूरणाय पिबति स्रोतःपतिं[20] वाडवो[21] जीमूत[22]स्तु निदाघ[23]संभृतजगत्संतापविच्छित्तये ॥ १८१ ॥ मज्जन्तोऽपि विपत्पयोधि[24]गहने निःशङ्कधैर्यावृताः कुर्वन्त्येव परोपकारमनिशं सन्तो यथाशक्ति वै। राहोरुग्रकराल[25]वक्त्रकुहरग्रासाभिभूतोऽप्यलं चन्द्रः किं न जनं करोति सुखिनं ग्रासावशेषैः करैः[26] ॥ १८२ ॥ वाञ्छा सज्जनसंगमे परगुणे प्रीतिर्गुरौ नम्रता विद्यायां व्यसनं स्वयोषिति[27] रतिर्लोकापवादाद्भयम्। भक्तिः शूलिनि[28] शक्तिरात्मदमने[29] संसर्गमुक्तिः खलेष्वेते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ १८३ ॥ दृश्यन्ते भुवि भूरिनिम्बतरवः कुत्रापि ते चन्दनाः पाषाणैः परिपूरिता वसुमती वज्रो[30] मणिदुर्लभः। श्रूयन्ते करटारवाश्च[31] सततं चैत्रे कुहूकूजितं[32] तन्मन्ये खलसंकुलं जगदिदं द्वित्राः क्षितौ सज्जनाः ॥ १८४ ॥ घर्मार्त्तं न तथा सुशीतलजलैः स्नानं न मुक्तावलि[33]र्न श्रीखण्डविलेपनं सुखयति प्रत्यङ्गमप्यर्पितम्। प्रीत्यै सज्जनभाषितं प्रभवति प्रायो यथा चेतासि सद्युक्त्या च पुरस्कृतं सुकृतिनामाकृष्टिमन्त्रोपमम् ॥ १८५ ॥ धर्मे

१. अनूरु. २. अरुण. ३ पुष्पमयम् ४ ज्या. ५ भ्रमररूपा. ६. बुद्धिरहितः; (पक्षे डलयोः सावर्ण्यात्) जलात्मा जलरूप. ७ अनङ्ग ८. उत्पत्तिस्थानम् ९. मृगा एव परिजन. १०. समुद्रम्. ११ अकरोत् १२. सरलभाव. १३ शठत्वम् १४. नीति. १५. सकटे. १६ अव्यग्रमनसः. १७ लज्जावन्त. १८ नीचा १९ अग्रेसर २०. समुद्रम्. २१. वाडवाग्नि. २२ मेघ. २३. ग्रीष्म. २४ विपदेव पयोधि समुद्र २५ भयकरम् २६ किरणै २७ स्वस्त्रियाम् २८ शंकरे २९. मनोजये. ३० हीरकमणि. ३१ काकशब्दा. ३२. कोकिलशब्दा. ३३ मुक्तासर

तत्परता मुखे मधुरता दाने समुत्साहिता मित्रेऽवञ्चकता गुरौ विनयिता चित्तेऽतिगम्भीरता । आचारे शुचिता गुणे रसिकता शास्त्रेऽतिविज्ञानिता रूपे सुन्दरता हरौ भजनिता सत्स्वेव संदृश्यते ॥ १८६ ॥ सौजन्यामृतसिन्धवः परहितप्रारब्धवीरव्रता वाचालाः परवर्णने निजगुणालापे च मौनव्रताः । आपत्स्वप्यविलुप्तवीर्यनिचयाः संपत्स्वनुत्सेकिनो मा भूवन्खलवक्त्रनिर्गतविषज्वालातताः सज्जनाः ॥ १८७ ॥ ये दीनेषु दयालवः स्पृशति यानल्पोऽपि न श्रीमदो व्यग्रा ये च परोपकारकरणे हृष्यन्ति ये याचिताः । स्वस्थाः सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये तैः स्तम्भैरिव सुस्थिरैः किल भरक्रान्ता धरा धार्यते ॥ १८८ ॥ क्षारो वारिनिधिः कलङ्ककलुषश्चन्द्रो रविस्तापकृत्पर्जन्यश्चपलाश्रयोऽभ्रपटलादृश्यः सुवर्णाचलः । शून्यं व्योम रसा द्विजिह्वविधृता स्वर्धामधेनुः पशुः काष्ठं कल्पतरुर्दृषत्सुरमणिस्तत्केन साम्यं सताम् ॥ १८९ ॥ कस्मादिन्दुरसौ धिनोति जगतीं पीयूषगर्भैः करैः कस्माद्वा जलधारयैव धरणिं धाराधरः सिञ्चति । भ्रामं भ्राममयं च नन्दयति वा कस्मात्त्रिलोकीं रविः साधूनां हि परोपकारकरणे नोपाध्यपेक्षं मनः ॥ १९० ॥ अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु यद्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः । कालेनावरणात्ययात्परिणतं यत्स्नेहसारे स्थितं भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते ॥ १९१ ॥ गर्वं नोद्वहते न निन्दति परान्नो भाषते निष्ठुरं प्रोक्तं केनचिदप्रियं च सहते क्रोधं च नालम्बते । श्रुत्वा काव्यमलक्षणं परकृतं संतिष्ठते मूकवद्दोषांश्छादयते स्वयं न कुरुते ह्येतत्सतां लक्षणम् ॥ १९२ ॥ किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः । किं चाङ्गीकृतमुत्सृजन्न मनसा श्लाघ्यो जनो लज्जते निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ १९३ ॥ सेतूपक्रमकौतुकाहृतगिरिप्रक्षेपवेगोच्छलत्निःशेषाम्बुपरिस्फुटोदरदरीगम्भीरिमा सागरः । चक्रे गोष्पदवद्विलङ्घितवतोऽप्यन्तर्भवं मारुतेः पूर्णत्वादतिरिच्यते हि महतस्तुच्छस्य दुर्लङ्घ्यता ॥ १९४ ॥ दीनानां कल्पवृक्षः सगुणफलनतः सज्जनानां कुटुम्बी आदर्शः शिक्षितानां सुचरितनिकषः शीलवेलासमुद्रः । सत्कर्ता नावमन्ता पुरुषगुणनिधिर्दक्षिणोदारसत्त्वो ह्येकः श्लाघ्यः स जीवत्यधिकगुणतया चोच्छ्वसन्तीव चान्यैः ॥ १९५ ॥ नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः स्वार्थान्संपादयन्तो विततबहुतरारम्भयत्नाः परार्थे । क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्मुखान्दूषयन्तः सन्तश्चाश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्थनीयाः ॥ १९६ ॥ जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् । संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न वाधो ब्रह्माण्डोदुम्बरान्तर्म-

१ सुजनतामृतसमुद्राः. २. विपत्तिकालेषु. ३. गर्वरहिताः. ४. व्याप्ताः. ५. हर्षयुक्ता भवन्ति. ६. पृथ्वी. ७. विद्युत्. ८. पृथ्वी. ९. प्रकटयन्त.

शकवदपरे जन्तवो जातनष्टाः ॥ १९७ ॥ हे पक्षिन्नागतस्त्वं कुत इह सरसस्तत्कियद्वा विशालं किं मद्धाम्नोऽपि बाढं ददति विपुलतां पाप मा ब्रूहि मिथ्या । इत्थं कूपोदकस्थः शपति तटगतं दर्दुरो राजहंसं नीचः प्रायः शठार्थो भवति हि विषमो नापराधेन दुष्टः ॥ १९८ ॥ वक्रे वल्गाप्रकर्षः समरभुवि तव प्राणरक्षापि दैवात्स्वेच्छाचारो न चास्ते न हि भवति तथा भारवाहो नितान्तम् । इत्युक्तोऽश्वः खरेण प्रहसितवदनो मूक एवावतस्थे तस्माज्जात्या महान्तोऽधमजनविषये मौनमेवाश्रयन्ते ॥ १९९ ॥

## दुर्जननिन्दा ।

खलः सर्षपमात्राणि परच्छिद्राणि पश्यति । आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ १ ॥ न विना परवादेन रमते दुर्जनो जनः । काकः सर्वरसान्भुङ्क्ते विनामेध्यं[1] न तृप्यति ॥ २ ॥ विशिखं[2]व्याल[3]योर[4]न्त्यवर्णाभ्यां यो विनिर्मितः । परस्य हरति प्राणान्नैतच्चित्रं कुलोचितम् ॥ ३ ॥ विषमा[5] मलिना[6]त्मानो द्विजिह्वा जिह्मगा[7] इव । जगत्प्राणहरा नित्यं कस्य नोद्वेजकाः खलाः ॥ ४ ॥ दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् । मणिना भूषितः सर्पः किमसौ न भयंकरः ॥ ५ ॥ खलानां कण्टकानां च द्विविधैव प्रतिक्रिया[8] । उपान[9]न्मुखभङ्गो वा दूरतो वापि वर्जनम् ॥ ६ ॥ अपूर्वः कोऽपि कोपाग्निः सज्जनस्य खलस्य च । एकस्य शाम्यति स्नेहाद्वर्धतेऽन्यस्य वारितः ॥ ७ ॥ ऊर्जितं सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनः पुनः । कवलीकुरुते स्वस्थं विधुं दिवि विधुंतुदः ॥ ८ ॥ दुर्जनः स्वस्वभावेन परकार्यं विनश्यति । नोदरतृप्तिमायाति मूषको वस्त्रभक्षकः ॥ ९ ॥ क्वचित्सर्पोऽपि मित्रत्वमीयान्नैव खलः क्वचित् । न शेषशायिनोऽप्यस्य वशो दुर्योधनो हरेः ॥१०॥ उपकारोऽपि नीचानामपकारोऽपि जायते । पयःपानं भुजंगानां केवलं विषवर्धनम् ॥११॥ अलकाश्च खलाश्चैव मूर्ध्नि भीरुजनैर्धृताः । उपर्युपरि संस्कारेऽप्याविष्कुर्वन्ति वक्रताम् ॥१२॥ खलानां धनुषां चापि सद्वंश[10]जनुषामपि । गुण[11]लाभो भवेदाशु परहृद्भेदकारकः ॥ १३ ॥ बहु[12]निष्कपटद्रोही बहु[13]धान्योपघातकः । रन्ध्रा[14]न्वेषी च सर्वत्र दूषको मूषको यथा ॥ १४ ॥ नौश्च दुर्जनजिह्वा च प्रतिकूल[15]विसर्पिणी । पर[16]प्रतारणायैव दारुणा[17] केन निर्मिता ॥ १५ ॥ यस्मिन्वंशे[18] समुत्पन्नस्तमेव निज[19]चेष्टितैः । दूषयत्यचिरेणैव घुण[20]कीट इवाधमः ॥ १६ ॥ स्वभावकठिण-

१. विष्ठाद्यशुचि २. बाण . ३ सर्प ४. अन्त्यवर्णौ खल इति. ५ वक्रा . ६. दुष्टस्वभावा ७ सर्पा . ८. प्रतीकार. ९. उपानहा पादस्थचर्मणा मुखभङ्ग . १० कुलम्, ( पक्षे ) वेणु . ११. विनयादि (पक्षे) रज्जु.. १२ बहु-निष्कपट-द्रोही; ( पक्षे ) बहु-निष्क-पट-द्रोही इति पदच्छेद . १३. बहुधा-अन्योपघातकः, ( पक्षे ) बहु-धान्य-उपघातकः इति पदच्छेद. १४ दूषणान्वेषी, ( पक्षे ) छिद्रान्वेषी. १५ प्रतितीरम्; ( पक्षे ) विरुद्धम्. १६ परेषां प्रकर्षेण तारणाय, ( पक्षे ) परेषा वञ्चनाय. १७. भयकरा, ( पक्षे ) काष्ठेन. १८ वेणौ; ( पक्षे ) कुले. १९. स्वकर्मभि २०. काष्ठवेधक. कृमि .

स्यास्य क्रित्रिमां बिभ्रतो नतिम् । गुणोऽपि परहिंसायै चापस्य च खलस्य च ॥ १७ ॥ अयःपिण्ड इवोत्तप्ते खलानां हृदये क्षणात् । पतिता एव नश्यन्ति गुणास्तोयकणा इव ॥१८॥ वर्जनीयो मतिमता दुर्जनः सख्यवैरयोः । श्वा भवत्यपकाराय लिहन्नपि दशन्नपि ॥ १९ ॥ वक्रतां बिभ्रतो यस्य गुह्यमेव प्रकाशते । कथं न च समानः स्यात्पुच्छेन पिशुनः शुनः ॥ २० ॥ स्नेहेन भूतिदानेन कृतस्वच्छोऽपि दुर्जनः । दर्पणश्चान्तिके तिष्ठन्करोत्येकमपि द्विधा ॥ २१ ॥ आजन्मसिद्धं कौटिल्यं खलस्य च हलस्य च । सोढुं तयोर्मुखाक्षेपमलमेकैव सा क्षमा ॥ २२ ॥ यथा यथैव स्नेहेन भूयिष्ठमुपचर्यते । धत्ते तथा तथा तापं महावैश्वानरः खलः ॥ २३ ॥ स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् । अहो नु सदृशी वृत्तिस्तुलाकोटेः खलस्य च ॥ २४ ॥ दुर्जनः कृतशिक्षोऽपि सज्जनो नैव जायते । अपि गङ्गाजलस्नानादधः केशः कुशायते ॥ २५ ॥ दह्यमानाः सुतीक्ष्णेन नीचाः परयशोऽग्निना । अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥ २६ ॥ खलः सत्क्रियमाणोऽपि ददाति कलहं सताम् । दुग्धधौतोऽपि किं याति वायसः कलहंसताम् ॥ २७ ॥ दुर्जनस्य विशिष्टत्वं परोपद्रवकारिणम् । व्याघ्रस्य चोपवासेन पारणं पशुमारणम् ॥ २८ ॥ संत्यज्य शूर्पवद्दोषान्गुणान्गृह्णाति पण्डितः । दोषग्राही गुणत्यागी पल्लोलीव हि दुर्जनः ॥ २९ ॥ खलो न साधुतां याति सद्भिः संबोधितोऽपि सन् । सरित्पूरप्रपूर्णोऽपि क्षारो न मधुरायते ॥ ३० ॥ सर्पदुर्जनयोर्मध्ये वरं सर्पो न दुर्जनः । सर्पो दशति कालेन दुर्जनस्तु पदेपदे ॥ ३१ ॥ अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः । शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥ ३२ ॥ अशक्ताः शक्तिमात्मीयां श्लाघयन्ते च दुर्जनाः । ते भवन्त्युपहासाय महतामेव संनिधौ ॥ ३३ ॥ सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः । मन्त्रेण शाम्यते सर्पो न खलः शाम्यते कदा ॥३४॥ दुर्जनं प्रथमं वन्दे सज्जनं तदनन्तरम् । मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं यथा ॥ ३५ ॥ दुर्जनः सुजनो न स्यादुपायानां शतैरपि । अपानं मृत्सहस्रेण धौतं चास्यं कथं भवेत् ॥ ३६ ॥ खलास्तु कुशलाः साधुहितप्रत्यूहकर्मणि । निपुणाः फणिनः प्राणानपहर्तुं निरागसाम् ॥३७॥ अहो बत महत्कष्टं विपरीतमिदं जगत् । येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥ ३८ ॥ तक्षकस्य विषं दन्ते मक्षिकाया विषं शिरः । वृश्चिकस्य विष पुच्छं सर्वाङ्गे दुर्जनो विषम् ॥ ३९ ॥ दुर्जनो नार्जवं याति सेव्यमानोऽपि नित्यशः । स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव नामितम् ॥ ४० ॥ वर्धयन्वाथ समान खलानां प्रीतये कुतः । फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ॥ ४१ ॥ दुर्जनैरुच्यमानानि समतानि प्रियाण्यपि । अकालकुसुमानीव भयं संज-

१ क्रियया निवृत्ताम्; (पक्षे) कपटयुक्ताम् २ नम्रत्वम् ३ मौर्वी, (पक्षे) विनयादि. ४ धनुषः. ५ तैलेन; (पक्षे) ममतया ६ भस्म, (पक्षे) वैभवम् ७ लाङ्गलम् ८. पृथ्वी; (पक्षे) शान्तिः. ९ बाहुल्येन १०. पूज्यते ११. तुलायष्टेः. १२. राजहंसत्वम्. १३. चालिनी. १४. चञ्चलम् १५. निरपराधानाम्. १६ लज्जा प्राप्नोति

नयन्ति ह ॥ ४२ ॥ शतं दद्यान्न विवदेदिति विज्ञस्य संमतम् । विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य लक्षणम् ॥ ४३ ॥ अहो खलभुजंगस्य विपरीतो वधक्रमः । अन्यस्य दशति प्राणमन्यः श्रोत्रैर्वियुज्यते ॥ ४४ ॥ न यत्नकोटिशतकैरपि दुष्टः सुधीर्भवेत् । किं मर्दितोऽपि कस्तूर्या लशुनो याति सौरभम् ॥ ४५ ॥ पाषाणो भिद्यते टङ्कैर्वज्रं वज्रेण भिद्यते । सर्पोऽपि भिद्यते मन्त्रैर्दुष्टात्मा नैव भिद्यते ॥ ४६ ॥ दुर्जनो दोषमादत्ते दुर्गन्धिमिव सूकरः । सज्जनश्च गुणग्राही हंसः क्षीरमिवाम्भसः ॥ ४७ ॥ अपूर्वरसना[1] व्याला[2]: खलाननबिलेशयाः । कर्णमूले स्पृशन्त्यन्यं हरन्त्यन्यस्य जीवितम् ॥ ४८ ॥ दुर्जनेन समं सख्य प्रीति चापि न कारयेत् । उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥ ४९ ॥ दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् । मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम् ॥ ५० ॥ मनस्यन्यद्वचस्यन्यत्कार्ये चान्यद्दुरात्मनाम् । मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥ ५१ ॥ जीवनग्रहणे[3] नम्रा गृहीत्वा पुनरुन्नताः । किं कनिष्ठाः किमु ज्येष्ठा[4] घटीयन्त्रस्य दुर्जनाः ॥ ५२ ॥ बिभ्राणा गरलं कण्ठे भुजंगपरिवेष्टिता । शाम्भवीव तनुः कस्य न वन्द्या दौर्जनी[5] सभा ॥ ५३ ॥ अक्षमालापवृत्तिज्ञा[6] कुशासनपरिग्रहा[7] । ब्राह्मीव दौर्जनी संसद्वन्दनीया समेखला[8] ॥ ५४ ॥ खलः करोति दुर्वृत्तं नूनं फलति साधुषु । दशाननोऽहरत्सीतां बन्धनं च महोदधेः ॥ ५५ ॥ करोति स्वमुखेनैव बहुधान्यस्य[9] खण्डनम् । नमः पतनशीलाय मुसलाय खलाय च ॥५६॥ अपवादादभीतस्य समस्य गुणदोषयोः । असद्वृत्तेरहो वृत्तं दुर्विभाव विधेरिव ॥ ५७ ॥ न देवाय न धर्माय न सिन्धुभ्यो न चार्थिने । दुर्जनस्यार्जितं वित्त भुज्यते राजतस्करैः ॥ ५८ ॥ मुखं पद्मदलाकारं वाचा चन्दनशीतला । हृदय क्रोधसंयुक्तं त्रिविधं धूर्तलक्षणम् ॥ ५९ ॥ निष्णातोऽपि च वेदान्ते साधुत्वं नैति दुर्जनः । चिरं जलनिधौ मग्नो मैनाक इव मार्दवम् ॥ ६० ॥ खलः सज्जनकार्पासधक्षणैकहुताशन[10] । परदुःखाग्निधमनमारुतः केन वर्ण्यताम् ॥ ६१ ॥ यशःसौरभ्यलशुनः[11] शान्तिशैत्यहुताशनः[12] । कौरुण्यकुसुमाकाशः[13] खलः सज्जनदुःखदः ॥ ६२ ॥ अन्तर्मलिनदेहेन बहिराह्लादकारिणा । महाकालफलेनेव[14] के खलेन न वञ्चिताः ॥ ६३ ॥ अहो प्रकृतिसादृश्यं[15] श्लेष्मणो[16] दुर्जनस्य

---

१ जिह्वा २ सर्पा. ३. उदकम्, (पक्षे) प्राणः ४. मर्पा, (पक्षे) जाराः. ५ दुर्जनसबन्धिनी ६ अक्षमा य आलापास्तेषां वृत्तिज्ञा, (पक्षे) अक्षमाला जपमाला तस्या अपवृत्तिर्भ्रमण जानातीति सा ७. कुत्सित यच्छासन शिक्षा तस्य परिग्रहोऽवलम्बो यस्याः सा; (पक्षे) कुशासन दर्भासन तत्परिग्रह. स्वीकारो यस्या सा. ८. समे साधौ खला, (पक्षे) मेखलया सहिता ९ बहुधा अन्यस्य परस्य खण्डनम्; (पक्षे) पुष्कलधान्यस्य खण्डन चूर्णम् १० दहनम् ११. कीर्तिरेव सौगन्ध्य तन्नाशकत्वाल्लशुन इव लशुनो हि कस्तूर्यादे. सौगन्ध्य नाशयतीति प्रसिद्धि १२. शान्तिरेव शैत्य तन्नाशकत्वादग्निरिव १३ कारुण्यमेव कुसुम तस्याकाश आकाशस्य यथा पुष्प कदापि नोपलभ्यते तद्वत्खले कारुण्य कदापि नोपलभ्यत इत्यर्थः. १४ तालफलेन. १५ स्वभावसाम्यम्. १६. कफस्य.

च । मधुरैः[1] कोपमायाति कटुकेनैव शाम्यति ॥ ६४ ॥ ईषल्लब्धप्रवेशोऽपि स्नेहविच्छेदकारकः । कृतक्षोभो नरीनर्ति[2] खलो मन्थनदण्डवत् ॥ ६५ ॥ विद्धणवती पुरस्तैक्ष्ण्यं पृष्ठतः कुर्वती गुणम् । कर्णान्विध्यति लोकस्य सूचीवत्सूचकस्य वाक् ॥ ६६ ॥ सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता । यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥६७॥ कापूरुषः कुक्कुरश्च भोजनैकपरायणः । लालितः पार्श्वमायाति वारितो न च गच्छति ॥ ६८ ॥ नैवात्मनो विनाशं गणयति पिशुनः परव्यसनहृष्टः । प्राप्य सहस्रविनाशं समरे नृत्यति कबन्ध[3] इव ॥६९॥ रविरपि न दहति तादृग्यादृग्दहति वालुकानिकरः । अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ॥ ७० ॥ त्यक्त्वापि निजप्राणान्परहितविघ्नं खलः करोत्येव । कवले पतिता सद्यो वमयति मक्षिकान्नभोक्तारम् ॥ ७१ ॥ कृतमपि महोपकारं पय इव पीत्वा निरातङ्कम् । प्रत्युत हन्तुं यतते काकोदरसोदरः खलो जगति ॥७२॥ नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम् । तद्वत्खलजनहृदयं बोधितमपि नैव याति माधुर्यम् ॥ ७३ ॥ एते स्निग्धतमा इति मा मा क्षुद्रेषु यात विश्वासम् । सिद्धार्थानामेषां स्नेहोऽप्यश्रूणि पातयति ॥ ७४ ॥ गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमात्रमादत्ते । पुष्पे फले विरागी क्रमेलकः कण्टकौघमिव ॥ ७५ ॥ सुजनानामपि हृदयं पिशुनपरिष्वङ्गलिप्तमिह भवति । पवनः परागवाही रथ्यासु वहन्रजस्वलो भवति ॥ ७६ ॥ परिपूर्णेऽपि तटाके काकः कुम्भोदकं पिबति । अनुकूलेऽपि कलत्रे नीचः परदारलम्पटो भवति ॥ ७७ ॥ दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः । पाणौ पयसा दग्धे तक्रं फूत्कृत्य पामरः पिबति ॥ ७८ ॥ विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः । यदहिर्नकुलद्वेषी स्वकुलद्वेषी पुनः पिशुनः ॥ ७९ ॥ अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः । तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥ ८० ॥ लब्धोत्साहो नीचः प्रथममेव स्वामिनं पराभवति । भूमिरजो रथ्यादावुत्थापकमेव संवृणुते ॥ ८१ ॥ उपकृतमनेन सुतरामित्यसतामस्ति न क्वचिदपेक्षा । हेतुः स्वहस्तमाश्रितमुद्धृतोऽग्निर्दहत्येव ॥ ८२ ॥ परवादे दशवदनः पररन्ध्रनिरीक्षणे सहस्राक्षः । सद्वृत्तवित्तहरणे बाहुसहस्रार्जुनः पिशुनः ॥ ८३ ॥ परिशुद्धामपि वृत्तिं समाश्रितो दुर्जनः परान्व्यथते । पवनाशिनोऽपि भुजगाः परपरितापं न मुञ्चन्ति ॥ ८४ ॥ प्रेरयति परमनार्यः शक्तिविहीनोऽपि जगदभिद्रोहे । तेजयति शस्त्रधारां स्वयमसमर्थः शिलां छेत्तुम् ॥ ८५ ॥ शिरसि निहितोऽपि नित्यं यत्नादपि सेवितो बहुस्नेहैः[23] । तरुणीकच इव

१ साधुद्रव्यै, (पक्षे) सुवचनै. २ पुन पुनर्नृत्यति ३. अशिरस्क कलेवरम् ४ समूह.. ५ वान्तिं करोति ६ नि शङ्कम् ७ वैपरीत्ये ८ सर्पबन्धु ९ शिरीषाणाम्, (पक्षे) सिद्धोऽर्थ कार्यं येषा ते. १० तैलम्; (पक्षे) स्नेहभाव. ११. नेत्रोदकम् १२. उष्ट्र. १३ वीथीषु १४. रजोयुक्त १५ फूत्कारं कृत्वा. १६. नकुल-द्वेषी; (पक्षे) न कुल-द्वेषी. १७ अत्यन्तमलदूषिते. १८ पूर्णा १९ तमसि. २०. घूकानाम्. २१. व्यथा करोति. २२ वायुभक्षका. २३. बहुप्रकारै. स्नेहै. सुगन्धतैलादिभि; (पक्षे) बहुधा प्रीत्या.

नीचः कौटिल्यं नैव विजहाति ॥ ८६ ॥ व्योम्नि स वासं कुरुते चित्रं निर्माति सुन्दरं पवने। रचयति रेखाः सलिले चरति खले यस्तु सत्कारम् ॥ ८७ ॥ अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः। परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव ॥ ८८ ॥ मृद्घटवत्सुखभेद्यो दुः[1]संधानश्च दुर्जनो भवति। सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशु संधेयः ॥ ८९ ॥ मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम्। लुब्धक[2]धीवरपिशुना निष्कारणवैरिणो[3] जगति ॥ ९० ॥ रे खल तव खलु चरितं विदुषामग्रे विविच्य वक्ष्यामि। अथवालं पापात्मन्कृतया कथयापि ते हतया[4] ॥ ९१ ॥ विध्वंस्तपरगुणानां भवति खलानामतीव मलिनत्वम्। अन्तरितशशिरुचामपि सलिलमुचां[5] मलिनिमा[6]भ्यधिकः ॥ ९२ ॥ परगुह्य[7]गुप्तिनिपुणं गुण[8]मयमखिलैः समीहितं नितराम्। ललिताम्बरमिव सज्जनमाखव इव दूषयन्ति खलाः ॥९३॥ दूर[9]स्थापितहृदयो गूढ[10]रहस्यो निकामसाशङ्कः[11]। आश्लेषो बालानां भवति खलानां च संभेदः ॥ ९४ ॥ धर्मारम्भेऽप्यसतां परहिंसैव प्रयोजिका भवति। काकानामभिषेकेऽकारणतां वृष्टिरनुभवति[12] ॥ ९५ ॥ यद्दीप्यते खलानां माहात्म्यं क्वापि दैवयोगेन। काकानामिव शौक्ल्यं तदपि हि न चिरादनर्थाय ॥ ९६ ॥ यत्खलु खलमुखहुतवहविनिहितमपि शुद्धिमेव परमेति। तदनलशौचमिवांशुकमिह लोके दुर्लभं प्रेम ॥ ९७ ॥ वंश[13]वलम्बनं[14] यद्यो विस्तारो[15] गुण[16]स्य या च नतिः। तज्जालस्य खलस्य च निजाङ्ग[17]सुखप्रणाशाय ॥ ९८ ॥ सुगृहीतमलि[18]नपक्षा लघवः[19] परभेदिनस्तीक्ष्णाः[20][21]। पुरुषा अपि बाणा अपि गुणच्युता[22] कस्य न भयाय ॥ ९९ ॥ स्वैकपोलेन[23] प्रकटीकृतं प्रमत्तत्वकारणं किमपि। द्विरदस्य दुर्जनस्य च मदं चकारैव दानमपि ॥ १००॥ संतापमोहकम्पान्संपादयितुं निहन्तुमपि जन्तून्। सखि दुर्जनस्य भूतिः प्रसरति दूरं ज्वरस्येव ॥ १०१ ॥ अर्थग्रहणे न तथा व्यथयति कटुकूजितैर्यथा पिशुनः। रुधिरादानादधिकं दुनोति कर्णे क्वणन्मशकः ॥ १०२ ॥ क्षुद्रोद्भवस्य[24] कटुतां[25] प्रकटयतो विदधतश्च मद[26]मुच्चैः। मधुनोऽधमपुरुषस्य च गरिमा लघिमा च भेदाय ॥ १०३ ॥ त्यजति च

१ दुःखेन संधातुमशक्य २ व्याध ३ निष्कारणशत्रव. ४. नाशिता. ५. मेघानाम् ६ मालिन्यम् ७. गुह्यगोपने निपुणम् ८ तन्तुप्रचुरम्; (पक्षे) दयादाक्षिण्यादिप्रचुरम् ९ दूरे स्थापितं हृदयं येन, (पक्षे) दूरे स्थापितमन्तःकरणं येन. १०. अन्तःकरणविषयीभूतम्, (पक्षे) मन्त्रादि ११. भीतिः, (पक्षे) विश्वासाभाव १२ काके स्नाने कृते वृष्टिर्भवतीति वृद्धव्यवहार. १३ कुलस्य, (पक्षे) वेणो १४ जन्यत्वम्, (पक्षे) आश्रितत्वम् १५ आधिक्यम्; (पक्षे) दैर्घ्यम् १६. पाण्डित्यशौर्यादे, (पक्षे) रज्जो १७ विश्वस्तनाशायेत्यर्थ. १८. सम्यग्गृहीतो दुष्टानां पक्षोऽङ्गीकारो यै., (पक्षे) झटिति निष्कासनानर्हा श्यामपक्षवन्त इत्यर्थ.. १९. नीचा; (पक्षे) अल्पपरिमाणवन्त २० परान्भेदन्ति ते अन्येषां परस्परभेदजननेन कलहप्रवर्तका इत्यर्थ, (पक्षे) इतरच्छेदकारका. २१. क्रूरकर्माण; (पक्षे) यथाश्रुतम् २२ साधुत्वादिगुणहीना; (पक्षे) ज्यायाश्च्युता २३ स्वस्य गण्डस्थलेन प्रकटीकृतम् दानस्य तत उत्पत्तेरिति भाव.; (पक्षे) स्वमुखेनाभिहितम्. एवं मया दानं कृतमिति. २४. मधुमक्षिका; (पक्षे) नीच. २५ रूक्षताम्, (पक्षे) कटुभाषिताम् २६ उन्मादम्, (पक्षे) गर्वम्

गुणान्सुदूरं तनुमपि दोषं निरीक्ष्य गृह्णाति । मुक्तालंकृतकेशान्यूकामिव वानरः पिशुनः ॥ १०४ ॥ [1]दोषालोकननिपुणाः परुषगिरो दुर्जनाश्च घूकाश्च । दर्शनमपि भयजननं येषामनिमित्तपिशुनानाम् ॥ १०५ ॥ पिशुनत्वमेव विद्या परदूषणमेव भूषणं येषाम् । परदुःखमेव सौख्यं शिव शिव ते केन वेधसा सृष्टाः ॥ १०६ ॥ हस्त इव भूतिमलिनो लङ्घयति यथा यथा खलः सुजनम् । दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥ १०७ ॥ अन्यस्य लगति कर्णे जीवितमन्यस्य हरति बाण इव । हृदयं दुनोति पिशुनः कण्टक इव पादलग्नोऽपि ॥ १०८ ॥ तस्मिन्गतार्द्रभावे वीतरसे शुण्ठिशकल इव पुरुषे । अपि भूतिभाजि मलिने नागरशब्दो विडम्बाय ॥ १०९ ॥ स्वरसेन बध्नतां करमादाने कण्टकोत्करैस्तुदताम् । पिशुनानां पनसानां कोशाभोगोऽप्यविश्वासः ॥ ११० ॥ वंशे घुण इव न विशति दोषो रसभाविते सतां मनसि । रसमपि तु न प्रयच्छति बहुदोषः संनिपातीव ॥ १११ ॥ परपरितापनकुतुकी गणयति नाल्पीयमपि तापम् । परहतिहेतोः पिशुनः संदंश इव स्वपीडनं सहते ॥ ११२ ॥ सगुणापि हन्त विगुणा भवति खलास्याद्विचित्रवर्णापि । आखुमुखादिव शाटी पदपरिपाटी कवेः कापि ॥ ११३ ॥ परितोषयिता न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः । परदोषकथाभिर[2]ल्पकः स्वजनं तोषयितुं किलेच्छति ॥ ११४ ॥ सहज[3]अन्धदृशः [4]स्वदुर्नये परदोषेक्षणदिव्यचक्षुषः । [5]स्वगुणोच्चगिरो [6]मुनिव्रताः [7]परवर्णग्रहणेष्वसाधवः ॥ ११५ ॥ सुकुमारमहो लघीयसां हृदयं तद्गतमप्रियं यतः । सहसैव समुद्गिरन्त्यमी क्षपयन्त्येव हि तन्मनीषिणः ॥ ११६ ॥ उपकारपरः स्वभावतः सततं सर्वजनस्य सज्जनः । असतामनिशं तथाप्यहो गुरुहृद्रोगकरी तदुन्नतिः ॥ ११७ ॥ परितप्यत एव नोत्तमः परितप्तोऽप्यपरः [8]सुसंवृतिः । परवृद्धिभिरा[9]हितव्यथः [10]स्फुटनिर्भिन्नदुराशयोऽधमः ॥ ११८ ॥ [11]अनिराकृततापसंपदं [12]फलहीनां [13]सुमनोभिरुज्झिताम् । खलतां [14]खलतामि[15]वासतीं प्रतिपद्येत कथं बुधो जनः ॥ ११९ ॥ अपि वेत्ति षडक्षराणि चेदुपदेष्टुं शिति[16]कण्ठमिच्छति । वसनाशनमात्रमस्ति चे[17]द्धनदादप्यतिरिच्यते खलः ॥ १२० ॥ अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात [18]दृप्यः । ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥ १२१ ॥ वदने विनिवेशिता भुजंगी पिशुनानां रसनामिषेण धात्रा । अनया कथमन्यथावलीढा नहि जीवन्ति जना

१ दूषणानि; (पक्षे) रात्रि २ तुच्छ ३ स्वाभाविकी अन्धा अपश्यन्ती दृग्येषा ते. ४. स्वदोषे. ५ आत्मप्रशंसायां प्रगल्भवाच इत्यर्थः ६. मौनव्रतिनः. ७. परस्तुतिवचनेषु. ८ शोभना संवृतिः परितापगोपनं यस्य स. ९ उत्पादितसंताप. १०. स्फुट निर्भिन्न प्रकाशितो दुराशय परशुभद्वेषलक्षणो दुरभिप्रायो यस्य स. ११ अनिराकृतानिवारिता तापसपत्तापातिशयो यया ताम्; (पक्षे) संतापजननैकस्वभावादपत्रासतश्छायाविरहात्. १२ इहामुत्र चोपकारशून्याम्, (पक्षे) सर्वार्थरहिताम्. १३. बुधैरुज्झिताम्; (पक्षे) पुष्पैर्वर्जिताम्. १४. खस्य लताम्. गगनलतिकामित्यर्थः. १५ दुष्टाम्, (पक्षे) निरुपाख्याम्. १६ शिवम् १७ कुबेरात् १८. गर्वोद्धतो मा भव.

मनागमन्त्राः ॥ १२२ ॥ वहति विषधरान्पटीरजन्मा शिरसि मषीपटलं दधाति दीपः । विधुरपि भजतेतरां कलङ्कं पिशुनजनं खलु बिभ्रति क्षितीन्द्राः ॥ १२३ ॥ मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति । अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥ १२४ ॥ अन्तर्वाणिं मन्यमानः खलोऽयं पौरोभाग्यं सूक्तिमुक्तासु धत्ते । सर्वानन्दिन्यङ्गके कामिनीनामीर्मं मार्गत्येष वै वम्भरालिः ॥ १२५ ॥ बोधितोऽपि बहुसूक्तिविस्तरैः किं खलो जगति सज्जनो भवेत् । स्नापितोऽपि बहुशो नदीजलैर्गर्दभः किमु हयो भवेत्क्वचित् ॥ १२६ ॥ विद्यया विमलयाप्यलंकृतो दुर्जनः संदसि मास्तु कश्चन । साक्षरा हि विपरीततां गताः केवलं जगति तेऽपि राक्षसाः ॥ १२७ ॥ दोषपोषमभियाति परं यो बाधमेति बहुसज्जनयोगात् । संमतौ विमतिमात्रसहायो दुर्जनो भ्रम इवातिचकास्ति ॥ १२८॥ उन्नतं पद्मवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् । शैलशेखरगतः पृषद्गणश्चारुमारुतधुतः पतत्यधः ॥ १२९ ॥ भग्नकुम्भशकलेन वै मलं बालकस्य जननी व्यपोहति । तद्वदोष्ठवदनेन दुर्जनो मातृतः शतगुणाधिको भवेत् ॥ १३० ॥ अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा । सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥ १३१ ॥ निमित्तमुद्दिश्य हि यः प्रकुप्यति ध्रुवं स तस्यापगमे प्रसीदति । अकारणद्वेषि मनोऽस्ति यस्य वै कथं जनस्तं परितोषयिष्यति ॥ १३२ ॥ अकारणाविष्कृतवैरदारुणादसज्जनात्कस्य भयं न जायते । विषं महाहेरिव यस्य दुर्वचः सुदुःसहं संनिहितं सदा मुखे ॥ १३३ ॥ न दुर्जनः सज्जनतामुपैति बहुप्रकारैरपि सेव्यमानः । भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति ॥ १३४ ॥ विद्या विवादाय धनं मदाय शक्तिः परेषां परिपीडनाय । खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥ १३५ ॥ सद्वंशजातं गुणकोटियुक्तं धनुः कथं पार्थिववामहस्ते । शरः परप्राणविहारदक्षः सपक्षपातोऽप्यधमो गरीयान् ॥ १३६ ॥ एकः खलोऽपि यदि नाम भवेत्सभायां मोहीकरोति विदुषां निखिलप्रयासम् । एकापि पूर्णमुदरं मधुरैः पदार्थैरालोड्य रेचयति हन्त न मक्षिका किम् ॥ १३७ ॥ हालाहलं खलु पिपासति कौतुकेन कालानलं परिचुचुम्बिषति प्रकामम् । व्यालाधिपं च यतते परिरब्धुमद्धा यो दुर्जनं वशयितुं कुरुते मनीषाम् ॥ १३८ ॥ ते दृष्टिमात्रपतिता अपि कस्य नात्र क्षोभाय पक्ष्मलदृशामलकाः खलाश्च । नीचाः सदैव सविलासमलीकलग्ना ये कालतां कुटिलतामपि न त्यजन्ति ॥ १३९ ॥ प्राक्पादयोः पतति खादति पृष्ठमांसं कर्णे कलं किमपि रौति[२१] श-

१ सर्पान् २ चन्दन ३ शास्त्रवित् ४ दोषैकदृक्त्वम् ५ सूक्तय एव मुक्ताफलानि तासु ६ सर्वेषामाल्हादके ७ व्रणम् ८ शोधयति ९ मक्षिका. १० सभायाम् ११ अम्बुकणसमुदाय १२. कम्पित. १३ भिन्नघटखण्डेन १४ निरर्थकविरोध. १५ इच्छा १६ असहनशीलता १७. स्वभावसिद्धम्. १८ वेणु; (पक्षे) कुलम् १९ मौर्वी, (पक्षे) विद्याविनयादि २०. अग्रम्, (पक्षे) सङ्ख्याविशेष २१ शब्द करोति.

नैर्विचित्रम्। छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः सर्वं खलस्य चरितं मशकः करोति ॥१४०॥ हित्वा मदं सममसज्जनसज्जनौ तौ वन्दे नितान्तकुटिलप्रगुणस्वभावौ। एकं भिया निरभिसंहितवैरिभावं प्रीत्या परं परमनिर्वृतिपात्रभूतम् ॥१४१॥ पादाहतोऽपि दृढदण्डसमाहतोऽपि यद्दंष्ट्रया स्पृशति तं किल हन्ति सर्पः। हर्षादिवैष पिशुनोऽत्र मनुष्यधर्मा कर्णे परं स्पृशति हन्त्यपरस्य मूलम् ॥१४२॥ उद्भासिताखिलखलस्य विशृङ्खलस्य प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः। दैवादवाप्तविभवस्य गुणद्विषोऽस्य नीचस्य गोचरगतैः सुखमाप्यते कैः ॥१४३॥ संवर्धितोऽपि भुजगः पयसा न वश्यस्तत्पालकानपि निहन्ति बलेन सिंहः। दुष्टः परैरुपकृतस्तदनिष्टकारी विश्वासलेश इह नैव बुधैर्विधेयः ॥ १४४ ॥ दुर्वृत्तसंगतिरनर्थपरंपराया हेतुः सतां भवति किं वचनीयमेतत्। लङ्केश्वरो हरति दाशरथेः कलत्रं प्राप्नोति बन्धमथ दक्षिणसिन्धुराजः ॥ १४५ ॥ कस्तूरिकां तृणभुजामटवीश्वराणां निक्षिप्य नाभिषु चकार च तान्वधार्हान्। मूढो विधिः सकलदुर्जनलोलजिह्वामूले स्म निक्षिपति चेत्सकलोपकारः ॥ १४६ ॥ विसमलमशनाय स्वादु पानाय तोयं शयनमवनिपृष्ठे वल्कले वाससी च। नवधनमधुपानभ्रान्तसर्वेन्द्रियाणामविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ १४७ ॥ मलयभुवि विरूढश्चन्दनेनाभिवृद्धो न भजति किल वेणुः सौरभं चन्दनस्य। तदिह नहि विचित्रं सर्वदोषाकराणां नहि भवति खलानां साधुतागन्धलेशः ॥ १४८ ॥ दिगन्ते खेलन्ती सरसहृदयानन्दजननी मया नीता दुष्टप्रचुरनगरीं कापि कविता। अकस्मादुन्मीलत्खलवदनवल्मीकरसनाभुजगीदष्टाङ्गी शिवशिव समाप्तिं गतवती ॥ १४९ ॥ अभूदम्भोराशेः सह वसतिरासीत्कमलया गुणानामाधारो नयनफलमिन्दुः प्रथयति। कथं सिंहीसूनुस्तमपि तुदति प्रौढदशनैर्गुणानामास्वादं पिशुनरसना किं रसयति ॥ १५० ॥ न विषममृतं कर्तुं शक्यं प्रयत्नशतैरपि त्यजति कटुतां न स्वां निम्बः स्थितोऽपि पयोह्रदे। गुणपरिचितामार्यां वाणीं न जल्पति दुर्जनः चिरमपि बलाध्माते लोहे कुतः कनकाकृतिः ॥ १५१ ॥ जिह्मो लोकः कथयति पुरा हन्त हित्वा गुणौघानम्भःक्षारं गुणगणनिधेस्तस्य रत्नाकरस्य। विश्वे छिद्रानुसरणसमारूढसर्वेन्द्रियाणां दोषे दृष्टिः पिशुनमनसा नानुरागो गुणेषु ॥ १५२ ॥ सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा। अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः ॥ १५३ ॥ या लोभात्संविधे खलस्य सुरसा वाणी बुधैर्नीयते नो जानाति सतामचेतनतया सैव स्वयं लीयति। भर्तुः स्नेहचयात्प्रविश्य दहने भस्मीभवत्यङ्गना गाढालिङ्गनतत्परेण मनसा प्रेतो न वेत्ति प्रियाम् ॥ १५४ ॥ नागच्छन्नुपहूयते न वचनोत्थानासनैः पूज्यते नो पृच्छन्ननुभाष्यते न च दृशा सान्द्रादरं वीक्ष्यते। ईर्ष्यावेशकषायिते हृदि घृणालेशोऽपि न स्पृश्यते किं

१ आविष्कृतसकलदुष्टस्य २ अमर्यादस्य ३ वनम्. ४. कुटिल. ५. अन्तिक

त्वेकः प्रवदन्समञ्जसमपि प्राज्ञः शठैर्हस्यते ॥ १५५ ॥ दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तादरः । अन्तर्भूतविषो बहिर्मधुमयश्चातीव मायापटु[1]ः को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥ १५६ ॥ जाड्यं ह्रीमति[2] गण्यते व्रतरुचौ[3] दम्भः शुचौ कैतवं[4] शूरे निर्घृणता[5] मुनौ[6] विमतिता दैन्यं[7] प्रियालापिनि । तेजस्विन्यवलिप्तता[8] मुखरता[9] वक्तर्यशक्तिः स्थिरे तत्को नाम गुणो भवेत्सुगुणिनां यो दुर्जनैर्नाङ्कितः ॥ १५७ ॥ पोतो[10] दुस्तरवारिराशितरणे दीपोऽन्धकारागमे निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्त्यै सृणिः[11] । इत्येतद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः[12] ॥ १५८ ॥ धातस्तात तवैव दूषणमिदं यन्नाम कस्तूरिका कान्तारान्तरचारिणां[13] तृणभुजां यन्नाभिमूले कृता । यद्येवं पिशुनस्य[14] हन्त रसनामूले[15]ऽकरिष्यस्तदा प्रायासेन[16] विनाभविष्यदतुला कीर्तिश्च निर्दोषता ॥ १५९ ॥ ते वै सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये सामान्यास्तु परोपकारनिरताः स्वार्थाविरोधेन ये । तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ १६० ॥ नारीणां वचनेन कर्म कुरुते दीनं वचो भाषते नालस्यं विजहाति तिग्मकिरणे प्रौढे समुत्तिष्ठति । किंचित्क्वापि न साहसं वितनुते देहे चिरं दूयते नो वा विन्दति पौरुषं कुपुरुषः कोऽप्येष निर्णीयताम् ॥ १६१ ॥ पक्षद्वन्द्वविराजितोऽहममलं मीनान्प्रसेवे सदा पुष्टाङ्गः सकलादिभिः परिवृतश्चन्द्रः समं किं मम । सर्वस्थाणुशिरोगतोऽहममलं चन्द्रं बको हासते मात्सर्येण दुरात्मकोऽपि सुजनं दृष्ट्वा सदा हासते ॥ १६२ ॥ कस्त्वं भद्र खलेश्वरो[17]ऽहमिह किं घोरे वने स्थीयते शार्दूलादिभिरेव[18] हिंस्रपशुभिः[19] खाद्यो[20]ऽहमित्याशया । कस्मात्कष्टमिदं त्वया व्यवसितं मद्देहमांसाशिनः प्रत्युत्पन्ननृमांसभक्षणधियस्ते घ्नन्तु सर्वान्नरान् ॥ १६३ ॥ भिक्षो मांसनिषेवणं किमुचितं किं तेन मद्यं विना मद्येचापि परिश्रमो हि भवतां वाराङ्गनाभिः सह । वारस्त्रीषु रतः कुतस्तव धनं द्यूतेन चौर्येण वा चौर्यद्यूतपरायणस्य भवतो भ्रष्टस्य का वा गतिः ॥ १६४ ॥ भिक्षो कन्था श्लथा ते नहि शफरिवधे जालमश्नासि मत्स्यांस्ते वै मद्योपदंशाः पिबसि मधु समं वेश्यया यासि वेश्याम् । दत्वाङ्घ्रिं मूर्ध्न्यरीणां तव किमु रिपवो भित्तिभेत्तास्मि येषां चोरोऽसि द्यूतहेतोस्त्वयि सकलमिदं नास्ति नष्टे विचारः ॥ १६५ ॥ दैवादप्युत्तमानामपहरति यदा दुर्जनो वा कथंचिन्मानं नाप्नोति तेषामनुजनितगुणानेव कुत्राधिकत्वम् । स्वर्भानुर्भानवीयान्हरति यदि पुनः शीतरश्मेर्मरीचीन्ब्रह्माण्डस्येह खण्डे तदपि नरपते किं ग्रहेशत्वमेति ॥ १६६ ॥

१ कपटपटु. २. लज्जावति ३. व्रतेषु रुचिः प्रीतिर्यस्य तस्मिन् ४ शाठ्यम् ५ निर्दयता. ६. मननशीले. ७ दीनत्वम् ८. सगर्वता. ९ वाचालत्वम्. १० नौका. ११. अङ्कुश. १२ भग्नप्रयत्न. १३. दुर्गममार्गसंचारिणाम् १४. सूचकस्य १५ जिह्वामूले. १६. प्रकृष्टेन यत्नेन. १७. खलराज. १८. व्याघ्रादिभि.. १९. घातकपशुभि २०. भक्षणीय..

## लक्ष्मीस्वभावः ।

या स्वसद्मनि पद्मेऽपि संध्यावधि[1] विजृम्भते[2] । इन्दिरा[3] मन्दिरेऽन्येषां कथं स्थास्यति निश्चला[4] ॥ १ ॥ गुणिनं जनमालोक्य निजबन्धनशङ्कया । राजंल्लक्ष्मीः कुरङ्गीव[5] दूरं दूरं पलायते ॥ २ ॥ शूरं त्यजामि वैधव्यादुदारं लज्जया पुनः । सापत्न्यात्पण्डितमपि तस्मात्कृपणमाश्रये ॥ ३ ॥ गोभिः क्रीडितवान्कृष्ण इति गोसमबुद्धिभिः । क्रीडत्यद्यापि सा लक्ष्मीरहो देवी पतिव्रता ॥ ४ ॥ अत्यार्यमतिदातारमतिशूरमतिव्रतम् । प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ ५ ॥ समायाति यदा लक्ष्मीर्नारिकेलफलाम्बुवत् । विनिर्याति यदा लक्ष्मीर्गजभुक्तकपित्थवत् ॥ ६ ॥ लक्ष्मीर्यादोनिधेर्यादो[6] र्नादो वादोचितं वचः[8] । बिभेति धीवरेभ्यो[9] या जडेष्वेव[10] निमज्जति ॥ ७ ॥ कुटिला लक्ष्मीर्यत्र प्रभवति न सरस्वती वसति तत्र । प्रायः श्वश्रूस्नुषयोर्न दृश्यते सौहृदं लोके ॥ ८ ॥ अव्यवसायिनमलसं[11] दैवपरं[12] साहसाच्च परिहीनम् । प्रमदा[13] पतिमिव वृद्धं नेच्छति लक्ष्मीरुपस्थातुम् ॥ ९ ॥ गुणवद्भिः सह संगममुच्चैःपदमाप्तुमुत्सुका लक्ष्मीः । वीरकरवाल[14]वसतिर्ध्रुवमसिधाराव्रतं चरति ॥ १० ॥ श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् । उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ ११ ॥ वाक्चक्षुःश्रोत्रलयं लक्ष्मीः कुरुते नरस्य को दोषः । गरलसहोदरजाता न मारयति यच्च तच्चित्रम् ॥ १२ ॥ अनुभवत ददत वित्तं मान्यान्मानयत सज्जनान्भजत । अतिपरुषपवनविलुलितदीपशिखाचञ्चला लक्ष्मीः ॥ १३ ॥ अपि दोर्भ्यां परिबद्धा बद्धापि गुणैरनेकधा निपुणैः । निर्गच्छति क्षणादिव जलधिजलोत्पत्तिपिच्छला लक्ष्मीः ॥ १४ ॥ हरिभामिनि सिन्धुसंभवे कमले किं कथयामि ते गुणान् । अनुरज्यसि हा जडे जने गुणगौरे पुरुषे विरज्यसि ॥ १५ ॥ वीक्षितानि तव वारिधिकन्ये यत्र पालितजगन्ति लगन्ति । चित्रमत्र च परत्र च देही देहि शब्दमपहाय चकास्ति ॥ १६ ॥ यद्वदन्ति चपलेत्यपवादं नैव दूषणमिदं कमलायाः । दूषण जलनिधेर्हि भवेत्तद्यत्पुराणपुरुषाय ददौ ताम् ॥ १७ ॥ चाञ्चल्यमुच्चैःश्रवसस्तुरंगात्कौटिल्यमिन्दोर्विषतो विमोहः । इति श्रियाशिक्षि सहोदरेभ्यो न वेद्मि कस्माद्गुणवद्विरोधः ॥ १८ ॥ श्वश्रूं विना वृत्तिरिह स्वतन्त्रा प्राय. स्नुषाणामपवादहेतुः । यद्वाणि लोके रमया विहीनां सतीमपि त्वामसती वदन्ति ॥ १९ ॥ उत्साहसंपन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् । शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीः स्वयं याति निवासहेतोः ॥ २० ॥ हालाहलो नैव विषं विषं रमा जनाः परं व्यत्ययमत्र मन्यते । निपीय जागर्ति सुखेन तं शिवः स्पृशन्निमां मुह्यति निद्रया हरिः

---

१. सध्याकालपर्यन्तम् २ विराजते ३. लक्ष्मी ४. स्थिरा ५ मृगीव ६ समुद्रस्य ७. जलजन्तु. ८ अदो वचो वादोचित न ९ कैवर्तेभ्य ,( पक्षे ) बुद्धिश्रेष्ठेभ्य . १० मूर्खेषु, (-पक्षे डलयो सावर्ण्यात् ) उदकेषु ११ अनुयोगिनम्. १२ नियतिपरम्. १३. तरुणस्त्री १४. खड्गम्. १५ विपरीतभावम्

॥ २१ ॥ तापापहे सुहृदये रुचिरे प्रबुद्धे मित्रानुरागनिरते धृतसद्गुणौघे । स्वाङ्गप्रदानपरिपूरितषट्पदौघे युक्तं तवेह कमले कमले स्थितिर्यत् ॥ २२ ॥ रत्नाकरस्तव पिता कमले निवासो भ्राता सुधामयतनुः पतिरादिदेवः । केनापरेण कमले बत शिक्षितानि सारङ्गशृङ्गकुटिलानि विचेष्टितानि ॥ २३ ॥ लक्ष्मि क्षमस्व वचनीयमिदं दुरुक्तमन्धीभवन्ति पुरुषास्त्वदुपासनेन । नो चेत्कथं कमलपत्रविशालनेत्रो नारायणः स्वपिति पन्नगभोगतल्पे ॥ २४ ॥ असौभाग्यं धत्ते परमसुखभोगास्पदमयं विचित्रं तद्गेहं भवति पृथुकार्तस्वरमयम् । निविष्टः पल्यङ्के कलयति स कान्तारतरणं प्रसादं कोपं वा जननि भवती यत्र तनुते॥२५॥समुद्रस्यापत्यं प्रथितमहिमामुद्रितभुवः स्वसा प्रालेयांशोस्त्रिनयनशिरोधामवसतेः । मुरारेर्योषित्सा सरसिरुहकिञ्जल्कनिलया तथापि श्री स्त्रीत्वात्प्रकृतिचपलालिङ्गति खलान् ॥२६॥ तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न संतिष्ठते मूर्खान्द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि । शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनपि श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम्॥२७॥ कस्मैचित्कपटाय कैटभरिपूरःपीठदीर्घालयां देवि त्वामभिवाद्य कुप्यसि न चेत्तत्किंचिदाचक्ष्महे । यत्ते मन्दिरमम्बुजन्म किमिदं विद्यागृहं यच्च ते नीचान्नीचतरोपसर्पणमपामेतत्किमाचार्यकम् ॥ २८ ॥ पद्मे मूढजने ददासि द्रविणं विद्वत्सु किं मत्सरो नाहं मत्सरिणी न चापि चपला नैवास्ति मूर्खे रतिः । मूर्खेभ्यो द्रविणं ददामि नितरां तत्कारणं श्रूयतां विद्वान्सर्वगुणेषु पूजिततनुर्मूर्खस्य नान्या गतिः ॥ २९ ॥ तिर्यक्त्वं भजतु प्रतारयतु वा धर्मक्रियाकोविदं हन्तु स्वां जननीं पिबत्वपि सुरां शुद्धां वधूमुज्झतु । वेदान्निन्दतु वा हिनस्तु जनतां किं वानया चिन्तया लक्ष्मीर्यस्य गृहे स एव भवति प्रायो जगद्वन्द्यताम् ॥३०॥ आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां मूकत्वं मितभाषितां वितनुते मौढ्यं भवेदार्जवम् । पात्रापात्रविचारणाविरहिता यच्छत्युदारात्मतां मातर्लक्ष्मि तव प्रसादवशतो दोषा अमी स्युर्गुणाः ॥ ३१ ॥ हे लक्ष्मि क्षणिके स्वभावचपले मूढे च पापेऽधमे न त्वं चोत्तमपात्रमिच्छसि खले प्रायेण दुश्चारिणि । ये देवार्चनसत्यशौचनिरता ये चापि धर्मे रतास्तेभ्यो लज्जासि निर्दये गतमतिर्नीचो जनो वल्लभः ॥ ३२ ॥ नाहं दुश्चरिणी न चापि चपला मूर्खो न मे रोचते नो शूरो न च पण्डितो न च शठो हीनाक्षरो नैव च । पूर्वस्मिन्कृतपुण्ययोगविभवो भुक्तं स मे सत्फलं लोकानां किमसह्यता सखि पुनर्दृष्ट्वा परां संपदम् ॥ ३३ ॥ ह-

१. चन्द्र. २ नारायणः ३. सर्प. ४. शरीरम् ५ शय्यायाम् ६ हे जननि भवती यत्र यस्मिन्पुरुषे प्रसाद तनुते करोत्यसौ पुरुषो भाग्यमैश्वर्यं धत्ते यत्र कोप तनुते सोऽसौभाग्य सौभाग्याभाव धत्ते. अय प्रसादविषय परमसुखभोगानामास्पदम् अय कोपविषय परमत्यन्तमसुखभोगास्पदम् भवतीति शेष. ७. तस्य पूर्वोक्तस्य पुरुषस्य गेहं विविधचित्रयुक्त तथा पृथु महत्कार्तस्वर स्वर्णं तन्मय भवति; (पक्षे) चित्ररहित तथा पृथुकानां बालानामन्नाद्यभावप्रयुक्तेनार्तस्वरेण प्रचुरम् ८ स पूर्वोक्तः पुरुष. कान्ताया रत रमण तस्य रणयुद्धम्, (पक्षे) कान्तार दुर्गमारण्य तत्तरण कलयति. ९ चन्द्रस्य

न्तुर्बन्धुजनान्धनार्थमनघान्गन्तुः परस्त्रीशतं रन्तुर्जन्तुविहिंसकैः सह जनैः संतुष्यतो वञ्चनैः। वक्तुस्तीक्ष्णमयुक्तमेव वचनं पक्तुर्मितं चौदनं नित्यं नृत्यसि मन्दिरेषु कमले कैस्त्यं तवैतन्मतम् ॥ ३४ ॥ यत्राभ्यागतदानमानचरणप्रक्षालनं भोजनं सत्सेवा पितृदेवतार्चनविधिः सत्यं गवां पालनम्। धान्यानामपि संग्रहो न कलहश्चित्तानुरूपा प्रिया दृष्टा प्राह हरिं वसामि कमला तस्मिन्गृहे निश्चला ॥ ३५ ॥ येषामन्यकलत्रदर्शनकलाव्युत्पत्तिशून्ये दृशौ मूढं हृच्च परार्थचिन्तनविधौ मिथ्यानभिज्ञं मुखम्। अप्रज्ञातपशून्बुभुक्षितशिशूनश्रोदकैस्ताम्यतस्तेषां लक्ष्मि गृहान्दृशापि भयभीतेवेह नो वीक्षसे ॥ ३६ ॥ नो जानाति कुलीनमुत्तमगुणं सत्त्वान्वितं धार्मिकं नाचारप्रवणं न कार्यकुशलं न प्रज्ञयालंकृतम्। नीचं क्रूरमपेतसत्त्वमदयं तस्मादियं सेवते तद्वंशानुगुणं पयोधिसुतया लक्ष्म्या प्रमाणीकृतम् ॥ ३७ ॥ पीतोऽगस्त्येन तातश्चरणतलहतो वल्लभोऽन्येन रोषादाबाल्याद्विप्रवर्यैः स्ववदनविवरे धारिता वैरिणी मे। गेहं मे छेदयन्ति प्रतिदिवसमुमाकान्तपूजानिमित्तं तस्मात्खिन्ना सदाहं द्विजकुलसदनं नाथ नित्यं त्यजामि ॥ ३८ ॥

---

## धनप्रशंसा।

अहो कनकमाहात्म्यं वक्तुं केनापि शक्यते। नामसाम्यादहो चित्रं धत्तूरोऽपि मदप्रदः ॥ १ ॥ न वित्तं दर्शयेत्प्राज्ञः कस्यचित्स्वल्पमप्यहो। मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥ २ ॥ धनमर्जय काकुत्स्थ धनमूलमिदं जगत्। अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च ॥ ३ ॥ ब्रह्मघ्नोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम्। शशिना तुल्यवंशोऽपि निर्धनः परिभूयते ॥ ४ ॥ विभवो हि यथा लोके न शरीराणि देहिनाम्। चाण्डालोऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् ॥ ५ ॥ कुत आगत्य घटते विघटय्य क्व नु याति च। न लक्ष्यते गतिः सम्यग्घनस्य च धनस्य च ॥ ६ ॥ स्त्रीरूपं मोहकं पुंसो यून एव भवेत्क्षणम्। कनकं स्त्रीबालवृद्धषण्ढानामपि सर्वदा ॥ ७ ॥ संपदा सुस्थितंमन्यो भवति स्वल्पयापि यः। कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ ८ ॥ न नरस्य नरो दासो दासश्चार्थस्य भूपते। गौरवं लाघवं वापि धनाधननिबन्धनम् ॥ ९ ॥ यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान्गुणज्ञः। स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ते ॥ १० ॥ त्यजन्ति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च सुहृज्जनाश्च। तमर्थवन्तं पुनराश्रयन्ति ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥ ११ ॥ बुभुक्षितैर्व्याकरणं न भुज्यते पिपासितैः काव्यरसो न पीयते। न च्छन्दसा केनचिदुद्धृतं कुलं हिरण्यमेवार्जय निष्फला गुणाः ॥ १२ ॥ धनैर्नि-

---

१. निष्पापान् २ प्राणिविघातकैः. ३ अयोग्यम् ४ मितपचम् दरिद्रमिति भाव ५ किंप्रकारकम्. ६. समुद्र ७ भृगुणा. ८. सरस्वती. ९. कमलम् १० शास्त्रज्ञ ११ प्रेक्षणीय.

प्कुलीनाः कुलीना भवन्ति धनैरापदं मानवा निस्तरन्ति। धनेभ्यः परो बान्धवो नास्ति लोके धनान्यर्जयध्वं धनान्यर्जयध्वम् ॥ १३ ॥ दुन्दुभिस्तु सुतरामचेतनस्तन्मुखादपि धनं धनं धनम्। इत्थमेव निनदः प्रवर्तते किं पुनर्यदि जनः सचेतनः ॥ १४ ॥ त्यक्त्वा युवा स्वयुवतिं सुविलासयोग्यां दूरं विदेशवसतौ निवसन्धनार्थी। रात्र्यागमे स्मरति तां न समेति तस्मात्कान्ताभ्रमादपि वरः कनकभ्रमोऽयम् ॥ १५ ॥ जातिर्यातु रसातलं गुणगणस्तस्याप्यधो मज्जतां शील शैलतटात्पतत्वभिजनः संदह्यतां वह्निना। शौर्ये वैरिणि वज्रमाशु निपतत्वर्थोऽस्तु नः केवलं येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥ १६ ॥ निर्द्रव्याः पुरुषाः सदा च विकलाः सर्वत्र मन्दादराः पुत्रभ्रातृनिरापराधकुपितं दृष्टं न संभाषणम्। भार्या रूपवती सुमन्दमनसा स्नेहेन नालिङ्गते तस्माद्द्रव्यमुपार्जय शृणु सखे द्रव्येण सर्वे वशाः ॥ १७ ॥ माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते। अर्थप्रार्थनशङ्कया न कुरुते सभाषणं वै सुहृत्तस्माद्द्रव्यमुपार्जय शृणु सखे द्रव्येण सर्वे वशाः ॥ १८ ॥

---

## धननिन्दा।

अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते। जनितारमपि त्यक्त्वा निःस्वं गच्छति दूरतः ॥ १ ॥ लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम्। शेषे धराभरक्रान्ते शेते नारायणः सुखम् ॥ २ ॥ वरं[1] हालाहलं पीतं सद्यःप्राणहरं विषम्। न द्रष्टव्यं धनाढ्यस्य भ्रूभङ्गकुटिलं मुखम् ॥ ३ ॥ भक्तद्वेषो[3] जडप्रीतिः[4] सुरुचिर्गुरुलङ्घने[5]। मुखे कटुकता[6] नूनं धनिनां ज्वरिणामिव ॥ ४ ॥ आलिङ्गिताः परैर्यान्ति प्रस्खलन्ति समे[7] पथि। अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥ ५ ॥ आजन्मानुगतेऽप्यस्मिन्नाले विमुखमम्बुजम्। प्रायेण गुणपूर्णेषु रीतिर्लक्ष्मीवतामियम् ॥ ६ ॥ धनं तावदसुलभं लब्धं कृच्छ्रेण रक्षति। लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत् ॥ ७ ॥ जनयन्त्यर्जने दुःख तापयन्ति विपत्तिषु। मोहयन्ति च संपत्तौ कथमर्थाः सुखावहाः ॥ ८ ॥ यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि। भक्ष्यते सलिले नक्रैस्तथा सर्वत्र वित्तवान् ॥ ९ ॥ राजतः सलिलादग्नेश्चोरतः कुजनादपि। भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ १० ॥ बधिरयति कर्णविवरं वाचं मूकयति नयनमन्धयति। विकृतयति गात्रयष्टिं संपद्रोगोऽयमद्भुतो राजन् ॥ ११ ॥ लक्ष्म्या परिपूर्णोऽहं न भयं मेऽस्तीति मोहनिद्रैषा। परिपूर्णस्यैवेन्दोर्भवति भय सिंहिकासूनोः[8] ॥ १२ ॥ निरक्षरे वीक्ष्य महाधनत्वं विद्या-

---

१ मनाक्प्रियम् २ भ्रुकुटिमोटनेन वक्रम् ३ भक्ता सेवकास्तेषा द्वेष, (पक्षे) भक्तमन्न तद्द्वेष ४. जडेषु मूर्खेषु प्रीति ; (पक्षे डलयो सावर्ण्यात्)-जले रुचि ५ गुरूणा पित्रादीनामुल्लङ्घने, (पक्षे) गुरुयल्लङ्घनमुपवासस्तस्मिन् ६ कटुभाषित्वम्; (पक्षे) कटुत्वम् ७. अविषमे. ८ राहो..

नवद्या विदुषा च हेया। रत्नावतंसां कुलटां समीक्ष्य किमार्यनार्यः कुलटा भवन्ति ॥१३॥ अ[1]र्जुनीयति यदर्जने जनो वर्जनीयजन[2]तर्जनादिभिः । मङ्क्षु[3] नश्यति चिराय संचिता वञ्चित जगति के न संपदा ॥१४॥ वरमसिधारा तरुतलवासो वरमिह भिक्षा वरमुपवासः । वरमपि घोरे नरके पतनं न च धनगर्वितबान्धवशरणम् ॥१५॥ तानीन्द्रियाण्यवि[4]कलानि मनस्तदेव सा बुद्धिरप्र[5]तिहता वचनं तदेव । अ[6]र्थोष्मणा विरहितः पुरुषः स एव ह्यन्यः क्षणेन भवतीति विचित्रमेतत् ॥१६॥ आ[7]पद्गतं हससि किं द्रविणान्ध मूढ लक्ष्मीः स्थिरा न भवतीति किमत्र चित्रम्। एतान्प्रपश्यसि घटाञ्जलयन्त्रचक्रे रिक्ता भवन्ति भरिता भरिताश्च रिक्ताः॥ १७ ॥ लभेद्यद[8]युतं धनं तदधनं धनं यद्यपि लभेत निर्यु[9]तं धनं निधनमेव तज्जायते । तथा धनं[10] परार्धकं तदपि भावहीनात्मकं य[11]दक्षरपदद्वयान्तरगतं धनं तद्धनम् ॥ १८ ॥ दायादाः स्पृहयन्ति तस्करगणा मु[12]ष्णन्ति भूमीभुजो दूरेण छ[13]लमाकलय्य हु[14]तभुग्भस्मीकरोति क्षणात् । अम्भः प्लावयते क्षितौ विनिहितं यक्षा हरन्ति ध्रुवं दुर्वृ[15]त्तास्तनया नयन्ति निध[16]नं धिग्धिग्धनं तद्बहु ॥ १९ ॥

---

## धनिप्रशंसा ।

धनवान्बलवांल्लोके सर्वः सर्वत्र सर्वदा । प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ॥ १ ॥ वयोवृद्धास्तपोवृद्धा ये च वृद्धा बहुश्रुताः । सर्वे ते धनवृद्धानां द्वारि तिष्ठन्ति किंकराः ॥ २ ॥ न सा विद्या न तच्छीलं न दानं न च सा कला । अर्थार्थिभिर्न तच्छौर्यं धनिनां यन्न कीर्त्यते ॥ ३ ॥ पतन्ति खड्गधारासु विशन्ति म[17]करालयम् । किं न कुर्वन्ति सुभगे कष्टमर्थार्थिनो नराः ॥ ४ ॥ एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर । एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ५ ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः । यस्यार्थाः स पुमांल्लोके यस्यार्थाः स च पण्डितः ॥ ६ ॥ को नाम नानुवृत्तिं सुमहानपि धनवतः कुरुते । वित्तेशभवनभित्तेः समीपमुपसेवते शम्भुः ॥ ७ ॥ हेतुप्रमाणयुक्तं वाक्यं न श्रूयते दरिद्रस्य । अप्यतिप[18]रुषमसत्यं पूज्यं वाक्यं समृद्धस्य ॥ ८ ॥ वाणी दरिद्रस्य शुभा हितापि ह्यर्थेन शब्देन च संप्रयुक्ता । न शो-

---

१ धवलीभवति २. भयत्रासादिभि. ३. झटिति ४ वैकल्यरहितानि ५. अखण्डिता ६ द्रव्यरूपोष्णतया. ७ विपद्ग्रस्तम् ८ दशसहस्रम्; ( पक्षे ) अकारेण युत धनम् अधनमित्यर्थ ९ लक्षसख्याकम्, ( पक्षे ) निशब्देन युक्त धनम्. निधनमित्यर्थ १० धनस्य परार्ध सख्याविशेष ; ( पक्षे ) धनशब्दसबन्धि परमर्ध न इति तच्च भावहीनात्मकम् अभावबोधकमित्यर्थ ११ अक्षर परमात्मा तच्चरणद्वयान्तरे गत प्राप्त यद्धन मोक्षरूप धनं तदेव धनम्, ( पक्षे ) अक्षराणा मध्ये धकारनकारात्मकद्वयमध्यवर्ति धन इत्येतदक्षरद्वयरूपम् धनमित्यर्थ १२ हरन्ति १३ कपटम् १४. अग्नि . १५. दुष्टाचरणाः १६. नाशम् १७ समुद्रम् १८. अतिकठोरम्

भते वित्तवतः समीपे भेरीनिनादोपहतेव[१] वीणा ॥ ९ ॥ न विद्यया नैव कुलेन गौरवं जनानुरागो धनिकेषु सर्वदा। कपालिना मौलिधृतापि जाह्नवी प्रयाति रत्नाकरमेव सत्वरम् ॥ १० ॥ गङ्गां च धारयति मूर्ध्नि सदा कपाली सा तस्य चुम्बति मुखं न कदाचिदेव। रत्नाकरं प्रति चुचुम्ब सहस्रवक्त्रैर्गङ्गादयो युवतयः सधनानुकूलाः ॥ ११ ॥ धिगस्त्वेतां विद्यां धिगपि कवितां धिक्सुजनतां वयोरूपं धिग्धिग्धिगपि च यशो निर्धनवतः। असौ जीर्योदेकः सकलगुणहीनोऽपि धनवान्बहिर्यस्य द्वारे तृणलवनिभाः सन्ति गुणिनः ॥ १२ ॥ परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये स पश्चात्संपूर्णः कलयति धरित्रीं तृणसमाम्। अतश्चानैकान्त्याद्गुरुलघुतयार्थेषु धनिनामवस्था वस्तूनि प्रथयति च संकोचयति च ॥ १३ ॥

---

## दरिद्रनिन्दा।

उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः। बालवैधव्यदग्धानां कुलस्त्रीणां कुचाविव ॥ १ ॥ हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः। पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥ २ ॥ इह लोकेऽपि धनिनां परोऽपि स्वजनायते। स्वजनोऽपि दरिद्राणां तत्क्षणाद्दुर्जनायते ॥ ३ ॥ परीक्ष्य सत्कुलं विद्यां शीलं शौर्यं सुरूपताम्। विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥ ४ ॥ दारिद्र्यानलसंतप्तः शान्तः संतोषवारिणा। याचकाशाविघातान्तर्दाहः केनोपशाम्यति ॥ ५ ॥ येनैवाम्बरखण्डेन[३] संवीतो निशि चन्द्रमाः। तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ ६ ॥ चाण्डालश्च दरिद्रश्च द्वावेतौ सदृशाविह। चाण्डालोऽपि दरिद्रोऽपि सर्वकर्मसु निन्दितः ॥ ७ ॥ अर्थेन तु विहीनस्य पुरुषस्याल्पमेधसः। क्रियाः सर्वा विनश्यन्ति ग्रीष्मे कुसरितो यथा ॥ ८ ॥ द्वाविमावम्भसि क्षेप्यौ गाढं बध्वा गले शिलाम्। धनिनं चाप्रदातारं दरिद्रं चातपस्विनम् ॥ ९ ॥ अत्यन्तविमुखे दैवे व्यर्थे यत्ने च पौरुषे। मनस्विनो दरिद्रस्य वनादन्यत्कुतः सुखम् ॥ १० ॥ दूये[४] कान्ताकरं वीक्ष्य मणिकङ्कणवर्जितम्[५]। अतःपरं परं[६] दूये मणिकं[७] कर्णवर्जितम्[८] ॥ ११ ॥ रात्रौ जानुर्दिवा भानुः कृशानुः संध्ययोर्द्वयोः। पश्य शीतं मया नीतं जानुभानुकृशानुभिः ॥ १२ ॥ किं करोमि क्व गच्छामि कमुपैमि दुरात्मना। दुर्भरेणोदरेणाहं प्राणैरपि विडम्बितः ॥ १३ ॥ दुःखं दुःखमिति ब्रूयान्मानवो नरकं प्रति। दारिद्र्यादधिकं दुःखं न भूतं न भविष्यति ॥ १४ ॥ शून्यमपुत्रस्य गृहं चिरशून्यं नास्ति यस्य सन्मित्रम्। मूर्खस्य दिशः शून्याः सर्वं शून्यं दरिद्रस्य ॥ १५ ॥ पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलहीनम्। सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च ॥ १६ ॥ रोगी चिरप्रवासी परान्नभोजी परावसथशायी। यज्जीवति तन्मर-

---

१. दुन्दुभिध्वनिलुप्तेव २ प्राणान्धारयतु ३ आकाशम्, (पक्षे) वस्त्रम्. ४ खेदं प्राप्नोमि ५ मणियुक्तं यत्कङ्कणं तेन वर्जितम् ६ अत्यन्तम् ७ मृण्मयपात्रम् ८ धान्यकणरहितम् ९ अग्नि

णं यन्मरणं सोऽस्य विश्रामः ॥ १७ ॥ अम्बा तुष्यति न मया न स्नुषया सापि नाम्बया न मया । अहमपि न तया न तया वद राजन्कस्य दोषोऽयम् ॥ १८ ॥ [1]पृथुकार्तस्वरपात्रं [2]भूषितनिःशेषपरिजनं देव । [3]विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥ १९ ॥ दारिद्र्यान्मरणाद्वा मरणं संरोचते न दारिद्र्यम् । अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ २० ॥ दारिद्र्य भो त्व परमं विवेकि[4] गुणाधिके पुंसि सदानुरक्तम् । विद्याविहीने गुणवर्जिते च मुहूर्तमात्रं न रतिं[5] करोषि ॥ २१ ॥ दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा[6] । विपन्नदेहे[7] मयि मन्दभाग्ये[8] ममेति चिन्ता क्व गमिष्यसि त्वम् ॥२२॥ एको हि दोषो गुणसंनिपाते[9] निमज्जतीन्दोरिति यो[10] बभाषे । न तेन दृष्ट कविता समस्तं दारिद्र्यमेकं गुणकोटिहारि[11] ॥ २३ ॥ धनैर्विमुक्तस्य नरस्य लोके किं जीवितेनादित एव तावत् । यस्य प्रतीकारनिरर्थकत्वात्कोपप्रसादा विफलीभवन्ति ॥ २४ ॥ अहो नु कष्टं सततं प्रवासस्ततोऽतिकष्टः परगेहवासः । कष्टाधिका नीचजनस्य सेवा ततोऽतिकष्टा धनहीनता च ॥ २५ ॥ वरं वनं व्याघ्रगजेन्द्रसेवितं द्रुमालयं पत्रफलाम्बुभोजनम् । तृणानि शय्या वसनं च वल्कलं न बन्धुमध्ये धनहीनजीवनम् ॥ २६ ॥ यदा तु भाग्यक्षयपीडितां दशां नरः कृतान्तोपहितां प्रपद्यते । तदास्य मित्राण्यपि यान्त्यमित्रतां चिरानुरक्तोऽपि विरज्यते जनः ॥ २७ ॥ अयं [12]पटो मे पितुरङ्गभूषणं पितामहाद्यैरुपभुक्तयौवनः । अलंकरिष्यत्यथ पुत्रपौत्रकान्मयाधुना पुष्पवदेव धार्यते ॥ २८ ॥ अर्था न सन्ति न च मुञ्चति मां दुराशा त्यागे रतिं वहति दुर्ललितं मनो मे । याच्ञा हि [13]लाघवकरी स्ववधे च पापं प्राणाः स्वयं व्रजत किं प्रविलम्बितेन[14] ॥ २९ ॥ धनं यदि गतं गतं चरणयुग्मरेणूपमं धरा यदि गता गता कथय मे किमेतावता । इदं पुनररुंतुदं धनिगणैरिदानीतनैर्दरिद्रगणनाविधौ यदहमङ्कपाते धृतः ॥३०॥ निवासश्चिन्तायाः परपरिभवो वैरमपरं जुगुप्सा मित्राणां स्वजनजनविद्वेषकरणम् । वनं गन्तुं बुद्धिर्भवति च कलत्रात्परिभवो हृदिस्थः शोकाग्निर्न च दहति संतापयति च॥३१॥अये लाजानुच्चैः पथि वचनमाकर्ण्य गृहिणी शिशोः कर्णौ यत्नात्सुपिहितवती[15] दीनवदना । मयि क्षीणोपाये यदकृत दृशावश्रुशबले तदन्तःशल्यं मे त्वमिव पुनरुद्धर्तुमुचितः ॥ ३२ ॥ [16]मा रोदीश्चिरमेहि वस्त्ररहितान्दृष्ट्वाद्य बालानिमानायातस्तव वत्स दास्यति पिता

१ पृथूनि कार्तस्वरस्य सुवर्णस्य पात्राणि यस्मिंस्तत्; (पक्षे) पृथुकानां बालानामार्तस्वरा रुदितशब्दास्तेषां पात्रं भाजनम् २ भूषिता अलंकृता निःशेषा परिजना यस्मिन्; (पक्षे) भुवि उषिता निःशेषा परिजना यस्मिन् ३. विलसन्त्यः शोभमानाः करेणवो हस्तिन्यस्ताभिर्गहनं निबिडम्, (पक्षे बवयोः सावर्ण्यात्) बिले सन्त एव सत्का बिलवर्तिनो ये रेणवो धूलयस्तैर्गहनं व्याप्तम्. ४ विचारशीलम् ५. प्रीतिम् ६ स्थित्वा ७ विनष्टशरीरे ८ हतभाग्ये ९ गुणसमुदाये १० कालिदास "एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः" इति कुमारसम्भवस्थे पद्ये ११ कोटिगुणनाशकमिति भाव १२ वस्त्रम्. १३. लघुत्वकारिणी १४ कालदैर्घ्येणेति यावत् १५ छादितवती १६ रोदनं मा कुरु.

ग्रैवेयकं[1] वाससी[2]। श्रुत्वैवं गृहिणीवचांसि निकटे कुड्यस्य[3] निष्किंचनो[4] निःश्वस्याश्रुजलप्लुतप्लुतमुखः पान्थः पुनः प्रस्थित. ॥ ३३ ॥ कन्थाखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकं रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलालोच्चयः[5]। दंपत्योरिति जल्पतोर्निशि यदा चोरः प्रविष्टस्तदा लब्धं कर्पटमन्यतस्तदुपरि[6] क्षिप्त्वा रुदन्निर्गतः ॥ ३४ ॥ वृद्धोऽन्धः पतिरेष मञ्चकगतः[7] स्थूणावशेषं[8] गृहं कालोऽभ्यर्णजलागमः[9] कुशलिनी वत्सस्य वार्तापि नो। यत्नात्संचिततैलबिन्दुघटिका भग्नेति पर्याकुला[10] दृष्ट्वा गर्भभरालसां निजवधूं[11] श्वश्रूश्चिरं रोदिति ॥ ३५ ॥ नो सेवा विहिता गुरोरपि मनाङ्नो वा कृतं पूजनं देवानां विधिवन्न वा शिव शिव स्निग्धादयः सेविताः। किं तु त्वच्चरणौ सरस्वति रसादा जन्मनः सेवितौ तस्मान्मां विजहाति सा भगवती शङ्के सपत्नी[12] तव ॥ ३६ ॥ क्षुत्क्षामाः शिशवः शवा इव भृशं मन्दाशया बान्धवा लिप्ता जर्जरकर्करी[13] जतुलवैर्नो[14] मां तथा बाधते। गेहिन्या त्रुटितांशुकं घटयितुं कृत्वा सकाकु स्मितं[15] कुप्यन्ती प्रतिवेशिलोकगृहिणी सूचीं यथा याचिता ॥ ३७ ॥ दग्धं खाण्डवमर्जुनेन बलिना दिव्यैर्द्रुमैः सेवितं दग्धा वायुसुतेन रावणपुरी लङ्का पुनः स्वर्णभूः। दग्धः पञ्चशरः[16] पिनाकपतिना तेनाप्ययुक्तं कृतं दारिद्र्यं जनतापकारकमिदं केनापि दग्धं न हि ॥ ३८ ॥ उत्तिष्ठ क्षणमेकमुद्वह[17] सखे दारिद्र्यभारं मम श्रान्तस्तावदहं चिरान्मरणजं सेवे त्वदीयं सुखम्। इत्युक्तं धनवर्जितस्य वचनं श्रुत्वा श्मशाने शवो दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वैव तूष्णीं स्थितः ॥ ३९ ॥ भद्रे वाणि ममानने कुरु दयां वर्णानुपूर्व्या चिरं चेतः स्वास्थ्यमुपैहि याहि करुणे प्रज्ञे स्थिरत्वं व्रज। लज्जे तिष्ठ पराङ्मुखी क्षणमहो तृष्णे पुरः स्थीयतां पापो यावदहं ब्रवीमि धनिनां देहीति दीनं वचः ॥ ४० ॥ यो गङ्गामतरत्तथैव यमुनां यो नर्मदां शर्मदां[18] का वार्ता सरिदम्बुलङ्घनविधौ यश्चार्णवांस्तीर्णवान्। सोऽस्माकं चिरमास्थितोऽपि सहसा दारिद्र्यनामा सखा त्वद्दानाम्बुसरित्प्रवाहलहरीमग्नो न संभाव्यते[19] ॥ ४१॥ दारिद्र्याद्ध्रियमेति[20] ह्रीपरिगतः[21] सत्त्वात्परिभ्रश्यते निःसत्त्वः परिभूयते परिभवान्निर्वेदमापद्यते[22]। निर्विण्णः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम्[23] ॥ ४२ ॥ शीतेनाध्युषितस्य माघजलवच्चिन्तार्णवे मज्जतः शान्ताग्नेः स्फुरिताधरस्य धमतः क्षुत्क्षामकुक्षेर्मम। निद्रा क्वाप्यवमानितेव दयिता संत्यज्य दूरं गता सत्पात्रप्रतिपादितेव कमला नो हीयते शर्वरी ॥ ४३ ॥ दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न संतिष्ठते सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः। सत्त्वं

---

१ कण्ठभूषणम् २ वस्त्रे ३. भित्ते. ४ दरिद्र. ५ तुषसचय ६ जीर्णवस्त्रखण्डम् ७ शय्या ८ गृहस्तम्भ. ९ समीप १० व्याकुला ११ स्नुषाम् १२ लक्ष्मीरित्यर्थः १३ चालनीसदृश सच्छिद्र कुम्भ १४ लाक्षाखण्डै १५ स्तवसहित स्मितम् १६ मदन १७ धारय १८ सुखदात्रीम् १९ न दृश्यते २० लज्जा प्राप्नोति. २१ पराजित २२ खेदम् २३ स्थानम्

ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते पापं कर्म च यत्परैरपि कृतं तत्तस्य संभाव्यते ॥ ४४ ॥ सङ्गं नैव हि कश्चिदस्य कुरुते संभाष्यते नादरात्संप्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते। दूरादेव महाजनस्य विरहत्यल्पच्छदो लज्जया मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ ४५ ॥ पौरेभ्यो न भयं न दण्डपतनं त्रासो न वा भूपतेर्निःसङ्गं शयनं निशासु गमनं दुर्गेषु मार्गेषु च। दारिद्र्यं सुखमेव केवलमहो दोषद्वयं वर्तते जाया निन्दति अङ्गभोगसमये मुञ्चन्ति वै याचकाः ॥ ४६ ॥ वासश्चर्म विभूषणं शवशिरो भस्माङ्गलेपः सदा त्वेको गौः स च लाङ्गलाद्यकुशलः संपत्तिरेतादृशी। इत्यालोच्य विमुच्य शंकरमगाद्रत्नाकरं जाह्नवी कष्टं निर्धनिकस्य जीवितमहो दारैरपि त्यज्यते ॥ ४७ ॥ मद्गेहे मशकीव मूषकवधूर्मूषीव मार्जारिका मार्जारीव शुनी शुनीव गृहिणी वाच्यः किमन्यो जनः। मूर्च्छापन्नशिशून्सून्विजहतो दृष्ट्वा तु झिल्लीरवा लूता तन्तुवितानसंवृतमुखी चुल्ली चिरं रोदिति ॥ ४८ ॥ पीठाः कच्छपवत्तरन्ति सलिले संमार्जनी मीनवद्दर्वी सर्पविचेष्टितानि कुरुते संत्रासयन्ती शिशून्। शूर्पार्धावृतमस्तका च गृहिणी भित्तिप्रपातोन्मुखी रात्रौ पूर्णतडागसंनिभमभूद्राजन्मदीयं गृहम् ॥ ४९ ॥

---

## दानप्रशंसा।

अनुकूले[1] विधौ देयं यतः पूरयिता[2] हरिः। प्रतिकूले विधौ देयं यतः सर्वं हरिष्यति ॥ १ ॥ यद्ददाति यदश्नाति तदेव धनिनो धनम्। अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि॥ २॥ यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने। तत्ते वित्तमहं मन्ये शेषमन्यस्य रक्षसि ॥ ३ ॥ त्याग एको गुणश्लाघ्यः किमन्यैर्गुणराशिभिः। त्यागाज्जगति पूज्यन्ते पशुपाषाणपादपाः ॥ ४ ॥ भवन्ति नरकाः पापात्पापं दारिद्र्यसंभवम्। दारिद्र्यमप्रदानेन तस्माद्दानपरो भवेत् ॥ ५ ॥ ग्रासादपि तदर्धं च कस्मान्नो दीयतेऽर्थिषु। इच्छानुरूपो विभवः कदा कस्य भविष्यति॥ ६॥ गौरवं प्राप्यते दानान्न तु वित्तस्य सचयात्। स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः॥ ७॥ दरिद्रान्भर कौन्तेय मा प्रयच्छेश्वरे धनम्। व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधैः ॥ ८॥ दातव्यमिति यद्दानं दीयतेऽनुपकारिणे। देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः ॥ ९ ॥ उपार्जितानां वित्तानां त्याग एव हि रक्षणम्। तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥ १० ॥ दानोपभोगवन्ध्या या सुहृद्भिर्या न भुज्यते। पुंसां समाहिता लक्ष्मीरलक्ष्मीः क्रमशो भवेत् ॥ ११ ॥ किं तया क्रियते लक्ष्म्या या वधूरिव केवला। या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥ १२ ॥ दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य। यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ १३ ॥ यो न ददाति न भुङ्क्ते सति

---

१ आगमनानि. २ दैवे ३ पूरणकर्ता ४. अनेकोपभोग्या ५ नाश इत्यर्थः.

विभवे नैव तस्य तद्द्रव्यम्। तृणमयकृत्रिमपुरुषो रक्षति सस्यं परस्यार्थे ॥ १४ ॥ दातव्यं भोक्तव्यं सति विभवे संग्रहो न कर्तव्यः। पश्यामि मधुकरीणां संचितमर्थं हरन्त्यन्ये॥१५॥ मीयतां कथमभीप्सितमेषां दीयतां द्रुतमयाचितमेव। तं धिगस्तु कलयन्नपि वाञ्छामर्थिवागवसरं सहते यः ॥१६॥ प्रापितेन चटुकाकुविडम्बं लम्भितेन बहुयाचनलज्जाम्। अर्थिना यदघमर्जति दाता तन्न लुम्पति विलम्ब्य ददानः॥ १७ ॥ यत्प्रदेयमुपनीय वदान्यैर्दीयते सलिलमर्थिजनाय। याचनोक्तिविफलत्वविशङ्कात्रासमूर्च्छनचिकित्सितमेतत् ॥ १८ ॥ अर्थिने न तृणवद्धनमात्रं किंतु जीवनमपि प्रतिपाद्यम्। एवमाह कुशवज्जलदायी द्रव्यदानविधिरुक्तिविदग्धः ॥ १९ ॥ पङ्कसंकरविगर्हितमर्हं न श्रियः कमलमाश्रयणाय। अर्थिपाणिकमलं विमलं तद्वासवेश्म विदधीत सुधीस्तत् ॥२०॥ दानपात्रमधमर्णमिहैकग्राहि कोटिगुणितं दिवि दायि। साधुरेति सुकृतैर्यदि कर्तुं पारलौकिककुसीदमसीदत्॥२१॥ अर्थो विनैवार्थनयोपसीदन्नाल्पोऽपि धीरैरवधीरणीयः। मान्येन मन्ये विधिना वितीर्णः स प्रीतिदायो बहुमन्तुमर्हः॥२२॥ तुरगशतसहस्रं गोगजानां च लक्षं कनकरजतपात्रं मेदिनी सागरान्तम्। विमलकुलवधूनां कोटिकन्याश्च दद्यान्नहि नहि सममेतैरन्नदानं प्रदानम् ॥२३॥ कामं वाचः कतिचिदफलाः सन्तु लोके कवीनां सन्त्येवान्या मधुरिपुकथा संस्तवात्कामदोग्ध्र्यः। वित्तं कामं भवतु विफलं दत्तमश्रोत्रियेभ्यः पात्रे दत्तैर्भवति हि धनैर्धन्यता भूरिदातुः॥२४॥ मेरुर्दूरगतो महान्हिमगिरिः प्रालेयमात्रोऽभवच्चन्द्रः श्रीसहितोऽपि याचकभयात्क्षीणत्वमालम्बते। कौपीनं धृतवान्हरोऽपि सहसा विष्णुर्जले सस्थितो वारां राशिरपेयतामुपगतः को नाम दातुं क्षमः ॥२५॥ देयं भो अधने धनं सुकृतिभिर्नो संचितं सर्वदा श्रीकर्णस्य बलेश्च विक्रमपतेरद्यापि कीर्तिः स्थिता। आश्चर्यं मधु दानभोगरहितं नष्टं चिरात्संचितं निर्वाणादपि पाणिपादयुगलं घर्षन्त्यहो मक्षिकाः ॥ २६ ॥

---

## लोभनिन्दा।

लोभः प्रतिष्ठा पापस्य प्रसूतिर्लोभ एव च। द्वेषक्रोधादिजनको लोभः पापस्य कारणम् ॥ १ ॥ लोभात्क्रोधः प्रभवति लोभात्कामः प्रजायते। लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ॥ २ ॥ लोभात्क्रोधः प्रभवति क्रोधाद्द्रोहः प्रवर्तते। द्रोहेण नरकं याति शास्त्रज्ञोऽपि विचक्षणः ॥ ३ ॥ मातरं पितरं पुत्रं भ्रातरं वा सुहृत्तमम्। लोभाविष्टो नरो हन्ति स्वामिनं वा सहोदरम् ॥ ४ ॥ लोभेन बुद्धिश्चलति लोभो जनयते तृषाम्। तृषार्तो दुःखमाप्नोति परत्रेह च मानवः ॥ ५ ॥ लोभाविष्टो नरो वित्तं वीक्षते न स चा-

१ तृणकृतकपटपुरुषः सस्यरक्षणार्थमुच्चप्रदेशे श्वापदभयहेतुस्तृणादिभिः पुरुषः क्रियत इति प्रसिद्धम्. २. ऐश्वर्ये ३. भ्रमरीणाम् ४. हास्यत्वम्. ५. तिष्ठतीति शेषः.

पदम् । दुग्धं पश्यति मार्जारो यथा न लगुडाहतिम् ॥ ६ ॥ प्रायेण धनिनामेव धनलोभो निरन्तरम् । पश्य कोटिद्वयोपेतं लक्षाय प्रणतं धनुः ॥ ७ ॥ नात्यर्थमर्थार्थितया लुब्धमुद्वेजयेज्जनम् । अब्धिर्दत्वाश्वरत्नं स्त्रीर्मथ्यमानोऽसृजद्विषम् ॥ ८ ॥ लोभः सदा विचिन्त्यो लुब्धेभ्यः सर्वतो भयं दृष्टम् । कार्याकार्यविचारो लोभविमूढस्य नास्त्येव ॥ ९ ॥ सत्यप्रशमतपोभिः शस्त्रधनैः शास्त्रवेदिभिर्विजितः । लोभो वत प्रविष्टः कुटिलं हृदयं किरातीनाम् ॥ १० ॥ स्नेहोपपन्न इति पूर्णदशाविशेषशाली स्वमात्मनि वसुप्रकरं निधाय । लब्धोदये तमथ गृह्णति पन्नबन्धौ दीपा भवन्ति कलुषा बलवान्हि लोभः ॥ ११ ॥ यद्दुर्गामटवी[1]मटन्ति विकटं क्रामन्ति देशान्तरं गाहन्ते गहन समुद्रमथनं क्लेशं कृपि कुर्वते । सेवन्ते कृपणं पतिं गजघटासंघट्टदुःसंचरं सर्पन्ति प्रधनं[3] धनान्धितधियस्तल्लोभविस्फूर्जितम् ॥ १२ ॥

---

## उदारप्रशंसा ।

शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता दशसहस्रेषु दाता भवति वा न वा ॥ १ ॥ दातारं कृपणं मन्ये मृतोऽप्यर्थं न मुञ्चति । अदाता हि धनत्यागी धनं हित्वा हि गच्छति ॥ २ ॥ रक्षन्ति कृपणाः पाणौ द्रव्यं क[5]व्यमिवात्मनः । तदेव सन्तः सततमुत्सृजन्ति यथा मलम् ॥ ३ ॥ याचितो यः प्रहृष्येत दत्वा च प्रीतिमान्भवेत् । तं दृष्ट्वाप्यथवा श्रुत्वा नरः स्वर्गमवाप्नुयात् ॥ ४ ॥ आकारमात्रे विज्ञाते संपादितमनोरथाः । ते धन्या ये न शृण्वन्ति दीनाः कामार्थिनां गिरः ॥ ५ ॥ कर्णलङ्घिगुणोत्कर्षास्त्यागिनो धन्विनस्तथा । निष्फलान्न विमुञ्चन्ति मा[6]र्गणान्संमुखे स्थितान् ॥ ६ ॥ देहि देहीति जल्पन्ति त्यागिनोऽप्यर्थिनोऽपि च । आलोकयन्ति भारः स्यादस्ति नास्तीति न क्वचित् ॥ ७ ॥ युध्यन्ते पक्षिपशवः पठन्ति शुकसारिकाः । दातुं शक्नोति यो वित्त स शूरः स च पण्डितः ॥ ८ ॥ अयं निजः परो वेति गणना लघुचेतसाम् । उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ ९ ॥ अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत् । तदवस्था पुनर्दैवान्नान्यस्य मुखमीक्षते ॥ १० ॥ लक्ष्मीपयोधरोत्सङ्गकुङ्कुमारुणितो हरेः । धन्यो बलिः स येनास्य भिक्षापात्रीकृतः करः ॥ ११ ॥ कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः । ददौ दधीचिरस्थीनि नास्त्यदेयं महात्मनाम् ॥ १२ ॥ दाता नीचोऽपि सेव्यः स्यान्निष्फलो न महानपि । जलार्थी वारिधिं त्यक्त्वा पश्य कूपं निषेवते ॥ १३ ॥ सैव परं न विनश्यति तनुरपि या श्रीर्निवेशिता सत्सु । अवशिष्यते हिमांशोः सैव कला या स्थिरा शंभौ ॥ १४ ॥

---

१ गहनाम्. २ अरण्यम् ३ युद्धम्. ४. विलास.. ५ मांसम्. ६ बाणान्, (पक्षे) याचकान्. ७. स्वकीय.. ८ समुद्रम् ९. अल्पा

## कृपणनिन्दा।

कृपणेन समो दाता न भूतो न भविष्यति। अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥ १ ॥ यदर्ज्यते परिक्लेशैरर्जितं यन्न भुज्यते। विभज्यते यदन्तेऽन्यैः कस्यचिन्मास्तु तद्धनम् ॥ २ ॥ यत्करोत्यरतिं क्लेश तृष्णां मोहं प्रजागरम्। न तद्धनं कदर्याणां हृदये व्याधिरेव सः ॥ ३ ॥ मृत्युः शरीरगोप्तारं धनरक्षं वसुंधरा। दुश्चारिणीव हसति स्वपतिं पुत्रवत्सलम् ॥ ४ ॥ त्यागभोगविहीनेन धनेन धनिनो यदि। भवामः किं नु तेनैव धनेन धनिनो वयम् ॥ ५ ॥ दानोपभोगरहिता दिवसा यस्य यान्ति वै। स कर्मकारभस्त्रेव श्वसन्नपि न जीवति ॥ ६ ॥ अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयम्। आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥ ७ ॥ कृपणेन शवेनैव मृतेनापि न दीयते। मांसं वर्धयता तेन काकस्योपकृतिः कृता ॥ ८ ॥ बोधयन्ति न याचन्ते भिक्षाद्वारा गृहे गृहे। दीयतां दीयतां नित्यमदातुः फलमीदृशम् ॥ ९ ॥ द्वारं द्वारं रटन्तीह भिक्षुकाः पात्रपाणयः। दर्शयन्त्येव लोकानामदातुः फलमीदृशम् ॥ १० ॥ न दातुं नोपभोक्तुं च शक्नोति कृपणः श्रियम्। किं तु स्पृशति हस्तेन नपुंसक इव स्त्रियम् ॥ ११ ॥ किंशुके किं शुकः कुर्यात्फलितेऽपि बुभुक्षितः। अदातारि समृद्धेऽपि किं कुर्युरुपजीविनः ॥ १२ ॥ वरं विभवहीनेन प्राणैः संतर्पितोऽनलः। नोपचारपरिभ्रष्टः कृपणः प्रार्थितो जनः ॥ १३ ॥ उदारचरितस्त्यागी याचितः कृपणोऽधिकः। एको धनं ततः प्राणानन्यः प्राणांस्ततो धनम् ॥ १४ ॥ नोपभोक्तुमपि क्लीबो जानात्युपचितां श्रियम्। ग्राम्यो विरागयत्येव रमयन्नपि कामिनीम् ॥ १५ ॥ कृपणः स्ववधूसङ्गं न करोति भयादिव। भविता यदि मे पुत्रः स मे वित्तं हरेदिति ॥ १६ ॥ यदधोऽधः क्षितौ वित्तं निचखान मितंपचः। तदधोनिलयं गन्तुं चक्रे पन्थानमग्रतः ॥ १७ ॥ निजसौख्यं निरुन्धानो यो धनार्जनमिच्छति। परार्थे भारवाहीव क्लेशस्यैव हि भाजनम् ॥ १८ ॥ असंभोगेन सामान्य कृपणस्य धनं परैः। अस्येदमिति संबन्धो हानौ दुःखेन गम्यते ॥ १९ ॥ सति द्राक्षाफले क्षीरे मृदामास्वादने मुदः। अहो मातुरियं रीतिः कृपणे गर्भवर्तिनि ॥ २० ॥ अदातुर्मानसं क्वापि न स्पृशन्ति कवेर्गिरः। दोषायैवातिवृद्धस्य विलासास्तरुणीकृताः ॥ २१ ॥ शरणं किं प्रपन्नानि विषवन्मारयन्ति वा। न त्यजन्ते न भुज्यन्ते कृपणेन धनानि यत् ॥ २२ ॥ दैववशादुत्पन्ने सति विभवे यस्य नास्ति भोगेच्छा। न च परलोकसमीहा स भवति धनपालको मूर्खः ॥ २३ ॥ उपभोगकातराणां पुरुषाणामर्थसंचयपराणाम्। कन्यामणिरिव सदने तिष्ठत्यर्थः परस्यार्थे ॥ २४ ॥ यदि भवति धनेन धनी क्षितितलनिहितेन

१ सपाद्यते २ अवसाने ३ अस्वस्थत्वम् ४ विचाराशक्तिम् ५ कृपणानाम् ६. पीडैव. ७ कस्य का उपकृतिरुपकारः कृता अपि तु न कस्यापि कापोत्यर्थ ; ( पक्षे ) काकस्य पक्षिणः. ८. त्यजतीति शेष.. ९ आरोपयामास. १०. पातालम् ११. इच्छा. १२. भूम्यन्तर्गतेन.

भो[1]गरहितेन। तस्माद्वयमपि धनिनस्तिष्ठति नः काञ्चनो मेरुः ॥ २५ ॥ नन्दनरेन्द्रद्रविणैर्दुष्कृतं हि किमपि विहितमतिघोरम्। वसुधातलोष्मपाको विरमति नाद्यापि यत्नेभ्यः ॥ २६ ॥ [2]दृढतरनिबद्धमुष्टेः कोश[3]निषण्णस्य सहजमलिनस्य। कृपणस्य कृपाणस्य च केवलमाका[4]रतो भेदः ॥ २७ ॥ कृपणस्य समृद्धीनां भोक्तारः सन्ति केचिदतिनिपुणाः। जलसंपदोऽम्बु[5]राशेर्यान्ति वशं शश्वदौ[6]र्वाग्नेः ॥ २८ ॥ प्राप्तानपि नो लभते भोगान्भोक्तुं स्वकर्मभिः कृपणः। मु[7]खपाकः किल भवति द्राक्षापाके [8]बलिभुजां हि ॥ २९ ॥ अतिसाहसमतिदुष्करमत्याश्चर्यं च दानमर्थानाम्। योऽपि ददाति शरीरं न ददाति स वित्तलेशमपि ॥ ३० ॥ केचित्स्वभावलुब्धास्तीव्रतरां यातनामपि सहन्ते। न तु संत्यजन्ति वित्तं मात्सर्यमिवाधमाः सततम् ॥ ३१ ॥ मेघा इवातिलुब्धा भवन्ति धनलवणवारिबहुतृष्णाः। तृणलवमिव निजदेहं त्यजन्ति लेशं न वित्तस्य ॥ ३२ ॥ अ[9]र्थिनि कवयति क[10]वयति पठति च पठति स्तवोद्यतं स्तौति। पश्चाद्यामीत्युक्ते कृपणः प्र[11]णतोऽञ्जलिं कुरुते ॥ ३३ ॥ याचमानजनमानसवृत्तेः पूरणाय बत जन्म न यस्य। तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ ३४ ॥ मा धनानि कृपणः खलु जीवंस्तृष्णयार्पयतु जातु परस्मै। तत्र नैष कुरुते मम चित्रं यत्तु नार्पयति तानि मृतोऽपि ॥ ३५ ॥ लोक एष परलोकमुपेता हा विधाय निधने धनमेकः। इत्यमुं खलु तदस्य निनीषत्यर्थिबन्धुरुद[12]यद्दयचित्तः ॥ ३६ ॥ फलं स्वेच्छालभ्यं प्रतिवनम[13]खेदं क्षितिरु[14]हां पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम्। मृदुस्पर्शा शय्या सुललितलता पल्लवमयी सहन्ते संतापं तदपि धनिनां द्वारि कृपणाः ॥ ३७ ॥ जहाति सहसासनं [15]झटिति पृच्छति स्वागतं नमस्यति मुहुर्मुहुः [16]श्रुतिमनोहरं भाषते। ददाति कुसुमं फलं शिथिलयत्यभीष्टां क्रियामहो न परिचीयते कृपणवञ्चना चातुरी ॥ ३८ ॥ अ[17]यश्चणकचर्वणं फणिफणामणेः कर्षणं करेण गिरितोलनं जलनिधेः पदा लङ्घनम्। प्र[18]सुप्तहरिबोधनं निशि[19]तखड्गसंस्पर्शनं कदाचिदखिलं भवेन्न च शठाद्धनस्यार्जनम् ॥ ३९ ॥

---

## याचकनिन्दा।

वेप[20]थुर्मलिनं वक्त्रं दीना वाग्गद्गदः स्वरः। मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ १ ॥ विद्यावतः कुलीनस्य धनं याचितुमिच्छतः। कण्ठे पारावतस्येव वाक्करोति गताग-

---

१ उपभोगहीनेन. २ दृढतरमतिनिबिड निबद्धा मुष्टिर्येन, (पक्षे) दृढतर निबद्धा मुष्टिस्त्सरुर्यस्य. ३ कोशागारे निषण्णस्य स्थितस्य, (पक्षे) कोशे खड्गपिधाने स्थितस्य ४ आकारत आकृत्या भेद; (पक्षे) कृपणशब्देऽकारो वर्तते, कृपाणशब्द आकारो वर्तते, एतावतैव भेदभिन्नत्वम् कृपाण. खड्ग ५ समुद्रस्य. ६ वाडवाग्नेः ७ मुखरोग ८ काकानाम् ९ याचके १०. कविता करोति ११. नम्रः. १२ उद्यत्करुण चित्त यस्य १३. क्लेशरहितम् १४ वृक्षाणाम् १५. सत्वरम्. १६. कर्णमधुरम् १७. लोहम् १८. निद्रित-सिंहोत्थापनम्. १९. तीक्ष्ण . २० कम्प .

तम् ॥ २ ॥ दक्षिणाशाप्रवृत्तस्य प्रसारितकरस्य च । तेजस्तेजस्विनोऽर्कस्य ह्रीयतेऽन्यस्य का कथा ॥ ३ ॥ साधुरेवार्थिभिर्याच्यः क्षीणवित्तोऽपि सर्वदा । शुष्केऽपि हि नदी मार्गे खन्यते सलिलार्थिभिः ॥ ४ ॥ तृणादपि लघुस्तूलस्तूलादपि च याचकः । वायुना किं न नीतोऽसौ मामयं याचयेदिति ॥ ५ ॥ देहीति वचनं श्रुत्वा हृदिस्थाः पञ्चदेवताः । मुखान्निर्गत्य गच्छन्ति श्रीह्रीधीधृतिकीर्तयः ॥ ६ ॥ नवीनदीनभावस्य याचकस्यातिमानिनः । वचोजीवितयोरासीत्पुरोनिःसरणे रणः ॥ ७ ॥ अदृष्टमुखभङ्गस्य युक्तमन्धस्य याचितुम् । अहो बत महत्कष्टं चक्षुष्मानपि याचते ॥ ८ ॥ गतेर्भङ्गः स्वरो हीनो गात्रे खेदो महद्भयम् । मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ ९ ॥ दारिद्र्यानलसंतापः शान्तः संतोषवारिणा । याचकाशाविघातान्तर्दाहः केनोपशाम्यते ॥ १० ॥ दरिद्रस्य परा मूर्तिर्याच्ञा न द्रविणाल्पता । अपि कौपीनवाञ्शंभुस्तथापि परमेश्वरः ॥ ११ ॥ वदनाच्च बहिर्यान्ति प्राणा याच्ञाक्षरैः सह । ददामीत्यक्षरैर्दातुः पुनः कर्णाद्विशन्ति हि ॥ १२ ॥ देहीति वक्तुकामस्य यद्दुःखमुपजायते । दाता चेत्तद्विजानीयाद्दद्यात्स्वपिशितान्यपि ॥ १३ ॥ काक आह्वयते काकान्याचको न तु याचकान् । काकयाचकयोर्मध्ये वरं काको न याचकः ॥ १४ ॥ तीक्ष्णधारेण खड्गेन वरं जिह्वा द्विधा कृता । न तु मानं परित्यज्य देहि देहीति भाषितम् ॥ १५ ॥ पुरतः प्रेरयत्याशा लज्जा पृष्ठावलम्बिनी । ततो लज्जाशयोर्मध्ये दोलायत्यर्थिनां मनः ॥ १६ ॥ करान्प्रसार्य रविणा दक्षिणाशावलम्बिना । न केवलमनेनात्मा दिवसोऽपि लघूकृतः ॥ १७ ॥ एकेन तिष्ठताधस्तादन्येनोपरि तिष्ठता । दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥ १८ ॥ हृदि लज्जोदरे वह्निः स्वभावादग्निरुच्छिखः । तेन मे दग्धलज्जस्य पुनरागमनं नृप ॥ १९ ॥ सेवेव मानमखिलं ज्योत्स्नेव तमो जरेव लावण्यम् । हरिहरकथेव दुरितं गुणशतमप्यर्थिता हरति ॥ २० ॥ याचकवीरो धन्यः करदानग्राहकः स्वदातृभ्यः । कुरुते पराङ्मुखं वा ह्यतिनम्रं वा हरत्यसौ पुण्यम् ॥ २१ ॥ तावन्महतां महती यावत्किमपि हि न याच्यते लोकम् । बलिमनुयाचनसमये श्रीपतिरपि वामनो जातः ॥ २२ ॥ अनुसरति करिकपोलं भ्रमरः श्रवणेन ताड्यमानोऽपि । गणयति न तिरस्कारं दानान्धविलोचनो नीचः ॥ २३ ॥ कतरत्पुरहरपरुषं हालाहलकवलयाचनावचसोः । एकैव तव रसज्ञा तदुभयरसतारतम्यज्ञा ॥ २४ ॥ गुरुतामुपयाति यन्मृतः पुरुषस्तद्विदितं मयाधुना । ननु लाघवहेतुरर्थिता न मृते तिष्ठति सा मनागपि ॥ २५ ॥ याचना हि पुरुषस्य महत्त्वं नाश-

१ दक्षिणदिशाया प्रवर्तमानस्य; (पक्षे) दक्षिणाया आशा तया प्रवृत्तस्य. २ प्रसारिता विस्तारिताः करा किरणा येन, (पक्षे) प्रसारित करौ हस्तौ येन. ३ ह्रास प्राप्नोति. ४. कार्पास. ५ अहमहमिकया अग्रतो निःसरणे. ६. मांसानि ७ किरणान्; (पक्षे) हस्तान् ८ दक्षिणदिक्, (पक्षे) दक्षिणाया आशा स्पृहा. ९ चन्द्रकान्ति १०. याचकत्वम् ११. कराद्धस्ताद्दानस्य ग्राहक, (पक्षे) करो राजग्राह्यो दण्डस्तस्य दान समर्पण तादृक १२ लक्ष्मीपतिरपि १३ ह्रस्व, (पक्षे) लघु. १४. किंचिदपि

यत्यखिलमेव तथा हि । सद्य एव भगवानपि विष्णुर्वामनो भवति याचितुमिच्छन् ॥ २६ ॥ उत्तमर्णधनदानशङ्कया पावकोत्थशिखया हृदिस्थया । देव दग्धवसना सरस्वती नास्यतो बहिरुपैति लज्जया ॥ २७ ॥ नाक्षराणि पठता किमपाठि पाठितोऽपि किमु विस्मृत एव । इत्थमर्थिजनसंशयदोलाखेलनां खलु चकार नकारः ॥ २८ ॥ संतापितानां मधुरैर्वचोभिर्मिथ्योपचारैश्च वशीकृतानाम् । आशावतां श्रद्दधतां च लोके किमर्थिनां वञ्चयितव्यमस्ति ॥ २९ ॥ स्वार्थं धनानि धनिकात्प्रतिगृह्णतो यदास्यं भजेन्मलिनतां किमिदं विचित्रम् । गृह्णन्परार्थमपि वारिनिधेः पयोऽपि मेघोऽयमेति सकलोऽपि च कालिमानम् ॥ ३० ॥ [1]जनस्थाने भ्रान्तं [2]कनकमृगतृष्णाकुलतया वचो [3]वैदेहीति प्रतिपदमुदश्रु प्रलपितम् । कृतालंकाभर्तुर्वदनपरिपाटीषु[4] रचना मयाप्तं रामत्वं [5]कुशलवसुता न त्वधिगता ॥ ३१ ॥ भ्रातर्धातरशेषयाचकजने वैरायसे सर्वथा यस्माद्विक्रमशालिवाहनमहीभृन्मुञ्जभोजादयः । अत्यन्तं चिरजीविनो न विहितास्ते विश्वजीवातवो मार्कण्डेध्रुवलोमशप्रभृतयः सृष्टाः प्रभूतायुषः ॥ ३२ ॥ उड्डीना [6]गुणपत्रिणः सुखफलान्यारा[7]द्विकीर्णान्यधः पर्यस्ताः परितो यशःस्तवकिताः संपल्लतापल्लवाः । प्रागेवापसृतप्रमोदहरिणच्छायाकथान्तं गता दैन्या[8]रण्यमतंगजेन सहसा भग्नेऽभिमानद्रुमे ॥ ३३ ॥ शूराः केऽपि पुरःस्थितां रिपुनरश्रेणिं सहन्ते सुखं धीराः केचन पञ्चबाणसदृशं कान्ता[9]दृगन्ताहतिम् । केचित्क्रूररवांश्च [10]पञ्चवदनान्दन्तीचपेटान्भटा नैवार्थिप्रकरं प्रसारितकरं कश्चिद्विसोढुं क्षमः ॥ ३४ ॥ आदर्शाय शशाङ्कमण्डलमिदं हार्याय हेमाचलं दीपाय द्युमणिर्महीमिव कथं नो भिक्षवे दत्तवान् । दित्सापल्लवितप्रमोदसलिलव्याकीर्णमन्त्राम्बुजो जानीमो भृगुनन्दनस्तदखिलं न प्रायशो दृष्टवान् ॥ ३५ ॥ दौर्गत्येन समीरिता हृदयतः कण्ठं समालम्बते कण्ठात्कष्टतरं कथं कथमपि प्राप्नोति जिह्वाञ्चलम् । लज्जाकीलककीलितेव निबिडं तस्मान्न निर्यात्यहो वाचा प्राणपरीक्षणेऽपि महतां देहीति नास्तीति च ॥ ३६ ॥ वक्त्राद्गुद्रस मे हठादधिवस त्वं वाणि वक्र मनागीशानां तदनु क्रुधा भजतु मां लक्ष्मीरिमानुद्रुत । पश्चात्तेषु पठत्सु मां प्रति यशोगाथावलीस्तृष्णया वक्त्र मध्यथ वक्रयत्यनुभवन्त्वेतेऽपि तद्यातनाम् ॥ ३७ ॥ तावत्सर्वगुणालयः पटुमतिः साधुः सतां वल्लभः शूरः सच्चरितः कलङ्करहितो मानी कृतज्ञः कविः । दक्षो धर्मरतः सुशीलगुणवांस्तावत्प्रतिष्ठान्वितो यावन्निष्ठुरवज्रपातसदृशं देहीति नो भाषते ॥ ३८ ॥ द्वारे द्वारे परेषामविरलम-

---

१ जनानां स्थानानि नगरपत्तनादीनि तेषु भ्रमण कृतम्; ( पक्षे ) जनस्थाने नासिकाख्यजनपदे परिभ्रमणं कृतम् २ कनकं द्रव्यमेव मृगा , ( पक्षे ) कनकस्य मृगा . ३ वै इति पदच्छेद . देहीति प्रलपितम्; ( पक्षे ) वैदेही जानकीति प्रलपितम् ४. काभर्तु कुत्सितस्वामिनो वदनपरिपाटीषु रचना अलमत्यर्थं कृता, ( पक्षे ) लकाभर्तू रावणस्य वदनपरिपाट्यामिषुरचना बाणरचना कृता. ५ कुशल यद्वसु द्रव्य तद्भावो न सपादित ; ( पक्षे ) कुशलवौ सुतौ यस्या सा वैदेही न प्राप्ता ६ गुणा एव पक्षिण . ७. समीपे. ८ दैन्यमेवारण्यगज.. ९ कान्ताकटाक्षवेधम्. १० सिंहान्

टति द्वारपालैः करालै[1]र्दष्टो योऽप्याहतः सन्रणति गणयति स्वापमानं तु नैव । क्षन्तुं शक्नोति नान्यं स्वसदृशमितरागारमप्याश्रयन्तं भ्राम्यत्यात्मोदरार्थे कथमहह शुना नो समो याचकः स्यात् ॥ ३९ ॥

## परोपकारप्रशंसा ।

परोपकारः कर्तव्यः प्राणैरपि धनैरपि । परोपकारजं पुण्यं न स्यात्क्रतुशतैरपि ॥ १ ॥ धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् । तन्निमित्तो वरं त्यागो विनाशे नियते सति ॥ २ ॥ रविश्चन्द्रो घना वृक्षा नदी गावश्च सज्जनाः । एते परोपकाराय युगे दैवेन निर्मिताः ॥ ३ ॥ तृणं चाहं वरं मन्ये नरादनुपकारिणः । घासो भूत्वा पशून्पाति भीरू[2]न्पाति रणाङ्गणे ॥ ४ ॥ प[3]रोपकृतिकैवल्ये[4] तोलयित्वा[5] जनार्दनः । गुर्वी[6]मुपकृतिं मत्वा ह्यवतारा[7]न्दशार्ग्रहीत्[8] ॥ ५ ॥ रागिणि नलिनीलक्ष्मीं दिवसो निदधाति दिनकरप्रभवाम् । अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥ ६ ॥ कृच्छ्रानुवृत्तयोऽपि हि परोपकारं त्यजन्ति न महान्तः । तृणमात्रजीवना अपि करिणो दानद्रवार्द्रकराः ॥ ७ ॥ परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः । परोपकाराय दुहन्ति गावः परोपकारार्थमिदं शरीरम् ॥ ८ ॥ भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्भूरि विलम्बिनो घनाः । अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥ ९ ॥ श्रोत्रं[9] श्रुते[10]नैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन । विभाति कायः खलु सज्जनानां परोपकारैर्न तु चन्दनेन ॥ १० ॥ पद्मा[11]करं दिनकरो विकचं करोति चन्द्रो विकासयति कैरव[12]चक्रवालम् । नाभ्यर्थितो जलधरोऽपि जलं ददाति सन्तः स्वयं परहितेषु कृताभियोगाः ॥ ११ ॥ दातुः परोपकृतिनिर्भरचित्तवृत्तेरासन्नदूरगणना न हि संश्रितेषु । भानुर्विकासयति हन्त सरोजखण्डं पाणिस्थपङ्कजसमं भुवनान्तरेषु ॥ १२ ॥

## कृतघ्ननिन्दा ।

परोपकारशून्यस्य धिङ्मनुष्यस्य जीवितम् । यावन्तः पशवस्तेषां चर्माण्युपकरिष्यति ॥ १ ॥ यथा वृष्टिः समुद्रेषु भुक्तस्योपरि भोजनम् । एवं प्रीतिः खलैः सार्धमुत्पन्नाप्यवसीदति ॥ २ ॥ उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् । तं जनमसत्य[13]संधं भगवति वसुधे कथं वहसि ॥ ३ ॥ व्योम[14] निशं वा कुरुते चित्रं[15] निर्माति यत्नतः सलिले । स्नपयति पवनं सलि-

१ विकराले २. भीतान् ३. परोपकार ४ मोक्ष . ५ उभयोस्तुलना कृत्वा. ६ भार्गवतीम् ७ मत्स्यादीन् ८ जग्राह ९ कर्ण. १०. शास्त्रेण. ११. कासारम्. १२. कुमुदमण्डलम् १३ असत्यप्रतिज्ञम् १४. सुखम् १५. आलेख्यम्

लैर्यस्तु खले चरति सत्कारम् ॥ ४ ॥ शोकं मा कुरु कुक्कुर सत्त्वेष्वहमधम इति मुधा साधो । कष्टादपि कष्टतरं दृष्ट्वा श्वानं कृतघ्ननामानम् ॥ ५ ॥

---

## संतोषप्रशंसा ।

संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम् । कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ॥१॥ अकृत्वा परसंतापमगत्वा खलनम्रताम् । अनुत्सृज्य सतां वर्त्म यत्स्वल्पमपि तद्बहु ॥ २ ॥ आगमिष्यन्ति ते भावा ये भावा मयि भाविताः । अहं तैरनुगन्तव्यो न तेषामन्यतो गतिः ॥ ३ ॥ यो मे गर्भगतस्यापि वृत्तिं कल्पितवान्प्रभुः । शेषवृत्तिविधानाय स किं सुप्तोऽथवा मृतः ॥ ४ ॥ अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् । सुखान्यपि तथायान्ति दैन्यमत्रातिरिच्यते ॥ ५ ॥ पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे । अनृणी चाप्रवासी च स वारिचरमोदते ॥ ६ ॥ आत्माधीनशरीराणां स्वपतां निद्रया स्वया । कदन्नमपि मर्त्यानाममृतत्वाय कल्पते ॥ ७ ॥ सर्वत्र संपदस्तस्य संतुष्टं यस्य मानसम् । उपानद्गूढपादस्य ननु चर्मावृतैव भूः ॥ ८ ॥ ते धन्याः पुण्यभाजस्ते तैस्तीर्णः क्लेशसागरः । जगत्संमोहजननी यैराशाशीविषी जिता ॥ ९ ॥ अकिंचनस्य दान्तस्य शान्तस्य समचेतसः । सदा संतुष्टमनसः सर्वाः सुखमया दिशः ॥ १० ॥ न योजनशतं दूरं बाध्यमानस्य तृष्णया । संतुष्टं यत्करप्राप्तेऽप्यर्थे भवति नादरः ॥ ११ ॥ आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म । स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः ॥ १२ ॥ अर्थी करोति दैन्यं लब्धार्थो गर्वपरितोषम् । नष्टधनश्च सशोकः सुखमास्ते निःस्पृहः पुरुषः ॥ १३ ॥ तन्मूलं गुरुतायास्तत्सौख्यं तद्यशस्तदौर्जित्यम् । तत्सौभाग्यं पुंसां यदेतदप्रार्थनं नाम ॥ १४ ॥ सर्पाः पिबन्ति पवनं न च दुर्बलास्ते शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति । कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं संतोष एव पुरुषस्य परं निधानम् ॥ १५ ॥ चीराणि किं पथि न सन्ति दिशन्ति भिक्षां नैवाङ्घ्रिपाः फलभृतः सरितोऽप्यशुष्यन् । रुद्धा गुहाः किमजितोऽवति नोपपन्नान्कस्माद्भजन्ति कवयो धनदुर्मदान्धान् ॥ १६ ॥ वयमिह परितुष्टा वल्कलैस्त्वं च लक्ष्म्या सम इह परितोषो निर्विशेषो विशेषः । स हि भवति दरिद्रो यस्य तृष्णा विशाला मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥१७॥ गन्धाढ्यां नवमल्लिकां मधुकरस्त्यक्त्वा गतो यूथिकां तां दृष्ट्वाशु गतः स चन्दनवनं पश्चात्सरोजं गतः । बद्धस्तत्र निशाकरेण सहसा रोदित्यसौ मन्दधीः संतोषेण विना पराभवपदं प्राप्नोति सर्वो जनः ॥ १८ ॥

---

१ पूजाम् २ भषक ३ व्यर्थम् ४. मार्गम् ५ जीवनोपायम् ६ विशिष्यते ७. कुत्सितमन्नम् ८ उपानद्भ्या गूढौ पिहितौ पादौ यस्य ९ सर्पिणी १०. गौरवस्य. ११. उत्साहशीलत्वम्. १२. अयाचनम्.

## तृष्णानिन्दा ।

तृष्णे देवि नमस्तुभ्यं धैर्यविप्लवकारिणि[1] । विष्णुस्त्रैलोक्यपूज्योऽपि यत्त्वया वामनीकृतः[2] ॥ १ ॥ तृष्णे कृष्णेऽपि ते शक्तिर्दृष्टा मर्त्येषु का कथा । त्रैलोक्यव्यापि यद्रूपं तद्रूपं वामनीकृतम् ॥ २ ॥ तृष्णां चेह परित्यज्य को दरिद्रः क ईश्वरः । तस्याश्चेत्प्रसरो दत्तो दास्यं च शिरसि स्थितम् ॥ ३ ॥ वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः । गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ४ ॥ नास्त्यन्या तृष्णया तुल्या क्वचिदेव नितम्बिनी[3] । या प्राणानपि मुष्णन्ती[4] भवत्येवाधिकं प्रिया ॥ ५ ॥ च्युता दन्ताः सिताः केशा दृङ्निरोधः पदे पदे । पातसज्जामिमं देहं तृष्णा साध्वी न मुञ्चति ॥ ६ ॥ तृष्णे त्वमपि तृष्णान्धा त्रिषु स्थानेषु वर्तसे । व्याधितेष्वनपत्येषु जरापरिणतेषु च ॥ ७ ॥ धनेषु जीवितव्येषु स्त्रीषु पुत्राशनेष्वपि । अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति च ॥ ८ ॥ तृष्णे देवि नमस्तुभ्यं या त्वं सर्वस्य सर्वदा । उत्पादयस्ययत्नेन गोष्पदे सागरभ्रमम् ॥ ९ ॥ अपि मेरूपमं प्राज्ञमपि शूरमपि स्थिरम् । तृणीकरोति[5] तृष्णैका निमेषेण नरोत्तमम् ॥ १० ॥ आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला । यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ॥ ११ ॥ तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् । येनाशाः पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥ १२ ॥ गिरिर्महान्गिरेरब्धिर्महानब्धेर्नभो महत् । नभसोऽपि महद्ब्रह्म ततोऽप्याशा गरीयसी ॥ १३ ॥ आशैव राक्षसी पुंसामाशैव विषमञ्जरी । आशैव जीर्णमदिरा धिगाशा सर्वदोषभूः ॥ १४ ॥ क्षुत्तृडाशाः कुटुम्बिन्यो मयि जीवति नान्यगाः । तासामाशा महासाध्वी कदाचिन्मां न मुञ्चति ॥ १५ ॥ यौवनं जरया ग्रस्तमारोग्यं व्याधिभिर्हतम् । जीवितं मृत्युरभ्येति तृष्णैका निरुपद्रवा ॥ १६ ॥ आशाया ये दासास्ते दासाः सर्वलोकस्य । आशा येषां दासी तेषां दासायते लोकः ॥ १७ ॥ दन्ता विश्लथदन्ताः केशाः काशप्रसूनसंकाशाः । नयनं तमसामयन तथापि चित्तं धनाङ्गनायत्तम् ॥ १८ ॥ त्वामुदर साधु मन्ये शाकैरपि यदसि लब्धपरितोषम् । हतहृदयं ह्यधिकाधिकवाञ्छाशतदुर्भरं न पुनः ॥ १९ ॥ अङ्गं गलितं पलितं मुण्डं[6] दशनविहीनं[7] जातं तुण्डम्[8] । वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशा पिण्डम् ॥ २० ॥ आशावलम्बोपचिता[9] न कस्य तृष्णालतानर्थफलं प्रसूते । दिने दिने लब्धरुचिर्विवस्वान्मीन[11] च[12] मेषं च[13] वृषं च भुङ्क्ते ॥ २१ ॥ गदोदन्ता दन्ताः पलितकलितः कुन्तलभरः तमःक्षेत्रे नेत्रेऽविषयपटुनी नः श्रुतिपुटे । अभूदङ्गं रङ्गद्वलिवलयवल्लीविलुलितं तथाप्येतच्चेतस्तरुण इव धावत्यनुदिनम् ॥ २२॥ गतं

१ विलयम्. २. ह्रस्वीकृत ३ स्त्री ४ हरन्ती. ५ तृणवल्लघूकरोति. ६. शिरः ७ दन्त . ८. मुखम्. ९. आश्रय १०. सूर्य . ११. मत्स्य; ( पक्षे ) मीनराशि . १२. एडकः; ( पक्षे ) मेषराशिः. १३. वृषभः; ( पक्षे ) वृषभराशिः.

तत्तारुण्यं तरुणिहृदयानन्दजनकं विशीर्णा दन्तालिर्निजगतिरहो यष्टिशरणा । जडीभूता दृष्टिः श्रवणरहितं कर्णयुगलं मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ २३ ॥ वपुः कुब्जीभूत गतिरपि तथा यष्टिशरणा विशीर्णा दन्तालि श्रवणविकलं श्रोत्रयुगलम् । शिरः शुक्लं चक्षुस्तिमिरपटलैरावृतमहो मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति ॥ २४ ॥ खलोल्लापा सोढाः कथमपि तदाराधनतया निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा । कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि त्वमाशे मोघाशे किमु परमितो नर्तयसि माम् ॥ २५ ॥ निवृत्ता भोगेच्छा बहुपुरुषमानो विगलितः समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः । शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने अहो दुष्टः कायस्तदपि मरणापायचकितः ॥ २६ ॥ अमीषां प्राणानां तुलितबिसिनीपत्रपयसां कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् । यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां कृतं म्लानव्रीडैर्निजगुणकथापातकमपि ॥२७॥ समारम्भा भग्ना कति कति न वारांस्तव पशो पिपासोस्तुच्छेऽस्मिन्द्रविणमृगतृष्णार्णवजले । तथापि प्रत्याशा विरमति न ते मूढ शतधा न दीर्णं यच्चेतो नियतमशनिग्रावघटितम् ॥ २८ ॥ विवेकव्याकोशे विकसति शमे शाम्यति तृषा परिष्वङ्गे तुङ्गे प्रसरतितरां सा परिणतिः । जरा जीर्णैश्वर्यग्रसनगहनाक्षेपकृपणस्तृषापात्रं यस्यां भवति मरुतामप्यधिपतिः ॥ २९ ॥ उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः । मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥ ३० ॥ निःस्वोऽप्येकशतं शती दशशतं सोऽपीह लक्ष शतं लक्षेशः क्षितिराजतां क्षितिपतिश्चक्रेशता वाञ्छति । चक्रेशः सुरराजतां सुरपतिर्ब्रह्मास्पदं वाञ्छति ब्रह्मा विष्णुपदं हरिः शिवपदं तृष्णावधि को गतः ॥ ३१ ॥ आशा नाम नदी मनोरथजला तृष्णातरंगाकुला रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी । मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी तस्याः पारगता विशुद्धमनसा नन्दन्ति योगीश्वराः ॥ ३२ ॥ माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते । तृष्णे त्वामनुबध्नता फलमियत्प्राप्तं जनेनामुना यः स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते ॥ ३३ ॥ दन्तैरुच्चलितं धिया तरलित पाण्यङ्घ्रिणा कम्पितं दृग्भ्यां कुड्मलितं बलेन गलित रूपश्रिया प्रोषितम् । प्राप्तायां यमभूपतेरिह महाधाव्यां धरायामियं तृष्णा केवलमेकिकैव सुभटी धीरा पुरो नृत्यति ॥ ३४ ॥ भ्रान्तं याचनतत्परेण मनसा देहीति वाक्प्रेरिता भुक्तं मानविवर्जितं परगृहे साशङ्कया काकवत् । साक्षेपं भ्रुकुटीकटाक्षकुटिलं दृष्टं खला-

१ यष्ट्यधीना. २. धनिकानाम् ३. शून्यमनसाम्. ४. वज्रपाषाणघटितम्. ५. इन्द्र.. ६. निक्षेप . ७ सच्छिद्रकपर्दिका ८. नक्र . ९ अम्भसा भ्रम.. १०. पृथ्वी. ११. तवानुबन्ध कुर्वतेत्यर्थ.. १२. मुकुलितम्

नां मुखं तृष्णे देवि यदन्यदिच्छासि पुनस्तत्रापि सज्जा वयम् ॥३५॥ भ्रान्तं देशमनेकदुर्ग-
विषमं प्राप्तं न किंचित्फल त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला। भुक्तं
मानविवर्जितं परगृहेष्वाशङ्कया काकवत्तृष्णे जृम्भसि पापकर्मनिरते नाद्यापि संतुष्यसि ॥३६॥
शान्तेर्मातुर्विवेकात्पितुरपि कृपणं मंक्षु[1] कृत्वा पृथङ्मामाशा योषा स्वतन्त्रा व्रजति परगृहान्स-
र्वदा वीतलज्जा[2]। संधत्ते मत्कृशत्वं मम यमनियमौ भ्रातरौ भर्त्सयन्ती पुष्टा चैवात्मबन्धूंस्त-
दपि पुनरहो हन्त वन्ध्यां श्रयामः ॥ ३७ ॥ आशानिष्ठाप्रतिष्ठाः किल मम महिला[3]स्तासु
सौख्यं कदाचिद्या प्रान्त्या[4] सा प्रदद्यादिह[5] किमपि तथा मध्यमा[6] सा परत्र[7]। आद्या[8] सा
नोभयत्राप्यहह[9] तदपि किं सक्ततां यामि तस्यां या प्रौढ्यादप्रगल्भे[10] प्रतिदिवसममुं मे ते कद[11]-
र्थीकरोति ॥ ३८ ॥ लज्जे त्वं मज्ज सिन्धौ गिरिवरशिखरे त्वं च तिष्ठ प्रतिष्ठे शान्ते प्रान्ते
दिशान्ते कुरु वसतिमहो गर्व खर्वो भवाशु। तेजः पातालमूलं भज भुवि भगवन्मान मा
नाम तेऽस्तु प्रेम्णैकामाश्रयन्तीं सततमहमिमां तूर्णमाशां श्रयिष्ये ॥ ३९ ॥

---

## धीरप्रशंसा।

स एव धन्यो विपदि स्वरूपं न विमुञ्चति। त्यजत्यर्ककरैस्तप्तं हिमं देहं न शीतताम् ॥१॥
चलन्ति गिरयः कामं युगान्तपवनाहताः। कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः
॥ २ ॥ कृतं पुरुषशब्देन जातिमात्रावलम्बिना। योऽङ्गीकृतगुणैः श्लाघ्यः सविस्मयमुदा-
हृतः ॥ ३ ॥ असमानमिवौजांसि सहसा गौरवेरितम्। नाम यस्याभिनन्दन्ति द्विषोऽपि स
मतः पुमान् ॥ ४ ॥ सह परिजनेन विलसति धीरो गहनानि[12] तरति पुनरेकः। विषमेकेन
निपीतं त्रिपुरजिता[13] सह सुरैरमृतम् ॥ ५ ॥ श्लाघ्या महतामुन्नतिरद्भुतमध्यवसितं[14] च धीरा-
णाम्। कनकगिरिरनभिलङ्घ्यो रविरनिशमनुज्झितारम्भः ॥ ६ ॥ अङ्गनं[15] वेदी वसुधा कुल्या[16]
जलधिः स्थली च पातालम्। वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य धीरस्य ॥७॥ कदर्थितस्या[17]-
पि हि धैर्यवृत्तेर्न शक्यते धैर्यगुणः प्रमार्ष्टुम्[18]। अधोमुखस्यापि कृतस्य वह्नेर्नाधः शिखा या-
ति कदाचिदेव ॥ ८ ॥ अर्थः सुखं कीर्तिरपीह मा भूदनर्थ एवास्तु तथापि धीराः। निज-
प्रतिज्ञामविरूढमाना महोद्यमाः कर्म समारभन्ते ॥ ९ ॥ रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजि-
रे भीमविषेण भीतिम्। सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥ १० ॥
निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्। अद्यैव वा
मरणमस्तु युगान्तरे वा न्याय्यात्[19] पथः[20] प्रविचलन्ति पदं न धीराः ॥ ११॥ कान्ताकटाक्षवि[21]-

---

१ शीघ्रम्, २ गतलज्जा निर्लज्जेत्यर्थ ३ स्त्रिय ४ प्रतिष्ठा ५ अस्मिल्लोके ६ निष्ठा ७. परलोके. ८. आशा. ९ इहलोके परलोके च १० निष्ठाप्रतिष्ठे ११ पीडयति १२. दुस्तराणि. १३ शक्रेण. १४ व्यापार. १५ अजिरम् १६ कृत्रिमसरित् १७ दरिद्रस्य १८. शोधयितुम् १९. न्यायादनपेतात्. २० मार्गात् २१ कटाक्षा एव विशिखा बाणा

शिखा न लुनन्ति यस्य चित्तं न निर्दहति कोपक्लेशानुतापः । कर्षन्ति भूरि विषयांश्च न लोभपाशा लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ १२॥ विरम विरसायासादस्माद्दुरध्यवसायतो विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे । अपि जडमते कल्पापाये व्यपेतनिजक्रमाः कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः ॥ १३ ॥

## वीरप्रशंसा ।

एकेनापि हि शूरेण पदाक्रान्तं महीतलम् । क्रियते भास्करस्येव स्फारस्फुरिततेजसा ॥ १ ॥ पल्लवतः कल्पतरोरेष विशेषः करस्य ते वीर । भूषयति कर्णमेकः परस्तु कर्णं तिरस्कुरुते ॥ २ ॥ स्पृहयति भुजयोरन्तरमायतकरवालकररुहविदीर्णम् । विजयश्रीर्वीराणां व्युत्पन्नप्रौढवनितेव ॥ ३ ॥ विनाप्यर्थैर्वीरः स्पृशति बहुमानोन्नतिपदं समायुक्तोऽप्यर्थैः परिभवपदं याति कृपणः । स्वभावादुद्भूतां गुणसमुदयावाप्तिविषयां द्युतिं सैंहीं किं श्वा धृतकनकमालोऽपि लभते ॥ ४ ॥ को वीरस्य मनस्विनः स्वविषयः को वा विदेशस्तथा यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् । यद्दंष्ट्रानखलाङ्गुलप्रहरणः सिंहो वनं गाहते तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ ५ ॥

## तेजस्विप्रशंसा ।

बालस्यापि रवेः पादैः पतन्त्युपरि भूभृताम् । तेजसा सह जातानां वयः कुत्रोपयुज्यते ॥ १ ॥ एकः स एव तेजस्वी सैंहिकेयः सुरद्विषाम् । शिरोमात्रावशेषेण जीयन्ते येन शत्रवः ॥ २ ॥ मौनी पादप्रहारेऽपि न क्षमी नीच एव सः । आकृष्टशस्त्रो मित्रेऽपि न तेजस्वी खलो हि सः ॥ ३ ॥ तुल्येऽपराधे स्वर्भानुर्भानुमन्तं चिरेण यत् । हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम् ॥ ४ ॥ स्वयं प्रणमतेऽल्पेऽपि परवायावुपेयुषि । निदर्शनमसाराणां लघुर्बहुतृणं नरः ॥५॥ तेजस्विमध्ये तेजस्वी दवीयानपि गण्यते । पञ्चमः पञ्चतपसस्तपन्ते जातवेदसाम् ॥ ६ ॥ अकृत्वा हेलया पादमुच्चैर्मूर्धसु विद्विषाम् । कथंकारमनालम्ब्या कीर्तिर्द्यामधिरोहति ॥७॥ अङ्काधिरोपितमृगश्चन्द्रमा मृगलाञ्छनः । केसरी निष्ठुरक्षिप्तमृगयूथो मृगाधिपः ॥ ८ ॥ तेजस्विनि क्षमासारे नातिकार्कश्यमाचरेत् । अतिनिर्मथनाद-

---

१ न छिन्दन्ति. २. कोप. क्रोध. स एव कृशानुरग्निस्तत्ताप. ३ सपूर्णम्. ४ किसलयात् ५ श्रोत्रम्. ६. अङ्गराजम् ७. पराजयस्थानम् ८ कान्तिम् ९ सिंहसंबन्धिनीम् १० धृता कनकस्य सुवर्णस्य माला येन ११. परदेश. १२ दंष्ट्रा नख पुच्छ तान्येव प्रहरणान्यायुधानि यस्य स १३. प्रविशति. १४ किरणाः (पक्षे) चरणा १५. पर्वतानाम्, (पक्षे) राज्ञाम्. १६ विधुंतुद १७ राहु. १८. सूर्यम् १९. चन्द्रम्. २०. मार्दवस्य. २१ दृष्टान्त २२. दुर्बलानाम् २३ निष्पौरुष.. २४. तृणकल्पमित्यर्थ. २५ दूरस्थोऽपि २६. पञ्चाग्निसाध्य तपो यस्य. २७. कथमित्यर्थ. २८. निराधारा २९. हत.

ग्निश्चन्दनादपि जायते ॥ ९॥ तेजोहीने महीपाले स्वे परे च विकुर्वते। निःशङ्को हि जनो धत्ते पदं भस्मन्यनूष्मणि[1] ॥ १० ॥ एकचक्रो रथो यन्ता[2] विकलो[3] विषमा हयाः[4]। आक्रमत्येव तेजस्वी तथाप्यर्को नभस्तलम् ॥ ११ ॥ सिंहः शिशुरपि निपतति मदमलिनकपोल[5]भित्तिषु गजेषु। प्रकृतिरियं सत्त्ववतां[6] न खलु वयस्तेजसो हेतुः ॥ १२ ॥ यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितुरिनकान्तः[7]। तत्तेजस्वी पुरुषः परकृतविकृतिं[8] कथं सहते ॥ १३ ॥ दर्शिततोपोच्छ्रायैस्तेजोवद्भिः[9][10][11] सुगोत्रसंजातैः[12]। हीरैरप्स्विव धीरैरापत्स्वपि गम्यते नाधः ॥ १४ ॥ दीप्यन्तां ये दीप्त्यै घटिता[13] मणयश्च वीरपुरुषाश्च। तेजः स्वविनाशाय तु भवति तृणानामिव लघूनाम् ॥ १५ ॥ तीव्रोष्णदुर्विषयवीर्यभृतः परेषां तेजस्विनो न गणयन्ति वपुर्महत्त्वम्। यत्पद्मरागशकलाकृतिरद्रितुङ्गं कार्त्स्न्येन भस्मयति काष्ठचयं स्फुलिङ्गः ॥१६॥ न तेजस्तेजस्वी प्रसृतमपरेषां[14] प्रसहते स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः[15][16]। मयूखैरश्रान्तं[17] तपति यदि देवो दिनकरः किमाग्नेयग्रावा[18][19] निकृत इव[20] तेजांसि वमति ॥१७॥ हस्ती स्थूलतनुः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशो वज्रेणाभिहताः पतन्ति गिरयः किं शैलमात्रं पविः[21]। दीपः प्रज्वलितो विनश्यति तमः किं दीपमात्रं तमस्तेजो यस्य विराजते स बलवान्स्थूलेषु कः प्रत्ययः[22] ॥ १८ ॥ स्वल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थिगोः श्वा लब्ध्वा परितोषमेति न तु तत्तस्य क्षुधः शान्तये। सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं[23] फलम् ॥ १९ ॥ शमयति गजानन्यान्गन्धद्विपः कलभोऽपि सन्भवति सुतरां वेगोदग्रं भुजंगशिशोर्विषम्। भुवमधिपतिर्बालावस्थोऽप्यलं परिरक्षितुं न खलु वयसा जात्यैवायं स्वकार्यसहो भरः ॥ २० ॥

---

## मनस्विप्रशंसा।

कामं[24] प्रियानपि प्राणान्विमुञ्चन्ति मनस्विनः। इच्छन्ति न त्वमित्रेभ्यो महतीमपि सत्क्रियाम् ॥१॥ ब्रूत नूतनकूष्माण्डफलानां के भवन्त्यमी। अङ्गुलीदर्शनादेव विलीयन्ते मनस्विनः ॥२॥ ब्रह्माण्डमण्डलीमात्रं कि लोभाय मनस्विनः। शफरीस्फुरितेनाब्धेः[25] क्षुब्धता जातु[26] जायते ॥ ३ ॥ कुसुमस्तबकस्येव[27] द्वे वृत्ती स्तो मनस्विनः। मूर्ध्नि वा सर्वलोकस्य विशीर्येत वनेऽथवा ॥ ४ ॥ पादाहतं यदुत्थाय मूर्धानमधिरोहति। स्वस्थादेवापमानेऽपि देहिनस्तद्वरं[28][29] रजः

---

१ ऊष्मारहिते २ सारथि ३. अनूरु . ४ तुरंगा . ५ प्रशस्तकपोलेषु ६ बलवताम्. ७ सूर्यकान्त . ८. विकारः. ९ कान्ति ; (पक्षे) प्रताप . १०. कान्त्याधिक्यम्; (पक्षे) धनुष औन्नत्यम् ११ प्रकाशकत्वम्; (पक्षे) सामर्थ्यम्. १२. पर्वत ; (पक्षे) कुलम् १३. विधातृनिष्पादिता . १४. विस्तृतम् १५ स्वभावाधीनत्वात्. १६ अकृत्रिम १७. किरणैः. १८. सततम् १९ सूर्यकान्त . २०. धिकृत इव २१. वज्रम् २२. विश्वास २३. बलानुरूपम्. २४. यथेच्छम्. २५. मत्सीस्फुरणेन. २६ कदाचित्. २७. गुच्छस्य. २८. सतुष्टात् २९. चेतनात्.

॥५॥ समूलघातमघ्नन्तः[1] परान्[2]नोद्यन्ति मानिनः। प्रध्वंसितान्धतमसस्[3]तत्रोदाहरणं रविः॥६॥ स पुमानर्थवज्जन्मा[4] यस्य नाम्नि पुरःस्थिते। नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः॥७॥ स्थित्यतिक्रान्तिभीरूणि[6] स्वच्छान्याकुलितान्यपि[7]। तोयानि तोयराशीनां मनांसि च मनस्विनाम् ॥८॥ शक्तिवैकल्यनम्रस्य[8] निःसारत्वाल्लघीयसः[10]। जन्मिनो[12] मानहीनस्य तृणस्य च समा गतिः ॥ ९ ॥ अलङ्घ्यं तत्तदुद्वीक्ष्य यद्यदुच्चैर्महीभृताम्। प्रियतां ज्यायसीं मा गान्महतां केन तुङ्गता ॥१०॥ तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः। पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥११॥ दुरासदवनज्यायान्गम्यस्तुङ्गोऽपि भूधरः। न जहाति महौजस्कं[13] मानप्रांशुमलङ्घ्यता[14] ॥ १२ ॥ गुरूकुर्वन्ति ते वंश्यानन्वर्था तैर्वसुंधरा। येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥ १३ ॥ उदाहरणमाशीःषु प्रथमे ते मनस्विनाम्। शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥ १४ ॥ तुङ्गत्वमितरा[15] नाद्रौ नेदं[16] सिन्धावगाधता। अलङ्घनीयताहेतुरुभयं तन्मनस्विनि ॥ १५ ॥ न क्वचिच्च वहिर्यान्ति मानिनां प्रार्थनागिरः। यदि निर्यातुमिच्छन्ति तदा प्राणपुरःसराः ॥ १६ ॥ असेवितेश्वरद्वारमदृष्टविरहव्यथम्। अनुक्तक्लीववचनं धन्यं कस्यापि जीवितम् ॥ १७ ॥ मानिनो हतमानस्य मानोऽपि न सुखप्रदः। जीवनं मानमूलं हि माने म्लाने कुतः सुखम् ॥ १८ ॥ मनस्वी म्रियते कामं कार्पण्यं न तु गच्छति। अपि निर्वाणमायाति नानलो याति शीतताम् ॥ १९ ॥ कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन। धनिषु न दैन्यं विदधति ते किल पशवो वयं सुधियः ॥ २० ॥ प्रत्युपकुर्वन्[17]बह्वपि न भवति पूर्वोपकारिणा तुल्यः। एकोऽनुकरोति[18] कृतं निष्कारणमेव यत्परः कुरुते ॥ २१ ॥ पुरो वा पश्चाद्वा वयमुपविशामः क्षितिभुजां ततः किं नश्छिन्नं वचनरचनाक्रीतजगताम्। अगारे कान्तारे कुचकलशभारे मृगदृशां मणेस्तुल्यं मूल्यं सहजसुभगस्य द्युतिमतः ॥ २२ ॥ अभुक्तायां यस्यां क्षणमपि न यातं नृपशतैर्भुवस्तस्या लाभे क इव वहुमानः क्षितिभुजाम्। तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ २३ ॥ क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनं क्वचिच्छाकाहारी क्वचिदपि च शाल्योदनरुचिः। क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ २४ ॥ स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं कपालं यस्योच्चैर्विनिहितमलंकारविधये। नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ २५ ॥ विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा

१ अनन्मूलयन्त. २ शत्रून् ३. गाढ तम. ४. सार्थकजन्मा ५. पुरुषगणनाप्रस्तावे ६ मर्यादोल्लङ्घनाद्भेतोर्भीरूणि. ७. सक्षोभितानि ८ उत्साहादिशक्तिवैधुर्येण; (पक्षे) अवष्टम्भसामर्थ्यविरहेण. ९ प्रह्वीभूतस्य; (पक्षे) निधयभूतस्य १० दुर्बलत्वात्; (पक्षे) स्थिराशरहितत्वात् ११ गौरवहीनस्य, (पक्षे) नीरसस्य १२ जन्तो १३ प्रतापसपन्नम् १४ मानोन्नतपुरुषम् १५ अगाधता. १६. तुङ्गत्वम्. १७. प्रत्युपकार कुर्वन् १८. अनुकरण करोति.

विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा । इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ २६ ॥ वरमहिमुखे[1] क्रोधाध्माते करो विनिवेशितो विषमपि वरं पीत्वा सुप्तं कृतान्तनिवेशने[3] । गिरिवरतटीमुक्तश्चात्मा वरं शतधा कृतो न तु खलजनावाप्तैरर्थैः कृतं हितमात्मनः ॥ २७ ॥ मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणुरङ्गीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते । तद्दद्युर्ददतेऽथवा न किमपि क्षुद्रा दरिद्रा भृशं धिग्धिक्तान्पुरुषाधमान्धनकणं वाञ्छन्ति तेभ्योऽपि ये ॥ २८ ॥ त्वं चेन्नीचजनानुरागरभसादस्मासु मन्दादरः का नो मानद मानहानिरियती भूः किं त्वमेकः प्रभुः । गुञ्जापुञ्जपरंपरापरिचयाद्भिल्लीजनैरुज्झितं मुक्तादाम न धारयन्ति किमहो कण्ठे कुरङ्गीदृशः॥२९॥ त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः । इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निःस्पृहाः ॥ ३० ॥ ब्रह्माण्डं कियदस्तु तत्र वसुधापिण्ड किमाचक्ष्महे तत्राप्येकतरं तु खण्डममितास्तस्मिन्नृपाः केचन । तेभ्यो दैन्यशतोपनीतविभवा दृष्टानुकम्पास्तु ते धिङ्मूढाः स्पृहयन्ति हन्त किमपि स्वार्थो न तेभ्योऽपि ये ॥ ३१ ॥ पातालान्न विमोचितो बत बली नीतो न मृत्युः क्षयं नोन्मृष्टं शशिलाञ्छनं सुमलिनं नोन्मूलिता व्याधयः । शेषस्यापि भरं विधृत्य न कृतो भारावतारः क्षणं चेतः सत्पुरुषाभिमानमनिशं मिथ्या वहन्खिद्यसे ॥ ३२ ॥ पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं[4] कपालीमादाय[5] न्यायगर्भद्विजवरहुतभुग्धूम्रधूमोपकण्ठम् । द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो मानी प्राणी स्वदेशे न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥ ३३ ॥ अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदित्थं शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं न. । सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा मय्यप्यास्था न चेत्तत्त्वयि मम सुतरामेष राजन्गतोऽस्मि ॥ ३४ ॥ श्रेयस्वी यत्र मानं व्रजति दुरितकृच्चापमानं मनुष्यैरज्ञेयं यत्र दूतैः प्रभुमनु मनुजो नीयते चानपेक्षः । मृत्योर्गेहं वरं तन्न तु कुधनवतां यत्र सर्वापमानो लोकैर्विज्ञायमानः स्वयमतिथितया यत्र चार्थी प्रयाति ॥ ३५ ॥

---

## अपौरुषत्वनिन्दा ।

मा जीवन्यः परावज्ञादुःखदग्धोऽपि जीवति । तस्याजननिरेवास्तु[6] जननीक्लेशकारिणः ॥ १ ॥
असंपादयतः कंचिदर्थं जातिक्रियागुणैः[7][8][9] । यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम् ॥ २ ॥

---

१. सर्पमुखे २. क्रोधपूर्णे ३ कालगृहे ४ शुभ्रवस्त्रेण विहिता पाली यस्याः. ५ भिक्षापात्रम् ६. जननम् ७. ब्राह्मणत्वादि. ८ इज्याध्ययनादि . ९. शौर्यादि..

## गुणप्रशंसा ।

गुणाः कुर्वन्ति दूतत्वं दूरेऽपि वसतां सताम् । केतकीगन्धमाघ्राय स्वयं गच्छन्ति षट्पदाः[1] ॥ १ ॥ गुणवज्जनसंसर्गाद्याति सर्वोऽपि गौरवम् । पुष्पमालाप्रसङ्गेन सूत्रं शिरसि धार्यते ॥ २ ॥ कलावतः[2] सैव कला ययाधः[3]क्रियते भवः[4] । बह्वीभिश्च कलाभिः किं याभिरङ्कः[5] प्रदर्श्यते ॥ ३ ॥ न पुत्रत्वेन पूज्यन्ते गुणैरासाद्यते पदम् । रवेर्व्यापारमादत्ते प्रदीपो न पुनः शशी ॥ ४ ॥ किं कुलेन विशालेन शीलमेवात्र कारणम् । कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥ ५ ॥ गुणाः सर्वत्र पूज्यन्ते पितृवंशो निरर्थकः । वसुदेवं परित्यज्य वासुदेवं नमेज्जनः ॥ ६ ॥ यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् । न हि कस्तूरिकामोदः शपथेन निवार्यते ॥ ७ ॥ नहि जन्मनि ज्येष्ठत्वं ज्येष्ठत्वं गुण उच्यते । गुणाद्गुरुत्वमायाति दधि दुग्धं घृतं यथा ॥ ८ ॥ किमाढ्यत्वगुरुत्वाभ्यां चरमोऽपि गुणैर्गुरुः । केतकीकुसुमे पश्य लघुपत्रेऽतिगौरवम् ॥ ९ ॥ केतकीकुसुमं भृङ्गः खण्ड्यमानोऽपि सेवते । दोषाः किं नाम कुर्वन्ति गुणापहृत[6]चेतसः ॥१०॥ शरीरस्य गुणानां च दूरमत्यन्तमन्तरम् । शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ॥ ११ ॥ गुणेष्वेव हि कर्तव्यः प्रयत्नः पुरुषैः सदा । गुणयुक्तो दरिद्रोऽपि नेश्वरैरगुणैः समः ॥ १२ ॥ गुणैः सर्वज्ञकल्पो[7]ऽपि सीदत्येको[8] निराश्रयः । अनर्घ्यमपि[9] माणिक्यं हेमाश्रयमपेक्षते ॥ १३ ॥ गुणेषु क्रियतां यत्नः किमाटोपैः[10] प्रयोजनम् । विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ १४ ॥ गुणैर्गौरवमायाति न महत्यापि संपदा । पूर्णेन्दुर्न तथा वन्द्यो निष्कलङ्को यथा कृशः ॥ १५ ॥ स्वयं स्वगुणविस्तारादूर्णनाभः पतत्यधः । तमेव संहरन्भूयः पदमुच्चैर्विगाह्यते ॥ १६ ॥ गुणो दूषणतां याति दूषणं गुणतां क्वचित् । यथा हि नम्रता दोषः स्तनयोः स्तब्धता गुणः ॥ १७ ॥ गुणैर्गौरवमायाति नोच्चैरासनमास्थितः । प्रासाद[11]शिखरस्थोऽपि काकः किं गरुडायते ॥ १८ ॥ अहो गुणानां प्राप्त्यर्थं यतन्ति बहुधा नराः । मुक्ता यदर्थं भग्नास्या इतरेषां च का कथा ॥ १९ ॥ गुणेन स्पृहणीयः स्यान्न रूपेण युतो जनः । सौगन्ध्यवर्ज्यं नादेयं पुष्पं कान्तमपि स्वयम् ॥ २० ॥ प्रभुभिः पूज्यते लोके कलैव न कुलीनता । कलावान्मान्यते मूर्ध्नि सत्सु देवेषु शंभुना ॥२१॥ गुणयुक्तोऽपि पूर्णोऽपि कुम्भः कूपे निमज्जति । तस्य भारसहो नास्ति गुणकग्राहको यदि ॥२२॥ अहो वैचित्र्यमेतस्य संसारस्य किमुच्यते । गुणोऽपि क्लेशहेतुः स्याद्विश्रान्तः कण्ठकन्दले ॥ २३ ॥ जात्युत्कृष्टस्य हि मणेर्नोचितं शाणघर्षणम् । आदर्शे चित्रकारैः किं लिख्यते प्रतिबिम्बितम् ॥ २४ ॥ गुणयुक्तो[12]ऽप्यधो याति

---

१. भ्रमरा . २ चन्द्रस्य; (पक्षे) विदुष ३ अधोभागे क्रियते; (पक्षे) तिरस्क्रियते. ४. शिव ; (पक्षे) ससार . ५. कलङ्क , (पक्षे) दोष . ६. गुणाकृष्टान्त.करणस्य ७ शिवतुल्य ८ दु.ख प्राप्नोति. ९ अमूल्यम्. १०. आडम्बरै.. ११. राजभवनम्. १२. रज्जुयुक्त , (पक्षे) विनयादिगुणसपन्न .

रिक्तः[1] कूपे यथा घटः । निर्गुणोऽपि भृतः पश्य जनैः शिरसि धार्यते ॥ २५ ॥ गुणिनोऽपि हि सीदन्ति गुणग्राही न चेदिह । स गुणः पूर्णकुम्भोऽपि कूप एव निमज्जति ॥२६॥ गुण आकर्षणयोग्यो[2] धनुष इवैकोऽपि लक्षलाभाय[3] । लूता तन्तुभिरिव किं गुणैर्विमर्दासहैर्[4] बहुभिः ॥ २७ ॥ अनवसरे गुणवानपि हृदयादवतार्यते स्त्रिया हारः। पश्य शलाकावसरे तृणाय भूपैः प्रसार्यते स्वकरः ॥ २८ ॥ गुणवन्तः क्लिश्यन्ते[5] प्रायेण भवन्ति निर्गुणाः सुखिनः । बन्धनमायान्ति शुका यथेष्टसंचारिणः काकाः ॥२९॥ गुणिनि गुणज्ञो रमते नागुणशीलस्य गुणिनि परितोषः । अलिरेति[6] वनात्पद्मं न दर्दुरस्त्वेकवासोऽपि[7] ॥ ३० ॥ अवलम्बितविष्णुपदः कर्षितजनचक्षुरतुलगतिः । पत्रमयोऽपि पदार्थः पतङ्गतामेति गुणयोगात् ॥ ३१ ॥ अमितगुणोऽपि पदार्थो दोषेणैकेन निन्दितो भवति । निखिलरसायनमहितो[8] गन्धेनोग्रेण लशुन इव ॥ ३२ ॥ दोषमपि गुणवति जने दृष्ट्वा गुणरागिणो न खिद्यन्ते । प्रीत्यैव शशिनि पतितं पश्यति लोक' कलङ्कमपि ॥ ३३ ॥ अन्तर्गतैर्गुणैः किं द्वित्रा अपि यत्र साक्षिणो विरलाः । सगुणो गीतेर्यदसौ वनेचरं हरिणमपि हरति ॥ ३४ ॥ गुणा गुणज्ञेषु गुणीभवन्ति ते निर्गुणं प्राप्य भवन्ति दोषाः । सुस्वादुतोयाः प्रभवन्ति नद्यः समुद्रमासाद्य भवन्त्यपेयाः ॥ ३५ ॥ गुणेषु यत्नः पुरुषेण कार्यो न किंचिदप्राप्यतमं गुणानाम् । गुणप्रकर्षादुडुपेन शंभोरलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥ ३६ ॥ निष्कलङ्ककलयापि[9] जनो यः संयुतः स खलु पूज्यते जनैः । भद्र पश्य जडजोऽपि धार्यते शंकरेण शिरसा निशाकरः ॥ ३७ ॥ वक्रोऽपि पङ्किलरुहोऽपि दुरासदोऽपि व्यालाश्रितोऽपि विफलोऽपि सकण्टकोऽपि । गन्धेन बन्धुरसि केतक पुष्पजेन ह्येको गुणः खलु निहन्ति समस्तदोषान् ॥ ३८ ॥ गुणानामज्ञाता प्रचुरधनदातापि न मुदे मुदे विद्याज्ञाता भवति मितदातापि गुणिनाम् । दृशौ ग्राम्या दत्ते न पुनरवधत्ते च चतुरो दृशः प्रान्तं दत्वा वशयति नितान्तं पुरवधूः ॥ ३९ ॥ कौशेयं कृमिजं सुवर्णमुपलादि[10]न्दीवरं[11] गोमयात्पङ्का[12]त्तामरसं[13] शशाङ्क उदधेर्गोपित्ततो रोचनम्[14] । काष्ठादग्निरहेः फणादपि मणिर्दूर्वापि गोरोमतः प्राकाश्यं स्वगुणोदयेन गुणिनो यास्यन्ति किं जन्मना ॥ ४० ॥

---

## उद्यमप्रशंसा ।

उद्योगः खलु कर्तव्यः फलं मार्जारवद्भवेत् । जन्मप्रभृति गौर्नास्ति पयः पिबति नित्यशः ॥ १ ॥ उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः । षडेते यत्र वर्तन्ते तत्र देवः सहाय-

---

१. रिक्त ; (पक्षे) निर्द्रव्य २ विचारक्षम.; (पक्षे) यथाश्रुतम् ३ लक्षसख्याकधनलाभाय; (पक्षे) वेध्यलाभाय ४ विचारासहै, (पक्षे) आकर्षणासहै. ५ क्लेश प्राप्नुवन्ति ६ भ्रमर ७ भेक. ८. पूज्य.. ९ निर्मलविद्यया १०. पाषाणात् ११ कमलम्. १२. कर्दमात् १३. रक्तकमलम् १४. गोरोचनम्.

कृत् ॥ २ ॥ उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः । न हि सिंहस्य सुप्तस्य प्रविशन्ति मुखे गजाः ॥ ३ ॥ न दैवमिति संचिन्त्य त्यजेदुद्योगमात्मनः । अनुद्यमेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति ॥ ४ ॥ विहाय पौरुषं यो हि दैवमेवावलम्बते । प्रासादसिंहवत्तस्य मूर्ध्नि तिष्ठन्ति वायसाः ॥ ५ ॥ पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते । तस्मात्पुरुषकारेण विना दैवं न सिध्यति ॥६ ॥ यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् । एवं पुरुषकारेण विना दैवं न सिध्यति ॥ ७ ॥ यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति । एवमात्मकृतं कर्म मानवः प्रतिपद्यते ॥ ८ ॥ निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः । सोद्योगं नरमायान्ति विवशाः सर्वसंपदः ॥ ९ ॥ दैवं पुरुषकारेण साध्यसिद्धिनिबन्धनम्[३] । योऽतिक्रमितुमिच्छेत स लोके नावसीदति ॥ १० ॥ योजनानां सहस्रं तु शनैर्गच्छेत्पिपीलिका । अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥ ११ ॥ कामपि श्रियमासाद्य यस्तद्वृद्धौ न चेष्टते । तस्यायतिषु न श्रेयो बीजभोजिकुटुम्बवत् ॥ १२ ॥ असंपादयतः कंचिदर्थं जातिक्रियागुणैः । यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम् ॥ १३ ॥ उद्योगिनः करालम्बं करोति कमलालया । अनुद्योगिकरालम्बं करोति कमलाग्रजा ॥ १४ ॥ काकतालीयवत्प्राप्तं दृष्ट्वापि निधिमग्रतः । न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते ॥ १५ ॥ आलस्यं हि मनुष्याणां शरीरस्थो महान्रिपुः । नास्त्युद्यमसमो बन्धुः कृत्वायं नावसीदति ॥ १६ ॥ पूर्वजन्मजनितं पुराविदः कर्म दैवमिति संप्रचक्षते । उद्यमेन तदुपार्जितं चिराद्दैवमुद्यमवशं न तत्कथम् ॥१७॥ उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवं प्रधानमिति कापुरुषा वदन्ति । दैवं विहाय कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ १८ ॥

---

## संहतिप्रशंसा ।

संहतिः[१४] श्रेयसी पुंसां स्वकुलैरल्पकैरपि । तुषेणापि[१५] परित्यक्ता न प्ररोहन्ति तण्डुलाः ॥ १ ॥ अल्पानामपि वस्तूनां संहतिः कार्यसाधिका । तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः ॥ २ ॥ बहूनामल्पसाराणां समवायो दुरत्ययः । तृणैर्विधीयते रज्जुर्बध्यन्ते तेन दन्तिनः ॥ ३ ॥

---

## क्षमाप्रशंसा ।

क्षमाशस्त्रं करे यस्य दुर्जनः किं करिष्यति । अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ॥१॥

---

१ आश्रयति २. प्रासादे देवालयशिखरे च सिंहस्तद्वत् ३ साध्यसिद्ध्यधीनं तदायत्तमित्यर्थः. ४ उल्लङ्घयितुम्. ५. व्यापारं न करोति ६ उत्तरकालेषु. ७. कल्याणम्. ८. लक्ष्मी ९ अलक्ष्मी.. १० काकागमनमिव तालपतनमिव काकतालीयं तद्वत् अवितर्कितम् अकस्मादिति यावत्. ११. खिन्नो न भवति १२. पुरुषश्रेष्ठम् १३ कुत्सितपुरुषाः १४. समानः १५ धान्यत्वक्. १६ रज्जुत्वम्.

नरस्याभरणं रूपं रूपस्याभरणं गुणः । गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥ २ ॥ क्षमा बलमशक्तानां शक्तानां भूषणं क्षमा । क्षमा वशीकृतिर्लोके क्षमया किं न सिध्यति ॥ ३ ॥

---

## विनयप्रशंसा ।

तिष्ठतां[1] तपसि पुण्यमासृजन्[2]संपदोऽनुगुणयन्[3]सुखैषिणाम् । योगिनां परिणमन्[4]विमुक्तये[5] केन नास्तु विनयः सतां प्रियः ॥ १ ॥

---

## सत्यप्रशंसा ।

सूनृतं सर्वशास्त्रार्थनिश्चितज्ञानशोभितम् । भूषणं सर्ववचसां लज्जेव कुलयोषिताम् ॥ १ ॥

---

## असत्यनिन्दा ।

नासत्यवादिनः सख्यं न पुण्यं न यशो भुवि । दृश्यते नापि कल्याणं कालकूटमिवा[6]श्नतः[7] ॥ १ ॥ असत्यमप्रत्यय[8]मूलकारणं कुवासनासद्मसमृद्धिवारणम् । विपन्निदानं[9] परवञ्चनोर्जितं कृतापराधं कृतिभिर्[10]विवर्जितम् ॥ २ ॥ यशो यस्माद्भस्मीभवति वनवह्नेरिव[11] वनं निदानं[12] दुःखानां यदवनिरुहाणामिव[13] जलम् । न यत्र स्याच्छायातप इव तपःसंयमकथा कथंचित्तन्मिथ्यावचनमभिधत्ते[14] न मतिमान् ॥ ३ ॥ जिह्वैकेव सतामुभे फणवतां[15] स्रष्टुश्चत[16]स्रश्च तास्ताः सप्तैव विभावसोर्[17]नियमिताः षट्कार्तिकेयस्य च । पौलस्त्यस्य[18] दशाभवन्फणिपतेर्[19]जिह्वासहस्रद्वय जिह्वालक्षशतैककोटिनियमो नो दुर्जनानां मुखे ॥ ४ ॥

---

## आत्मश्लाघानिन्दा ।

परैः प्रोक्ता गुणा यस्य निर्गुणोऽपि गुणी भवेत् । इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ॥ १ ॥ न सुखं न च सौभाग्यं स्वयं स्वगुणवर्णने । यथैव च पुरंध्रीणां स्वहस्तकुचमर्दनम् ॥ २ ॥ न सौख्यसौभाग्यकरा गुणा नृणां स्वयं गृहीताः सुदृशां स्तना इव । परैर्गृहीता द्वितयं वितन्वते न तेन गृह्णन्ति निजं गुण बुधाः ॥ ३ ॥ निजगुणगरिमा सुखाकरः स्यात्स्वयमनुवर्णयतां सतां न तावत् । निजकरकमलेन कामिनीनां कुचकलशाकलनेन को विनोदः ॥ ४ ॥

---

१ तपोनिष्ठानाम् २ सपादयन्. ३ अनुकूलयन्. ४ सपद्यमान. ५ अपवर्गाय. ६. विषम् ७. भक्षयत ८ अविश्वास ९ विपत्ते कारणम्. १० कुशले ११ दावाग्नि १२. आदिकारणम्. १३. वृक्षाणाम् १४ वक्ति १५ सर्पाणाम्. १६ ब्रह्मण. १७. अग्ने १८ रावणस्य. १९ शेषस्य

## स्वभाववर्णनम् ।

सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः । अतीत्य हि गुणान्सर्वान्स्वभावो मूर्ध्नि वर्तते ॥ १ ॥ किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् । भवन्ति सुतरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥ २ ॥ यः स्वभावो हि यस्यास्ते स नित्यं दुरतिक्रमः । श्वा यदि क्रियते राजा तत्किं नाश्नात्युपानहम् ॥ ३ ॥ परोपदेशकुशला दृश्यन्ते बहवो जनाः । स्वभावमनुवर्तन्ते सहस्रेष्वपि दुर्लभाः ॥ ४ ॥ रक्तत्वं कमलानां सत्पुरुषाणां परोपकारित्वम् । असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ ५ ॥ वचो हि सत्यं परमं विभूषणं गजाङ्गनायाः कृशता कटौ तथा । द्विजस्य विद्यैव पुनस्तथा क्षमा शीलं हि सर्वस्य नरस्य भूषणम् ॥ ६ ॥ न धर्मशास्त्रं पठतीति कारणं न चापि वेदाध्ययनं दुरात्मनः । स्वभाव एवात्र तथातिरिच्यते यथा प्रकृत्या मधुरं गवां पयः ॥ ७ ॥ निम्नोन्नतं वक्ष्यति को जलानां विचित्रभावं मृगपक्षिणां च । माधुर्यमिक्षौ कटुतां मरीचे स्वभावतः सर्वमिदं हि सिद्धम् ॥ ८ ॥ वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणान्मेरुः स्वल्पशिलायते मृगपतेः संघः कुरंगायते । व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ ९ ॥ ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो ज्ञानस्योपशमः कुलस्य विनयो वित्तस्य पात्रे व्ययः । अक्रोधस्तपसः क्षमा बलवतां धर्मस्य निर्व्याजता सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ १० ॥ काकः पद्मवने रतिं न कुरुते हंसो न कूपोदके मूर्खः पण्डितसंगमे न रमते दासो न सिंहासने । कुस्त्री सज्जनसंगमे न रमते नीचं जनं सेवते या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ॥ ११ ॥ व्याघ्रः सेवति काननं सुगहनं सिंहो गुहां सेवते हंसः सेवति पद्मिनी कुसुमितां गृध्रः श्मशानस्थलिम् । साधुः सेवति साधुमेव सततं नीचोऽपि नीचं जन या यस्य प्रकृतिः स्वभावजनिता केनापि न त्यज्यते ॥ १२ ॥

---

## वाग्वर्णनम् ।

तास्तु वाचः सभायोग्या याश्चित्ताकर्षणक्षमाः । स्वेषां परेषां विदुषां द्विषामविदुषामपि ॥ १ ॥ गानाब्धेस्तु परं पारं नोपेयाय सरस्वती । अतो निमज्जनभयात्तुम्बीं वहति वक्षसि ॥ २ ॥ प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः । भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥ ३ ॥ वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव । अनन्ता वाङ्मयस्याहो गेयस्येव

---

१. अतिक्रम्य २ अतिक्रम्य वर्तते ३ नीचोच्चम्. ४. तीक्ष्णताम्. ५. कृत्रिमसरिदिवाचरति. ६ सर्पः. ७. माला ८ अमृतम् ९ विजृम्भते. १० वाङ्नियमनम् ११. शान्ति . १२ निष्कपटत्वम् १३ सुस्वभाव १४ गानसमुद्रस्य १५ न प्राप्तवती १६ इक्ष्वाकुफलम् जलतरणार्थं तुम्ब्या सग्रहं लोका कुर्वन्तीति प्रसिद्धम् १७ प्रसन्नवदनाः, (पक्षे) उत्तानार्थां १८. कान्त्या शोभया मनोहारिण्य , (पक्षे) भाषणगुणेन मनोहारिण्य १९. आलिङ्गनम्, (पक्षे) श्लेष २०. परिमितै . २१. निषादादिभि .

विचित्रता ॥ ४ ॥ वह्वपि स्वेच्छया[1] कामं[2] प्रकीर्णमभिधीयते[3] । अनुज्झितार्थसंबन्धः प्रबन्धो दुरुदाहरः[4] ॥ ५ ॥ म्रदीयसीमपि[5] घनामनल्पगुणकल्पिताम्[6][7][8] । प्रसारयन्ति कुशलाश्चित्रां[9] वाचं पटीमिव[10] ॥ ६ ॥ सर्वालंकारैर्युक्तापि[11] न श्लिष्टा[12] वनितेव सा । वाणी मनोजातसुखं[13] प्रौढानां[14] न तनोति हि ॥ ७ ॥ मृदुलं शीतलं मिष्टं निर्झरीकृतपर्वतम् । यथा वारि तथा वाणी किं न साध्यं धनंजय ॥ ८ ॥ या कर्षति निजयोगादन्तर्गतजीवनानि[15] सरसानाम्[16] । वाणी सैव गुणवती[17] घटीव यद्वा वधूटीव[18] ॥ ९ ॥ रतरीतिवीतवसना प्रियेव शुद्धापि[19] वाङ्मुदे सरसा[20] । अलसा[21] सालंकृतिरपि[22] न रोचते शैलभञ्जीव[23] ॥ १० ॥ सुखयतितरां न रक्षति परिचयलेशं गणाङ्गनेव[24] श्रीः । कुलकामिनीव नोज्झति वाग्देवी जन्मजन्मापि ॥ ११ ॥ वाङ्माधुर्यान्नान्यदस्ति प्रियत्वं वाक्पारुष्याच्चोपकारोऽपि नष्टः । किं तद्द्रव्यं कोकिलेनोपनीतं को वा लोके गर्दभस्यापराधः ॥ १२ ॥ कामान्[25] दुग्धे[26] विप्रकर्षत्यलक्ष्मीं[27] कीर्तिं सूते दुष्कृतं या हिनस्ति । तां चाप्येतां मातरं मङ्गलानां धेनुं धीराः सूनृतां[28] वाचमाहुः ॥ १३ ॥ विविक्तवर्णाभरणा[29] सुखश्रुतिः[30] प्रसादयन्ती हृदयान्यपि द्विषाम् । प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा[31] सरस्वती ॥ १४ ॥ केयूरा[32] न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला[33] न स्नानं न विलेपनं न कुसुमं नालंकृता[34] मूर्धजाः[35] । वाण्येका समलंकरोति[36] पुरुषं या संस्कृता धार्यते क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ १५ ॥ अस्त्यद्यापि चतुःसमुद्रपरिखापर्यन्तमुर्वीतलं वर्तन्तेऽपि च तत्र तत्र रसिका गोष्ठीषु सक्ता नृपाः । एकस्तत्र निरादरो भवति चेदन्यो भवेत्सादरो वाग्देवी वदनाम्बुजे वसति चेत्को नाम दीनो जनः ॥ १६ ॥ ये सूक्तीन्दुकलाकलङ्कजनका ये गाढगर्वज्वरा ये वा केवलतर्ककर्कशधियः साक्षाच्च ये श्रोत्रियाः । ये वा द्वेषमषीमलीमसधियस्तान्प्राज्ञगोष्ठीरसप्रौढप्रावृडवग्रहान्परिहरन्वाचां प्रसारं कुरु ॥ १७ ॥

---

१. स्वप्रतिभानुसारेण २ यथेष्टम् ३ असगतम् ४ दुर्वच ५ अतिसुकुमाराक्षराम्; ( पक्षे ) श्लक्ष्णतराम् ६ अर्थगुर्वीम्, ( पक्षे ) सान्द्राम् कदलीदलकल्पामित्यर्थ ७ श्लेषादिभि', ( पक्षे ) तन्तुभि'. ८ रचिताम्; ( पक्षे ) निर्मिताम् ९ शब्दादिविचित्राम्; ( पक्षे ) विचित्ररूपाम् १०. शाटीमिव ११ उपमादिभि , ( पक्षे ) कङ्कणादिभि १२ श्लेषरहिता; ( पक्षे ) आलिङ्गनरहिता १३. मन प्रति जात यत्सुख तत्; ( पक्षे ) कामहर्षम् १४. चतुराणाम्, ( पक्षे ) प्रकर्षेण विधिपूर्वक विवाहितानाम् १५ हृद्गतानि जीवनानि, ( पक्षे ) उदकानि. १६ रसिकानाम्, ( पक्षे ) कूपादीनाम् १७. प्रागलभ्यादिगुणयुक्ता; (पक्षे) रज्जुयुक्ता १८. स्त्रीव १९ अनुप्रासोपमाद्यलकाररहितापि. २०. शृङ्गारादिमती, ( पक्षे ) शृङ्गाररसवती २१. आलस्ययुक्ता, ( पक्षे रलयो सावर्ण्यात् ) अरसा रसशून्या. २२. अलङ्कृतियुतापि, ( पक्षे ) कटककुण्डलयुतापि २३ प्रतिमेव २४. वेश्येव २५ मनोरथान् २६ प्रपूरयति. २७ अवलक्ष्मीम्. २८. सत्याम्. २९ विविक्ता. सयोगादिनाश्लिष्टा स्फुटोच्चारिता वर्णा अक्षराण्येवाभरणानि यस्या सा, ( पक्षे ) विविक्तानि शुद्धानि वर्णोरूपमाभरणानि यस्या सा ३० सुखा श्रुति श्रवण यस्या सा श्राव्येत्यर्थ , ( पक्षे ) श्रूयत इति श्रुतिर्वाक्सा सुखा यस्या सा मञ्जुभाषिणीत्यर्थ ३१ प्रसन्नानि वाचकानि गम्भीराण्यर्थगुरूणि च पदानि सुप्तिङन्तरूपाणि यस्या सा; ( पक्षे ) प्रसन्ना विमला गम्भीरपदालसचरणा ३२ बाहुभूषणानि ३३ चन्द्रवदुज्ज्वला ३४ सुगन्धतैलादिना सस्कृता ३५ केशा ३६. सम्यगलकरोति

तथ्यं पथ्यं सहेतु प्रियमितमृदुलं सारवद्दैन्यहीनं साभिप्रायं दुरापं सविनयमशठं चित्रमल्पाक्षरं च । वह्वर्थं कोपशून्यं स्मितयुतघनदाक्षिण्यसंदेहहीनं वाक्यं ब्रूयाद्रसज्ञः परिषदि समये सप्रमेयाप्रमत्तम् ॥ १८ ॥

---

## वाग्मिप्रशंसा ।

विरोधिवचसो मूकान्वागीशानपि कुर्वते । जडानप्यनुलोमा[1]र्थान्प्रवाचः[2] कृतिनां[3] गिरः ॥१॥ तीक्ष्णा नारुंतुदा बुद्धिः कर्म शान्तं प्रतापवत् । नोपतापि मनः सोष्म[4] वागेका वाग्मिनः सतः ॥ २ ॥ प्रसाद[5]रम्यमोजस्वि[6] गरीयो[7] लाघवान्वितम्[8] । साकाङ्क्ष[9]मनुपस्कारं[10] विष्वग्गति[11] निराकुलम्[12] ॥ ३ ॥ न्याय[13]निर्णीतसारत्वान्निरपेक्ष[14]मिवागमे[15] । अप्रकम्प्य[16]तयान्येषामाम्नाय[17]वचनोपमम् ॥ ४ ॥ अलङ्घ्य[18]त्वाज्जनैरन्यैः क्षुभितोदन्व[19]दूर्जितम् । औदार्या[20]दर्थसंपत्तेः[21] शान्तं चित्तमृषेरिव ॥ ५ ॥ इदमीदृग्गुणोपेतं लब्धावसर[22]साधनम् । व्याकुर्यात्[23]कः प्रियं वाक्यं यो वक्ता नेदृगाशयः ॥ ६ ॥ श्रुतिसिद्धान्तशूरस्य तद्विरुद्धान्निरुन्धतः । वलिगतं वावदूकस्य[24] कृतिनः किं न शोभते ॥ ७ ॥ अल्पाक्षररमणीयं यः कथयति निश्चितं स खलु वाग्मी । बहुवचनमल्पसारं यः कथयति विप्रलापी सः ॥ ८ ॥ शुद्धकांस्यरचितापि ललिता जिह्वया[25] यदि न योजिता भवेत् । किं तया करणमस्ति घण्टया जिह्वया ध्वनिमतां हि पूज्यया ॥ ९ ॥ भवन्ति ते सभ्यतमा[26] विपश्चितां[27] मनोगतं वाचि निवेशयन्ति[28] ये । नयन्ति तेष्वेव[29]प्युपपन्ननैपुणा[30] गंभीर[31]मर्थं कतिचित्प्रकाशताम् ॥ १० ॥ स्तुवन्ति गुर्वीमभिधेयसंपदं[32] विशुद्धि[33]मुक्ते[34]रपरे विपश्चितः । इति स्थितायां प्रतिपूरुषं रुचौ सुदुर्लभाः सर्वमनोरमा गिरः ॥ ११ ॥ पिकः[35]स्तावत्कृष्णः परमरुणया[36] पश्यति दृशा परापत्यद्वेषी स्वसुतमपि नो पालयति यः । तथाप्येषोऽमीषां सकलजगतां वल्लभतमो न दोषा गण्यन्ते खलु मधुरवाचां क्वचिदपि ॥ १२ ॥ आस्वाद्यैव कपायमङ्कुरमुरुप्रेमानुबद्धाशयो माकन्दस्य यशांसि कोकिलयुवा निर्माति दिग्भित्तिषु । माध्वीकानि निपीय तस्य मधुपास्तत्रैव गुञ्जन्त्यमी को ब्रूतामसतां सतां च वचसां

---

१ अनुकूलवादिन. २ प्रगल्भवाच . ३. कुशलानाम् ४ अभिमानोष्णम्. ५. प्रसाद. प्रसिद्धार्थपदत्व तेन रम्यम् ६. समासभूयिष्ठम् ७. अर्थभूयस्त्वपरिगतम् न तु शब्दाडम्बरमात्रमित्यर्थ.. ८. विस्तरदोपरहितम्. ९ आकाङ्क्षावत्पदकदम्बात्मकम् न तु दशदाडिमादिवाक्यवदनाकाङ्क्षितमित्यर्थः १० अध्याहारदोपरहितम् ११. कृत्स्नार्थप्रतिपादकम्. न तु सावशेषार्थमित्यर्थ. १२ असंकीर्णार्थम्. १३ न्यायेन युक्त्या निश्चितार्थत्वात् १४. स्वतन्त्रमिव १५. शास्त्रे. १६ अनुमानादिभिरबाध्यत्वादप्रत्याख्याततया १७. वेदवाक्यतुल्यमित्यर्थ १८. अनुल्लङ्घनीयत्वात् १९. उद्वेलाम्भोधिगम्भीरम्. २०. अग्राम्यार्थत्वात्; ( पक्षे ) त्यागित्वात् २१. प्रयोजनसपत्ते., ( पक्षे ) अणिमादिसमृद्धे २२. लब्धे प्राप्ते अवसरसाधने कालोपायौ येन तत्. २३ व्याहरेत् २४ वक्तु .२५ घण्टाजिह्वा २६. सभायां साधुतमा निपुणतमा . २७. विदुषाम् २८. वाचोद्गिरन्तीत्यर्थ २९ वक्तृषु. ३०. सभावितकौशला ३१. निगूढम् ३२ अर्थसपत्तिम्. ३३. सामर्थ्यम् ३४. शब्दस्य. ३५. कोकिल.. ३६. आरक्तया.

वर्त्मातिगं चेष्टितम् ॥ १३ ॥ श्रोतॄन्मूकयति[1] ब्रुवन्स्थिरतमं[2] कुर्वन्नमीषां मनो निर्बाष्पः परबाष्पकृत्परदृशामेकाश्रयो नान्यदृक् । यस्त्यक्ताङ्गविकम्पनः प्रचलयन्नित्यं सतां मस्तकं क्षीरं श्रोतृषु मुख्यमात्मनि गुणं धत्ते स वक्तोत्तमः ॥ १४ ॥ तद्वक्ता सदसि ब्रवीतु वचनं यच्छृण्वतां चेतसः प्रोल्लासं[3] रसपूरणं[4] श्रवणयोरक्ष्णोर्विकासश्रियम् । क्षुन्निद्राश्रमदुःखकालगतिहृत्कार्यान्तरप्रस्मृतिं[5] प्रोत्कण्ठामनिशं श्रुतौ वितनुते शोकं विरामादपि ॥ १५ ॥

## मौनम् ।

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः । बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधनम् ॥ १ ॥ स्वायत्तमेकान्तगुणं[6] विधात्रा विनिर्मितं छादनमज्ञतायाः[7][8] । विशेषतः सर्वविदां समाजे[9] विभूषणं मौनमपण्डितानाम् ॥ २ ॥ कोलाहले काककुलस्य जाते विराजते कोकिलकूजितं किम् । परस्परं संवदतां खलानां मौनं विधेयं सततं सुधीभिः ॥ ३ ॥

## स्थानमाहात्म्यम् ।

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति । स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ॥ १ ॥ किंचिदाश्रयसंयोगाद्धत्ते शोभामसाध्वपि । कान्ताविलोचने न्यस्तं मलीमसमिवाञ्जनम् ॥ २ ॥ कुस्थानस्य प्रवेशेन गुणवानपि पीड्यते । वैश्वानरोऽपि लोहस्थः कारुकै[10]रभिहन्यते ॥ ३ ॥ पदस्थितस्य पद्मस्य मित्रे वरुणभास्करौ । पदच्युतस्य तस्यैव क्लेशदाहकरावुभौ ॥ ४ ॥ राजा कुलवधूर्विप्रा मन्त्रिणश्च पयोधराः । स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नरा नखाः ॥ ५ ॥ पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः[11] । जलमिव समुद्रशुक्तौ मुक्ताफलतां[12] पयोदस्य[13] ॥ ६ ॥ अतिमात्रभास्वरत्वं पुष्यति भानोः परिग्रहादनलः । अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥ ७ ॥ प्रायो यत्किंचिदपि प्राप्नोत्यौत्कर्षमाश्रयान्महतः । मत्तेभकुम्भतटगतमेति शृङ्गारतां भस्म ॥ ८ ॥ अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च । पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च ॥ ९ ॥ आश्रयवशेन सततं गुरुता लघुता च जायते पुंसाम् । विन्ध्ये[14] विन्ध्यसमानाः करिणो वत दर्पणे लघवः ॥ १० ॥ जानामि नागेन्द्र तव प्रभावं कण्ठे स्थितो गर्जसि शंकरस्य । स्थानं प्रधानं न बलं प्रधानं स्थाने स्थितः कापुरुषोऽपि शूरः ॥ ११ ॥ सिंहक्षुण्णकरीन्द्रकुम्भगलितं रक्ताक्तमुक्ताफलं कान्तारे बदरीधिया द्रुतमगाद्भिल्लस्य पत्नी मुदा ।

---

१. मूकान्करोति २ अचलम् तटस्थमिति यावत् ३ प्रकर्षेणोल्लास विकासम्. ४ रसाना शृङ्गारादीना पूरणम् ५ अन्यकार्यविस्मृतिम्. ६ स्वस्याधीनम्. ७ पिधानम् ८. मूर्खताया . ९. सभायाम् १० लोहकारैः. ११. कौशलम् १२. मौक्तिकत्वम् १३. मेघस्य. १४. विन्ध्यपर्वते

पाणिभ्यामवगुह्य शुष्ककठिनं तद्वीक्ष्य दूरे जहावस्थाने पततामतीव महतामेतादृशी स्याद्गतिः ॥ १२ ॥

---

## सत्संगतिप्रशंसा ।

महानुभावसंसर्गः कस्य नोन्नतिकारकः । रथ्याम्बु जाह्नवीसङ्गात्त्रिदशैरपि वन्द्यते ॥ १ ॥ महाजनस्य संसर्गः कस्य नोन्नतिकारकः । पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम् ॥ २ ॥ महानुभावसंसर्गः कस्य नोन्नतिकारकः । हरिहस्तगतः शङ्खः पवित्रः प्रथितो भुवि ॥ ३ ॥ मलयाचलगन्धेन त्विन्धनं चन्दनायते । तथा सज्जनसङ्गेन दुर्जनः सज्जनायते ॥ ४ ॥ द्रवत्वात्सर्वलोहानां ममत्वान्मृगपक्षिणाम् । भयाल्लोभाच्च मूर्खाणां दर्शनात्संगतं सताम् ॥ ५ ॥ वीणावंशाश्रया तुम्बी चुम्बत्युच्चैः कुचौ स्त्रियः । पिबत्यनार्यसंयोगाद्रक्तं नक्तंचरो यथा ॥ ६ ॥ चन्दनं शीतलं लोके चन्दनादपि चन्द्रमाः । चन्द्रचन्दनयोर्मध्ये शीतला साधुसंगतिः ॥ ७ ॥ साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः । कालेन फलते तीर्थं सद्यः साधुसमागमः ॥ ८ ॥ करोति निर्मलाधारस्तुच्छस्यापि महर्घताम् । अम्बुनो बिन्दुरल्पोऽपि शुक्तौ मुक्ताफलं भवेत् ॥ ९ ॥ हीयते हि मतिस्तात हीनैः सह समागमात् । समैश्च समतामेति विशिष्टैश्च विशिष्टवान् ॥ १० ॥ मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः । पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ ११ ॥ कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः । अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ १२ ॥ काचः काञ्चनसंसर्गाद्धत्ते मारकतीर्द्युतीः । तथा सत्संनिधानेन मूर्खो याति प्रवीणताम् ॥ १३ ॥ यथोदयगिरौ द्रव्यं संनिकर्षेण दीप्यते । तथा सत्संनिधानेन हीनवर्णोऽपि दीप्यते ॥ १४ ॥ भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः । कस्य नानन्दनिस्यन्दं विदधाति सदागमः ॥ १५ ॥ यदि सत्सङ्गविरतो भविष्यसि भविष्यसि । तदा सज्जनगोष्ठीषु पतिष्यसि पतिष्यसि ॥ १६ ॥ सज्जनसङ्गो मा भूद्यदि सङ्गो मास्तु ते पुनः स्नेहः । स्नेहो यदि मा विरहो यदि विरहो मास्तु जीवितस्याशा ॥ १७ ॥ वंशभवो गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः । न हि तुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम् ॥ १८ ॥ गुरुरपि लघूपनीतो न निमज्जति नियतमाशये निहितः । वानरकरोपनीतः शैलो मकरालयस्यैव ॥ १९ ॥ गवाशनानां स शृणोति वाक्यमहं हि राजन्वचनं मुनीनाम् । न चास्य दोषो न च मद्गुणो वा संसर्गजा दोषगुणा भवन्ति ॥ २० ॥ कल्पद्रुमः कल्पितमेव सूते सा कामधुक्कामितमेव दोग्धि । चिन्तामणिश्चिन्तितमेव दत्ते सतां हि सङ्गः सकलं प्रसूते ॥ २१ ॥ असज्जनः सज्जनसङ्गिसङ्गा-

---

१. देवैः २ पाषाण ३ उदयपर्वते ४ सूर्यसंनिधानेन ५ प्रकाशितो भवति ६ अन्तःकरणे, (पक्षे) मध्ये ७ यवनगृहस्थित सहोदर शुकमुद्दिश्य मुनिगृहस्थितस्य शुकस्योक्तिरियम् ८. कामधेनु.

त्करोति दुःसाध्यमपीह साध्यम् । पुष्पाश्रयाच्छंभुशिरोऽधिरूढा पिपीलिका चुम्बति चन्द्रबिम्बम् ॥ २२ ॥ सत्सङ्गाद्भवति हि साधुता खलानां साधूनां न हि खलसंगमात्खलत्वम् । आमोदं कुसुमभवं मृदेव धत्ते मृद्गन्धं न हि कुसुमानि धारयन्ति ॥ २३ ॥ किंवापरेण बहुना परिजल्पितेन संसर्ग एव महतां महते फलाय । अम्भोनिधेस्तटरुहास्तरवोऽपि येन वेलाजलोच्छलितरत्नकृतालवालाः ॥ २४ ॥ जाड्यं धियो हरति सिञ्चति वाचि सत्यं मानोन्नतिं दिशति पापमपाकरोति । चेतः प्रसादयति दिक्षु तनोति कीर्तिं सत्संगतिः कथय किं न करोति पुंसाम् ॥ २५ ॥ दूरीकरोति कुमतिं विमलीकरोति चेतश्चिरंतनमघं चुलुकीकरोति । भूतेषु किं च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति ॥ २६ ॥ कान्तारभूमिरुहमौलिनिवासशीलाः प्रायः पलायनपरा जनवीक्षणेन । कूजन्ति तेऽपि हि शुकाः खलु रामनाम सङ्गः स्वभावविपरीतविधौ निदानम् ॥ २७ ॥ दोषाकरोऽपि कुटिलोऽपि कलङ्कितोऽपि मित्रावसानसमये विहितोदयोऽपि । चन्द्रस्तथापि हरवल्लभतामुपैति नैवाश्रितेषु महतां गुणदोषशङ्का ॥ २८ ॥ एके केचिद्व्यतिकरगताः पात्रसंज्ञां लभन्ते गायन्त्यन्ये सरसमधुरं वीणया संप्रयुक्ताः । एके तेषां सहगतिवशाद्दुस्तरं तारयन्ति केचित्तेषां ज्वलितहृदया रक्तमेवापिबन्ति ॥ २९ ॥ संतप्तायसि संस्थितस्य पयसो नामापि न श्रूयते मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते । स्वात्यां सागरशुक्तिसंपुटगतं तज्जायते मौक्तिकं प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ ३० ॥ गङ्गेवाघविनाशिनी जनमनःसंतोषसच्चन्द्रिका तीक्ष्णांशोरपि सत्प्रभेव जगदज्ञानान्धकारापहा । छायेवाखिलतापनाशनकरी स्वर्धेनुवत्कामदा पुण्यैरेव हि लभ्यते सुकृतिभिः सत्संगतिर्दुर्लभा ॥ ३१ ॥ कीर्तिर्नृत्यति नर्तकीव भुवने विद्योतते साधुता ज्योत्स्नेव प्रतिभा सभासु सरसा गङ्गेव संमीलति । चित्तं रञ्जयति प्रियेव सततं संपत्प्रसादोचिता संगत्या न भवेत्सतां किल भवेत्किं किं न लोकोत्तरम् ॥ ३२ ॥ बुद्धिं वर्धयति श्रियं वितनुते वैदग्ध्यमामुञ्चति श्रेयः पल्लवयत्यघानि दलयत्युन्मीलयत्युन्नतिम् । विज्ञानं परिशोधयत्युपचिनोत्युच्चैः कलाकौशलं किं किं नारभते हरेरिव कथाजर्यं सतां संगतम् ॥ ३३ ॥ पुण्यः पुण्यजलेषु बिन्दुपतितं शुक्तासु मुक्ताजलं कर्पूरं कदलीदलेषु गरलं व्याले स्थले कर्दमः । दैत्यं पात्रसुरा च देवपतित पात्रामृतं जायते स्वातिश्चैव परोपकारकरणं पात्रानुसारं फलम् ॥ ३४ ॥

---

## असत्संगतिनिन्दा ।

अहो दुर्जनसंसर्गान्मानहानिः पदे पदे । पावको लोहसङ्गेन मुद्गरैरभिहन्यते ॥ १ ॥

---

१ सुगन्धम्. २ मान्द्यम् ३. ददाति. ४. निराकरोति ५ विस्तारयति ६ दोषा रात्रिस्तस्याः करः, (पक्षे) दोषाणामाकर खनिरित्यर्थ. ७. सूर्यास्तसमये, (पक्षे) मित्रव्यसनकाले. ८ शिवप्रियताम्. ९ तुम्बीत्यर्थ १०. लोहे.

न स्थातव्यं न गन्तव्यं क्षणमप्यधमैः सह । पयोऽपि शौण्डिकी[1]हस्ते मदिरां[2] मन्यते जनः ॥ २ ॥ अन्तर्मलिनसंसर्गाच्छ्रुतवानपि दुष्यति । यच्चक्षुःसंनिकर्षेण कर्णोऽभूत्कुटिलाश्रयः ॥ ३ ॥ दुष्टतां दुष्टसंसर्गाददुष्टमपि गच्छति । सुराबिन्दुनिपातेन पञ्चगव्यघटी यथा ॥४॥ अणुरप्यसतां सङ्गो सद्गुणं हन्ति विस्तृतम् । गुणरूपान्तरं याति तक्रयोगाद्यथा पयः ॥५॥ बहुभिर्मूर्खसंघातैरन्योन्यपशुवृत्तिभिः । प्रच्छाद्यन्ते गुणाः सर्वे मेघैरिव दिवाकरः ॥ ६ ॥ दुर्वृत्तः क्रियते धूर्तैः श्रीमानात्मविवृद्धये । किं नाम खलसंसर्गः कुरुते नाश्रयाशवत् ॥७॥ आनन्द[3]मृगदावाग्निः शील[4]शाखिमदद्विपः । ज्ञान[5]दीपमहावायुरयं खलसमागमः ॥ ८ ॥ पात्र[6]मपात्रीकुरुते दहति गुणं[7] स्नेह[8]माशु नाशयति । अमले मलं[9] नियच्छति दीपज्वालेव खलमैत्री ॥ ९ ॥ दुर्जनजनसंसर्गात्सज्जनपुरुषोऽत्र दोषमायाति । रावणकृतापराधाज्जलधेरपि बन्धनं प्राप्तम् ॥ १० ॥ सुघनोऽपि सुवृत्तवानपि बालिमूर्धाधिकृतास्पदोऽपि सन् । यदि बालिशवक्रसंगमो निपतत्येव वधूकुचाविव ॥ ११ ॥ संगतिं स्वविपरीतगुणैस्त्वं मा कृथाः खलु सखे समयेऽस्मिन् । पश्य पूर्वमपि कृष्णरूपतामर्जुनोऽपि समवायनिश्रितम् ॥ १२ ॥ शाखोटकैश्चन्दनसंगतोऽपि वक्षोजयोः क्रीडितमायताक्ष्याः । पयोऽपि मद्यं श्वपचे हि मन्यते संसर्गजा दोषगुणा भवन्ति ॥ १३ ॥ दुर्वृत्तसंगतिरनर्थपरंपराया हेतुः सतां भवति किं वचनीयमत्र । लङ्केश्वरो हरति दाशरथेः कलत्रं प्राप्नोति बन्धनमसौ किल सिन्धुराजः ॥१४॥ हंसोऽध्वगश्रममपोहयितुं दिनान्ते कारण्डकाकबककश्येनकुलं प्रविष्टः । मूकोऽयमित्युपहसन्ति लुनन्ति पक्षान्नीचाश्रयो हि महतामपमानहेतुः ॥ १५ ॥

## सुमित्रप्रशंसा ।

कराविव शरीरस्य नेत्रयोरिव पक्ष्मणी । अविचार्य प्रियं कुर्यात्तन्मित्रं मित्रमुच्यते ॥१॥ यस्य मित्रेण संभाषा[10] यस्य मित्रेण संस्थितिः । मित्रेण सह यो भुङ्क्ते ततो[11] नास्तीह पुण्यवान् ॥ २ ॥ शुचित्वं[12] त्यागिता[13] शौर्यं सामान्यं[14] सुखदुःखयोः । दाक्षिण्यं[15] चानुरक्ति[16]श्च सत्यता च सुहृद्गुणाः ॥ ३ ॥ अन्यथैव हि सौहार्दं भवेत्स्वच्छान्तरात्मनः । प्रवर्ततेऽन्यथा वाणी शाठ्योपहतचेतसः ॥४॥ उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे । राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ ५ ॥ स बन्धुर्यो विपन्नानामापदुद्धरणे क्षमः । न तु भीतपरित्राणवस्तूपालम्भपण्डितः ॥ ६ ॥ आपदामापतन्तीनां हितोऽप्यायाति हेतुताम् । मातृजङ्घा हि

---

१ मद्यविक्रयकर्त्री. २ मद्यम् ३ आनन्द एव मृगस्तस्य दावाग्निरिव दाहकत्वात् ४ शीलमेव शाखी वृक्षस्तस्य मदद्विप इव उन्मूलकत्वात् ५ ज्ञानमेव दीपस्तस्य महावात इव निर्वाणकरणत्वात्. ६. अयोग्यम्. ७. सूत्रम्, ( पक्षे ) विनयादि ८. तैलम्, ( पक्षे ) प्रीति ९. मषीम्,( पक्षे ) दोषम् १०. मिथो भाषणम् ११ तस्मात्पुरुषात् १२ निर्मलचित्तत्वम् १३. दानशीलत्वम् १४ समानस्य भाव सामान्यम् समत्वमित्यर्थ . १५. सरलत्वम् १६ प्रीति

वत्सस्य स्तम्भीभवति बन्धने ॥ ७ ॥ औरसं कृतसंबन्धं तथा वंशक्रमागतम्। रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम् ॥ ८ ॥ याचते कार्यकाले यः स किं भृत्यः स किं सुहृत्। अकार्यकार्यकर्ता यस्त्वनादिष्टोऽप्यसौ सुहृत्॥ ९ ॥ तदेवास्य परं मित्रं यत्र संक्रामति द्वयम्। दृष्टे सुखं च दुःखं च प्रतिच्छायेव दर्पणे ॥ १० ॥ व्याधितस्यार्थहीनस्य देशान्तरगतस्य च। नरस्य शोकदग्धस्य सुहृद्दर्शनमौषधम् ॥ ११ ॥ दर्शने स्पर्शने वापि श्रवणे भाषणेऽपि वा। यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ॥ १२ ॥ स्वाभाविकं तु यन्मित्रं भाग्येनैवाभिजायते। तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ १३ ॥ न मातरि न दारेषु न सोदर्ये न चात्मनि। विश्वासस्तादृश पुंसां यावान्मित्रे स्वभावजे ॥ १४ ॥ शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम्। केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥१५॥ उदयन्नेव सविता पद्मेष्वर्पयति श्रियम्। विभावयन्समृद्धीनां फलं सुहृदनुग्रहम् ॥ १६ ॥ नहि बुद्धिगुणेनैव सुहृदामर्थदर्शनम्। कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥ १७ ॥ प्राणैरपि हिता वृत्तिरद्रोहो व्याजवर्जनम्। आत्मनीव प्रियाधानमेतन्मैत्रीमहाव्रतम् ॥ १८॥ पापान्निवारयति योजयते हिताय गुह्यानि गूहति गुणान्प्रकटीकरोति। आपद्गतं च न जहाति ददाति काले सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ १९ ॥ मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम्। ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुलास्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत्॥ २० ॥ क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः। गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥ २१ ॥

---

## कुमित्रनिन्दा।

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम्। वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ १ ॥ रहस्यभेदो याच्ञा च नैष्ठुर्यं चलचित्तता। क्रोधो निःसत्यता द्यूतमेतन्मित्रस्य दूषणम् ॥ २ ॥

---

## संसारः।

संसार तव निःसार पदवी न दवीयसी। अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥१॥ गतेसारेऽत्र संसारे सुखभ्रान्तिः शरीरिणाम्। लालापानमिवाङ्गुष्ठे बालानां स्तन्यविभ्रमः

---

१ अकपटमित्रता २ शत्रु.. ३ विश्वास ४ सुहृत्स्वनुग्रह प्रसादस्तम् ५ प्रीते रसायनमिव रसायनम् प्रीतिवर्धकमित्यर्थ. ६. अग्नौ ७ मित्रविपत्तिम्. ८. गुप्तप्रकाशनम्. ९ मार्गः. १०. अतिदूरा ११ मध्ये. १२. नि.सारे

॥ २ ॥ दुःखाङ्गारकतीव्रः संसारोऽयं महानसो[1] गहनः। इह विषयामृतलालस मानसमार्जार मा निपत ॥ ३ ॥ क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः क्वचिद्वीणावादः क्वचिदपि च हाहेति रुदितम्। क्वचिद्रम्या रामा क्वचिदपि जराजर्जरतनुर्न जाने संसारः किममृतमयः किं विषमयः ॥ ४ ॥ कृच्छ्रेणामेध्यमध्ये[2] नियमिततनुभिः[3] स्थीयते गर्भगर्ते[4] कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रयोगः। नारीणामप्यवज्ञा[5] विलसति नियतं वृद्धभावेऽप्यसाधुः संसारे रे मनुष्या वदत यदि सुखं स्तोकमप्यस्ति[6] किंचित् ॥ ५ ॥

## गृहस्थाश्रमप्रशंसा।

न्यायार्जितधनस्[7]तत्त्वज्ञाननिष्ठोऽतिथिप्रियः। शास्त्रवित्सत्यवादी च गृहस्थोऽपि विमुच्यते[8] ॥ १ ॥ यदि रामा[9] यदि च रमा[10] यदि तनयो विनयधीगुणोपेतः। तनये तनयोत्पत्तिः सुरवरनगरे किमाधिक्यम् ॥ २ ॥ सविप्रपादोदककर्दमानि[11] सवेदशास्त्रध्वनिगर्जितानि। स्वाहास्वधाकारनिरन्तराणि स्वानन्दतुल्यानि गृहाणि तानि ॥ ३ ॥ सानन्दं सदनं[12] सुताश्च सुधियः कान्ता न दुर्भाषिणी सन्मित्रं सधनं स्वयोषिति रतिश्चाज्ञापराः सेवकाः। आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे साधोः सङ्गमुपासते हि सततं धन्यो गृहस्थाश्रमः ॥ ४ ॥ मानुष्यं वरवंशजन्म[13] विभवो[14] दीर्घायुरारोग्यता सन्मित्रं सुसुतः सती प्रियतमा भक्तिश्च नारायणे। विद्वत्त्वं सुजनत्वमिन्द्रियजयः सत्पात्रदाने रतिस्ते पुण्येन विना त्रयोदशगुणाः संसारिणां दुर्लभाः ॥ ५ ॥ वंशो विश्वावतंसो[15] जनुरनुपहतं स्वान्तमौन्नत्यकान्तं[16] लीला शीलानुकूला क्षपितकलिमला कापि विद्यानवद्या[17]। वाणी वेणी[18] गुणानां समधिकयशसां साधिका[19] साधिका श्रीः श्रीमद्गौरीमयूरीमुदिर[20] पुरहर[21] त्वत्कृपाया विपाकः[22] ॥ ६ ॥

## गृहस्थाश्रमदूषणम्।

यत्र नास्ति दधिमन्थनघोषो यत्र नो लघुलघूनि शिशूनि। यत्र नास्ति गुरुगौरवपूजा तानि किं बत गृहाणि वनानि ॥ १ ॥ न विप्रपादोदकपङ्किलानि न वेदशास्त्रध्वनिगर्जितानि। स्वाहास्वधाकारविवर्जितानि श्मशानतुल्यानि गृहाणि तानि ॥ २ ॥ क्रोशन्तः शिशवः सवारि[23] सदनं पङ्कावृतं चाङ्गणं शय्या दंशवती[24] च रूक्षमशनं[25] धूमेन पूर्णं गृहम्। भार्या निष्ठुरभाषिणी[26] प्रभुरपि क्रोधेन पूर्णः सदा स्नानं शीतलवारिणा हि सततं धिग्धिग्गृहस्थाश्रमम्

१ पाकगृहम् २. अशुचिमलादि तन्मध्ये ३ जरायुणा बद्धशरीरैः ४ गर्भाशये ५. अवमानः. ६. अल्पम् ७. न्यायेन संपादितं धनं येन ८. मुक्तो भवति ९. स्त्री. १०. लक्ष्मी.. ११. ब्राह्मणचरणक्षालनोदकेन पङ्किलानि १२ गृहम्. १३ उत्तमकुल उत्पत्ति. १४ ऐश्वर्यम् १५ विश्वभूषणम्. १६ मन.. १७ निर्दोषा १८ प्रवाह. १९ साधयित्री २० गौरीव मयूरी तस्या मुदिरो मेघ २१. हे त्रिपुरनाशक. २२ परिणाम.. फलमित्यर्थ २३ उदकपूर्णम्. २४. मशकपूर्णा. २५ अस्निग्धम् २६ कठोरभाषिणी

॥ ३ ॥ तावद्विद्यानवद्या गुणगणमहिमा रूपसंपत्तिशौर्यं स्वस्थाने सर्वशोभा परगुणकथने वाक्पटुस्तावदेव । यावत्पाकाकुलाभिः स्वगृहयुवतिभिः प्रेषितापत्यवक्त्राद्धे बाबा नास्ति तैलं न च लवणमपीत्यादिवाचां प्रचारः ॥ ४ ॥

---

## पुत्रप्रशंसा ।

इदं तत्स्नेहसर्वस्वं[1] सममाढ्यदरिद्रयोः । अचन्दनमनौशीरं हृदयस्यानुलेपनम् ॥ १ ॥
गृहे जानुचरः[2] केल्यां मुग्धस्मितमुखाम्बुजः । पुत्रः पुण्यवतामेव पात्रीभवति नेत्रयोः ॥ २ ॥
स्वगर्भशुक्तिनिर्भिन्नं सुवृत्तं सुतमौक्तिकम् । वंशश्रीतिलकीभूतं मन्दभाग्यस्य दुर्लभम् ॥ ३ ॥
वर्धते न चिरं लोके वंशलक्ष्मीर[3]संततिः । स्वल्पावशेषितस्नेहवर्तिमालेव दीपिका ॥ ४ ॥
अन्तःकरणतत्त्वस्य दंपत्योः स्नेहसंश्रयात् । आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते ॥ ५ ॥
दिग्[4]वाससं गतव्रीडं जटिलं धूलिधूसरम् । पुण्याधिका हि पश्यन्ति गङ्गाधरमिवात्मजम् ॥ ६ ॥
निन्द्यन्ते पितृभिस्तसैर्निरपत्यधनः पुमान् । अध्व[5]नीनैरतिश्रान्तैर्[6]वकेशीव पादपः ॥ ७ ॥
उरो[7]रुहादुद्गमितैः पयोभिरापूर्यकेल्या निजमास्यगर्भम् । फूत्कृत्य मातुर्वदने हसन्तं तनूभवं पश्यति कोऽपि धन्यः ॥ ८ ॥ कृतचङ्क्रमणं गणेषु किंचित्क्वणत्किंकिणिरिङ्गदङ्घ्रिपद्मम् । यदि सन्महितं सुतं श्रितं स्यात्तदिदं सद्म हितं भवेत्तदानीम् ॥ ९ ॥ अहं किमम्बा किमभी[8]ष्टतापदे तवेति मातुर्धुरि तातपृच्छया । प्र[9]लोभतुल्यं प्रवदन्तमर्भकं मुदा हसञ्जि[10]घ्रति मूर्ध्नि पुण्यभाक् ॥ १० ॥ आलक्ष्यदन्तमुकुलाननिमित्तहासैरव्यक्तवर्णरमणीयवचःप्रवृत्तीन् । अङ्काश्रयप्रणयिनस्तनयान्वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ ११ ॥ आनन्दस्रुतिरात्मनो नयनयोरन्तःसुधाभ्यञ्जनं प्रस्तारः प्रणयस्य मन्मथतरोः पुष्पं प्रसादो रतेः । आ[12]लानं हृदयद्विपस्य विषयारण्येषु संचारिणोर्दंपत्योरिह लभ्यते सुकृततः संसारसारः सुतः ॥ १२ ॥

---

## सत्पुत्रप्रशंसा ।

एकोऽपि गुणवान्पुत्रो निर्गुणैः किं शतेन तैः । एकश्चन्द्रो जगच्चक्षुर्नक्षत्रैः किं प्रयोजनम् ॥ १ ॥ एकेन हि सुवृक्षेण पुष्पितेन सुगन्धिना । वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ २ ॥ प्रज्ञया वा विसा[13]रिण्या यो बलेन धनेन वा । [14]धुरं वहति गोत्रस्य जननी तेन पुत्रिणी ॥ ३ ॥ एकेनापि सुपुत्रेण विद्यायुक्तेन भासते । कुलं पु[15]रुषसिंहेन चन्द्रेणेव हि

---

१ इदं तु पितुर्लौकिक सबोधनम् २ जानुभ्या चरतीति स रिङ्गमाण इत्यर्थः. ३ सततिरहिता. ४. नग्नम् ५ पान्थैः ६. वन्ध्य ७. स्तनात् ८ माता. ९ इष्टस्थाने १० प्रलोभ्यस्य प्रलोभनार्थं दर्शितस्य वस्तुनोऽनुरूपम्. ११ अवघ्राण करोति १२ गजबन्धनस्तम्भः. १३ प्रसरणशीलया. १४ कार्यभारम् १५, पुरुषश्रेष्ठेन

शर्वरी ॥ ४ ॥ को धन्यो बहुभिः पुत्रैः कुशूलापूरणाढकैः । वरमेकः कुलालम्बी यत्र विश्रूयते पिता ॥ ५ ॥ पुण्यतीर्थे कृतं येन तपः क्वाप्यतिदुष्करम् । तस्य पुत्रो भवेद्वश्यः समृद्धो धार्मिकः सुधीः ॥ ६ ॥ वरमेको गुणी पुत्रो न च मूर्खशतैरपि । एकश्चन्द्रस्तमो हन्ति न च तारागणैरपि ॥ ७ ॥ एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम् । सहैव दशभिः पुत्रैर्भारं वहति रासभी ॥ ८ ॥ एकेनापि सुपुत्रेण जायमानेन सत्कुलम् । शशिना चैव गगनं सर्वदैवोज्ज्वलीकृतम् ॥ ९ ॥ किं जातैर्बहुभिः पुत्रैः शोकसंतापकारकैः । वरमेकः कुलालम्बी यत्र विश्राम्यते कुलम् ॥ १० ॥ किं मृष्टं[2] सुतवचनं पुनरपि मृष्टं तदेव सुतवचनम् । मृष्टान्मृष्टतरं किं श्रुतिपरिपक्वं तदेव सुतवचनम् ॥ ११ ॥ कुम्भः परिमितमम्भः पिबत्यसौ कुम्भसंभवो[3]ऽम्भोधिम् । अतिरिच्यते[4] सुजन्मा कश्चिज्जनकं निजेन चरितेन[5] ॥ १२ ॥ विद्याविहीना बहवोऽपि पुत्राः कल्पायुषः सन्तु पितुः किमेतैः । क्षयिष्णुना[6] वापि कलावता[7] वा तस्य प्रमोदः शशिनेव[8] सिन्धोः ॥ १३ ॥ पात्रं न तापयति नैव मलं प्रसूते स्नेहं न संहरति नैव गुणान्क्षिणोति । द्रव्यावसानसमये चलतां न धत्ते सत्पुत्र एव कुलसद्मानि[9] कोऽपि दीपः ॥ १४ ॥

---

## कुपुत्रनिन्दा ।

किं तेन जातु[10] जातेन मातृयौवनहारिणा[11] । आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥ १ ॥ किं तया क्रियते धेन्वा या न दोग्ध्री[12] न गर्भिणी । कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥ २ ॥ एकेन शुष्कवृक्षेण दह्यमानेन वह्निना । दह्यते तद्वनं सर्वं दुष्पुत्रेण कुलं तथा ॥ ३ ॥ कोटरान्तःस्थितो वह्निस्तरुमेकं दहेत्खलु । कुपुत्रस्तु कुले जातः स्वकुलं नाशयत्यहो ॥ ४ ॥ अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः । सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥ ५ ॥ अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरौ । यतस्तावल्पदुःखाय यावज्जीवं जडो दहेत् ॥ ६ ॥ यस्य पुत्रो न वै विद्वान्न शूरो न च धार्मिकः । अप्रकाशं[13] कुलं तस्य नष्टचन्द्रेव शर्वरी ॥ ७ ॥ अविनीतः सुतो जातः कथं न दहनात्मकः । विनीतस्तु सुतो जातः कथं न पुरुषोत्तमः ॥ ८ ॥ दाने तपसि शौर्ये च यस्य न प्रथितं यशः । विद्यायामर्थलाभे च मातुरुच्चार एव सः ॥ ९ ॥ निरुत्साहं निरानन्दं निर्वीर्यमरिनन्दनम् । मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ १० ॥ वरं गर्भस्रावो वरमपि च नैवाभिगमनं वरं जातप्रेतो वरमपि च कन्यैव जनिता । वरं वन्ध्या भार्या वरमपि च गर्भेषु वसतिर्न चाविद्वान्रूपद्रविणगुणयुक्तोऽपि तनयः ॥ ११ ॥ पित्रोर्नैव वचः शृणोति

१ रात्रि २ मधुरम् ३ अगस्त्य ४ अधिको भवति ५ आचरणेन ६ क्षयशीलेन ७ कलापूर्णेन. ८ चन्द्रेण ९ कुलमेव सद्म गृहं तस्मिन् १०. कदाचित् ११ यौवननाशकेन. १२. दोहनशीला. १३ प्रकाशरहितम्.

दिवसत्यागे व्रजत्यालयं यान्तीभिर्युवतीभिरध्वनि मुहुः कौतूहलं विन्दति। बन्धूनामुपदेशवाचि वदति क्रोधैकतानं वचः साधून्निन्दति दुर्जनं च मनुते मित्रं कुपुत्रो जनः॥ १२॥

---

## दैवाख्यानम्।

दैवमुल्लङ्घ्य यत्कार्यं क्रियते फलवन्न तत्। सरोम्भश्चातकेनात्तं गलरन्ध्रेण गच्छति॥ १॥ भाग्यवन्तं प्रसूयेथा मा शूरं मा च पण्डितम्। शूराश्च कृतविद्याश्च वने सीदन्ति पाण्डवाः॥ २॥ न केवलं मनुष्येषु दैवं देवेष्वपि प्रभुः। सति मित्रे धनाध्यक्षे चर्मप्रावरणो हरः॥ ३॥ सच्छिद्रो मध्यकुटिलः कर्णः स्वर्णस्य भाजनम्। धिग्दैवं निर्मलं चक्षुः पात्रं कज्जलभस्मनः॥ ४॥ भगवन्तौ जगन्नेत्रे सूर्याचन्द्रमसावपि। पश्य गच्छत एवास्तं निर्यतिः केन लङ्घ्यते॥ ५॥ किं करोति नरः प्राज्ञः शूरो वाप्यथ पण्डितः। दैवं यस्य फलान्वेषि करोति विफलाः क्रियाः॥ ६॥ दैवे विमुखतां याते न कोऽप्यस्ति सहायवान्। पिता माता तथा भार्या भ्राता वाथ सहोदरः॥ ७॥ पिबन्ति मधु पद्मेषु भृङ्गाः केसरधूसराः। हंसाः शैवालमश्नन्ति धिग्दैवमसमञ्जसम्॥ ८॥ करोतु नाम नीतिज्ञो व्यवसायमुदारधीः। फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम्॥ ९॥ दैवं फलति सर्वत्र न विद्या न च पौरुषम्[2]। समुद्रमथनाल्लेभे हरिर्लक्ष्मीं हरो विषम्॥ १०॥ दैवं फलति सर्वत्र न विद्या न च पौरुषम्। पाषाणस्य कुतो विद्या येन देवत्वमागतः॥ ११॥ यथा धेनुसहस्रेषु वत्सो विन्दति[3] मातरम्। तथा पूर्वकृतं कर्म कर्तारमनुगच्छति॥१२॥ रोगशोकपरीतापबन्धनव्यसनानि च। आत्मापराधवृक्षाणां फलान्येतानि देहिनाम्॥ १३॥ अचोद्यमानानि यथा पुष्पाणि च फलानि च। स्वं कालं नातिवर्तन्ते तथा कर्म पुरा कृतम्॥ १४॥ विपत्तौ किं विषादेन संपत्तौ हर्षणेन किम्। भवितव्यं भवत्येव कर्मणामीदृशी गतिः॥ १५॥ हरिणापि हरेणापि ब्रह्मणा त्रिदशैरपि। ललाटलिखिता रेखा न शक्या परिमार्जितुम्॥ १६॥ सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि। नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम्॥ १७॥ अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम्। सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते॥ १८॥ अयाचितः सुखं दत्ते याचितश्च न यच्छति। सर्वस्वं चापि हरते विधिरुच्छृङ्खलो नृणाम्॥ १९॥ मनोरथान्करोत्युच्चैर्जनो दैवहतानपि। सिद्ध्यसिद्ध्योः समं कुर्याद्दैवं हि फलसाधनम्॥ २०॥ पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी। शङ्खो भिक्षाटनं कुर्यात्फलं भाग्यानुसारतः॥ २१॥ तादृशी जायते बुद्धिर्व्यवसायोऽपि तादृशः। सहायास्तादृशाश्चैव यादृशी भवितव्यता॥ २२॥ भवितव्यं भवत्येव नारीकेलफलाम्बुवत्। गन्तव्यं गतमित्याहुर्गजभुक्तकपित्थवत्॥ २३॥

---

१. दैवम्. २ पराक्रम ३ प्राप्नोति. ४. अप्रेर्यमाणानि. ५ खेदेन. ६. देवै.

महतामाश्रयः पुंसां फलं भाग्यानुसारतः। ईशस्य कण्ठलग्नोऽपि वासुकिर्वायुभक्षकः ॥२४॥ कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी। तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥२५॥ कर्मणा बाध्यते बुद्धिर्न बुद्ध्या कर्म बाध्यते। सुबुद्धिरपि यद्रामो हैमं हरिणमन्वगात् ॥ २६ ॥ अघटितघटितं घटयति सुघटितघटितानि दुर्घटीकुरुते। विधिरेव तानि घटयति यानि पुमान्नैव चिन्तयति ॥ २७ ॥ विकटाटव्यामटनं शिलाधिरोहणमपांनिधेस्तरणम्। निगडं गुहाप्रवेशो विधिपरिपाकः कथं न संतार्यः ॥ २८ ॥ स्ववशः करोति कर्म प्रमादतस्तु परवशो भवति। स्ववशो रोहति वृक्षं निपतत्यवशस्ततः पुरुषः ॥ २९ ॥ किं त्वं न वेत्सि जगति प्रख्यातं लाभकारणे मूलम्। विधिलिखिताक्षरमालं फलति कपालं न भूपालः ॥ ३० ॥ द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्। आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ३१ ॥ अनुकूले सति धातरि भवत्यनिष्टादपीष्टमविलम्बम्। पीत्वा विषमपि शंभुर्मृत्युंजयतामवाप तत्कालम् ॥ ३२ ॥ अनुचितमेवाचरितं पशुपतिना यद्विधेः शिरश्छिन्नम्। छिन्नो न चास्य हस्तो येनायं दुर्लिपिं लिखति ॥ ३३ ॥ यन्मनोरथशतैरगोचरं न स्पृशन्ति कवयोऽपि गिरा यत्। स्वप्नवृत्तिरपि यत्र दुर्लभा लीलयैव विदधाति तद्विधिः ॥ ३४ ॥ अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति। जीवत्यनाथो विपिनेऽप्यरक्षितः कृतप्रयत्नोऽपि गृहे विनश्यति ॥ ३५ ॥ दाता बलिः प्रार्थयिता च विष्णुर्दानं भुवो वाजिमखस्य कालः। नमोऽस्तु तस्यै भवितव्यतायै यस्याः फलं बन्धनमेव जातम् ॥ ३६ ॥ प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः। तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं न हि तत्परेषाम् ॥ ३७ ॥ मा धाव मा धाव विनैव दैवं नो धावनं साधनमस्ति लक्ष्म्याः। चेद्धावन साधनमस्ति लक्ष्म्याः श्वा धावमानोऽपि लभेत लक्ष्मीम् ॥ ३८ ॥ ईशः करस्थीकृतकाञ्चनाद्रिः कुबेरमित्रं रजताचलस्थः। तथापि भिक्षाटनमस्य जातं विधौ शिरःस्थे कुटिले कुतः श्रीः ॥ ३९ ॥ स्वयं महेशः श्वशुरो नगेशः सखा धनेशस्तनयो गणेशः। तथापि भिक्षाटनमेव शंभोर्बलीयसी केवलमीश्वरेच्छा ॥ ४० ॥ असंभवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय। प्रायः समासन्नविपत्तिकाले धियोऽपि पुंसां मलिनीभवन्ति ॥ ४१ ॥ न भूतपूर्वो न च केन दृष्टो हेम्नः कुरङ्गो न कदापि वार्ता। तथापि तृष्णा रघुनन्दनस्य विनाशकाले विपरीतबुद्धिः ॥ ४२ ॥ धनानि भूमौ पशवश्च गोष्ठे भार्या गृहद्वारि जनः श्मशाने। देहश्चितायां परलोकमार्गे कर्मानुगो गच्छति जीव एकः ॥ ४३ ॥ वने जने शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा। सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति पुण्यानि पुरा कृतानि ॥ ४४ ॥ सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा। अहं करोमीति वृथाभिमानः स्वकर्म-

---

१ दैवे. २. दुर्लेखम् ३ अश्वमेधस्य ४. दैवे; (पक्षे) चन्द्रे ५. वक्रे, (पक्षे) विपरीते ६ हिमालय.

सूत्रग्रंथितो हि लोकः ॥ ४५ ॥ यः सुन्दरस्तद्वनिता कुरूपा या सुन्दरी सा पतिरूपहीना । यत्रोभयं तत्र दरिद्रता च विधेर्विचित्राणि विचेष्टितानि ॥ ४६ ॥ भ्रमन्वनान्ते नवमञ्जरीषु न षट्पदो गन्धफलीमजिघ्रत् । सा किं न रम्या स च किं न रन्ता बलीयसी केवलमीश्वरेच्छा ॥ ४७ ॥ विधौ विरुद्धे न पयः पयोनिधौ सुधौघसिन्धौ न सुधा सुधाकरे । न वाञ्छितं सिध्यति कल्पपादपे न हेम हेमप्रभवे गिरावपि ॥ ४८ ॥ ललाटपट्टे लिखिता विरिञ्चिना वर्णावली या किल तां प्रमार्ष्टुम् । न कोऽपि शक्तोऽत्र यथा जलाशया न चातकतृट्शमना भवन्ति ॥ ४९ ॥ निपतति किल दुर्बलेषु दैवं तदवितथं ननु येन कारणेन । बलवति न तथा यथाबलानां प्रभवति कृष्टशरासनो मनोभूः ॥ ५० ॥ हरशिरसि शिरांसि यानि रेजुः शिवाशिव तानि लुठन्ति गृध्रपादे । अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः ॥ ५१ ॥ क्व च ननु जनकाधिराजपुत्री क्व च दशकन्धरमन्दिरे निवासः । अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः ॥ ५२ ॥ क्व नु कुलमकलङ्कमायताक्ष्याः क्व नु रजनीचरसंगमापवादः । अयि खलु विषमः पुराकृतानां भवति हि जन्तुषु कर्मणां विपाकः ॥ ५३ ॥ सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः । तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥ ५४ ॥ गजभुजंगमयोरपि बन्धनं शशिदिवाकरयोर्ग्रहपीडनम् । मतिमतां च समीक्ष्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥ ५५ ॥ प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता । अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ५६ ॥ यस्माच्च येन च यथा च यदा च यच्च यावच्च यत्र च शुभाशुभमात्मकर्म । तस्माच्च तेन च तथा च तदा च तच्च तावच्च तत्र च विधातृवशादुपैति ॥ ५७ ॥ नैवाकृतिः फलति नैव कुलं न शीलं विद्यापि नैव न च यत्नकृतापि सेवा । भाग्यानि पूर्वतपसा किल संचितानि काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ५८ ॥ आकाशमुत्पततु गच्छतु वा दिगन्तमम्भोनिधिं विशतु तिष्ठतु वा यथेच्छम् । जन्मान्तरार्जितशुभाशुभकृन्नराणां छायेव न त्यजति कर्मफलानुबन्धः ॥ ५९ ॥ भीमं वन भवति तस्य पुरं प्रधानं सर्वो जनः सुजनतामुपयाति तस्य । कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा यस्यास्ति पूर्वसुकृत विपुलं नरस्य ॥ ६० ॥ कैवर्तकर्कशकरग्रहणच्युतोऽपि जालान्तरे निपतितः शफरो वराकः । दैवात्ततो विगलितो गिलितो बकेन वक्रे विधौ वद कथं व्यवसायसिद्धिः ॥ ६१ ॥ दैवे समर्प्य चिरसंचितकर्मजालं सुस्थाः सुखं वसत किं परयाचनाभिः । मेरुं प्रदक्षिणयतोऽपि दिवाकरस्य ते तस्य सप्त तुरगा न कदाचिदष्टौ ॥ ६२ ॥ येनाञ्चलेन सरसीरुहलोचनायास्त्रातः प्रभूतपवनादुदये प्रदीपः । तेनैव सोऽस्तसमयेऽस्तमयं विनीतः क्रुद्धे विधौ भजति मित्रममित्रभावम् ॥ ६३ ॥ आधोरणाङ्कुशभयात्करिकुम्भयुग्म जातं पयोधरयुगं हृदयेऽङ्गनानाम् । तत्रापि वल्लभनखक्ष-

१. चम्पककलिकाम्. २. मूर्खता. ३. दैववशात्

तभेदभिन्नं नैवान्यथा भवति यल्लिखितं विधात्रा ॥ ६४ ॥ संजातसान्द्रमकरन्दरसां क्रमेण पातुं गतश्च कलिकां कमलस्य भृङ्गः । दग्धा निपत्य सहसैव हिमं नवैषा वामे विधौ नहि फलन्त्यभिवाञ्छितानि ॥ ६५ ॥ सदसि[1] विदुरभीष्मद्रोणशारद्वतानां पतिभिरमर[2]कल्पैः पञ्चभिः पालितापि । अहह परि[3]भवस्य द्रौपदी पात्रमासीद्बलवति सति दैवे बन्धुभिः किं विधेयम् ॥ ६६ ॥ गुणवदगुणवद्वा कुर्वता कार्यमादौ [4]परिणतिरव[5]धार्या यत्नतः पण्डितेन । अतिर[6]भसकृतानां कर्मणामा विपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ६७ ॥ स हि ग[7]गनविहारी [8]कल्मषध्वंसकारी दशशतकरधारी [9]ज्योतिषां मध्यचारी । विधुरपि विधियोगाद्ग्रस्यते राहुणासौ लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ॥ ६८ ॥ अयममृतनिधानं नायकोऽप्योषधीनां शतभिषगनुयातः शंभुमूर्ध्नोऽवतंसः । विरहयति न चैनं राजयक्ष्मा शशाङ्कं हतविधिपरिपाकः केन वा लङ्घनीयः ॥ ६९ ॥ प्रियसखिविपद्दण्डप्रान्तप्रपातपरंपरापरिचयचले चिन्तां चक्रे निधाय विधिः खलः । मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालवद्भ्रमयति मनो नो जानीमः किमत्र करिष्यति ॥ ७० ॥ क्वचित्पाणिप्राप्तं घटितमपि कार्यं विघटयत्यशक्यं केनापि क्वचिदघटमानं घटयति । तदेवं सर्वेषामुपरि परितो जाग्रति विधावुपालम्भः कोऽयं जनतनुधनोपार्जनविधौ ॥ ७१ ॥ नमस्यामो देवान्ननु हतधियस्तेऽपि वशगा विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः । फलं कर्मायत्तं यदि किममरैः किं च विधिना नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्र[10]भवति ॥ ७२ ॥ त्रिलोकेशः शा[11]र्ङ्गी श[12]बरशरलक्ष्यत्वमगमद्द्विधौ[13]ता लोकानामलभत शि[14]रः कृन्तनविधिम् । प्रयातौ तौ राहोर्दिनकरशशाङ्कौ [15]कवलतां प्रभुर्नग्नः शंभुः शिरसि लिखितं लङ्घयति कः ॥ ७३ ॥ सुधांशुर्जातेयं कथमपि कलङ्कस्य कणिका विधातुर्दोषोऽयं न च गुणनिधेस्तस्य किमपि । स किं नात्रेः पुत्रो न किमु हरचूडार्चनमणिर्न वा हन्ति ध्वान्तं जगदुपरि कि वा न वसति ॥ ७४ ॥ [16]लुलाये गोमा[17]यौ मृगपरिषदि श्वापदकुले करिष्यन्कार्पण्यं किमिह महिमानं गमयसि । निमग्नः पङ्केऽस्मिन्ननुभव करीन्द्राधिपदशामभद्रं भद्रं वा विधिलिखितमुन्मूलयति कः ॥ ७५ ॥ धुनोति ध्वान्तानि व्यपनयति नीहारपटलं कुलं राजीवानां दलयति रथाङ्गं रमयति । जगद्व्यापी देवः सुखयति जनानां च नयनं न याति स्थेमानं यदि तदिह दैवं जयतु कः ॥ ७६ ॥ त एवामी बाणास्तदपि हरलब्धं धनुरिदं स एवाहं पार्थः प्रमथितसुराराातिनिचयः । इमास्तास्ता गोप्यो हरिचरणचि-

---

१. सभायाम् २ देवकल्पै. ३ पराभवस्य. ४. परिणाम . ५. निश्चेतव्या. ६ अतित्वरया. ७ आकाशसचारी. ८ अन्धकारनाशकर्ता ९ नक्षत्राणाम् १०. समर्थो भवति ११. कृष्णः. १२. शबरो जरानामा भिल्ल . प्रभासे परस्पर कलहेनाखिलयादवोपसहारानन्तरमश्वत्थस्याधस्ताद्वामोरौ दक्षिण पाद निधायास्थिते भगवति जरानाम्ना भिल्लेन दूरतो भगवच्चरण दृष्ट्वा मृगमुखभ्रमाद्भगवत्पादो बाणेन विद्ध इति भागवते. १३. ब्रह्मा १४. शिर कर्तनम्. १५ आसताम् १६ महिषे. १७. मृगधूर्तके.

त्तैकशरणा ह्रियन्ते गोपालैर्विधिरपि बलीयान्न तु नरः ॥ ७७ ॥ पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं नोलूकेन विलोक्यते यदि दिवा सूर्यस्य किं दूषणम् । धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं यद्धात्रा निजभालपट्टलिखितं तन्मार्जितुं कः क्षमः ॥ ७८ ॥ या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् । तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं हे साधो व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ॥ ७९ ॥ ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे विष्णुर्येन दशावतारगहने क्षिप्तः सदा संकटे । रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ ८० ॥ यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा धनं तत्प्राप्नोति मरुस्थलेऽपि नितरां मेरौ ततो नाधिकम् । तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जलम्॥८१॥ नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः स्वर्गो दुर्गमनुग्रहः किल हरेरैरावतो वारणः । इत्याश्चर्यबलान्वितोऽपि बलिभिर्भग्नः परैः संगरे तद्युक्तं वरमेव दैवशरणं धिग्धिग्वृथा पौरुषम् ॥ ८२ ॥ रामो येन विडम्बितो मृदुमयश्चन्द्रः कलङ्कीकृतः क्षाराम्बुः सरितां पतिश्च नहुषः सर्पः कपाली हरः । माण्डव्यो मुनिः शूलपीडिततनुर्भिक्षाभुजः पाण्डवाः नीतो येन रसातलं बलिरसौ तस्मै नमः कर्मणे ॥ ८३ ॥ जातः सूर्यकुले पिता दशरथः क्षोणीभुजामग्रणीः सीता सत्यपरायणा प्रणयिनी यस्यानुजो लक्ष्मणः । दोर्दण्डेन समो न चास्ति भुवने प्रत्यक्षविष्णुः स्वयं रामो येन विडम्बितोऽपि विधिना चान्ये जने का कथा ॥ ८४॥ जामाता पुरुषोत्तमो भगवती लक्ष्मीः स्वयं कन्यका दूतो यस्य बभूव कौशिकमुनिर्यज्वा वासिष्ठः स्वयम् । दाता श्रीजनकः प्रदानसमये चैकादशस्था ग्रहाः किं ब्रूमो भवितव्यतां हतविधे रामोऽपि यातो वनम् ॥ ८५ ॥ आसाद्यापि महोदधिं न वितृषो जातो जलैर्वाडवो मेघं प्राप्य न चातकोऽपि चरणौ भानुं न लेभेऽरुणः । चन्द्रः शंकरशेखरेऽपि निवसन्पक्षक्षये क्षीयते प्रायः सज्जनसंगतौ हि लभते दैवानुरूपं फलम् ॥ ८६ ॥ यावद्भाग्यमहोदयो नहि भवेत्तावन्निरर्था गुणा विद्यावेदविनोदशास्त्रकविताचातुर्यशूरादयः । भाग्ये तिष्ठति निर्गुणोऽपि गुणिनामग्रेसरो जायते मान्याः सर्वगुणा गुणाग्रणि भवेद्भाग्याय तस्मै नमः ॥ ८७ ॥ आहारे शुचिता ध्वनौ मधुरता वाचालता माधवे बन्धौ निर्ममता जनेषु निरता नीडे पराधीनता । एतैरेव गुणैर्युताः परभृतो त्यक्त्वा किमेते जना वन्दन्ते खलु खञ्जनं कृमिभुजं चित्रा गतिः कर्मणाम् ॥ ८८ ॥ गीतं कोकिल ते मुदा रसविदः शृण्वन्ति कर्णामृतं नो किंचिद्वितरन्ति ते तरुदलैरेव स्वयं जीवसि । कर्णायुर्हरमुद्गिरन्ति विरुतं काका-

---

१ दिवाभीतेन २ शोधयितुम् ३. समर्थ ४ कुम्भकारः. ५. आयुधम्. ६. वसन्ते ७. कुलाये. ८. कोकिला.

स्तु तेभ्यो बलिं प्रज्ञा एव दिशन्ति हन्त धिगिदं वक्रं विधेः क्रीडितम् ॥ ८९ ॥ छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां पर्यन्ताग्निशिखाकलापजटिलान्निःसृत्य दूरं वनात् । व्याधानां शरगोचरादतिजवेनोत्प्लुत्य धावन्मृगः कूपान्तः पतितः करोति विमुखे किंवा विधौ पौरुषम् ॥ ९० ॥ लब्धं जन्म सह श्रिया स्वयमपि त्रैलोक्यभूषाकरः स्थित्यर्थं परमेश्वराभ्युपगतस्तेनापि मूर्ध्ना धृतः । वृद्धिं शीतकरस्तथापि न गतः क्षीणः परं प्रत्युत प्रायः प्राक्तनमेव कर्म बलवत्कः कस्य कर्तुं क्षमः ॥ ९१ ॥ रामे प्रव्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् । कारागारनिषेवणं च मरणं संचिन्त्य लङ्केश्वरे सर्वः कालवशेन नश्यति नरः को वा परित्रायते ॥ ९२ ॥ भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः । तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा लोकाः पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥ ९३ ॥ माता यस्य धराधरेन्द्रदुहिता तातो महेशस्तथा भ्राता विघ्नकुलान्तकः पितृसखो देवो धनानां पतिः । ख्यातः क्रौञ्चविदारणे सुरपतेः सेनाग्रगः षण्मुखस्तद्दुर्दैवबलेन कुत्र घटते नाद्यापि पाणिग्रहः ॥ ९४ ॥ कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् । अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधयन्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ॥ ९५ ॥ तुल्यं भूभृति जन्म तुल्यमुभयोर्मूल्यं च तुल्यं वपुस्तुल्यं दार्ढ्यमुदग्रटङ्कदलनं तुल्यं च पाषाणयोः । एकस्याखिलवन्दनाय विधिना देवत्वमारोपितं तद्द्वारे विहिता परस्य तु पदाघातास्पदं देहली ॥ ९६ ॥ यद्भग्नं धनुरीश्वरस्य समरे यज्जामदग्न्यो जितस्त्यक्ता येन गुरोर्गिरा वसुमती सेतुः पयोधौ कृतः । एकैकं दशकन्धरक्षयकृतो रामस्य किं वर्ण्यते दैवं वर्णय येन सोऽपि सहसा नीतः कथाशेषताम् ॥ ९७ ॥ खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके वाञ्छन्देशमनातपं तु विधिना तालस्य मूलं गतः । तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः प्रायो गच्छति यत्र भाग्यरहितस्तत्रापदां भाजनम् ॥ ९८ ॥ भूयिष्ठं द्रविणात्मज जनयितुं लिप्सावता चेतसा नार्यः पञ्च मया क्रमेण कुलजाः काले समुद्वाहिताः । सद्विद्या कविता विदेशवसतिः सेवा तथाभ्यर्थना दैवेन प्रतिबन्धकेन युगपद्वन्ध्याः समस्ताः कृताः ॥ ९९ ॥ मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे वाणिज्यं कृषिसेवनादि सकला विद्याः कलाः शिक्षतु । आकाशं सकलं प्रयातु खगवत्कृत्वा प्रयत्नं परं नो भाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥ १०० ॥ लक्ष्मीकौस्तुभपारिजातसहजः सूनुः सुधाम्भोनिधेर्देवेन प्रणयप्रसादविधिना मूर्ध्ना धृतः शंभुना । अद्याप्युज्झति नैव दैवविहितं क्षैण्यं क्षपावल्लभः केना-

१ मृगबन्धिनी २ उड्डीय ३ पार्वती ४. गजाननः ५ कुबेर ६ विवाह. ७ पर्वते ८ दृढता ९ उदग्रा ये टङ्कास्तैर्दलनम् १०. द्रविण द्रव्य तदेवात्मज पुत्रस्तम् ११ विवाहिता. १२ निष्फला. १३. युद्धे.

न्येन विलङ्घ्यते विधिगतिः पाषाणरेखासखी ॥ १०१ ॥ अम्भोधिः स्थलतां स्थलं जलधितां धूलीलवः शैलतां मेरुर्मृत्कणतां तृणं [1]कुलिशतां वज्रं तृणप्रायताम् । वन्हिः शीतलतां हिमं दहनतामायाति यस्येच्छया लीलादुर्ललिताद्भुतव्यसनिने दैवाय तस्मै नमः ॥ १०२ ॥ जन्म ब्रह्मकुलेऽग्रजो धनपतिर्यः कुम्भकर्णाग्रजः सूनुर्वासवजित्स्वयं दशशिरा दोर्दण्डका विंशतिः । अस्त्रं कामगमं विमानमजयं मध्येसमुद्रं पुरी सर्वं निष्फलमेतदेव नियतं दैवं परं दुर्जयम् ॥ १०३ ॥ यत्राखण्डलदन्तिदन्तमुसलान्याखण्डितान्याहवे धारा यत्र पिनाकपाणिपरशोराकुण्ठितामागताः । तन्मे तावदुरो नृसिंहकरजैर्व्यादीर्यते सांप्रतं दैवे दुर्बलतां गते तृणमपि प्रायेण वज्रायते ॥ १०४ ॥ दोःसंदोहवशंवदत्रिभुवनश्रीगर्वसर्वंकषः कैलासोद्धरणप्रचण्डचरितो वीरः कुबेरानुजः । यत्रायं स्वयमस्ति सेयममरावत्यापि वन्द्या पुरी नीता मर्कटकेन कामपि दशां धिग्दैवमावश्यकम् ॥ १०५ ॥ येनाकारि मृणालपत्रमशनं क्रीडा करिण्या सह स्वच्छन्दं भ्रमणं च कन्दरगणे पीतं पयोनिर्झरम् । सोऽयं वन्यकरी नरेषु पतितः पुष्णाति देहं तृणैर्यद्दैवेन ललाटपत्रलिखितं तत्प्रोज्झितुं कः क्षमः ॥ १०६ ॥ दैवेन प्रभुणा स्वयं जगति यद्यस्य प्रमाणीकृतं तत्तस्योपनमेन्मनागपि महान्नैवाश्रयः कारणम् । सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ॥ १०७॥ कान्तं वक्ति कपोतिकाकुलतया नाथान्तकालोऽधुना व्याधोऽधो धृतचापसज्जितशरः श्येनः परिभ्रामति । इत्थं सत्यहिना स दष्ट इषुणा श्येनोऽपि तेनाहतस्तूर्णं तौ तु यमालयं प्रति गतौ दैवी विचित्रा गतिः ॥१०८॥ स्थाल्यां वैदूर्यमय्यां पचति तिलकणांश्चन्दनैरिन्धनाद्यैः सौवर्णैर्लाङ्गलाद्यैर्विलिखति वसुधां कर्ममूलस्य हेतोः । छित्त्वा कर्पूरखण्डान्[6]वृतिमिह कुरुते कोद्रवाणां समन्तात्प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपोमन्दभाग्यः ॥ १०९ ॥ पञ्चैते पाण्डुपुत्राः क्षितिपतितनया धर्मभीमार्जुनाद्याः शूराः सत्यप्रतिज्ञा दृढतरवपुषः केशवेनापि गूढाः । ते वीराः पाणिपात्रे कृपणजनगृहे भिक्षुचर्यां प्रवृत्ताः को वा कार्ये समर्थो भवति विधिवशाद्भाविनी कर्मरेखा ॥ ११० ॥ यत्र श्यामाकबीजान्यपि चटकवधूचञ्चुकोटिच्युतानि प्रोड्डीयन्ते स्ववेश्मन्यशनविरहिते निर्धने श्रोत्रियाणाम् । दैवे दातर्यकस्माच्चटुलशिशुकराकृष्टहारावलीतो भ्रष्टास्तत्रैव दृष्टा युवतिभिरलसं घूर्णिता मौक्तिकौघाः ॥ १११ ॥

---

## जरावर्णनम् ।

अलंकरोति हि जरा राजामात्यभिषग्यतीन् । विडम्बयति पण्यस्त्रीमल्लगायकसेवकान् ॥ १ ॥ क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः । निर्वास्यतः प्रदीपस्य शिखेव जर-

---

१ वज्रताम् २ इन्द्र ३ ऐरावत ४ शिव, ५. रत्नविशेष ६ प्राचीरम्

तो मतिः ॥ २ ॥ शशिनीव हिमार्तानां घर्मार्तानां यथा रवौ । मनो न रमते स्त्रीणां [1]जरापीतेन्द्रिये पतौ ॥ ३ ॥ मलिनैर[2]लकैरेतैः शुक्लत्वं प्रकटीकृतम् । तद्दोषादिव निर्याता वदनाद्[3]दनावलिः ॥ ४ ॥ [4]वृद्धत्वानलदग्धस्य सारयौवनवस्तुनः । दृश्यते देहगेहेषु भस्मैव [5]पलितच्छलात् ॥ ५ ॥ वीक्ष्यते पलित[6]श्रेणिर्नैव वृद्धस्य मूर्धनि । [7]मृषैव जातं जन्मेति किं तु भस्म विधिर्न्य[8]धात् ॥ ६ ॥ इयत्यामपि सामग्र्यां सु[9]कृतं न कृतं त्वया । इतीव कुपितो दन्तान[10]न्तकः पातयत्यलम् ॥ ७ ॥ यममिव करधृतदण्डं हरिमिव [11]सगदं शशाङ्कमिव वक्रम् । शिवमिव च वि[12]रूपाक्षं जरा करोत्यकृतपुण्यमपि ॥ ८ ॥ वदनं दर्श[13]नविहीनं वाचो न परिस्फुटा गता शक्तिः । अव्यक्तेन्द्रियशक्तिः पुनरपि बाल्यं कृतं जरया ॥ ९ ॥ पटुरटति [14]पलितदूतो मस्तकमासाद्य सर्वलोकस्य । परिभवति जरा मरणं कुरु धर्मं विरम पापेभ्यः ॥ १० ॥ [15]शतमन्युं [16]दण्डधरं [17]कुबेरमपि [18]शूलिनं तथा [19]गदिनम् । कुरुते जरा न सा किं कुर्यान्नीरूपनामकं मनुजम् ॥ ११ ॥ [20]कृष्णवर्त्मनि गुणान्गणयन्ती [21]जीवनेऽपि जनयत्यनुरागम् । आगता बत जरेव हि[22]मानी सेव्यतां [23]सुरतरंगवतीयम् ॥ १२ ॥ कृतान्तस्य दूती जरा कर्णमूले समागत्य वक्तीति लोकाः शृणुध्वम् । परस्त्रीपरद्रव्यवाञ्छां त्यजध्व भजध्वं रमानाथपादारविन्दम् ॥ १३ ॥ वर्णं सितं शिरसि वीक्ष्य शिरो[24]रुहाणां स्थानं जरा परिभवस्य यदेव पुंसाम् । [25]आरोपितास्थिशकलं परि[26]हृत्य यान्ति चाण्डालकूपमिव दूरतरं तरुण्यः ॥ १४ ॥ [27]श्रुतिः शिथिलतां गता [28]स्मृतिरपि प्रनष्टाधुना गतिर्विपथमागता विगलिता द्वि[29]जानां ततिः । [30]गवामपि च संहतिः समुचितक्रियातश्च्युता कृता नु जरया तया कलियुगस्य [31]साधर्म्यता ॥ १५ ॥ गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलिर्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते । वाक्यं नाद्रियते च बान्धवजनैर्भार्या न शुश्रूषते हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमि[32]त्रीयते ॥ १६ ॥ स्थूलप्रावरणोऽति[33]वृत्तकथकः कासाश्रुलालाविलो भग्नोरःकटिपृष्ठजानुजघनो मुग्धोऽतिथीन्वारयन् । शृण्वन्[34]धृष्टवधूवचांसि धनुषा संत्रासयन्वायसानाशापाशनिबद्धजीवविभवो वृद्धो गृहे [35]ग्लायति ॥ १७ ॥ पादौ

१. जरया पीतानि ग्रस्तानीन्द्रियाणि यस्य तस्मिन् २ केशैः ३ दन्तपङ्क्ति . ४ वार्धक्य तदेवानलस्तेन दग्धस्य. ५. पलितमिषेण. ६. पङ्क्ति ७. व्यर्थमेव. ८ निक्षिप्तवान् ९ पुण्यम् १० यम· ११ गदया सहितम्; ( पक्षे ) गदेन रोगेण सहितम् १२. विकृताक्षम् १३ दन्तरहितम् १४. पलितमेव दूत १५ इन्द्रम्, ( पक्षे ) कोपनम्. १६. यमम्; ( पक्षे ) यष्टिधरम् १७. धनाधिपम्; ( पक्षे ) कुत्सितशरीरम्. १८ शिवम्; ( पक्षे ) शूलयुक्तम्. १९ विष्णुम्, ( पक्षे ) गदयुक्तम् २० अग्नौ, ( पक्षे ) कृष्णस्य वर्त्म मार्गस्तस्मिन् २१ उदके; ( पक्षे ) प्राणे. २२. हिमसहति. २३ सुरते रङ्गवती, ( पक्षे ) सुराणां तरङ्गवती भागीरथी २४ केशानाम् २५ आरोपितमस्थ्नः शकलं खण्ड यस्मिन् २६. अस्पृश्यत्वादिति भाव २७ कर्णेन्द्रियम्, ( पक्षे ) वेद . २८ स्मरणम्; ( पक्षे ) मन्वादिवाक्यम्. २९. दन्तानाम्; ( पक्षे ) ब्राह्मणानाम ३०. इन्द्रियाणाम्, ( पक्षे ) धेनूनाम्. ३१ समानधर्मत्वम् ३२ शत्रुवदाचरति. ३३ अतिक्रान्तानि वृत्तानि कथयतीति. ३४. धाष्टर्ययुक्तस्त्रीवचनानि ३५. खेद प्राप्नोति.

संस्तम्भयन्ती[1] मुखमपि नमयन्त्यङ्गमाकुञ्चयन्ती हस्तावुत्कम्पयन्ती प्रणयिजनवचो न श्रुतीः श्रावयन्ती । रत्यामुद्वेजयन्ती[2] [3]वलिततनुमती नूतनोढा[4] जरा वा तुल्या पूर्वा[5] तु पुंसः[6] त्रसति[7] बत परा[8] [9]भीतिहेतुर्नरस्य ॥ १८ ॥

---

## क्षुधा ।

नास्ति क्षुधासमं दुःखं नास्ति रोगः क्षुधासमः । नास्त्याहारसमं सौख्यं नास्ति क्रोधसमो रिपुः ॥ १ ॥ शय्या वस्त्रं चन्दनं चारु[10] हास्यं वीणा वाणी दृश्यते या च नारी । न भ्राजन्ते क्षुत्पिपासातुराणां सर्वारम्भास्तण्डुलाः प्रस्थमूलाः ॥ २ ॥ आदौ रूपविनाशिनी कृशकरी कामाङ्कुरच्छेदिनी पुत्रामित्र[11]कलत्र[12]भेदनकरी गर्वाङ्कुरच्छेदिनी । कामं मन्दकरी तपःक्षयकरी धर्मस्य निर्मूलनी सा मां संप्रति सर्वरोगजननी प्राणापहन्त्री क्षुधा ॥ ३ ॥

---

## भिक्षुकः ।

प्रतिदिनमयत्नसुलभे भिक्षुकजननि साधुजनकल्पलते । नृपनमननरकतारिणि भगवति भिक्षे नमस्तुभ्यम् ॥ १ ॥ अग्र्यो[13] भुक्तिमतां[14] प्रयोगसमये मन्त्रेषु पृष्ठं गतः पाकागारगतस्तु पाचकमनस्तोषाय वाचस्पतिः[15] । उच्चार्थां[16] निरतो रतोऽर्भकगणे पिण्डेषु दत्तादरो नानाश्राद्धगणैकचालितमना भट्टोत्तमो राजते ॥ २ ॥ उच्चैरध्ययनं[17] पुरातनकथा स्त्रीभिः सहालापनं तासामर्भ[18]कलालनं पतिनुति[19]स्तत्पाकमिथ्यास्तुतिः । आदेशस्य करावलम्बनविधिः पाण्डित्यलेखक्रिया होरा[20]गारुडमन्त्रतन्त्रकविधिर्भिक्षोर्गुणा द्वादश ॥ ३ ॥ प्रातः क्षालितलोचनाः करतले चञ्चत्पवित्राङ्कुरास्तत्तत्स्थाननिवेशितोर्ध्वतिलकाश्चैला[21]न्तबद्धाक्षताः । को जातश्च मृतोऽथवा मृततिथिः कस्यालये वर्तते चेत्थं हर्षशतैर्युताः प्रतिदिनं धावन्त्यहो भिक्षुकाः॥४॥

---

## परगृहवासः ।

शिरसा धार्यमाणोऽपि सोमः सौम्येन शंभुना । तथापि कृशतां धत्ते कष्टः खलु पराश्रयः ॥ १ ॥ विना कार्येण ये मूढा गच्छन्ति परमन्दिरम् । अवश्यं लघुतां यान्ति कृष्णपक्षे यथा शशी ॥ २ ॥ कष्टं खलु मूर्खत्वं कष्टं खलु यौवनेषु दारिद्र्यम् । कष्टादपि कष्टतरं परगृहवासः परान्नं च ॥ ३ ॥ उडु[22]गणपरिवारो नायकोऽप्योषधीनां[23]ममृतमयशरीरः

---

१ पादयो स्तम्भन कुर्वती. २. उद्वेग कुर्वती. ३ वलय सजाता यस्या सा वलिता सा चासौ' तनुश्च तद्वती; ( पक्षे ) वलित वलनं तद्युक्ता या तद्वती ४ नवीनविवाहिता स्त्री. ५. नूतनोढा ६ पुरुषात्. ७. उद्वेग प्राप्नोति. ८. जरा ९ भयकारणम्. १० सुन्दरम्. ११ शत्रु. १२ कुटुम्बम् १३ अग्रगण्य. १४ भोक्तृणाम् १५ बृहस्पति. १६ दक्षिणायाम् अय तु वैदिकाना साकेतिक' शब्द ..१७ पठनम् १८. शिशु' १९ स्तुति. २०. प्रश्नकथनम् २१. वस्त्रान्ते २२. नक्षत्रसमूह परिवारा यस्य, २३. वनस्पतीनाम.

कान्तियुक्तोऽपि चन्द्रः । भवति विगतरश्मि[1]र्मण्डलं प्राप्य भानोः[2] परसदन[3]निविष्टः को लघुत्वं[4] न याति ॥ ४ ॥

## उदरपूरणदूषणम् ।

अस्य दग्धोदरस्यार्थे किं न कुर्वन्ति पण्डिताः । वानरीमिव वाग्देवीं नर्तयन्ति गृहे गृहे ॥ १ ॥ किमकारि न कार्पण्यं कस्यालङ्घि न देहली । अस्य पापोदरस्यार्थे किमनाटि न नाटकम् ॥ २ ॥ एकः स एव जीवति हृदयविहीनोऽपि सहृदयो राहुः । यः सकललघिमकारणमुदरं[5] न बिभर्ति[6] दुःपूरम्[7] ॥ ३ ॥ कन्धरां समपहाय 'कं[8] धरां प्राप्य संयति[9]' जहास कस्यचित् । मां किलानमयतः स्वपूर्तये दुर्भरात्किमुदराद्वियोगतः ॥ ४ ॥ अहिताहितविचारशून्यबुद्धेः श्रुतिसमयै[10]र्बहुभिस्तिरस्कृतस्य । उदरभरणमात्रकेवलेच्छोः पुरुषपशोश्च पशोश्च को विशेषः ॥५॥ गङ्गातरंगकणशीकर[11]शीतलानि विद्याधराध्युषितचारुशिलातलानि । स्थानानि किं हिमवतः प्रलयं गतानि यत्सावमानपरपिण्डरतो मनुष्यः ॥ ६ ॥ अभिमतमहामानग्रन्थिप्रभेदपटीयसी[12] गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका । विपुलविलसल्लज्जावल्लीवितानकुठारिका जठरपिठरी[13] दुष्पूरेयं करोति विडम्बनम्[14] ॥ ७ ॥ ये वर्धन्ते धनपतिपुरःप्रार्थनादुःखभाजो ये चाल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः[15] । तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः[16] ॥ ८ ॥ मातर्नातः परमनुचितं यत्खलानां पुरस्तादस्ताशङ्कं जठरपिठरी[17]पूरणे नर्तितासि । तत्क्षन्तव्यं सहजसदये वत्सले वाणि कुर्यां प्रायश्चित्तं गुणगणनया गोपवेशस्य[18] विष्णोः ॥ ९ ॥ दीनां[19] दीनमुखैस्तथैव शिशुकैराकृष्टजीर्णाम्बरा क्रोशद्भिः[20] क्षुधितैर्निरन्नविधुरा दृश्येत चेद्गेहिनी[21] । याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी जनः ॥ १० ॥ हिंसाशून्यप्रयत्नलभ्यमशनं धात्रा मरुत्कल्पितं व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनाम् । संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्ति गुणाः ॥ ११ ॥ किं कन्दाः कन्दरेभ्यः[22] प्रलयमुपगता निर्झरा वा गिरिभ्यः प्रध्वस्ता वा तरुभ्यः सरसफलभृतो वल्कलिन्यश्च शाखाः । वीक्ष्यन्ते यन्मुखानि प्रसभमर्पित[23]गतप्रश्रयाणां खलानां दुःखोपात्ताल्पवित्तस्मय[24]पवनवशान्नर्तितभ्रूलतानि ॥ १२ ॥

---

१ निस्तेजाः. २ सूर्यस्य. ३ परगृहम्. ४ नीचताम्. ५. लघुत्वकारणम् ६ न धारयति. ७ दुःखेन पूरयितुमशक्यम् ८. मस्तकम् ९. युद्धे १० सिद्धान्तै ११. अम्बुकण. १२ समर्था १३ जठरभाण्टम् १४ उपहास . १५ विषयाक्षेपेण पर्यस्ता भ्रष्टा बुद्धिर्यस्य १६. शिखरी पर्वतस्तस्य कुहर बिल तत्सबन्धी यो ग्रावा पाषाण स एव शय्या तस्या निषण्ण उपविष्ट. १७ उदरभाण्डम् १८ गोपवेशधारिण कृष्णस्य. १९ कृपणा. २०. रोदन कुर्वद्भि २१ भार्या २२. दरीभ्य. २३. अविनीतानाम् २४ गर्व

## जीवितसाफल्यम् ।

यस्य जीवन्ति धर्मेण पुत्रमित्राणि बान्धवाः । सफलं जीवितं तस्य नात्मार्थे को हि जीवति ॥ १ ॥ वाणी रसवती यस्य भार्या पुत्रवती सती । लक्ष्मीर्दानवती यस्य सफलं तस्य जीवितम् ॥ २ ॥ स जीवति यशो यस्य कीर्तिर्यस्य स जीवति । अयशोऽकीर्तिसंयुक्तो जीवन्नपि मृतोपमः ॥ ३ ॥ चलं वित्तं चलं चित्तं चले जीवितयौवने । चलाचलमिदं सर्वं कीर्तिर्यस्य स जीवति ॥ ४ ॥ यस्मिञ्जीवति जीवन्ति बहवः स तु जीवति । काकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ॥ ५ ॥ स जातो येन जातेन याति वंशः समुन्नतिम् । [1]परिवर्तिनि संसारे मृतः को वा न जायते ॥ ६ ॥ अञ्जलिरकारि[2] लोकैर्[3]ग्लानिर्[4]मनागपि नैव रञ्जिता जगती । संध्याया इव वसतिः स्वल्पापि सखे सुखायैव ॥ ७ ॥ यज्जीवति क्षणमपि प्रथितं[5] मनुष्यैर्विज्ञानविक्रमयशोभिरभज्यमानम् । तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ ८ ॥ यो नात्मजे न च गुरौ न च भृत्यवर्गे दीने दयां न कुरुते न च बन्धुवर्गे । किं तस्य जीवितफलं हि मनुष्यलोके काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥ ९ ॥

---

## ऋणम् ।

न विषं विषमित्याहुर्ब्रह्मस्वं[6] विषमुच्यते । विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रिकम् ॥ १ ॥ पापं कर्तुमृणं कर्तुं मन्यन्ते मानवाः सुखम् । परिणामोऽतिगहनो महतामपि नाशकृत् ॥ २ ॥ जातसूतिर्मृतासूतिर्दशरात्रान्निवर्तते । ब्रह्मस्वी च सदा सूतिर्हव्यं कव्यं विनश्यति ॥ ३ ॥ ब्रह्मस्वं ब्रह्महत्या चोभयतो नरकार्णवः । कल्पान्ते ब्रह्महाशुद्धिर्ब्रह्मस्वी नैव शुद्ध्यति ॥ ४ ॥ लोकद्वयप्रतिभयैकनिदानमेतद्धिक्प्राणिनामृणमहो परिणामघोरम् । एकः स एव हि पुमान्परमस्त्रिलोके क्रुद्धस्य येन धनिकस्य मुखं न दृष्टम् ॥ ५ ॥

---

## प्रवासः ।

यो न संचरते देशान्यो न सेवेत पण्डितान् । तस्य संकुचिता बुद्धिर्घृतबिन्दुरिवाम्भसि ॥ १ ॥ यस्तु संचरते देशान्यस्तु सेवेत पण्डितान् । तस्य विस्तारिता बुद्धिस्तैलबिन्दुरिवाम्भसि ॥ २ ॥ व्यापारान्तरमुत्सृज्य वीक्षमाणो वधूमुखम् । यो गृहेष्वेव निद्राति दरिद्राति[9] स दुर्मतिः ॥ ३ ॥ देशे देशे किमपि कुतुकाद[10]द्भुतं लोकै[11]र्मानाः संपा-

---

१ भ्रमणशीले. २. अर्घदानार्थमिति भाव, ( पक्षे ) अञ्जलिकरणेन लोके आज्ञाकारित्व ध्वन्यते ३. निस्तेजस्कत्वम्; ( पक्षे ) असामर्थ्यम् ४ आरक्तता नीता; ( पक्षे ) अनुरागवती कृता. ५. प्रख्यातम् ६ ऋणम् ७. कारणम् ८. परिणामे भयंकरम् ९. दरिद्रो भवति १० आश्चर्यम् ११. वीक्ष्यमाणा

द्यैव द्रविणमतुलं सद्म भूयोऽप्यवाप्य। संयुज्यन्ते सुचिरविरहोत्कण्ठिताभिः सतीभिः सौख्यं धन्याः किमपि दधते सर्वसंपत्समृद्धाः ॥ ४ ॥ अकिंचन्याददतिपरिचयाज्जाययोपेक्ष्यमाणो भूपालानामननुसरणाद्विभ्यदेवाखिलेभ्यः। गेहे तिष्ठन्कुमतिरलसः कूपकूर्मः स्वधर्मा किं जानीते भुवनचरितं किं सुखं चोपभुङ्क्ते ॥ ५ ॥ तीर्थानामवलोकनं परिचयः सर्वत्र वित्तार्जनं नानाश्चर्यनिरीक्षणं चतुरता बुद्धेः प्रशस्ता गिरः। एते सन्ति गुणाः प्रवासविषये दोषोऽस्ति चैको महान्यन्मुग्धामधुराधराधरसुधापानं विना स्थीयते ॥६॥

## व्यापारिणः।

आसीत्सत्ययुगे बलिस्तदनु च त्रेतायुगे भार्गवो रामः सत्यपराक्रमोऽथ भगवान्धर्मस्तथा द्वापरे। दाता कोऽपि न चास्ति संप्रति कलौ जीवन्ति केनार्थिन इत्येवं कृतनिश्चयेन विधिना व्यापारिणो निर्मिताः ॥ १ ॥ शक्रोद्याननिवासितामधिगतो दाता स कल्पद्रुमः पातालं किल कामधेनुरपि सा कामप्रसूरन्वगात्। इत्थं विश्वसृजा विचिन्त्य यवनागाराधिकारार्थिनः सद्विद्यानिधिरक्षणार्थमधुना व्यापारिणो निर्मिताः ॥ २ ॥ कौपीनं धृतवान्हरोपि भगवान्विष्णुः प्रविष्टो जलं वारां राशिरपेयतामुपगतः को नाम दातुं क्षमः। इत्थं विश्वसृजा विचिन्त्य यवनागाराधिकारार्थिनः सद्विद्यानिधिजीवनार्थमधुना व्यापारिणो निर्मिताः ॥ ३ ॥

## कलिमाहिमा।

यवनैरवनिः क्रान्ता हिन्दवो विन्ध्यमाविशन्। बलिना वेदमार्गोऽयं कलिना कवलीकृतः ॥ १ ॥ सीदन्ति चाग्निहोत्राणि गुरुपूजा प्रणश्यति। कुमार्यश्च प्रसूयन्ते प्राप्ते कलियुगे सदा ॥ २ ॥ परान्नेन मुखं दग्धं हस्तौ दग्धौ प्रतिग्रहात्। परस्त्रीभिर्मनो दग्धं कुतः शापः कलौ युगे ॥ ३ ॥ राक्षसाः कलिमाश्रित्य जायन्ते ब्रह्मयोनिषु। ब्राह्मणानेव बाधन्ते तत्रापि श्रोत्रियान्कृशान् ॥ ४ ॥ कुशलाः शब्दवार्तायां वृत्तिहीनासु रागिणः। कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ॥ ५ ॥ वागुच्चारोत्सवं मात्रं तत्क्रियां कर्तुमक्षमाः। कलौ वेदान्तिनो भान्ति फाल्गुने बालका इव ॥ ६ ॥ मद्युगमध्योत्पन्नाः कृतयुगधर्मानुसारिणः किमिति। इति रोषादिव कलिना पीड्यन्ते साधवो जगति ॥ ७ ॥ नाधीतेऽत्र जनो यदि कश्चिदधीते शते सहस्रे वा। दुस्तर्केषु भ्राम्यति दूरीकुरुते श्रुतिस्मृतिसुतर्कान् ॥ ८ ॥ सीदन्ति सन्तो विलसन्त्यसन्तः पुत्रा म्रियन्ते जनकश्चिरायुः। परेषु मैत्री स्वजनेषु वैरं

१ द्रव्यम् २. बहुलम् ३. गृहम् ४ पुन. ५ दारिद्र्यात् ६ अवमानित ७ सदृश. ८. अध्ययन न करोति.

पश्यन्तु लोकाः कलिकौतुकानि ॥ ९ ॥ एतादृशे कलियुगेऽपि शतेषु कश्चिज्जातादरो जगति यः श्रुतिमार्ग एव । यत्किंचिदाचरति पात्रमसौ स्तुतीनां श्लाघ्यं मितापमपि किं न मरौ सरश्चेत् ॥ १० ॥ उपनयनविवाहावुत्सवैकप्रधानौ कलिविभवत एषां कालभेदानभिज्ञाः । विजहति न कदाचिद्वेदपाठैकयोग्ये वयसि च यवनानीवाचनाभ्यासमेते ॥ ११ ॥ न देवे देवत्वं कपटपटवस्तापसजना जनो मिथ्यावादी विरलतरवृष्टिर्जलधरः । प्रसङ्गो नीचानामैवनिपतयो दुष्टमनसो जना भ्रष्टा नष्टा अहह कलिकालः प्रभवति ॥ १२ ॥ गता गीता नाशं क्वचिदपि पुराणं व्यपगतं विलीनाः स्मृत्यर्था निगमनिचयो दूरमगमत् । इदानीं रैदासप्रभृतिवचनैर्मोक्षपदवी तदेवं जानीमो कलियुग तवैवेष महिमा ॥ १३ ॥ अपारैर्व्यापारैरहरिह नयन्तोऽशनदशास्वथ स्नाताः संध्यां विदधति न जातु स्वसमये । त्यजन्तः स्वां वृत्तिं द्विजकुलभवां ग्रामगणकीभवन्तो हन्तामी कथमपि च जीवन्ति बहवः ॥ १४ ॥ कुक्षेः पूर्त्यै यवनवितर्तेर्भृत्यकृत्यानि कर्तुं विक्रीणीते वपुरपि निजं वेतनैरेतदास्ताम् । विप्रो भूत्वाप्यहह गणनानैपुणैर्वञ्चयित्वा स्वर्णस्तेयं रचयति जनः स्वामिनां पोषकाणाम् ॥ १५ ॥ वेदव्यासः स नवदश यो वेद वेदाक्षराणि श्लोकं त्वेकं परिपठति यः स स्वयं जीव एव । आपस्तम्बः स इह कलयेत्सम्यगौपासनं यः कष्टं शिष्टक्षितिकृति कलौ कार्श्यमृच्छन्ति विद्याः ॥१६॥ ये कायस्थजनाश्च ये नृपसुता ये च द्विजाः शास्त्रिणस्ते यत्नादनुसृत्य निर्दयतया शुष्कांस्तरुष्काधिपान् । देवान्भूमिसुरांश्च पान्ति कतिनस्ते चेन्मुधोदासते ब्राह्मण्याय जलाञ्जलिः किल भुवि प्राज्ञैः प्रदेयो भवेत् ॥ १७ ॥ आक्रान्तासु वसुंधरासु यवनैरासेतुहेमाचलं विद्राणे क्षितिभृद्गणे विकरुणे निद्राति नारायणे । निर्विघ्नप्रसरे कलावपि बलान्निष्कण्टकं वैदिकं पन्थानं किल तत्र तत्र परिपात्ये को हि लोकोत्तरः ॥ १८ ॥ अज्ञानामविरामलौकिकवचोभाजाममीषां पुनर्मन्त्रोच्चारण एव पर्यवसितं मौनव्रतं कर्मसु । ग्रामाय व्ययलेखनेन नयतां कालानशेषानहो पारंपर्यत ईदृशामिह नृणां ब्राह्मण्यमन्यादृशम् ॥ १९ ॥ ये मुष्णन्ति निशि प्रविश्य भवनं ये वा बलात्कानने नैते स्वामिधनं हरन्ति ननु तान्निन्दन्ति चोरा इति । सद्यो हन्त हरन्ति पोषकधनं संख्यां विपर्यस्य ये कष्टं तानपि वञ्चकानिह पुरस्कुर्वन्ति सर्वे जनाः॥२०॥ सौहार्दं शशशृङ्गवत्सुजनता वन्ध्या सुतस्पर्धिनी किं ब्रूमो गुणिनां गुणग्रहिलता व्योमप्रसूनोपमा । दृष्टिः शीलसुधाहलाहलमयी राज्ञां सुधामण्डले लोके संप्रति यत्कले स जयति त्वद्दृष्टिलीलारसः ॥ २१ ॥ निर्वीर्या पृथिवी निरोषधिरसा नीचा महत्त्वं गता भूपाला निजकर्मधर्मरहिता विप्राः कुमार्गे रताः । भार्या भर्तृविरोधिनी पररताः पुत्राः पितुर्द्वेषिणो हा कष्टं खलु वर्तते कलियुगे धन्या नराः सज्जनाः ॥ २२ ॥ दूरादर्थिनमाकलय्य भजते सद्यो

---

१.स्वल्पजलम् २.मरुदेशे ३.राजान ४.बृहस्पति . ५ स्मार्ताग्निम् ६ प्राप्नुवन्ति ७ उदासीना भवेयु ८.नष्टे.

विरूपाक्षतां सङ्गे किं च विरोचनत्वमथ संस्थाने नृसिंहाकृतिम् । पाण्डित्योक्तिषु वक्रतुण्डरचनां दाने त्वपर्णात्मतामेकः पञ्चसुरात्मकः प्रभुरहो भाग्यैः कलौ लभ्यते ॥ २३ ॥ धर्मः प्रव्रजितस्तपः प्रचलितं सत्यं च दूरे गतं पृथ्वी मन्दफला नराः कपटिनो चित्तं च शाठ्यार्जितम् । राजानोऽर्थपरा न रक्षणपराः पुत्राः पितुर्द्वेषिणः साधुः सीदति दुर्जनः प्रभवति प्राप्ते कलौ दुर्युगे ॥ २४ ॥ सन्तः क्वापि न सन्ति सन्ति यदि वा दुःखेन जीवन्ति ते विद्वांसोऽपि न सन्ति सन्ति यदि वा मात्सर्ययुक्ताश्च ते । राजानोऽपि न सन्ति सन्ति यदि वा तृष्णाधनग्राहिणो दातारोऽपि न सन्ति सन्ति यदि वा सेवानुकूलाः कलौ ॥ २५॥ हर्म्यस्थानमधर्मकर्मविततेर्दुर्मानमर्मासनं शास्तस्तोमललाटभूर्लिपिलयः शान्तिः सवानामपि । सर्वाम्नायवचःसमापनदिनं संस्था सदर्चाविधेरर्थाशाजनिभूरभूदिह महानर्थावहोऽयं कलिः ॥ २६ ॥ प्रातर्हन्त कृताप्लवोऽपि रजकस्पृष्टाम्बडो रासभै रूढान्धारयते पटाननुदिनं धृत्वा बहिर्गच्छति । गत्वा म्लेच्छमुखाशुचीन्स्पृशति च स्पृष्ट्वापि न स्नात्यहो न स्नातोऽप्यथ भुङ्क्त एव चपलो भुङ्क्त्वापि न व्रीडति ॥ २७ ॥ शस्त्रैर्जीवति शास्त्रमुज्झति परं शूद्राहृतैरम्बुभिः स्नात्वाचामति देवताः स्नपयति स्वैरं पचत्योदनम् । उच्छिष्टान्न बिभेति याति यवनैरुच्चावचैः संगतिं मातङ्गान्निकटं गतानगणयन्मार्गान्मुहुर्गाहते ॥ २८ ॥ नीचैर्दुर्यवनैः शुनीभिरपि वा निःशङ्कमालोकितं भुङ्क्ते पङ्क्तिविदूषकैः सह नरैरज्ञातवेदाक्षरैः । मद्यास्वादनमत्तचित्तजनतामोहाय भीहानितः कर्माण्यारभते श्रुतिस्मृतिवचो दूराण्यसाराण्यहो ॥ २९ ॥ विद्वत्ता वसुधातले विगलिता पाण्डित्यधर्मो गतः श्रोतॄणां हृदयेष्वबुद्धिरधिका ज्ञानं गतं चारणे । गाथागीतविनोदवाक्यरचनायुक्त्या जगद्वञ्चितं ज्योतिर्वैद्यकशास्त्रसारमखिलं क्षुद्रेषु जातं कलौ ॥ ३० ॥ धिक्कारे कलिकाल याहि विलयं केयं विपर्यस्तता हा कष्टं श्रुतिशालिनां व्यवहृतिर्म्लेच्छोचिता दृश्यते । एकैवाव्ययदेवता भगवती विक्रेतुमानीयते निःशङ्कैरपरैः परीक्षणविधौ सर्वाङ्ग उत्पद्यते ॥ ३१ ॥ कन्यां कामप्यदूह्य प्रविजहद्दुर्दैवद्यौवनामज्ज एनां द्रव्याशापाशकृष्टो भ्रमति चिरतरं हन्त देशान्तरेषु । अन्योन्याश्लेषवाञ्छाविगलितवयसोरात्तमालिन्यमत्योर्दंपत्योर्व्याकृतं वै हतविधिरुभयोर्लोकयोः शोकयोगम् ॥ ३२ ॥

---

१ विकृतनेत्रत्वम्; (पक्षे) शिवताम् २ रुचिराहित्यम्; (पक्षे) बलिपितृत्वम्. ३. नृसिंह इव क्रूरामाकृतिम्, (पक्षे) नृसिंहस्याकृतिम् ४. वक्रा या तुण्डस्य रचना ताम्. मुखवक्रत्वमित्यर्थः; (पक्षे) वक्रतुण्डस्य गणपतेरिव या रचना ताम्. गणेशरूपत्वमित्यर्थ. ५ न विद्यन्ते पर्णान्यपि यस्य ताम् अकिंचनत्वमित्यर्थ.; (पक्षे) अपर्णा पार्वती तद्रूपताम्. ६ यज्ञानाम् ७ वेदवचसाम् ८. स्नानम् ९ गर्दभे १०. न लज्जते ११. अन्नम्. १२ उच्चनीचैरनेकभेदभिन्नै. १३. चाण्डाल १४ प्रविशति १५ दुष्टयवनै.. १६ पङ्क्तिबाह्यैः. १७ निष्फलानि. १८.नटादौ. १९ नीचेषु २०. सजातयौवनाम्

## मद्यपानगर्हणम् ।

वैकल्यं धरणीपातमयथोचितजल्पनम् । संनिपातस्य चिह्नानि मद्यं सर्वाणि दर्शयेत् ॥ १ ॥ एकतश्चतुरो वेदा ब्रह्मचर्यं तथैकतः । एकतः सर्वपापाणि मद्यपानं तथैकतः ॥ २ ॥ मद्यपस्य कुतः सत्यं दया मांसाशिनः कुतः । कामिनश्च कुतो विद्या निर्धनस्य कुतः सुखम् ॥ ३ ॥ अयुक्तं बहु भाषन्ते यत्र कुत्रापि शेरते । नग्नो विक्षिप्य गात्राणि स जाल्म इव मद्यपः ॥ ४ ॥ मत्तो हिनस्ति सर्वं मिथ्या प्रलपति हि विकलया बुद्ध्या । मातरमपि कामयते सावज्ञं मद्यपानमत्तः सन् ॥ ५ ॥ चित्ते भ्रान्तिर्जायते मद्यपानाद्भ्रान्ते चित्ते पापचर्यामुपैति । पापं कृत्वा दुर्गतिं यान्ति मूढास्तस्मान्मद्यं नैव पेयं न पेयम् ॥ ६ ॥

## तमाखुः ।

तमाखुपत्रं राजेन्द्र भज माज्ञानदायकम् । तमाखुपत्रं राजेन्द्र भज माज्ञानदायकम् ॥ १ ॥ दारिद्र्यशीलोऽपि नरस्तमाखुं नैव मुञ्चति । निवारितोऽपि मार्जारस्तमाखुं नैव मुञ्चति ॥ २ ॥ बिडौजाः पुरा पृष्टवान्पद्मयोनिं धरित्रीतले सारभूतं किमस्ति । चतुर्भिर्मुखैरित्यवोचद्विरिञ्चिस्तमाखुस्तमाखुस्तमाखुस्तमाखुः ॥ ३ ॥ न स्वादु नौषधमिदं न च वा सुगन्धि नाक्षिप्रियं किमपि शुष्कतमाखुचूर्णम् । किं चाक्षिरोगजनकं च तदस्य भोगे बीजं नृणां नहि नहि व्यसनं विनान्यत् ॥ ४ ॥ सुपर्णपरिसेवितस्तदनु साधुपूगान्वितो द्विजावनमहापटुस्तदनु सारसंधानभाक् । सदैव सुधयाशनं भवति यस्य विष्णोः समस्तमाखुरिति सेव्यतां भवति वै यतो रागिता ॥ ५ ॥ श्रीकृष्णः पूतनायाः स्तनमलमपिबत्कालकूटेन पूर्णं प्रस्कन्नं भूप्रदेशे किमपि च पिबतो यत्तदा तस्य वक्त्रात् । तस्मादेषा तमाखुः सुरवरपरमोच्छिष्टमेतद्दुरापं स्तुत्वा नत्वा मिलित्वा ह्यनिशमतिमुदा सेव्यते वैष्णवाग्र्यैः ॥ ६ ॥ भ्रातः कस्त्वं तमाखुर्गमनमिह कुतो वारिधेः पूर्वपारात्कस्य त्वं दण्डधारी नहि तव विदितं श्रीकलेरेव राज्ञः । चातुर्वर्ण्यं विधात्रा विविधविरचितं ब्रह्मणा धर्महेतोरेकीकर्तुं बलात्तन्निखिलजगति रे शासनादागतोऽस्मि ॥ ७ ॥

**इति श्रीसुभाषितरत्नभाण्डागारे द्वितीयं प्रकरणं समाप्तम् ।**

---

१. विकलत्वम् २. अयुक्तप्रलाप ३. त्रिदोषस्य. ४ लक्षणानि ५. नाशयति. ६ इच्छति ७. पापाचरणम् ८ नरकम्. ९ आखुर्मूषिक पत्र वाहन यस्य १०. मा लक्ष्मी. ११ अज्ञानदायक तमाखुपत्र मा भजेति. १२. इन्द्रः. १३. ब्रह्मदेवम्. १४. सुपर्णेन गरुडेन सेवित.; ( पक्षे ) सुष्ठुपर्णेन नागवल्लीदलेन सह परिसेवित॰. १५. साधुना पूगैः संघैरन्वित.; ( पक्षे ) साधु॰ सम्यक्पूग. क्रमुकस्तेनान्वितः. १६. द्विजा द्विजन्मानो ब्राह्मणादयस्तेषामवन रक्षणं तस्मिन्महासमर्थ.; ( पक्षे ) द्विजा दन्ता.. १७. सार श्रेष्ठवस्तु मोक्षादि तस्य सधान संधि भजति, ( पक्षे ) सार॰ खदिरसार तेन सधान सम्यङ्मेलन भजति १८. सुधयामृतेन यस्य भोजनं भवति; ( पक्षे ) सुधया चूर्णेन सदैव यस्य भक्षणं भवति. १९ यतो विष्णोररागिता विषयेषु प्रीतिर्जायते; ( पक्षे ) यतस्तमाखोस्तमाखुपत्राद्रागिता मुखरक्तिमा जायते.

# प्रकरणम् ३।

## राजसभावर्णनम्।

सभाकल्पतरुं वन्दे वेदशाखोपशोभितम्। शास्त्रपुष्पसमाकीर्णं विद्वद्भ्रमरमण्डितम् ॥१॥ विद्वांसः कवयो भट्टगायकाः परिहासकाः। इतिहासपुराणज्ञाः सभा सप्ताङ्गसंयुता ॥ २ ॥ गुरुरेकः[1] कविरेकः[2] सदसि मघोनः[3] कलाधरोऽप्येकः[4]। अद्भुतमत्र सभायां गुरवः कवयः कलाधराः सर्वे ॥ ३ ॥ अनेकविद्वज्जनरत्नपूर्णं वेदोदकन्यायतरंगरम्यम्। अलङ्घनीयं गुरुतीर्थमेकं सभासमुद्रं शिरसा नमामि ॥ ४ ॥ सारस्वते स्रोतसि दूरमग्नैः सुधीवरैरुद्धृतसूक्तिरत्ने। न तत्किमप्युर्वरितं यदेषामुपायनीकृत्य पुरो भवेयम् ॥ ५ ॥ साग्नयोऽपि किल शीतलशीला विश्रुता अपि बहु श्रुतवन्तः। पण्डिता अपि जडाः परवादे श्रोत्रिया इह सदा निवसन्ति ॥ ६ ॥ नाहूतापि पुरः पदं रचयति प्राप्तोपकण्ठं हठात्पृष्टा न प्रतिवक्ति कम्पमयते स्तम्भं समालम्बते। वैवर्ण्यं स्वरभङ्गमञ्चति बलान्मन्दाक्षमन्दानना कष्टं भोः प्रतिभावतोऽप्यभिसमं वाणी नवोढायते ॥ ७ ॥ चिन्तासक्तनिमग्नमन्त्रिसलिलं दूतोर्मिशङ्खाकुल पर्यन्तस्थितचारै[5]नक्रमकरं नागाश्वहिंस्राश्रयम्। नानावाँशक[6]कङ्कपक्षिरुचिरं कायस्थसर्पास्पदं नीतिक्षुण्णतटं च राजकरणं[7] हिंस्रैः समुद्रायते ॥ ८ ॥

---

## सामान्यराजप्रशंसा।

राजंस्त्वद्दर्शनेनैव गलन्ति त्रीणि तत्क्षणात्। रिपोः शस्त्रं कवेर्दैन्यं नीवीबन्धो मृगीदृशाम् ॥ १ ॥ चिराद्यत्कौतुकाविष्टं कल्पवृक्षमुदीक्षितुम्। तन्मे सफलमद्यासीन्नेत्रं त्वय्यवलोकिते ॥ २ ॥ सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे जनैः। नारयो लेभिरे पृष्ठं न वक्षः[9] परयोषितः ॥ ३ ॥ त्वया वीर गुणा[10]कृष्टा ऋजुदृष्ट्या विलोकिताः। लक्षं[11] लब्ध्वैव गच्छन्ति मार्गणा[12] इव मार्गणाः[13] ॥ ४ ॥ कल्पद्रुमो न जानाति न ददाति बृहस्पतिः। अयं तु जगतीजानि[14]र्जानाति च ददाति च ॥ ५ ॥ रविः करै[15]सहस्रेण दशाशा[16]परिपूरकः। त्वमेकेन करेणैव सहस्राशाप्रपूरकः ॥ ६ ॥ बलिः पातालनिलयोऽधः कृतश्चित्रमत्र किम्। अधःकृतो दिविस्थोऽपि चित्रं कल्पद्रुमस्त्वया ॥ ७ ॥ आर्तानामिह जन्तूनामार्तिच्छेदं करोति यः। शङ्खचक्रगदाहीनो द्विभुजः परमेश्वरः ॥ ८ ॥ बहुधा राज्यलाभेन यस्तोषस्तव भूपते।

---

१. बृहस्पति. २ शुक्रः ३. इन्द्रस्य ४ चन्द्र.. ५ गुप्तचरा. ६. शब्द कुर्वाणा पिशुना इत्यर्थ. ७. राज्ञोऽधिकरणम् ८. वैरिण. ९ उर स्थलम् १० ज्या; (पक्षे) विनयादि.. ११. शरव्यम्, (पक्षे) लक्षद्रव्यम् १२ पान्थस्था १३. बाणा. १४. पृथिवीपति. १५. किरणानि. १६ दिश..

बहुधाराज्य[1]लाभेन स तोषो मम भूपते ॥ ९ ॥ भुजंगभोग[2]संक्रान्ता[3] कलत्रं[4] तव मेदिनी ।
अहंकारः परां कोटिमारोहति कुतस्तव ॥ १० ॥ तुला[5]मारुह्य रविणा वृश्चिके[6] निहितं पद-
म् । भवता शिरसि न्यस्तमयत्नेनैव भोगिनाम्[7] ॥ ११ ॥ किं कृतेन[8] न यत्र त्वं यत्र त्वं
किमसौ कलिः । कलौ चेद्भवतो जन्म कलिरस्तु कृतेन किम् ॥ १२ ॥ असिधारापथे नाथ
शत्रुशोणितपिच्छले । आजगाम कथं लक्ष्मीर्निर्जगाम कथं यशः ॥ १३ ॥ कोऽप्यन्यः क-
ल्पवृक्षोऽयमेकोऽस्ति क्षितिमण्डले । यत्पाणिपल्लवोऽप्येकः कुरुतेऽधः सुरद्रुमम् ॥ १४ ॥
अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः । मार्गणौघः[9] समायाति गुणो[10] याति दिगन्तरम्
॥ १५ ॥ युधि स्थिरोऽसि भीमोऽसि चरितैरर्जुनो भवान् । मज्ञया सह देवोऽसि वाच्यता
न कुलस्य ते ॥ १६ ॥ बलिकर्णदधीचाद्याः पुरा पञ्चत्वमागताः । पञ्चत्वं न गताश्चित्रं
त्वयि जीवति पञ्चमे ॥ १७ ॥ एक एव महान्दोषो भवतां विमले कुले । लुम्पन्ति पूर्वजां
कीर्तिं जाता जाता गुणाधिकाः ॥ १८ ॥ भग्नासु रिपुसेनासु नरेन्द्र त्वं महामहाः । खड्गा-
न्तर्निजमेवैकमद्राक्षीः संमुखं मुखम् ॥ १९ ॥ कि वर्ण्यतां कुचद्वन्द्वमस्याः कमलचक्षुषः ।
आसमुद्रकरग्राही भवान्यत्र करप्रदः ॥ २० ॥ वेधा वेदन[11]याश्लिष्टो गोविन्दोऽपि गदा[12]-
न्वितः । शंभुः शूली[13] विषादी[14] च देव केनोपमीयसे ॥ २१ ॥ तृष्णा[15]पहारी विमलो
द्विजा[16]वासो जनप्रियः । ह्रदः पद्माकरः[17] किं तु बुधस्[18]त्वं स जलाश्रयः[19] ॥ २२ ॥ सदाहंसा-
लसं बिभ्रन्मानसं प्रचलज्जलम् । भूभृन्नाथोऽपि नायाति यस्य साम्यं हिमालयः ॥ २३ ॥
मीमांसको महीपोऽयमन्यथा शक्तिमान्कथम् । नैयायिकोऽपि स्यादेव परशक्तेस्तु खण्डनात्
॥ २४ ॥ राजन्दौवारिकादेव प्राप्तवानस्मि वारणम्[20] । मदवारण[21]मिच्छामि त्वत्तोऽहं
जगतीपते ॥ २५ ॥ राजन्कनकधाराभिस्त्वयि सर्वत्र वर्षति । अभाग्यछत्रसंच्छन्ने मयि
नायान्ति बिन्दवः ॥ २६ ॥ सर्वज्ञ इति लोकोऽयं भवन्तं भाषते मृषा । परमेकं न जाना-
सि वक्तुं नास्तीति याचके ॥ २७ ॥ आश्वासस्नेहभक्तीनामेकमालम्बनं महत् । प्रकृष्टस्येव
धर्मस्य प्रसादो मूर्तिसंचयः ॥ २८ ॥ सत्यभामासमाश्लिष्टः[22] साधुवृन्दावने[23] रतः । यशोदया[24]-

---

१. बहुधारा गलन्ति यस्य तदाज्यं घृतम्. २. शेष.; ( पक्षे ) जार.. ३. फणा; ( पक्षे ) उपभोगः. ४. भार्या. ५. तुलाराशिम्. ६. वृश्चिकराश्याम्. ७ सर्पाणाम्; ( पक्षे ) कामिनाम्. ८. कृतयुगेन. ९. याचकाः; ( पक्षे ) बाणाः. १०. विनयादि ;( पक्षे ) ज्या. ११. वेदनया दु खेनाश्लिष्ट ; ( पक्षे ) वेदेन नयेन चाश्लिष्टः. १२. गदेन रुजान्वित ; ( पक्षे ) गदया सहित. १३ शूलेन युक्त.; ( पक्षे ) त्रिशूलेन युक्त . १४. दु.खी; ( पक्षे ) विषमत्तीति स . १५. तृषा; ( पक्षे ) आशा. १६. पक्षिण ; ( पक्षे ) ब्राह्मणा.. १७. कमलम्; ( पक्षे ) लक्ष्मी १८. बुधग्रह ; ( पक्षे ) विबुध. १९. उदकाश्रय ; ( पक्षे डलयो. सावर्ण्यात् ) जडाश्रयो मूर्खाश्रयः २०. गजम्; ( पक्षे ) निवारणम्. २१ मदेन युक्त वारणम्; ( पक्षे ) मत्-अवारणम्. २२. सत्यभामयालिङ्गितः; ( पक्षे ) सत्य भा कान्तिर्मा लक्ष्मीरेतैर्युक्त . २३. साधु यद्वृन्दावनं तस्मिन्रत.; (पक्षे) साधूना वृन्द समूहस्तस्यावनं रक्षण तस्मिन्नासक्तः. २४. यशोदया नन्दपत्न्या युक्तः; ( पक्षे ) यशः कीर्तिर्दया कारुण्य ताभ्यां युक्त .

समायुक्तस्त्वां पायात्त्वादृशो हरिः ॥ २९ ॥ भवान्हि भगवानेव गतो[1] भेदः परस्परम् । महत्यागदयायुक्तः[2] सत्यभामासमाश्रितः[3] ॥ ३० ॥ एकमेव गुणं प्राप्य नम्रतामगमद्धनुः । तवाशेषगुणा राज्ञः स्तब्धतेति सुविस्मयः ॥ ३१ ॥ भूषणाद्युपभोगेन प्रभुर्न भवति प्रभुः । परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥ ३२ ॥ कस्ते शौर्यमदो योद्धुं त्वय्येकं सप्तिमास्थिते[4] । सप्तसप्तिसमारूढा[5] भवन्ति परिपन्थिनः[6] ॥ ३३ ॥ हुतमिष्टं च तप्तं च धर्मश्चायं कुलस्य ते । गृहात्प्रतिनिवर्तन्ते पूर्णकामा यदर्थिनः ॥ ३४ ॥ फणीन्द्रस्ते गुणान्वक्तुं लिखितुं हैहयाधिपः[7] । द्रष्टुमाखण्डलः शक्तः क्वाहमेष क्व ते गुणाः ॥ ३५ ॥ अमितः समितः[8] प्राप्तैरुत्कर्षैर्हर्षद प्रभो । अहितः सहितः साधुयशोभिरसतामसि ॥ ३६ ॥ स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति । प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ ३७ ॥ पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम् । देव त्रिपथगात्मानं गोपयत्युग्रमूर्धनि ॥ ३८ ॥ यद्वीर्यं कूर्मराजस्य यश्च शेषस्य विक्रमः । पृथिव्या रक्षणे राजन्नेकत्र त्वयि तत्स्थितम् ॥ ३९ ॥ त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् । न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥ ४० ॥ त्वयि संगरसंप्राप्ते धनुषासादिताः शराः । शरैररिशिरस्तेन[9] भूस्तया त्वं त्वया यशः ॥ ४१ ॥ ययोरसरोपितस्तारो हारस्तेऽरिवधूजनैः । निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः ॥ ४२ ॥ मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः । श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥ ४३ ॥ यस्य चेतसि निर्व्याजद्वन्द्वं तृणगणायते । क्रोधे विरोधिनां सैन्यं प्रसादे कनकाचलः ॥ ४४ ॥ देव त्वद्दानपाथोधौ दारिद्र्यस्य निमज्जतः । न कोऽपि हि करालम्बं दत्ते मत्तेभदायकः ॥ ४५ ॥ राजचन्द्रं समालोक्य त्वां तु भूतलमागतम् । रत्नश्रेणिमिषान्मन्ये नक्षत्राण्यभ्युपागमन् ॥ ४६ ॥ धारयित्वा त्वयात्मानं महात्यागधनाधुना । मोचिता बलिकर्णाद्याः स्वयशोगुप्तकर्मणः ॥ ४७ ॥ क्षणमप्यनुगृह्णाति यं दृष्टिस्तेऽनुरागिणी । ईर्ष्ययेव त्यजत्याशु तं नरेन्द्र दरिद्रता ॥४८॥ उद्दण्डे भुजदण्डे तव कोदण्डे परिस्फुरति । अरिमण्डलरविमण्डलरम्भाकुचमण्डलानि वेपन्ते ॥ ४९ ॥ भवतामहमिव बहवो मम तु भवानिव भवानेव । कुमुदिन्यः कति न विधोर्विधुरिव विधुरेव कुमुदिन्याः ॥५०॥ लब्धार्धचन्द्र ईशः कृतकसमयं च पौरुषं विष्णोः। ब्रह्मापि नाभिजातः केनोपमिमीमहे नृप भवन्तम् ॥ ५१ ॥ सरलप्रियंगुणाढ्य[10] लम्बितमालं[11] विचित्रतिलकं[12] च । वनमिव वपुस्तवैतत्कथमवनं

१. गकारेण ; ( पक्षे ) नष्ट . २ महती या गदा तया युक्त ; ( पक्षे ) मह उत्सवस्त्यागो दान दया करुणा एतैर्युक्तः ३. सत्यभामया समन्वित ; ( पक्षे ) सत्य सूनृत भा कान्तिर्मा लक्ष्मीराभि. सम्यग्युक्तः. ४. अश्वम्. ५. सूर्यमण्डलभेदिन इत्यर्थः. ६. शत्रव ७. चित्रगुप्त. ८. युद्धात्. ९. शिवमस्तके. १०. सरला वृक्षविशेषाः प्रियंगवश्चतेषां समाहारस्तेनाढ्य पूर्णम्; ( पक्षे ) सरल च तत्प्रिय हृद्य च गुणैर्गौरवर्णत्वादिभिर्युक्तम् १२ लम्बिनस्तमाला यस्मिंस्तत्; पक्षे लम्बिता माला माल्य यस्य ३.विचित्रा नानाविधास्तिलका वृक्षविशेषा यस्मिंस्तत्; (पक्षे) विचित्रो विचित्रवर्णस्तिलकः कस्तूरीकुङ्कुमादिकृतो यस्मिंस्तत्.

नृप जनस्यास्य ॥ ५२ ॥ बाणकरवीरदमनकशतपत्रकबन्धुजीवकुसुमानि । नृप विविधविटपिरूपस्तथापि विटपः कथं नासि ॥ ५३ ॥ स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः । चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥ ५४ ॥ कल्पतरुकामदोग्ध्रीचिन्तामणिधनदशङ्खानाम् । रचितो रजोभरपयस्तेजःश्वासान्तराम्बरैरेषः ॥ ५५ ॥ तिग्मरुचिरप्रतापो विधुरेनिशाकृद्विभो मधुरलीलः । मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥ ५६ ॥ शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यासि नरेन्द्र यस्मै त्वम् । यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥ ५७ ॥ क्षणदासावक्षणदा वनमवनं व्यसनमव्यसनम् । बत वीर तव द्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम् ॥ ५८ ॥ प्रधनाध्वनि धीरधनुर्ध्वनिभृति विधुरैरयोधि तव दिवसम् । दिवसेन तु नरप भवानयुद्ध विधिसिद्धसाधुवादपदम् ॥ ५९ ॥ गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः । विश्वंभराप्यातिलघुर्नरनाथ तवान्तिके नियतम् ॥ ६० ॥ समदमतंगजमदजलनिस्यन्दतरंगिणीपरिष्वङ्गात् । क्षितितिलक त्वयि तटजुषि शंकरचूडापगापि कालिन्दी ॥ ६१ ॥ विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च । प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥ ६२ ॥ यद्व्यतीर्यत धनं सुरवृक्षैः पञ्चभिः सह वनीपकवृन्दे । तावदेव च करोत्यभुजोऽन्तः प्राहिणोद्विधृतपञ्चसुशाखः ॥ ६३ ॥ गाढकान्तदशनक्षतव्यथासंकटादरिवधूजनस्य यः । ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम् ॥ ६४ ॥ विकृतिष्वपि कार्यमासजन्ते न भजन्ते परमाश्रयं कदापि । दधते बहुकर्मभेदबुद्धिं फलवन्तोऽपि गुणा विचित्रमेतत् ॥ ६५ ॥ निखिलेषु गुणेषु चित्रता ते मनसो वैभवमद्भुतं तवैव । न च ते परतः प्रमाणभावस्तदपि न्यायनिविष्टतातिचित्रम् ॥ ६६ ॥ स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् । विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥ ६७ ॥ कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदराश्रि चक्षुः । पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥ ६८ ॥ नानन्वयस्ते न च ते विरोधोऽलंकारकोटौ तव नोपमापि । क्षितीश नो ते विषमं न किंचित्साहित्यसौहित्यनिधिस्तथापि ॥ ६९ ॥ अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः । ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥ ७० ॥ तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः । भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांशवः ॥ ७१ ॥ विशांपते विस्तरतो न वक्तुं जानामि जानन्नपि ते गुणौघान् । यस्यैव योऽसि प्रथमानकीर्ते स एव तद्वानिति निर्निरूढि ॥ ७२ ॥ यशोदयामण्डितका-

१. विद्वान्पालयतीति स २ विधुराणा शत्रूणा निशेव निशा मरण तत्कर्ता. ३. मतिर्वस्तुतत्त्वावधारणक्षमा बुद्धि. मान प्रमाणं ताभ्या तत्त्वे याथार्थ्ये वृत्तिरनुसरण यस्य स ४. प्रतिपद प्रतिस्थान पक्षाणामात्मीयानामग्रणीरग्रसर.. ५.शनिग्रह . ६ वज्रम्. ७ महान्. ८.अनुगता दारा वनिता यस्य. वशीकृतवनित इत्यर्थः.

न्तदेहो बाल्येऽपि गोपालजनस्य नेता । गोमण्डलं पासि बलेन युक्तः कथं न राजन्पुरुषोत्तमोऽसि ॥७३॥ नक्षत्रभूः क्षत्रकुलप्रसूतेर्युक्तो न भोगैः खलु भोगभाजः । सुजातरूपोऽपि न याति यस्य समानतां कांचन काञ्चनाद्रिः ॥ ७४ ॥ अखण्डिता शक्तिरथोपमानं न स्वीकृतं न च्छलरीतिरस्ति । अस्पष्टसंदेहविपर्ययस्य कोऽयं तव न्यायनये निवेशः ॥७५॥ स्वतः प्रकाशो मनसो महत्वं धर्मेषु शक्तिर्न तथान्यथा धीः । भूपाल गोपालपदैकभक्तेरन्यैव नैयायिकता तवेयम् ॥ ७६ ॥ यस्येषवः संयुगयामिनीषु प्रोतप्रतिक्ष्मापतिमौलिरत्नाः । गृहीतदीपा इव भिन्दते स्म खड्गान्धकारे रिपुचक्रवालम् ॥ ७७ ॥ लब्ध्वा यदन्तःपुरसुन्दरीणां लावण्यनिष्यन्दसुपान्तभाजाम् । गृहीतसारस्त्रिदशैः पयोधिः पेयूषसंदर्शनसौख्यमाप ॥ ७८ ॥ यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात् । पारे परार्धं गणितं यदि स्याद्गणेयनिःशेषगुणोऽपि स स्यात् ॥ ७९ ॥ एतद्यशःक्षीरधिपूरगाहि पतत्यगाधे वचनं कवीनाम् । एतद्गुणानां गणनाङ्कपातः प्रत्यर्थिकीर्तीः खटिकाः क्षिणोति ॥ ८० ॥ देवाधिपो वा भुजगाधिपो वा नराधिपो वा यदि हैहयः स्यात् । संदर्शनं ते गुणकीर्तनं ते सेवाञ्जलिं ते तदहं विदध्याम् ॥ ८१ ॥ कमलभूतनया वदनाम्बुजे वसतु ते कमला करपल्लवे । वपुषि ते रमतां कमलाङ्गजः प्रतिदिनं हृदये कमलापतिः ॥ ८२ ॥ उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः । निमित्तनैमित्तिकयोरयं विधिस्तव प्रसादस्य पुरस्तु संपदः ॥८३॥ अनेन सर्वार्थिकृतार्थताकृताहृतार्थिनौ कामगवीसुरद्रुमौ । मिथः पयःसेचनपल्लवाशने प्रदाय दानव्यसनं समाप्नुतः ॥ ८४ ॥ मयि स्थितिर्नम्रतयैव लभ्यते दिगेव तु स्तब्धतया विलङ्घ्यते । इतीव चापं दधदाशुगं क्षिपन्नयं नयं सम्यगुपादिशद्द्विषाम् ॥ ८५ ॥ नृपः कराभ्यामुदतोलयन्निजे नृपानयं यान्पततः पदद्वये । तदीयचूडाकुरुविन्दरश्मिभिः स्फुटेयमेतत्करपादरञ्जना ॥ ८६ ॥ इदं नृपप्रार्थिभिरुज्झितोऽर्थिभिर्मणिप्ररोहेण विवृध्य रोहणः । कियद्दिनैरम्बरमावरिष्यते मुधा मुनिर्विन्ध्यमरुद्ध भूधरम् ॥८७॥ राजन्दुधुक्षसि[1] यदि क्षितिधेनुमेतां तेनाद्य वत्समिव लोकममुं पुषाण[2] । तस्मिंश्च सम्यगनिशं परितुष्यमाणे नानाफलैः फलति कल्पलतेव भूमिः ॥ ८८ ॥ अभ्युद्धृता वसुमती दलितारिपूरः क्रोडीकृता बलवता बलिराजलक्ष्मीः । एकत्र जन्मनि कृतं यदनेन राज्ञा जन्मत्रये तदकरोत्पुरुषः पुराणः ॥ ८९ ॥ एकस्त्रिधा वससि चेतसि चित्रमत्र देव द्विषां च विदुषां च मृगीदृशां च । तापं च संमदरसं च रतिं च पुष्णञ्शौर्योष्मणा च विनयेन च लीलया च ॥ ९० ॥ शक्तिं प्रमापयति वीर तवोपमानं प्रामाण्यमाप्तवचनेषु परैव जातिः । जातौ गुणा गुणगणाश्रयिणो विशेषा वैशेषिकं किमपि दर्शनमद्भुतं ते ॥ ९१ ॥ किं कारणं सुकविराज मृगा यदेते व्योमोत्पतन्ति विलिखन्ति भुवं वराहाः । देव त्वदस्त्रचकिताः श्रयितुं स्वजातिमेके मृगाङ्कमृग-

१. दोहन कर्तुमिच्छसि २. पोषण कुरु

मादिवराहमन्ये ॥ ९२ ॥ संभाव्यमिष्टभुवनाभयदानपुण्यसंभारमस्य वपुरत्र हि विस्फुरन्ति । लक्ष्मीश्च सात्त्विकगुणज्वलितं च तेजो धर्मश्च मानविजयौ च पराक्रमश्च ॥ ९३ ॥ प्रत्यक्षरस्नुतसुधारसनिर्विषाभिराशीभिरभ्यधिकभूषितभोगभाजः । गायन्ति कञ्चुकविनिह्नुतरोमहर्षस्वेदोर्मयस्तव गुणानुरगेन्द्रकन्याः ॥ ९४ ॥ उच्चैर्गजैरटनमर्थयमान एव त्वामाश्रयन्निह चिरादुषितोऽस्मि राजन् । उच्चाटनं त्वमपि लम्भयसे तदैव मामद्य नैव विफला महतां हि सेवा ॥ ९५ ॥ भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखसंग्रहस्य । यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥ ९६ ॥ साकं कुरंगकदृशा मधुपानलीलां कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते । अन्याभिधायि तव नाम विभो गृहीतं केनापि तत्र विषमामकरोदवस्थाम् ॥ ९७ ॥ हिमशिशिरवसन्तग्रीष्मवर्षाशरत्सु स्तनतपनवनाम्भोहर्म्यगोक्षीरपानैः । सुखमनुभव राजंस्त्वद्विषो यान्तु नाशं दिवसकमललज्जाशर्वरीरेणुपङ्काः ॥ ९८ ॥ इह निवसति मेरुः शेखरो भूधराणामिह हि निहितभाराः सागराः सप्त चैव । इदमतुलमनन्तं भूतलं भूरिभूतोद्भवधरणसमर्थं स्थानमस्मद्विधानाम् ॥ ९९ ॥ राजन्विभान्ति भवतश्चरितानि तानि इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः । धीदोर्बले अतितते उचितानुवृत्ती आतन्वती विजयसंपदमेत्य भातः ॥ १०० ॥ पौरं सुतीयति जनं समरान्तरेऽसावन्तःपुरीयति विचित्रचरित्रचञ्चुः । नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना ॥ १०१ ॥ दोर्भ्यां तितीर्षति तरंगवतीभुजंगमादातुमिच्छति करे हरिणाङ्कबिम्बम् । मेरुं लिलङ्घयिषति ध्रुवमेष देव यस्ते गुणान्गदितुमुद्यममादधाति ॥ १०२ ॥ कवीनां संतापो भ्रमणमभितो दुर्गतिरिति त्रयाणां पञ्चत्वं रचयसि न तच्चित्रमधिकम् । चतुर्णां वेदानां व्यरचितवता वीर भवता द्विषत्सेनालीनामयुतमपि लक्षं[2] त्वमकृथाः ॥ १०३ ॥ समाजे सम्राजां सदसि विदुषां धाम्नि धनिनां निकाये नीचानामपि च तरुणीनां परिषदि । वय यत्रैव स्मः क्षणमतिथयस्तत्र शृणुमः स्फुरद्रोमोद्भेदाः सुभग भवतः पौरुषकथाः ॥ १०४ ॥ न लोपो वर्णानां न खलु परतः प्रत्ययविधिर्निपातो नास्त्येव क्वचिदपि न मग्नाः प्रकृतयः । गुणो वा वृद्धिर्वा सततमुपकाराय जगतां मुनेर्दाक्षीपुत्रा[3]दपि तव समर्थः पदविधिः ॥ १०५ ॥ न मिथ्यावादस्ते न च विगुणचर्चास्वभिरतिर्न वा वाच्यं किंचिद्वचसि न मनाङ्मायिनि मतिः । तथाप्येतच्चित्रं यदसि जगतीजातिरधुना त्वमेवैको लोके निगमपरभागार्थनिपुणः ॥ १०६ ॥ चकोराणां चन्द्रः कुसुमसमयः काननभुवां सरोजानां भानुः कुवलयकदम्बं मधुलिहाम् । मयूराणां मेघः प्रथयति यथा चेतसि सुखं तथास्माकं प्रीतिं जनयति तवालोकनमिदम् ॥ १०७ ॥ अदातारं दातृप्रवरमनयं विश्वविनयं

---

१ राजपक्षे भद्रशिलीमुखवारणदानकरशब्दा यथाक्रम शोभनयाणनिवारकवितरणहस्तबोधका हस्तिपक्षे तु भद्रजातिभ्रमरहस्तिमदजलशुण्डादण्डबोधका. २ लक्षसख्याकम्, (पक्षे) शरव्यम् ३ पाणिने.

विरूपं रूपाढ्यं विगतजयिनं विश्वजयिनम् । अकुल्यं कुल्यं त्वामहमवदमाशापरवशान्मृपा-
वादेत्युक्तस्त्वयि खलु मृषावादिनि मयि ॥ १०८ ॥ यशःस्तोमानुच्चैरुपचिनु चकोरप्रणयिनी
रसज्ञा पाण्डित्याच्छिदुरशशिधामभ्रमकरान् । अपि त्वत्तेजोभिस्तमसि शमिते रक्षति दिशामसौ
यात्रामैत्रीं नमसि नितरामम्बरमणिः ॥ १०९ ॥ सुराणां पातासौ स पुनरतिपुण्यैकहृदयो
ग्रहस्तस्यास्थाने गुरुरुचितमार्गे स निरतः । करस्तस्यात्यर्थं वहति शतकोटिप्रणयितां स
सर्वस्वं दाता तृणमिव सुरेशं विजयते ॥११०॥ मनोभूर्मुग्धासु क्षिपति यदि बाणावलिमसौ
कथं ताभिः क्षिप्तास्त्वयि नयनविक्षेपविशिखाः । अथ ज्ञातं ब्रूमः शृणु सुभग शृङ्गारनलि-
नीवनक्रीडाहंसं स्मरमिव विदुस्त्वां मृगदृशः ॥ १११ ॥ यशश्चन्द्रैरुद्यत्सुत्कृतनरकल्पद्रु-
मकरैः परं लक्ष्मीगर्भैर्द्विरदहयरत्नादिफलदैः । निजैर्दानाम्भोभिर्नियततुलितक्षीरजलधिश्चिरं
जीयाज्जीयादधिधरणि सोऽयं नरपतिः ॥ ११२ ॥ अयं मार्तण्डः किं स खलु तुरगैः सप्त-
भिरितः कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् । कृतान्तः किं साक्षान्महिषवह-
नोऽसाविति चिरं समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥ ११३ ॥ यदेतच्च-
न्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टे लोकः शशक इति नो मां प्रति तथा । अहं त्विदं
मन्ये त्वदरिविरहाक्रान्ततरुणीकटाक्षोल्काप्रातव्रणकिणकलङ्काङ्किततनुम् ॥ ११४॥ तुलाधारो
धाता वहति वसुधा शूर्पपदवीं फणीशः स्यात्सूत्रं कनकशिखरी मानपलिका । तुलादण्डः
सत्यं यदि भवति दामोदरगदा तथाप्येषोऽशक्यस्तव गुणसमूहस्तुलयितुम् ॥ ११५ ॥
न तूणादुद्धारे न गुणघटनेनाश्रुतिशिखं समाकृष्टौ दृष्टिर्न वियति न लक्ष्ये न च भुवि ।
नृणां पश्यत्यस्य क च न विशिखान्किंतु पतितद्विषद्वक्षःश्वभ्रैरनुमितिरमून्गोचरयाति
॥ ११६ ॥ अमुष्योर्वीभर्तुः प्रसृमरचमूसिन्धुरभवैर्वमि प्रारब्धे वमथुभिरवश्यार्थसमये । न
कम्पन्तामन्तः प्रतिनृपभटा म्लायतु न तद्वधूवक्त्राम्भोजं भवतु न स तेषां कुदिवसः
॥ ११७ ॥ स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः प्रतिदिनमथवा ते वृत्तिरेवंविधैव । अनु-
भवति हि मूर्ध्ना पादपस्तीव्रमुष्णं शमयति परितापं छायया संश्रितानाम् ॥ ११८ ॥ निय-
मयसि कुमार्गप्रस्थितानात्तदण्डः प्रशमयसि विवादं कल्पसे रक्षणाय । अतनुषु विभवेषु
ज्ञातयः सन्तु नाम त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ॥ ११९ ॥ अभिमतफलदाता
त्वं च कल्पद्रुमश्च प्रकटमिह विशेषं कंचनोदाहरामः । कथमिव मधुरोक्तिप्रेमसंमानमिश्रं
तुलयति सुरशाखी देव दानं त्वदीयम् ॥ १२० ॥ अकाण्डधृतमानसव्यवसितोत्सवैः सार-
सैरकाण्डपटुताण्डवैरपि शिखण्डिनां मण्डलैः । दिशः समवलोकिताः सरसनिर्भरप्रोल्लसद्भव-
त्पृथुवरूथिनी रजनिभूरजश्यामलाः ॥१२१॥ सहस्रकरपूरणान्निखिलजन्तुवक्त्राम्बुजप्रकाशक-

१. परिमाणपात्रताम्. २ परिमाणपाषाण ३. सधानेन. ४. आकर्णान्तम् ५ रन्ध्रै. ६ प्रसारिण.. ७ करशीकरै ८ नीहारकाले.

रणादथ प्रबलवैरितेजोवधात् । दरिद्रतिमिरोद्धृतेरखिलभूपचूडामणिर्जगन्मणिरहर्मणिर्जगादिदं घ धत्तः समम् ॥१२२॥ आलोकान्तप्रतिहततमोवृत्तिरासां प्रजानां तुल्योद्योगस्तव च सवितुश्चाधिकारो मतो नः। तिष्ठत्येकः क्षणमधिपतिर्ज्योतिषां व्योममध्ये षष्ठे काले त्वमपि लभसे देव विश्रान्तिमह्नः॥१२३॥ शूली जातः कदशनवशाद्भैक्ष्ययोगात्कपाली वस्त्राभावाद्गगनवसनः स्नेहशून्याज्जटावान् । इत्थं राजंस्तव परिचयादीश्वरत्वं मयाप्तं तस्मान्मह्यं किमिति कृपया नार्धचन्द्रं ददासि ॥१२४॥ अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये रक्षायोगादयमपि तपः प्रत्यहं संचिनोति । अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ॥ १२५ ॥ नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीमेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति । आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यैरस्याधिज्ये धनुषि विजये पौरुहूते च वज्रे ॥ १२६ ॥ त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै । सामर्थ्यानामिव समुदयः संचयो वा गुणनामाविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥ १२७ ॥ हेषन्ते यज्जितजलधरध्वानमेते तुरंगा भूमिं पादैर्यदपि च मुहुर्दक्षिणैरालिखन्ति । यानौत्सुक्यं यदपि चलनाद्वालधेर्व्यञ्जयन्ति त्वद्दोर्दण्डद्वितयवशगा तत्समग्रा जयश्रीः ॥ १२८ ॥ यदि परगुणा न क्षम्यन्ते यतस्व गुणार्जने नहि परयशो निन्दाव्याजैरलं परिमार्जितुम् । विरमसि न चेदिच्छाद्वेषप्रसक्तमनोरथो दिनकरकरान्पाणिच्छत्रैर्नुदञ्श्रममेष्यसि ॥ १२९ ॥ यत्कीर्त्या धवलीकृतं त्रिभुवनं मूर्त्या जगन्मोहितं भक्त्येशः परितोषितः सुचरितैरानन्दिताः सज्जनाः । पूर्णाशा बहवः कृता वितरणैर्येन त्वया याचकास्तस्मै सर्वगुणाश्रयाय भवते दीर्घायुराशास्महे ॥ १३० ॥ दाने कल्पतरुर्नये सुरगुरुः काव्ये कविस्तेजसि प्रौढग्रीष्मरविर्धने धनपतिः सत्ये दयायां शिबिः । गाम्भीर्ये सरितांपतिर्निरुपमे शौर्ये सुभद्रापतिः श्रीमान्धर्मरतिर्महीपतिरयं जीयात्सहस्रं समाः ॥ १३१ ॥ विद्वन्मानसहंस वैरिकमलासंकोचचन्द्रद्युते दुर्गामारणनीललोहित समित्स्वीकारवैश्वानर । सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो साम्राज्यं वरवीर वत्सरशतं वैरिश्रमुच्चैः क्रियाः ॥ १३२ ॥ भास्वत्सारथिबन्धुवाहनसखी गेहे तनौ तत्सुतो नाभ्युद्भूतजर्जा तवास्तु वदने सूर्येन्द्रवाहौ वहिः । अङ्के सूनुतनूजतत्सुतसुतः शय्यागृहे सुन्दरी विद्वान्संसदि वाचि कृष्णचरित ध्यानं हरेर्मानसे ॥ १३३ ॥ हस्तन्यस्तकुशोदके त्वयि न भूः सर्वसहा वेपते देवागारतया स काञ्चनगिरिश्चित्ते न धत्ते भयम् । अज्ञातद्विपभिक्षभिक्षुककुलावस्था

१. लोकालोकपर्वतपर्यन्तम् २ दिवसस्य ३ ऐन्द्रे ४ साक्षात् ५. केशसमूहयुक्त. पुच्छाग्रभागः. ६. भास्वान्सूर्यस्तत्सारथिररुणस्तद्बन्धुर्गरुड स वाहन यस्येति विष्णुस्तत्सखी भार्या. लक्ष्मीरित्यर्थः. ७. मदनः. ८. नाभ्युद्भूतो ब्रह्मा तत्पुत्री सरस्वती. ९. सूर्यवाहनमश्व. इन्द्रवाहनं हस्ती.

न दुस्थाशया वेपन्ते मददन्तिनः परममी भूमीपते तावकाः ॥ १३४ ॥ अर्थि[1]भ्रंशबहू[2]भवत्फलभरव्याजेन कुब्जा[3]यितः सत्यस्मिन्नतिदान[4]भाजि कथमप्यास्तां स कल्पद्रुमः । आस्ते[5] निर्व्ययरत्नसंपद्दुदयोदग्रः कथं याचकश्रेणीवर्जनदुर्यशोनिविडितव्रीडस्तु रत्नाचलः ॥ १३५ ॥ देव त्वत्करनीरदे दिशिदिशि प्रारब्धपुण्योन्नतौ चञ्चत्कङ्कणरत्नकान्तितडिति स्वर्णा[6]मृतं वर्षति । [7]स्फीता कीर्तितरंगिणी समभवत्तृप्ता [8]गुणग्रामभूः पूर्णं चार्थिसरः शशाम विदुषां दारिद्र्यदावानलः ॥ १३६ ॥ देव त्वाम्[9]असमानदाननिहितैरर्थैः कृतार्थीकृतत्रैलोक्यं फलभारभङ्गुरशिराः कल्पद्रुमो नि[10]न्दति । [11]टङ्कच्छेदनवेदनाविरमणात्संजातसौख्यस्थितिः प्राचीनव्रणिताङ्गरोहणतर्[12]यो श्रीरोह[13]णः [14]स्तौति च ॥ १३७ ॥ गण्डौ पाण्डिमसात्तनूस्तानिमसात्पक्ष्मावली बाष्पसात्कीरः पञ्जरसान्मनोऽपि हरसात्कण्ठोऽपि वैकल्यसात् । आसन्देव च[15]मूवरेण्य भवतः प्रत्यर्थिवामभ्रुवां कोदण्डे परिवेष[16]भाजि विजयश्रीसाधने [17]योधने ॥ १३८ ॥ देव त्वं मलयाचलोऽसि भवतः श्रीख[18]ण्डशाखी भुजस्तस्मिन्कालभुजंगमो निवसति स्फूर्जत्[19]कृपाणच्छलात् । एष स्वाङ्ग[20]मनर्गलं रिपुतरुस्क[21]न्धेषु संघट्टयन्दीर्घव्योमविसारि निर्मलयशोनिर्मोक[22]मुन्मुञ्च[23]ति ॥ १३९ ॥ कर्पूरप्रतिपन्थिनो हिमगिरिग्रावाग्रसंवर्पिणः क्षीराम्भोनिधिमध्यगर्भजयिनो गङ्गौघसर्वंकषाः । स्वच्छन्दं हरिचन्दनद्युतितुदः कुन्देन्दुसंवादिनस्तस्यासन्नरविन्दकन्दरुचयोऽनेके गुणाः केचन ॥ १४० ॥ मन्ये स्पर्शमणिं तवैनमतुलं पाणिं द्विजाभ्यर्चने दुर्वर्णान्यपि भिक्षुमालफलकान्यासन्सुवर्णानि यत् । तच्चित्रं परमत्र मित्र भवता दत्ताः स्वहस्तादिमा दुर्वर्णा न सुवर्णतामुपगताः क्षुद्रास्तु मुद्रां कथम् ॥ १४१ ॥ संतप्तश्रमहारिशीतलतले पुण्याश्रमालंकृतावुद्यद्दैवदवानलेन कलिते विद्वत्तरूणां चये । सद्यो वर्ष सुवर्णवारिद विभो स्वर्णाम्बुधारास्ततो विश्वव्यापियशाः शिरोखनिभृतामाक्रम्य नन्दानिशम्॥१४२॥ इन्दुस्त्वद्यशसा जितोऽवनिपते भासांनिधिस्तेजसा कन्दर्पो वपुषा सुधाजलनिधिर्वाचोविलासेन च । तथ्यं ते जयशीलमेतदधुना त्वद्दानगर्दैन्ययोर्मध्येतुं न विजेष्यतीति विषये दोलायते मे मनः ॥ १४३ ॥ यः पृष्ठं युधि दर्शयत्यरिभटश्रेणीषु यो वक्रतामस्मिन्नेव बिभर्ति

---

१. असमत्वेन. २ व्ययाभावादुपचीयमानस्य. ३. लज्जयैवेति भाव. ४. दानशौण्डे. ५ लज्जासवर्णोपायासम्भवादिति भाव ६ पानीयम्. ७. जलभरैर्वृद्धिं प्राप्ता ८. गुणसमूहभूमिः ९. अनुपमदानाय न्यस्तैः सुवर्णादिभि १०. यतस्त्वया दानेन सर्वे याचका. सफलीकृता अतस्तत्फलाना गृह्याल्व. केऽपि च नामन्त्रिति भाव ११ खनित्रैः १२. निर्व्रणतया. १३ पर्वत . १४. यतस्तथैव सर्वेषा सरत्नतया रत्नार्थिनोऽभावान्न कश्चिदपि विदार्यत इति भाव १५ सेनाप्रधान. १६. परिवेषो मण्डलीकरण धनुषस्त भजते सेवतेऽसौ परिवेषभाक्तस्मिञ्जाते सति. कर्णानामाकर्षणेन कुण्डलाना प्राप्ते सतीत्यर्थ . १७. रणे १८. चन्दनवृक्ष १९ खड्गम्. २० यथेच्छम् २१. रिपुमस्तकेष्विति यावत्. २२. कञ्चुकम्. २३. यथा कृष्णः सर्पस्तरुस्कन्धे सघट्टन कुर्वन्स्व कञ्चुक परित्यजति तथा त्वत्कृपाणाहि शत्रुतरुस्कन्धेषु सश्लिष्य यश कञ्चुक मुञ्चतीति भाव

यश्च किरति क्रूरध्वनिं निष्ठुरः। दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन्गुणं विख्यातः परमेष एव नृपतिः सीमा गुणग्राहिणाम्॥ १४४॥ देव त्वं जय यस्य राजति महाराष्ट्रीकुचोच्चं कुलं लाटीवाङ्मृदु नर्म चेदिवनितानाभीगभीरं मनः। आभीरीकटिविस्तृता मतिरसिर्गौडीकचश्यामला कर्णाटीरतिनिष्ठुरो रणरसः कीरीमुखोत्थं यशः॥ १४५॥ ते कौपीनधनास्त एव हि परं धात्रीफलं भुञ्जते तेषां द्वारि नदन्तिवाजिनिवहास्तैरेव लब्धा क्षितिः। तैरेतत्समलंकृतं निजकुलं किंवा बहु ब्रूमहे ये दृष्टाः परमेश्वरेण भवता रुष्टेन तुष्टेन वा॥ १४६॥ साशङ्कस्य समाकुलीकृतमतेरत्यन्तनिस्तेजसश्छिन्नाङ्गस्य विकम्पमानहृदयस्यारूढमन्योर्भृशम्। लज्जां संत्यजतः क्रमं विमृशतो विघ्नान्बहूनपश्यतः क्लेशो योऽर्थिजनस्य वक्तुमनसो मा भूत्स ते विद्विषाम्॥ १४७॥ नो कामः प्रतिहन्यते प्रणयिषु स्वप्नेऽपि नाथ त्वया नैवाधः कुरुषे विषं द्विरसनव्याला न ते वल्लभाः। नो वक्रयस्तव मूर्तयो न च तनुर्नित्यं जडानुग्रहव्यग्रा नो विषमा च दृक्त्वमथ च ख्यातः क्षिताविश्वरः॥ १४८॥ संग्रामाङ्गणमागतेन भवता चापे समारोपिते देवाकर्णय येन येन सहसा यद्यत्समासादितम्। कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम्॥ १४९॥ हारानाहर देव चन्द्रधवलान्नो चेत्पयोधेस्तटीं संप्राप्ते त्वयि सैन्यवारणगणैर्मज्जद्भिरक्षोभितम्। सिन्दूरारुणमम्बु मेघपटलीपीतोज्झितं शुक्तिषु स्वल्पैरेव दिनैः करिष्यसि महीमाताम्रमुक्ताफलाम्॥ १५०॥ कृष्णत्वं घनमण्डलस्य गलितं लग्नं मुखे त्वद्द्विषां विद्युद्दाम जगाम तावकमति गर्जिर्भवद्दुन्दुभिम्। वृष्णिस्त्वत्परिपान्थिपार्थिववधूनेत्रेषु चक्रे स्थितिं चापं ते वसुधाधिनाथ बलभित्कोदण्डकान्तिः श्रिता॥ १५१॥ नालिङ्गन्ति कुचद्वयं भवदिभप्रोत्तुङ्गकुम्भद्वयत्रासाद्वेणिलतासु नैव दधति प्रीतिं तवासिभ्रमात्। भ्रूभङ्गान्भवदीयदुर्धरधनुर्भ्रान्त्या भजन्ते न ते वैरिक्षोणिभुजो निजाम्बुजदृशां भूमण्डलाखण्डलम्॥ १५२॥ अस्य क्षोणिपतेः परार्धपरया लक्षीकृताः संख्यया प्रज्ञाचक्षुरवेक्ष्यमाणबधिरश्राव्याः किलाकीर्तयः। गीयन्ते स्वरमष्टमं कलयता जातेन वन्ध्योदरान्मूकानां प्रकरेण कूर्मरमणीदुग्धोदधे रोधसि॥ १५३॥ द्वारं खड्गिभिरावृतं बहिरपि प्रस्विन्नगण्डैर्गजैरन्तःकञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः। आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे राजन्सैव चिरंतनप्रणयिनी शून्येऽपि राज्यस्थितिः॥ १५४॥ शौर्यं केसरिणा परोपकरणं कल्पद्रुमेणार्पितं लावण्यं मकरध्वजेन च शरच्चन्द्रेण शुभ्रं यशः। धैर्यं ते क-

१. कौपीनमेव धन येषाम्; (पक्षे) कौ पृथिव्यां पीनधनाः पुष्टधना. २ आमलकीफलम्; (पक्षे) पृथ्वीफलम्. राज्यमित्यर्थ. ३ न इति पदच्छेद. गजाश्वसमूह, (पक्षे) वाजिनिवहा अश्वसमूहा नदन्ति हेषित कुर्वन्तीत्यर्थ. ४ समल सदोषं कृतम्; (पक्षे) सम्यगलकृतम् ५ अन्ध अस्य राज्ञोऽकीर्तिरेव नास्तीति भाव. ६. खड्गधारिभि; (पक्षे) गण्डकैः. ७ द्वारपालै; (पक्षे) सर्पैः. ८. पट्टाभिषिक्तस्त्रीभि.

मठाधिपेन विपुलं गाम्भीर्यमम्भोधिना सौभाग्यं तु तवैव केवलमिदं तत्केन नो विद्महे ॥ १५५ ॥ कर्णस्ते न तुलां कथं कथमपि प्राप्तुं क्षमो नो यतस्ते दुःशासनके न शल्यनृपतौ दुर्योधने वा न वा । नो दुष्टे शकुनौ सदा वितरणस्वीयत्वबुद्धिर्मनागास्ते धर्मरतिर्मतिर्निरहरौ न देष्टृता बन्धुषु ॥ १५६ ॥ कामं कामसमस्त्वमत्र जगति ख्यातोऽसि यत्सर्वदा रूपेणैव महीपते तव धनुःपाण्डित्यमन्यादृशम् । त्वं यस्मिन्विशिखं विमुञ्चसि तमेवोद्दिश्य मुक्तत्रपं •स्त्यकञ्चुकमुद्रतस्पृहमहो धावन्ति देवाङ्गनाः ॥ १५७ ॥ सर्वं लुण्ठितमुद्भटैस्तव भटैस्तेन द्विषत्सुभ्रुवस्त्राणाय त्वयि योजिताञ्जलिपुटं काकूक्तिमातन्वते । त्राणं दूरत एव तिष्ठतु मनस्तासां त्वया लुण्ठितं तद्गम्भीर वदामि कुप्यसि न चेत्साधोरयं कः क्रमः॥१५८॥ कोदण्डस्तव हस्तगो हृदि वलत्यर्तिस्तव द्वेषिणां त्वं दाता रभसेन मार्गणगणस्तानेव संसेवते । देव त्वं तु जयस्यमित्रमनिशं ते यान्ति वैकुण्ठतां संग्रामे तव भूपते महदिदं चित्रं समालोक्यते ॥ १५९ ॥ मेदिन्यां विषमेषुरित्यनुदिनं शृङ्गारवीरोद्भटाचार्यैः श्रीजगतीपतिः कमलदृक्कैर्नाम नो गीयते । शय्यायां चरणाङ्गणे च पतिताः सीदन्ति निश्चेतनाः कामिन्यश्च विरोधिनश्च शतशो येनामुना खण्डिताः ॥ १६० ॥ दोर्दण्डद्वयकुण्डलीकृतलसत्कोदण्डचण्डाशुगध्वस्तोद्दण्डविपक्षमण्डलमथ त्वां वीक्ष्य मध्येरणम् । वल्गद्गाण्डिवमुक्तकाण्डवलयज्वालावलीताण्डवभ्रश्यत्खाण्डवरुष्टपाण्डवमहो को न क्षितीशः स्मरेत् ॥ १६१ ॥ को दण्डं न ददाति देव भवते कोदण्डमातन्वते को नारातिमुपैति पारमुदधेः कोनारुणे लोचने । का कुञ्जान्तरमेत्य वैरितरुणी काकुं न वा भाषते राजन्गर्जति वारणे तव पुरः को वा रणे वर्तताम् ॥ १६२ ॥ दृष्ट्वा मण्डलमध्यलग्नमधुलिड्ढ्वेतण्डलक्षस्फुरत्तत्कोदण्डलसद्ध्वतेषु लहरीः को न क्षमाखण्डल । स्वारात्ताण्डवभागकाण्डवनभुग्धाराज्वलद्गाण्डवक्रुध्यत्पाण्डवकाण्डवर्षमतुलं ब्रह्माण्डवर्त्म स्मरेत् ॥ १६३ ॥ आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः । संग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो राजन्राजति वैरिराजवनितावैधव्यदस्ते भुजः ॥ १६४ ॥ लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां देव त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा । इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥ १६५॥ नानाभूषणभूषितः प्रतिप्रभापात्रं प्रभूता स्थितिर्भारासक्तकरो भवाधिकरुचिर्भूरी-

---

१. बन्धनस्तम्भ २ अनेनास्य सेतोरविनश्वरत्व सूचितम् ३. उदयाचल . ४ सूर्य ५. उष्णीषकम् ६. विलोडनलीला. ७. यथा क्षीराब्धिमन्थने मन्दराचलस्तथा संग्रामामृतसागरविलोडने त्वद्भुजः यथा च तत्रामृतमुत्पन्न तथात्र यश इति भाव . ८. यतस्त्वमेव विमलसकललावण्यगृहमतस्त्वत्पुर. सकलङ्कस्य चन्द्रस्य लावण्यमयत्वेन घटनं व्यर्थमेवेति भाव .-९ यत पूषा त्वत्प्रतापगरिमालक्षांशमपि नाप्नोतीति भाव. १०. यतश्चिन्तारत्नस्याय प्रभावो यद्याचकयाचितार्थाना सद्य एव पूरणं भवति तच्च त्वत्त एव भवतीति. अतश्चिन्तामण्युत्पत्तिर्व्यर्थेति भाव . ११. यत पृथ्वीभारस्त्वया भुजाभ्यामेव धारितोऽतस्तदुत्पत्तिर्व्यर्थेति भाव..

कृताश्वद्विपः । शश्वत्संगतभासमानमुकुटो भिक्षुप्रवृद्धादरस्त्वं राजेन्द्र रिपुस्तवापि नितरां भेदः परं भेदकृत् ॥ १६६ ॥ प्रत्यावासकसज्जितां प्रथमतस्त्वां योद्धुमुत्कण्ठिता योधास्तेऽभिसृता मनागरिचमूः स्वाधीननाथा स्थिता । भीत्या प्रोषितभर्तृका समभवत्त्वत्सायकैः खण्डिता दूरादन्तरिता विधाय कलहं हा विप्रलब्धा विधे ॥ १६७ ॥ प्रामाण्यं स्वत एव नैव परतो विज्ञायते मानता शब्दस्यापि यथार्थता स्तुतिवचोराशेर्मनोवृत्तयः । विश्वव्यापकतां गतो न च महानन्यो भ्रमः क्वापि ते नास्त्ये देव मतं किमस्ति भवतः शास्त्रेषु न ज्ञायते ॥ १६८ ॥ प्रामाण्यं परतः स्वतोऽपि भवतो विज्ञायते सन्मते भूमीन्द्र प्रचुरक्षणास्थिरतया वर्णाश्चिरं स्थापिताः । सर्वज्ञैकसदीश्वरोऽपि न परं ब्रूते भवानीश्वरं तन्नैयायिकनायकस्य भवतो मीमांसकत्वं कुतः ॥ १६९ ॥ एकं वस्तु यदस्ति विश्वजनतानन्दप्रमोदात्मकं सत्यं तत्त्वमसीति वाक्यमखिलं त्वय्येव विश्राम्यति । त्वामाकर्ण्य न किंचिदन्यदवनीशृङ्गार भो मन्यते त्वय्यास्ते जनकादिकीर्तिजनके किं ज्ञानमीमांसया ॥ १७० ॥ त्वद्बाणेषु यमो जयेषु नियमो पाते स्थिरं चासनं भ्रान्तौ श्वासविनिग्रहो गुणगणे प्रत्याहृतिः श्रीमतः । ध्यानं शूलिनि धारणा च धरणेर्धर्मे समाधिर्यतस्तन्निर्विण्णहृदः किमीश्वरपरे वाञ्छन्ति पातंजले ॥ १७१ ॥ दृष्टान्तो न तवास्ति वाचि न च ते संदेहलेशः क्वचिद्व्याजोक्तिर्न कदापि शास्त्रकलने नैवानुमाने रुचिः । सामान्यं च विशेषवन्न मनुषे नाक्षेपवृद्धिर्मनाग्व्याघातोऽपि न वा मुखेऽप्यथ कथं साहित्यतर्कज्ञता ॥ १७२ ॥ मेघो भाति जलेन गौस्तु पयसा विद्वन्मुखं भाषया तारुण्येन च कामिनी मधुरया वाण्या पिकः खं जलात् । मालिन्यान्नयनं श्रिया च सदनं ताम्बूलरागान्मुखं ब्रह्माण्ड सकलं त्वया नरपते भाति स्म चित्रं महत् ॥ १७३ ॥ दारिद्र्योपहतो यथा घनघनं चान्द्री-चकोरः प्रभां कामार्तस्तरुणीं क्षुधापरिगतः सद्व्यञ्जनं भोजनम् । सच्छिष्यः स्वगुरुं वियोगविधुरो वत्सो यथा मातरं तद्वद्वः सततं स्मरामि मनसा मद्वत्सलाञ्श्रीमतः ॥ १७४ ॥ लक्ष्मीस्ते सदने सदा विहरतां वित्ते च चिन्तामणिः स्वर्धेनुस्तव गोकुले सुरतरुश्चारामभूमौ तव । वाणी ते वदने दया नयनयोर्दानं करे चान्वहं विष्णुश्चेतसि ते मतिश्च वसतां कीर्तिश्च लोकत्रये ॥ १७५ ॥ त्वामुर्वीधर चित्रकाव्यकरणे सेनागणो भाषणे त्राणे व्याकरणे रणे वितरणे विश्वंभराभूषणे । सत्यं सत्यवतीभवे शरभवे वागीशवे विष्णवे द्रौक्षीकुक्षिभवे पृथोदरभवे देवद्रुवे मेरवे ॥ १७६ ॥ गङ्गायत्यसितापगा फणिगणः शेषीयति श्रीपतिः श्रीकण्ठीयति कैरवीयति कुलं नीलोत्पलानां च वै । कर्पूरीयति कज्जलं पिककुलं लीलामरालीयति स्वःकुम्भीयति कुम्भिनामपि घटा त्वत्कीर्तिसंघट्टतः ॥ १७७ ॥ लक्ष्मीस्ते हृदि भारती च वदने मौलौ सदा केशवश्चण्डी ते भुजदण्डयोर्गुणनिधे गेहे कुबेरस्थितिः । चित्तं नाथ तवास्तु धर्मसदने दा-

---

१. व्यासाय. २. षडाननाय. ३ बृहस्पतये. ४. पाणिनये. ५ अर्जुनाय.

नप्रसंगः करे सर्वास्ते विपदः प्रयान्तु विपिने त्वं दीर्घजीवी भव ॥ १७८ ॥ आयुस्ते नरवीर वर्धतु सदा हेमन्तरात्रिर्यथा लोकानां प्रियवर्धनो भव सदा हेमन्तसूर्यो यथा । लोकानां भयवर्धनो भव सदा हेमन्ततोयं यथा नाशं यान्तु तवारयोऽपि सततं हेमन्तपद्मं यथा ॥ १७९ ॥ इन्दुं कैरविणीव काकपटलीवाम्भोजिनीवल्लभ मेवं चातकमण्डलीव मधुपश्रेणीव पङ्केरुहम् । माकन्दं पिकसुन्दरीव सरसीं हंसीव विद्वत्प्रभो चेतोवृत्तिरियं ममापि नृपते त्वां द्रष्टुमुत्कण्ठते ॥ १८० ॥ सत्यासक्तमनाः प्रवृद्धनरकच्छेदी द्विजेन्द्राश्रयो युक्तानेकमुखोद्भवास्पदमलं श्रीर्यत्र संराजते । यो गङ्गां च बिभर्ति यश्च सशिवो यः कामदेवाश्रयः सङ्गः साम्यमयं प्रयातु भवतां कृष्णेन रुद्रेण वा ॥ १८१ ॥ यद्बाहू वहतः पराक्रमहृतां प्रत्यर्थिसीमन्तिनीचक्षुःकज्जलकालिकामिव धनुर्मौर्वीकिणश्यामिकाम् । यद्दोर्दुर्मदकर्मकार्मुकगुणप्रोत्तालकोलाहलैर्वैरिस्त्रीकलमेखलाकलकलाः पीता इवास्तं गताः ॥ १८२ ॥ सौन्दर्यं मदनादपि प्रथयति प्रौढिप्रकर्षं पुरा भेत्तारं मदनारिमप्यधरयत्युद्दामदोःक्रीडितम् । मुग्धत्वं मदनारिमौलिशशिनोऽप्युत्कर्षमालम्बते मूर्तेस्तत्किमसौ रसैर्विरचितः शृङ्गारवीराद्भुतैः ॥ १८३ ॥ आदाय प्रतिपक्षकीर्तिनिवहान्ब्रह्माण्डभूपान्तरे निर्विघ्नं धमता नितान्तमुदितैः स्वैरेव तेजोऽग्निभिः । तत्ताद्दक्पुटपाकशोधितमिव प्राप्तं गुणोत्कर्षिणा पिण्डस्थं च महत्तरं च भवता निःक्षारतारं यशः ॥ १८४ ॥ व्यास्यं नैकतयास्थितं श्रुतिगणं जन्मी न वल्मीकतो नाभौ नाभवमच्युतस्य सुमहद्भाष्यं च नाभाषिषम् । चित्रार्थां न बृहत्कथामचकथं सुत्रामिण नासं गुरुर्देव त्वद्गुणवृन्दवर्णनमहं कर्तुं कथं शक्नुयाम् ॥ १८५ ॥ एकाभूत्कुसुमायुधेषुधिरिव प्रव्यक्तपुङ्खावली जेतुर्मङ्गलपालिकेव पुलकैरन्या कपोलस्थली । लोलाक्षीं क्षणमात्रभाविविरहक्लेशासहां पश्यतो द्रागाकर्णयतश्च वीर भवतः प्रौढाहवाडम्बरम् ॥ १८६ ॥ येषां दोर्बलमेव दुर्बलतया ते संमतास्तैरपि प्रायः केवलनीतिरीतिशरणैः कार्यं किमुर्वीश्वरैः । ये क्ष्माशक्र पुनः पराक्रमनयस्वीकारकान्तक्रमास्ते स्युर्नैव भवादृशास्त्रिजगति द्वित्राः पवित्राः परम् ॥ १८७ ॥ अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधयस्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः । आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥ १८८ ॥ येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधरस्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं परामोति च । तेषां संगररङ्गसक्तमनसां राज्ञां त्वया भूपते पांशूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ १८९ ॥ द्वेष्याकीर्तिकलिन्दशैलसुतया नद्यास्य यद्दोर्द्वयीकीर्तिश्रेणिमयी समागममगाद्गङ्गा रणप्राङ्गणे । तत्तस्मि-

१. अनेकशाखारूपेण न विस्तारितवान् तत्कर्ता व्यासो न भवामीत्यर्थः. २ वेदसमूहम्. ३. नाहं वाल्मीकिरित्यर्थः. ४. नाहं चतुर्मुख इत्यर्थः. ५ नाहं सहस्रजिह्व इत्यर्थः. ६. नाहं गुणाढ्य इत्यर्थः. ७. इन्द्रे. ८. नाहं वाचस्पतिरित्यर्थः. ९ खड्गम्. १० तैलादि, ( पक्षे ) मित्रत्वम् ११ यमुनया.

न्विनिमज्य बाहुजभटै[1]रारम्भे[2] रम्भापरिरम्भानन्दनिकेतनन्दनवनक्रीडादराडम्बरः ॥ १९० ॥ अस्मिन्दिग्विजयोद्यते पतिरयं मे स्तादिति ध्यायति कम्पं[3] सात्विकभावमर्च्छति[4] रिपुक्षोणीन्द्रदारा धरा । अस्यैवाभिमुखं निपत्य समरे यास्यद्भिरूर्ध्वं[5] निजः पन्था[6] भास्वति[7] दृश्यते बिलमयः प्रत्यर्थिभिः पार्थिवैः ॥ १९१ ॥ विद्राणे रणचत्वरा[8]दरिगणे त्रस्ते समस्ते पुनः कोपात्कोऽपि निवर्तते यदि भटः कीर्त्या जगत्युद्भटः[9] । आगच्छन्नपि संमुखं विमुखता[10]मेवाधिगच्छत्यसौ द्रागेतच्छुरिकारयेण [11]ठणिति च्छिन्नापसर्पच्छिराः ॥ १९२ ॥ हित्वा दैत्य[12]रिपोरुरः स्वभवनं शून्यत्व[13]दोषस्फुटासीदन्मर्कट[14]कीटकात्रिमासितच्छत्रीभवत्कौस्तुभम् । उज्झित्वा निजसद्म पद्ममपि तद्वच्चक्रावनद्धी[15]कृतं लूतातन्तुभिरन्तरद्य भुजयोः [16]श्रीरस्य विश्राम्यति ॥ १९३ ॥ सिन्धोर्जैत्र[17]मयं पवित्रमसृजत्तत्कीर्तिपूर्ता[18]द्भुतं यत्र स्नान्ति जगन्ति सन्ति कवयः के वा न वाचंयमाः[19] । यद्बिन्दुश्रियमिन्दुरञ्चति जलं चाविश्य दृश्येतरो[20] यस्यासौ[21] जलदेवतास्फटिकमूर्जागर्ति यागेश्वरः ॥१९४॥ युध्वा चाभिमुखं रणस्य चरणस्यैवादसीयस्य[22] वा त्रुध्वान्तः स्वपरान्तरं निपततामुन्मुच्य बाणावलीः । छिन्नं वावनती[23]भवन्निजभियः खिन्नं भरेणा[24]थवा राज्ञानेन हठाद्विलोठित[25]मभूद्भूमावरीणां शिरः ॥ १९५ ॥ राज्ञामस्य शतेन किं कलयतो हेतिं[26] शतघ्नीं कृतं[27] लक्षैर्लक्ष[28]भिदो दृशैव जयतः पद्मानि[29] पद्मैरलम्[30] । कर्तुं सर्वपरच्छिदः[31] किमपि नो शक्यं परार्धेन[32] वा तत्संख्या[33]पगमं विनास्ति न गतिः काचिद्धतैतद्विषाम् ॥ १९६ ॥ क्षीरोदन्वदपः प्रमथ्य[34] [35]मथिता[36]द्देशेऽमरैर्निर्मिते[37] स्वाक्रम्य[38] सृजतस्तदस्य यशसः क्षीरोदसिंहासनम् । केषां नाजनि वा जनेन जगतामेतत्कवित्वामृतस्रोतःप्रोत[39]पिपासुकर्णकलसीभाजाभिषेकोत्सवः ॥ १९७ ॥ निस्त्रिंश[40]त्रुटितारिवारणघटाकुम्भास्थिकूटा[41]वटे[42]स्थानस्थायुक[43]मौक्तिकोत्करै[44]रकिरः कैरस्य नायं करः । उन्नीत[45]श्चतुरङ्गसैन्यसमरत्वङ्ग[46]त्तुरंगक्षुरक्षुण्णा[47]सु क्षितिषु क्षिपन्निव[48] यशःक्षौणीज[49]बीजव्रजम् ॥ १९८ ॥ यत्कस्यामपि भानु[50]-

---

१.क्षत्रियभटै २ एतद्विरोधिना मरणमेव शरणमिति भाव ३ औत्पातिके भूकम्पे सात्विकोत्प्रेक्षा ४.प्राप्नोति ५. ऊर्ध्वलोकम् ६. आसन्नमृत्योरादित्यमण्डलं सच्छिद्रमिव दृश्यते ७ सूर्यमण्डले. ८. रणाङ्गणात् ९. प्रसिद्ध. १०. पराङ्मुखत्वम्; (पक्षे) विगतमुखत्वम्. ११. ठणिति कश्चिदनुकरणशब्द. १२ विष्णो. १३ रिक्ततादोष. १४. तन्तुवायकीटा १५ बद्धम् १६ लक्ष्मी १७. जेतृजयशीलम्. ततोऽप्यधिकमित्यर्थ १८. खातम्. १९ सर्वेऽपि कवयो मौनिनो भवन्ति वर्णयितुमशक्यत्वादिति भाव २० सावर्ण्यादिदृश्या. २१ इन्दु २२ अमुष्य २३ नम्रीभवत्. २४ भारेण २५ परिवर्तितम् २६. आयुधम्. २७. अलम् २८. लक्षसंख्या, (पक्षे) शरव्यम्. २९ पद्मसंख्या; (पक्षे) अब्जानि. ३०. पद्मसंख्याभि. ३१. शत्रुच्छिद.. ३२ परार्धसंख्यया, (पक्षे) परेषामरीणामर्धेन ३३. एकत्वादि ; (पक्षे) युद्धम् ३४. विलोड्य. ३५. मथनोद्भूतो निर्जलो दधिक्षीरविकार ३६. रूपान्तरे. ३७ रूपान्तरापादानेन क्षीराब्धावभावं गमिते सतीत्यर्थ ३८. स्वेनाक्रमणार्थम् ३९ पूरिते ४०. खड्ग ४१ संघात.. ४२ गर्तप्रदेश ४३. स्थायिन. ४४. समूह ४५ उत्प्रेक्षित ४६. संचरत् ४७ कृष्टासु ४८. वपन्निव. ४९.वृक्ष ५०. सूर्य.

मान्न ककुभि स्थेमानमालम्बते जातं यद्वनकाननैकशरणप्राप्तेन दावाग्निना । एवैतद्भुजतेजसा विजितयोस्तावत्तयोरौचिती धिक्तं वाडवमम्भसि द्विषिभिया येन प्रविष्टं पुनः ॥ १९९ ॥ आत्मन्यस्य संमुच्चितीकृतगुणस्याहोतरामौचिती यद्रात्रान्तरवर्जनादर्जनयद्भूजानिरेष द्विषाम् । भूयोऽहंक्रियते स्म येन च हृदा स्कन्धो न यश्चानमत्तन्मर्माणि दलंदलं समिदलंकर्मीणबाणव्रजः ॥ २०० ॥ यद्भर्तुः कुरुतेऽभिषेणनमयं शक्रो भुवः सा ध्रुवं दिग्दाहैरिव भस्मभिर्मघवता सृष्टैर्धृतोद्धूलना । शंभोर्मा बत सांध्यवेलनटनं भाजि व्रतं द्रागिति क्षौणी नृत्यति मूर्तिरष्टवपुषोऽसृग्वृष्टिसंध्याधिया ॥ २०१ ॥ प्रागेतद्वपुरामुखेन्दु सृजतः स्रष्टुः समग्रस्त्विषां कोशः शोषमगादगाधजगतीशिल्पेऽप्यनल्पायितः । निःशेषद्युतिमण्डलव्ययवशादीर्घैरच्छैरेष वा शेषः केशमयः किमन्धतमसस्तोमैस्ततो निर्मितः ॥ २०२ ॥ अस्यारिप्रकरः शरश्च नृपतेः संख्ये पतन्तावुभौ सीत्कारं च न संमुखौ रचयतः कम्पं च न प्राप्नुतः । तद्युक्तं न पुनर्निवृत्तिरुभयोर्जागर्ति यन्मुक्तयोरेकस्तत्र भिनत्ति मित्रमपरश्चामित्रमित्यद्भुतम् ॥ २०३ ॥ एतस्योन्नतसर्वकर्मकृतिनस्त्रैलोक्यचूडामणेः शंभुब्रह्मपुरंदरप्रभृतयः स्तुत्यै न शक्ता यदि । देवः पन्नगनायको भगवती वाणी स्वयं चेज्जडा सौन्दर्यस्य निरूपणे वद कथं शक्तो भवेन्मानवः ॥ २०४ ॥ अर्धं दानववैरिणा गिरिजयाप्यर्धं हरस्याहृतं देवेत्थं भुवनत्रये स्मरहराभावे समुन्मीलति । गङ्गा सागरमम्बरं शशिकला शेषश्च पृथ्वीतलं सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मां च भिक्षाटनम् ॥ २०५ ॥ चिन्तागम्भीरकूपादनवरतचलद्भूरिशोकारघट्टव्याकृष्टं निश्वसन्त्यः पृथुनयनघटीयन्त्रनिर्मुक्तधारम् । नासावंशप्रणालीविषमपथपतद्बाष्पपानीयमेता देव त्वद्वैरिनार्यः कुचकलशयुगेनान्वहं संवहन्ति॥२०६॥ त्वत्प्रारब्धप्रचण्डप्रधननिधनितारातिवीरातिरेकक्रीडत्कीलालकुल्यावलिभिरलभत स्पन्दमाक्रन्दमुर्वी । दम्भोलिस्तम्भभास्वद्भुज भुजगजगद्भर्तुरामर्तुरेनां तेनायं मूर्ध्नि रत्नद्युतिततिमिषतः शोभते शोणभावः ॥ २०७ ॥ आसीदासीमभूमीवलयमलयजालेपनेपथ्यकीर्तिः सप्ताकूपारपारीसदनजनधनोद्गीतचापप्रतापः । वीरादस्मात्परः कः पदयुगयुगपत्पातिभूपातिभूयश्चूडारत्नोडुपत्नीकरपरिचरणामन्दनन्दन्नखेन्दुः ॥ २०८ ॥ एतेनोत्कृत्तकण्ठप्रतिसुभटनटारब्धनाट्याद्भुतानां कष्टं द्रष्टैव नाभूद्भुवि समरसमालोकिलोकास्पदेऽपि । अश्वैरस्वैरवेगैः

१. स्थिरत्वम्. २. औचित्यम्. ३. अम्भेर्जल सहजद्वेषि तस्मिन् ४. समाहृतगुणस्य. ५. दण्डनमकरोदित्यर्थ ६ दलयित्वा. ७. अमोघबाण इत्यर्थ. ८. सेनयाभियानम् ९ धृतभस्मानुलेपना १०. सुलभैः. ११ युगपत् १२. दुःखाभावात्; (पक्षे) निर्गत्यभावात् १३. भयाभावात्; (पक्षे) दुष्प्रयोगाभावात्. १४ अगमादिति भाव; (पक्षे) प्रत्यक्षादिति भाव. १५ संसारादित्यर्थ; (पक्षे) चापादित्यर्थः. १६. सूर्यम्; (पक्षे) यथाश्रुतम्. १७ जलमार्ग १८. सग्राम. १९. विनाशं प्राप्ता.. २०. रुधिरनदी. १२. श्रेणय २२ क्षरणम् २३ वज्रम् २४. शेषस्य २५ रक्तता २६. समुद्रपरतीराणाम्. २७. निरन्तरम् २८. अंशवः; (पक्षे) हस्ता. २९. छिन्नकण्ठै.. ३०. नर्तक. ३१. युद्धप्रेक्षकजनालयेऽपि ३२. अमन्दवेगै..

कृतखुर[1]खुरलीमङ्क्षु[2]संक्षुभ्य[3]मानक्ष्माप्रष्ठोत्तिष्ठदन्धंकरणरणधुरारेणुधारान्धकारात् ॥ २०९ ॥ मन्दोद्भूतैः शिरोभिर्मणिभरगुरुभिः प्रौढरोमाञ्चदण्डस्फायन्निर्मोकसंधिप्रसरदविगलत्संमदस्वेदपूराः । जिह्वायुग्माभिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं वेलाशैलाङ्कभाजो भुजगयुवतयस्त्वद्गुणानुद्गृणन्ति ॥ २१० ॥ आ शैलेन्द्राच्छिलान्तःस्खलितसुरधुनीशीकरासारशीतादा तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य । आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः ॥ २११ ॥ श्रावंश्रावं त्वदीयं गुणगणमखिलं सर्वदा याचकेभ्यस्त्वत्प्राप्यामीप्सितेभ्यः सकलविषयजं भूपवर्गं विहाय । त्वत्तोऽहं प्राप्तुमिच्छुर्विबुधतिलकतां त्वत्समीपेऽतिदूरादायातस्त्वं शतायुर्भव कुरु च तथा येन नान्यं भजेऽहम् ॥ २१२ ॥ विद्यावन्तो विनीताः प्रसभमभिसभं वाक्प्रपञ्चेषु जीवाः कैवानैवारभन्ते त्रिजगति विततां कीर्तिवल्लीमतल्लीम् । तेषामाधारभावं भुवनपरभृतो बिभ्रतो ये लसन्ते ते तु त्रैलोक्यतुङ्गा विमलफलजुषः स्वःपतिं स्वल्पयन्ति ॥ २१३ ॥ वक्त्राम्भोजे सरस्वत्यधिवसति सदा शोण[4] एवाधरस्ते बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः[5] । वाहिन्यः[7] पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं स्वच्छेऽन्तर्मानसेऽस्मिन्कथमवनिपते तेऽम्बुपानाभिलाषः ॥ २१४ ॥ केचिद्रूद्धाः सहेलं निजभवनगता मोचिताः केऽपि केचिद्देहाद्देहान्तराणि क्षणमपि गमिताः केऽपि नीता निबन्धम् । हत्वा हत्वा च केचित्प्रतिपदमदयं प्रापिता व्यर्थभावं क्षोणीनाथस्य तस्योन्नतभुजपरिघेनारयः सारयश्च ॥२१५॥ उच्चैः कल्याणवाही करजितवसुधः सर्वदा पूर्णकामो विख्यातः कर्णवृत्त्या न च वचसि कटुश्चित्रपाकानुभावी । कोशापेक्षी परस्मादुचितबहुकथस्तत्परः पुण्यलोके चित्रं राजाधिराज त्वमिव तव रिपुस्तत्र कम्पं प्रतीमः ॥ २१६ ॥ उत्पत्त्युत्पन्नशिष्टा विविधगुणगणा यत्र यान्ति प्रतिष्ठां बाधेन प्राक्तनानां न च नियमविधिर्नापि संख्यार्थदाने । ऊहः सर्वत्र यस्य स्फुरति च सकलः सत्य एवार्थवादो मीमांसाभावमञ्चत्यभिनवमधुना मूर्तिरेषा त्वदीया ॥ २१७ ॥

---

## विशिष्टराजप्रशंसा ।

दशरथः ॥ चिरादक्षणोर्जाड्यं शमयति समस्तासुरवधूकचाकृष्टिक्रीडाप्रसभसुभगंभावुकभुजः । त्रिलोकी जङ्घालोज्ज्वलसहजतेजा मनुकुलप्रसूतिः सूत्रा[8]म्णो विजयसहकृत्वा दशरथः ॥ १ ॥ यस्योद्यद्भुजदण्डचण्डिमवलत्कोदण्डलीलायितैर्निर्णीते दनुजेन्द्रचन्द्रवदनाभ्रूवल्लरीविभ्रमे । लक्ष्मीमस्त्रविपाटलक्षतमयीमालम्ब्रते केवलं पौलोमीकरजाङ्कुरव्यतिकरादाखण्डलीयं

---

१. खुरसंचारे . २ सपदि. ३ सचूर्ण्यमानात् ४. वाणी; (पक्षे) नदीविशेष ५ आरक्त., (पक्षे) नदविशेष.. ६. मुद्राभि. सहित ; (पक्षे) अब्धि.. ७. सेना, (पक्षे) नद्य. ८. इन्द्रस्य.

वपुः ॥ २ ॥ यस्येन्द्रारिजयश्रिया सह झटित्याकृष्य मौर्वीलतां साकं भूवलयेन चापवलयं दोर्मण्डले बिभ्रति । पौलोमीकुचकुम्भसीमनि रहः पश्यन्नखाङ्कं नवं धत्ते चेतसि केवलं न तु करे कोदण्डमाखण्डलः ॥ ३ ॥ **जनकः** ॥ ज्याघातः कार्मुकस्य श्रयति करतलं कण्ठमोंकारनादस्तेजो भाति प्रतापाभिधमवनितले ज्योतिरात्मीयमन्तः । राज्यं सिंहासनश्रीः शममपि परमं वक्ति पद्मासनश्रीर्येषां ते यूयमेते निमिकुलकुमुदानन्दचन्द्रा नरेन्द्राः ॥ ४ ॥ **रामचन्द्रः** ॥ एकादशरुद्राणामेका गौरीत्यनौचितीं मत्वा । राघव नृप तव यशसा दशापि गौरीकृता हरितः ॥ ५ ॥ त्वद्वैरिभवनलिखितां सीतामाहर्तुमुद्धृत्य । कोणकपिमण्डलयोः शिवशिव भूयो भवन्ति संरम्भाः ॥ ६ ॥ गायन्तु किनरगणाः सह किंनरीभिः श्रीरामचन्द्र शिखरेषु हिमाचलस्य । शेषेन्दुकुन्ददलवालमृणालनालनीहारहारहरहाससितं यशस्ते ॥ ७ ॥ [1]नालीकभङ्गकृदतीव नदीनेबन्धुर्[2]नक्षत्रपो [3]नवसुधाविभवैकहेतुः[4] । राजा किमिन्दुरपि नार्यभिमानहारी[5] राजा परं जयति राघवसार्वभौमः ॥ ८ ॥ नृपतिमुकुटरत्न त्वत्प्रयाणप्रशस्तिं प्लवगपदनमद्रूनिर्भराक्रान्तभोगैः[6] । लिखति दशनटङ्कैरुन्नमद्भिर्नमद्भिर्जरठकमठभर्तुः कर्परे[7] सर्पराजः[8] ॥ ९ ॥ अधाक्षीन्नो लङ्कामयमयमुदन्वन्तमतरद्विशल्यं सौमित्रेरयमुपनिनायौषधिवनम् । इति स्मारंस्मारं त्वदरिनगरीभित्तिलिखितं हनूमन्तं दन्तैर्दशति कुपितो राक्षसगणः ॥ १० ॥ लज्जा कीर्तिर्जनकतनया शैवकोदण्डभङ्गे तिस्रः कन्या निरुपमतया भेजिरे रामचन्द्रम् । अन्त्यापाणिग्रहणसमये ज्यायसी जातकोपा भूपैः सार्धं खलु गतवती मध्यमाथो दिगन्तान् ॥ ११ ॥ अहो रघुशिरोमणेरभिनरप्रतापावलिप्रचण्डकिरणप्रथप्रसरसाध्वसादाश्रयम् । सुराधिपतिरम्बुदान्कमलमिन्दिरा सेवते हिमांशुरपि चन्द्रमाः सततमम्बुधौ मज्जति ॥ १२ ॥ कीर्तिः श्रीरघुवंशरत्न भवतः स्वर्वाहिनीगाहिनी दिक्पालानखिलान्परीत्य दधती पाण्योः प्रतापानलम् । सप्ताम्भोनिधिमण्डलान्यधिगता त्वय्येकपत्नीव्रतख्यात्यै विष्णुपदं स्पृशत्यनुदिनं शेषस्य शीर्षाण्यपि[9] ॥ १३ ॥ कीर्तौ व्याप्तिमवेत्य वैरिवनितावाष्पोदधेः साधनादुत्तुङ्गे पृथिवीभुजां परिवृढे शश्वद्विपक्षे स्थितम् । सर्वक्ष्मापतिमौलिमण्डनमणे श्रीरामचन्द्र प्रभो चित्रं पश्य तव प्रतापदहनं जानन्ति सत्तार्किकाः ॥ १४ ॥ श्रीराम त्वदनेकचित्रचरितप्रोद्दामकीर्तिश्रुतिप्रह्लादादवधूतमूर्ध्नि सकलत्रैलोक्यलोकेऽपि यत् ।

---

१. अलीकभङ्गकृत्; ( पक्षे ) कमलविकासकृत् २ अनाथबन्धु, ( पक्षे ) नदीनः समुद्रस्तद्बन्धु ३. क्षत्रियश्रेष्ठ, ( पक्षे ) नक्षत्रनायक. ४ वसुधैश्वर्यस्य कारणम्, ( पक्षे ) नवीनाया सुधाया यो विभवस्तस्य मुख्यकारणम् ५ शत्रुमानहारी, ( पक्षे ) नारीणा मानहारक ६ शरीरम् ७. कपाले ८. शेषराज ९. स्वसतीत्वव्रतज्ञापनाय दिव्यकरण युक्तमेव अत्रायं भाव या हि स्त्री दिव्यं कर्तुमिच्छति सा पूर्वं गङ्गां गाहते, अपर देवता प्रदक्षिणीकृत्य पाण्योरनल दधती सप्तमण्डलान्यतिक्रामति, ततो विष्णुपदं स्पृशति, तथा सर्पं कर्षति तद्वदिय त्वत्कीर्तिरपि जलाग्निराजपदविष्णुपदसर्पस्पर्शनाख्यानि पञ्चदिव्यानि स्वसतीत्वनिर्वाहाय विधत्त इति १०. उत्कटा. ११. कम्पित.

अश्रोत्राः फणिनस्तदेतदुचितं नो चेदहिस्वामिना व्याधूते[1] शिरसि क्व भूः क्व गिरयः क्वामी दिशामीश्वराः ॥ १५ ॥ भ्रान्त्वा भूवलयं दशास्यदमन त्वत्कीर्तिहंसी[2] दिवं याता ब्रह्ममरालसंगमवशात्सा तत्र गर्भिण्यभूत्। पश्य स्वर्गतरंगिणीपरिसरे[3] कुन्दावदातं[4] तया मुक्तं भाति विशालमण्डकमिदं शीतद्युतेर्मण्डलम् ॥ १६ ॥ ज्ञाते तत्पुरुषे तु तत्पुरुषति त्वन्नाम्नि शैवाग्रणीरल्पः कोऽपि समाश्रयन्निह बहुव्रीहिं बहुव्रीहिभाक्। श्रीरामेश्वर कर्म धारय इति कुर्वन्कविर्भास्करस्तस्मादण्वपि कर्म धारयतु न द्वन्द्वे तु निर्द्वन्द्वति ॥ १७ ॥ अब्दैर्वारिजिघृक्षयार्णवगतैः साकं व्रजन्ती मुहुः संसर्गाद्वडवानलस्य समभूदापन्नसत्वा तडित्। मन्ये राम तया क्रमेण जनितो युष्मत्प्रतापानलो येनारातिवधूविलोचनजलैः सिक्तोऽपि संवर्धते ॥१८॥ ये मज्जन्ति निमज्जयन्ति च परांस्ते प्रस्तरा दुस्तरे वार्धौ वीर तरन्ति वानरभटान्संतारयन्तेऽपि च। नैते ग्रावगुणा न वारिधिगुणा नो वानराणां गुणाः श्रीमद्दाशरथेः प्रतापमहिमा सोऽयं समुज्जृम्भते ॥ १९ ॥ कीर्तिः श्रीरघुवंशदीप भवतो दूती मुरारेः प्रियां[5] यस्मात्तुभ्यमदात्तदादि[6] गिरिशोऽभूदर्धनारीश्वरः[7]। ब्रह्माभूच्चतुराननः[8] सुरपतिश्चक्षुःसहस्रं[9] दधौ स्कन्दो मन्दमतिश्[10]चकार न करस्पर्शं स्त्रियाः शङ्कितः[11] ॥ २० ॥ एकं काञ्चनभूधरं[12] सुवलयं वासः सुधावारिधि[13] तारं[14] तारकराजमण्डलमिदं[15] संप्राप्य सत्कुण्डलम्। दूरस्थापि[16] च तेन तेन सदृशं त्वां भूषणं चापरं स्त्रीमानग्रहिलेव[17] याचतितरां[18] श्रीराम कीर्तिस्तव॥ २१ ॥ संग्रामो दिवसायते[19] तव भुजः पूर्वाचलेन्द्रायते[20] त्वत्क्रोधोऽप्यरुणायते[21] तव लसच्छौर्यं प्रकाशायते[22]।

---

१. शेषशिरोवधूनने भूमे पात एव स्यात्ततस्तेषां गिर्यादिवस्तूनां क्वावस्थानं भवेद्यतस्तेषां भूम्याश्रितत्वात्तस्याश्च शेषाश्रितत्वादित्यर्थः. २ हस. ३. तीरे ४ कुन्दवदुज्ज्वलम् ५ लक्ष्मीम् ६ तदाप्रभृति ७. महेश्वरेणेत्थं तर्कितम्, यद्यहमुमां स्वपार्श्वे न स्थापयिष्यामि तदेयं कीर्तिदूती लक्ष्मीमिवापहृत्य मम कामिनीं गौरीमपि रामाय प्रदास्यतीति भिया स्वाङ्ग एव गौरी स्थापिता तत्प्रभृत्यर्धनारीश्वरो इति हरख्याति. ८ ब्रह्मणा स्वपत्नीरक्षणार्थं चतसृष्वपि दिक्षु मुखानि निर्मितानीति भावः. ९. यतो बहूनि चक्षूंषि मम चेद्भविष्यन्ति तदा स्वाप्सरसः प्रलोभ्यापहर्तुमागच्छन्तीं कीर्तिदूतीमवलोकयिष्यामीति भाव. १०. मन्दा विवाहेऽलसा मतिर्यस्य स. ११. यतश्चेदह कृच्छ्रेण प्रोक्षिप्य परिणेष्यामि तथापि तदपहरणे मम तस्या वियोग एव भावी, ततः किमनेन परिणयनारम्भेणेति विचारादिति भाव. १२. ममैकः काञ्चनगिरिर्दक्षिणकरे कटकोऽस्ति वामे तु न किमपीत्येकनेत्राञ्जनवन्न शोभेते पाणी, अतोऽपरं तादृश वलयाख्य भूषण मह्य देहीति प्रार्थयते १३. यतो न ह्येकं वास उपर्यधश्चाङ्गे परिधातु शक्यते. १४. उज्ज्वलम्. १५. इदमेकं तारकाणां राजा चन्द्रस्तस्य मण्डल सत्कुण्डलमेकस्मिन्कर्णे सप्राप्य तत्सममपरकुण्डल द्वितीयकर्णार्थे याचति. १६ दिक्पर्यन्त प्राप्तापि. १७. स्त्रिया यो मानः स्वपतिसौभाग्यसुरूपत्वादिगर्वस्तेन ग्रहिला ग्रहगृहीता १८. अन्यापि या मानिनी मानग्रहगृहीता भवेत्सा विदेशस्थापि पतिं प्रभविष्णु तत्तद्वस्तु याचते यद्भूमण्डलेऽपि नाप्यते तथेय कीर्तिरप्यपर भूषणं याचत इत्यर्थ. १९ यथा दिवसे सूर्य प्रभाप्रगल्भतामुपैति तथा त्वत्खड्गभानुरपि सङ्ग्रामे स्वस्पष्टतां प्रकटयतीत्यर्थ.. २०. यथा भानुरुदयाचले भासते तथा चासौ त्वद्भुजे भासत इत्यर्थ २१ यथारुणो रक्तवर्णोऽग्रे प्रादुर्भवति तथा क्रोधोऽपि रक्तमुखनेत्रादिना प्रादुर्भवतीत्यर्थ.. २२ यथा सूर्यस्योदये सर्वत्र प्रकाश. प्रसरति तथा त्वत्खड्गभानोरुदये तव शौर्य स्पष्टमुदेतीत्यर्थः.

त्वद्वैरी[1] तिमिरायते तदबलाहृत्सूर्यकान्तायते[2] त्वत्कीर्तिः कमलायते[3] रघुपते त्वत्खड्ग[4]चण्डद्युतेः ॥ २२ ॥ अस्माकं परमन्दिरस्य[5] चरितं यद्यप्यवाच्यं भवेत्स्वामी त्वं कथयामि[6] तेन भवतः किंचित्प्रियादूषणम् । श्रीमद्राम नृप त्वया रणमुखे पाणिग्रहः सादरं यस्याः सासिलता परस्य हृदये दृष्टा लुठन्ती[7] मया ॥ २३ ॥ सत्यं सा बहुरूपिणी[8] समभवत्सिद्धिस्वरूपा[9] भवत्कीर्तिः[10] श्रीरघुवंशरत्न विमला जागर्ति विश्वोदरे । क्ष्मापारे रिपुमन्दिरे नृपपुरे रत्नाकरे निर्झरे कान्तारे गिरिशेखरे विषधरागारे तथैवाम्बरे ॥ २४ ॥ गर्वावेशविशालरावणभुजप्रोद्धूत[11]प्रतापानलज्वाला[12]जालनवाम्बुदः[13] कथमसौ सीतापतिर्वर्ण्यते । यस्यारातिनृपाः कृपाणजलधौ[14] मग्नाः पुरो गौरवादत्युच्चैर्गतयो भवन्ति[15] च पुनर्भित्त्वा रवेर्मण्डलम् ॥ २५ ॥ भीमं यज्जलधिं जवेन हनुमानुल्लङ्घ्य लङ्कां गतो यच्चाशोकमहावनं दलितवानक्षं च यत्क्षुण्णवान्[16] । सीतोपायनमौलिरत्नसहितः प्राप्तश्च यस्त्वामसौ तत्राप्येष भवत्प्रतापमहिमा निर्यत्न[17]णः कारणम् ॥ २६ ॥ धत्ते नायक राम तावकयशो रामे[18] शशाङ्के मेरुद्वाहे[19] स्वर्गगजे[20] हरे फणिपतौ वाण्यां वृषे भे[21] रुचिम् । अन्येषां तु तदम्बरे[22] तदहिते[23] तद्व्यञ्जने तन्मदे तत्कण्ठे च तदीक्षणे तदलके तत्प्रोथके[24] तत्पथे[25] ॥ २७ ॥ श्रीमन्नायक रामभद्र भवतः पाणौ कृपाणं रणे दृष्ट्वा यद्यदभूदरिक्षितिभुजां तत्तत्समाकर्णय । अङ्गे वेपथुरन्धता नयनयोर्वक्त्रे तृणं[26] भूयसी भीतिश्चेतसि वाचि संस्तुतिकथा हस्तद्वयं मस्तके[27] ॥ २८ ॥ आकृष्टे कवचादहीन्द्ररसनाकल्पे[28] कृपाणे त्वया श्रीमन्नायक रामचन्द्र भवतः प्रत्यर्थिनां वेश्मसु । गेहन्ते[29] सहसा लुलायचमरी[30]शार्दूल[31]शाखाचरी[32]यक्षोरक्षशृगालकोल[33]शल[34]भल्लूक[35]भिल्लादयः ॥ २९ ॥ रेफ व्य-

---

१ यथा सूर्योदये तमांसि नाशमायान्ति तथा त्वत्खड्गभानूदये तव वैरिणो दिगन्तगामिनो भवन्तीत्यर्थः. २. यथा भानोरुदये सूर्यकान्तमणिषु महांस्ताप. संजायते तथा चैतदुदये सति वैरिस्त्रीहृदयेषु महान्पश्चात्तापो भवतीत्यर्थः. ३ यथा भानोरुदये कमलानि विकस्वराणि भवन्ति तथा त्वत्खड्गभानोरुदये त्वत्कीर्तिर्विकासमुपैतीत्यर्थः. ४. तिग्मांशुत्वात्खड्गस्य सर्वथा सूर्योपमत्वमस्तीति शेष ५. परस्त्रियाः. ६. यतो भक्ता स्वस्वामिन. कथमपि हानिं सोढुमक्षमा . स्त्रीदुर्लक्षण तु परमपमानकारणमतो ब्रवीमीत्यर्थ ७ यथा काचित्पाणिगृहीती परपुरुषस्य हृदये विलास कुर्यात्तदा तस्या असतीत्वलक्षणेन पुरुषस्य महद्दूषण लग्नं भवेत्. ८. नानारूपत्वेन विश्वव्यापिन्यभूदिति भावः. ९. अणिमाद्यष्टसिद्धिमती. १० यथा योगिनी सिद्धा गिरिदर्यादिषु स्वकामचारिणी भवेत्तथा त्वत्कीर्तिरपीति भाव. ११. देदीप्यमाना . १२. समूह . १३. अन्योऽप्यनलोऽम्बुदेन शाम्यते यथा तथा तत्प्रतापाग्निरपि रामेण शामित इति भावः. १४. कृष्णाम्भत्वात्. १५. स्वर्गयायिनो भवन्ति अन्यो हि यो जलधौ निमग्नो भवति स च नीचैर्गतिरेव भवतीति प्रसिद्धम्. १६. मारितवान्. १७. अस्खलित. १८ बलभद्रे. १९ उच्चैःश्रवसि. २०. ऐरावते २१ नक्षत्रे २२ रामवस्त्रे. तद्वस्त्रस्य नीलत्वादिति भाव २३ चन्द्रशत्रौ राहावित्यर्थ . २४. वृषनासिकायाम्. २५ नक्षत्रपथे आकाश इत्यर्थ . २६. येषां मुखे तृण दृश्यते ते शूरा अपि गोवदवध्या इति भाव. २७. शिरसि करद्वयं त्वत्प्रणामार्थं कृतवन्त इत्यर्थ . २८. सदृशे २९. तन्मन्दिराणां शून्यत्वेन वनचरतिरश्चां तत्र प्रवेशस्यानिवार्यत्वादिति भाव . ३०. वनगाव. ३१. व्याघ्रा.. ३२. वानर्य.. ३३. शूकरा.. ३४. शल्यकाः. ३५ ऋक्षाः.

अनरञ्जिता तव तवाकार प्रकर्ष. स्वरेष्वन्त्यस्यापि मकार विस्फुरति ते वर्गाक्षरेष्वादिमा । यैः संभूय निगद्यते रघुकुलालंकारहीराङ्कुरो देवः क्षोणिसुतापयोधरतटीशृङ्गारहारो हरिः ॥ ३० ॥ स्वेदाम्भःकणमण्डलानि खुरलीखेलोद्भवान्यन्वहं त्वद्बाह्वो रसैयन्महाबल इति ख्यातिं गतो मारुतः । तं चास्वाद्य मुहुः सहस्रफणताशाली वलीयानहिर्धत्ते कोमलकोमलैरपि फणैः श्रीरामचन्द्र स्थिराम् ॥ ३१ ॥ श्रीरामे मृगयां गतेऽपि धनुषा बाणे समारोपितेऽप्याकर्णान्तगतेऽथ मुष्टिगलितेऽप्येणाङ्घ्रिलग्नेऽपि च । न त्रस्तं न पलायितं न चकितं नोत्कम्पितं न द्रुतं मृग्या मद्वशगं करोति दयितं कामोऽयमित्याशया ॥ ३२ ॥ गाम्भीर्येण महोदयेन शरणत्राणेन मर्यादया सर्वाशापरिपूरणेन महता स्थैर्येण धैर्येण च । राम त्वामनुकर्तुमिच्छतितरां वारांनिधिः किं त्वसौ पीतो वानरलङ्घितः प्रमथितो बद्धः श्रिया त्याजितः॥३३॥ देव श्रीनृप रामचन्द्र भवतो दिग्जैत्रयात्रोत्सवे धावद्वीरतुरंगचञ्चलखुरक्षुण्णक्ष्मामण्डलात् । वातोद्धूतरजोमिलत्सुरनदीसंजातपङ्कस्थलीदूर्वाचुम्बनचुञ्चवो हरिहयास्तेनैव वृद्धं दिनैः ॥३४॥ साधर्म्येण कथं गृणन्तु यमुनावेणीं कृपाणीं च ते श्रीमद्राम चमूवरेण्य भवतो वाग्ब्रह्मसिद्धान्तिनः । नाकृष्टां हलिना न कालियवशात्क्रूरां न धाराजडां न छायाजनितां न वक्रबहुलां न प्राप्तभङ्गां क्वचित् ॥ ३५ ॥ आबाल्यं पतिरेष मे जगदिदं जानाति तत्त्वं पुनर्भूमध्ये समुपागता तदपि ते विख्यायते यः पतिः । वृद्धा नास्य गृहे वसामि सुचिरं तिष्ठ स्थिरात्रेति तन्मात्सर्यादिव राम भूप भवतः कीर्तिर्दिगन्तं गता ॥ ३६ ॥ का शृङ्गारकथा कुतूहलकथा गीतादिकानां कथा माद्यद्दन्तिकथा तुरंगमकथा कोदण्डदीक्षाकथा । एकैवास्ति परं पलायनकथा त्वद्वैरिभूमीभुजां देव श्रीरघुनाथ नाथ जगति स्वप्नेऽपि नान्या कथा ॥ ३७ ॥ त्वं चेत्कल्पतरुर्वयं सुमनसस्त्वं चेत्सुधात्मा कलाः संपूर्णा वयमीश्वरो यदि भवान्स्वच्छा विभूतिर्वयम् । संपूर्णः कमलाकरो यदि भवाञ्श्रीराजहंसा वयं स्वामिस्त्वं शृणु रामचन्द्र नृपते किं किं न तेऽङ्गं वयम् ॥ ३८ ॥ पाताले मञ्जु मूलं फणिपतिरभितः कीर्तिवल्लेस्तवैषा स्थूणा कैलासशैलो गगनमिह महामण्डपः पौण्ड्रदण्डाः । दन्तीन्द्रस्थूलदन्ता दलततिरतुला शारदाभ्राणि सारास्तारा: पुष्पाणि चन्द्रः फलमिदममलं राम राजेन्द्र मन्ये ॥ ३९ ॥ कूर्मः पादोऽस्य यष्टिर्भुजगपतिरसौ भाजनं भूतधात्री तैलापूराः समुद्राः कनकगिरिरयं वृत्तवर्तिप्ररोहः । ज्योतिश्चण्डांशुरोचिर्ग-

१ व्यञ्जनेषु श्रेष्ठत्वम्. २. कखगादिषु ३ श्रमः. ४. आस्वादयन्. ५. यदा त्वया वैरिणो हतास्तदा त्वद्भुजयोः परिश्रमज. स्वेद उत्पन्नस्तच्छोषणाद्वायुर्महाबलोऽभूदिति भाव . ६ शेष . ७ पृथ्वीम्. ८ दूर्वाङ्कुरभक्षणे रता अरुणेन प्रेरिता अपि न तूर्णं प्रयान्ति किं तु शनैरेव अत एव ग्रीष्मर्तौ महान्तो दिवसा जायन्ते इति भाव ९. कथयन्तु १०. छाया सूर्यभार्या. ११ पानीयवाहा.. १२ पर्वतादिविषमस्थल इत्यर्थ . १३ मनोहरम् १४ स्तम्भ.. १५ श्वेतयष्टिका. १६. पर्णसतति.. १७ प्रसृता.. १८. अवष्टम्भहेतु . १९. दीपदण्ड . २०. दीपाधारपात्रम् २१. तैलपूर्णा . २२ मध्यवर्तित्वाद्वर्तुलदशाङ्कुर .

गनमलिनिमा कज्जलं दह्यमाना शत्रुश्रेणी पतङ्गा ज्वलति रघुपते त्वत्प्रतापप्रदीपः ॥४०॥ शक्तिः सर्वातिरिक्ता विलसति न च ते पीलुपाकप्रियत्वं वाक्यं धर्मे प्रमाणं स्वयमपि रचितं नान्य ईशोऽस्ति कश्चित् । नो वायं भेद आस्ते क्वचिदपि विषये नैव मिथ्या प्रवाहाश्चित्रं पाण्डित्यमेतद्वहसि रघुपते गौतमाद्यैरतर्क्यम् ॥ ४१ ॥ पूर्वत्रासिद्धबुद्धिर्द्विगुणितकरणेऽप्यस्ति तेऽल्पप्रयत्नो यः कश्चिन्नैव लोपं भजति बहुतराण्येक्षिणोऽप्यन्तरङ्गाः । नो वा बाधः परेण क्वचिदपि विषये नापवादो गुणानां वृद्धीनां वर्णमात्रं सदनमिति नवो राम साधुत्वमार्गः ॥ ४२ ॥ प्रौढिं[1] धत्तां कलासु प्रथयेतु[2] कुमुदं सत्पथे[3] संचरेद्वा नेत्रानन्दं[4] विधत्तामवतु[5] च विबुधान्[6]स्तु राजा तथापि । दोषान्वेषी[7] कलङ्की[8] सहजजडतनुः[9] संक्षयः[10] पक्षपाती[11] नक्षत्रेशः[12] कथं वा तुलयतु तुलनां रामचन्द्रेण चन्द्रः ॥ ४३ ॥ कृष्णः ॥ श्रीकृष्ण त्वत्प्रतापेन प्रतप्ताङ्गीर्दिगङ्गनाः । दिग्गजा वीजयन्त्येव कर्णतालैः पुनः पुनः ॥ ४४ ॥ क्षीरक्षालितपाञ्चजन्यकिरणश्रीगर्वसर्वंकषाः श्रीकृष्णार्जुनसारथेऽसुररिपो त्वत्कीर्तिविस्फूर्तयः । कैलासन्ति हिमाचलन्ति विकसत्कुन्दन्ति कन्दन्ति च क्षीरोदन्ति हलायुधन्ति विबुधाहारन्ति हीरन्ति च ॥ ४५ ॥ विक्रमार्कः ॥ तत्कृतं यन्न केनापि तद्दत्तं यन्न केनचित् । तत्साधितमसाध्यं यद्विक्रमार्केण भूभुजा ॥ ४६ ॥ हस्ती वन्यः स्फटिकघटिते भित्तिभागे स्वबिम्बं दृष्ट्वा दृष्ट्वा प्रतिगज इति त्वद्द्विषां मन्दिरेषु । दन्ताघाताद्दलितदशनस्तं पुनर्वीक्ष्य सद्यो मन्दं मन्दं स्पृशति करिणीशङ्कया विक्रमार्क ॥ ४७ ॥ कीर्तिस्ते दयिता तदीयजठरे लोकत्रयं वर्तते तस्मात्त्वं जगतः पिता पितृधनं येनार्थिनां त्वद्धनम् । वीर श्रीवर विक्रमार्क भवतस्त्यागं न मन्यामहे कस्त्यागः स्वकुटुम्बपोषणविधावर्थव्ययं कुर्वतः ॥ ४८ ॥ भोजः ॥ त्वच्चित्ते भोज निर्यातं द्वयं तृणकणायते । क्रोधे विरोधिनां सैन्यं प्रसादे कनकोच्चयः ॥ ४९ ॥ भोज त्वद्दानपाथोधौ दरिद्रस्य निमज्जतः । न कोऽपि हि भुजालम्बं दत्ते मेऽभयदायकम् ॥५०॥

---

१ (चन्द्रपक्षे) तथा कलास्वशेषु प्रौढिं प्रागल्भ्य धत्तां बिभर्तु; (रामपक्षे) यथा कलासु विज्ञानेषु प्रौढिं धत्ते २ (चन्द्रपक्षे) तथा कुमुद प्रकाश प्रथयतु विस्तारयतु; (रामपक्षे) यथा कौ पृथिव्या मुद हर्षं जनयति. ३. (चन्द्रपक्षे) तथा सतां देवानां पन्था सत्पथ आकाशस्तस्मिन्सचरेत्, (रामपक्षे) यथा सत्पथे सता योग्ये मार्गे सचरति ४. (चन्द्रपक्षे) तथा नेत्राणा लोचनानामानन्द विधत्ता कुरुताम्; (रामपक्षे) यथा नेतॄणां रक्षकाणामानन्द जनयति ५ (चन्द्रपक्षे) तथा विबुधान्देवानवतु रक्षतु; (रामपक्षे) यथा विबुधान्पण्डितानवति ६ (चन्द्रपक्षे) तथा च राजा शोभितोऽस्तु, (रामपक्षे) यथा नाम्ना क्रियया गुणैश्च राजा ७. (चन्द्रपक्षे) दोषा रात्रिस्तामन्वेषते तच्छील; (रामपक्षे) न दोषमन्वेषते किंतु गुणान् ८. (चन्द्रपक्षे) कलङ्कवान्, (रामपक्षे) कलङ्की न ९ (चन्द्रपक्ष) सहजतो जलमयी तनुर्यस्य स; (रामपक्षे) निसर्गतो मूर्च्छितस्वभावो न १०. (चन्द्रपक्षे) कृष्णपक्ष-एकैककलाक्षयात्सक्षय, (रामपक्षे) न कदाचन तस्य क्षय किंतु सर्वदा वृद्धिरेव ११ (चन्द्रपक्षे) पक्षेऽतीतेमाया पतनशील; (रामपक्षे) पक्षपाती न १२ (चन्द्रपक्षे) नक्षत्राणा तारकाणामीश स्वामी, (रामपक्षे) न च न क्षत्रेश. किंतु सर्वेषा क्षत्राणामीश

निजानपि गजान्भोजं ददानं प्रेक्ष्य पार्वती। गजेन्द्रवदनं पुत्रं रक्षत्यथ पुनः पुनः ॥ ५१ ॥ प्रतापभीत्या भोजस्य तपनो मित्रतामगात्। और्वो वाडवतां धत्ते तडित्क्षणिकतां श्रिता ॥ ५२ ॥ भोज त्वत्कीर्तिकान्ताया नभोभालस्थितं महत्। कस्तूरीतिलकं राजन्गुणागारं विराजते ॥ ५३ ॥ अस्य श्रीभोजराजस्य द्वयमेव सुदुर्लभम्। शत्रूणां शृङ्खलैर्लोहं ताम्रं शासनपत्रकैः ॥ ५४ ॥ धारेश त्वत्प्रतापेन पराभूतस्त्विषां पतिः। सुवर्णपात्रव्याजेन देव त्वामेव सेवते ॥ ५५ ॥ त्वद्यशोजलधौ भोज निमज्जनभयादिव। सूर्येन्दुबिम्बमिषतो धत्ते कुम्भद्वयं नभः ॥ ५६ ॥ शुक्तिद्वयपुटे भोज यशोऽब्धौ तव रोदसी। मन्ये तदुद्भवं मुक्ताफलं शीतांशुमण्डलम् ॥ ५७ ॥ अद्य धारा सदाधारा सदालम्बा सरस्वती। पण्डिता मण्डिताः सर्वे भोजराजे भुवं गते ॥ ५८ ॥ सुरताय नमस्तस्मै जगदानन्दहेतवे। आनुषङ्गि फलं यस्य भोजराज भवादृशाः ॥ ५९ ॥ श्रीभोज साम्यं तव कल्पवृक्षः सदा वदान्योऽपि कथं प्रयाति। यतो भवद्दानसुपुष्टविप्रहव्येन कुक्षिंभरिरस्य भर्ता ॥ ६० ॥ भोजप्रतापं तु विधाय धात्रा शेषैर्निरस्तैः परमाणुभिः किम्। हरेः करेऽभूत्पविरम्बरे च भानुः पयोधेरुदरे कृशानुः ॥ ६१ ॥ भोजप्रतापाग्निरपूर्व एष जागर्ति भूभृत्कटकस्थलीषु। यस्मिन्प्रविष्टे रिपुपार्थिवानां तृणानि रोहन्ति गृहाङ्गणेषु ॥ ६२ ॥ यथा यथा भोजयशो विवर्धते सितां त्रिलोकीमिव कर्तुमुद्यतम्। तथा तथा मे हृदयं विदूयते प्रियालकालीधवलत्वशङ्कया ॥ ६३ ॥ पन्थाः संहर दीर्घतां त्यज निजं तेजः कठोरं रवे श्रीमान्विन्ध्यगिरे प्रसीद सदयं सद्यः समीपे भव। इत्थं दूरपलायनश्रमवतीं दृष्ट्वा निजप्रेयसीं श्रीमद्भोज तव द्विषः प्रतिदिनं जल्पन्ति मूर्च्छन्ति च ॥ ६४ ॥ धाराधीश धरामहेन्द्रगणनाकौतूहलीयानयं वेधास्त्वद्गणने चकार खटिकाखण्डेन रेखां दिवि। सैवेयं त्रिदशापगा समभवत्त्वत्तुल्यभूमीधराभावात्तु त्यजति स्म सोऽयमवनीपृष्ठे तुषाराचलः ॥ ६५ ॥ राजन्मुञ्जकुलप्रदीप सकलक्ष्मापालचूडामणे युक्तं संचरणं तवाद्भुतमणिच्छत्रेण रात्रावपि। मा भूत्त्वद्वदनावलोकनवशाद्व्रीडाभिनम्रः शशी मा भूच्चेयमरुधती भगवती दुःशीलताभाजनम् ॥ ६६ ॥ छन्नं सैन्यरजोभरेण भवतः श्रीभोजदेव क्षमारक्षादक्षिणदक्षिणक्षितिपतिः प्रेक्ष्यान्तरिक्षं क्षणात्। निःशङ्को निरपत्रपो निरनुगो निर्बान्धवो निःसुहृन्निःस्त्रीको निरपत्यको निरनुजो निर्हाटको निर्गतः ॥ ६७ ॥ मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः। दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥ ६८ ॥ स्पष्टाकृष्टासिपिष्टोत्कटकरटिघटाकुम्भकूटावटान्तर्निष्ठ्यूतासृक्तटिन्यास्तटनिकटरटत्कोणपादाट्टहासः। भोजेन्द्र त्वद्रणक्ष्माक्षतभटविकटोरःस्थलत्रोटकुप्यद्गृध्रौघत्रोटकोटिप्रकटचटचटाशब्दरौद्रोऽभवद्द्राक् ॥ ६९ ॥ भो भो श्रीभोजदेव श्रयत विनयतः शात्रवः क्षात्रि-

१. सूर्य २ इन्द्र ३ कुतूहलविशिष्ट ४. खटिनीशकलेन

वर्गाः प्राणत्राणाय नौका न भवति भवतां क्काप्यरण्यं शरण्यम् । मत्वा मातङ्गकुम्भद्वितयमिति पुरा क्रूरवृत्तिर्भिनत्ति क्रुद्धः शुद्धान्तकान्ताकुचकलशयुगं रंहसा सिंहशावः ॥ ७० ॥ नीरक्षीरे गृहीत्वा सकलखगपतीन्याति नालैकजन्मा चक्रं धृत्वा कराब्जे सकलजलनिधीश्चक्रपाणिर्मुकुन्दः । सर्वानुद्धृत्य शैलान्दहति पशुपतिर्भालनेत्रेण पश्यन्व्याप्ता त्वत्कीर्तिकान्ता सकलवसुमतीं भोजराज क्षितीन्द्र ॥ ७१ ॥ स्वर्गाद्गोपाल कुत्र व्रजसि सुरमुने भूतले कामधेनोर्वत्सस्यानेतुकामस्तृणचयमधुना मुग्धदुग्धं न तस्याः । श्रुत्वा श्रीभोजराजप्रचुरवितरणं व्रीडशुष्कस्तनी सा व्यर्थो हि स्यात्प्रयासस्तदपि तदरिभिश्चर्वितं सर्वमुर्व्याम् ॥ ७२ ॥ कूर्मः पातालगङ्गापयसि विहरतां तत्तटीरूढमुस्तामादत्तामादिपोत्री शिथिलयतु फणामण्डलं कुण्डलीन्द्रः । दिङ्मातङ्गा मृणालीकवलनकलनां कुर्वतां पर्वतेन्द्राः सर्वे स्वैरं चरन्तु त्वयि वहति विभो भोज देवीं धरित्रीम् ॥ ७३ ॥ **पृथ्वीराजः** ॥ मन्दश्चन्द्रकिरीटपूजनरसे तृष्णा न कृष्णार्चने स्तम्भः शंभुनितम्बिनीप्रणतिषु व्यग्रो न धातुर्गृहे । अस्माकं परमर्दनोऽस्ति वदने न्यस्तेन संरक्षितः पृथ्वीराजनरेश्वरादिति नृणां तत्पत्तने पूज्यते ॥ ७४ ॥ **वीरराट्** ॥ आ विन्ध्यादा हिमाद्रेर्विरचितविजयस्तीर्थयात्राप्रसङ्गादुद्ग्रीवेषु प्रहर्षान्नृपतिषु विनमत्कन्धरेषु प्रपन्नः । आर्यावर्तं यथार्थं पुनरपि कृतवान्म्लेच्छविच्छेदनाभिर्देवः शाकंभरीन्द्रो जगति विजयते वीरराट् क्षोणिपालः ॥ ७५ ॥ **विग्रहराजः** ॥ ब्रूते संप्रति चाहुवाणतिलकः शाकंभरीभूपतिः श्रीमान्विग्रहराज एष विजयी संतानजातात्मजः । अस्माभिः करदं व्यधायि हिमवद्विन्ध्यान्तरालं भुवः शेषस्वीकरणाय मास्तु भवतामुद्योगशून्यं मनः ॥७६॥ **हम्मीरः** ॥ मुञ्चति मुञ्चति कोशं भजति च भजति प्रकम्पमरिवर्गः । हम्मीरवीरखड्गे त्यजति त्यजति क्ष्मामाशु ॥ ७७ ॥ मा चक्र चक्रिविरहज्वरकातरो भूः संकोचमम्बुज न याहि न यामिनीयम् । हम्मीरभूपहयपादविदीर्णभूमीरेणूत्करैरयमकारि दिवान्धकारः ॥ ७८ ॥ **अनङ्गभीमः** ॥ पृथ्वी श्रीमदनङ्गभीम महती तद्वेष्टनं वारिधिः पीतोऽसौ कलशोद्भवेन मुनिना स व्योम्नि खद्योतवत् । तद्विष्णोर्दनुजाधिनाथजयिनः पूर्णं पदं नाभवद्देवश्चेतसि वर्तते तव सदा त्वत्तो महान्नापरः ॥ ७९ ॥ **जगदेवः** ॥ शक्रः पप्रच्छ पान्थं कथय मम सखे नास्ति स क्कापि देशो वस्तुं नो यत्र रात्रिर्भवति भुवि खगायेति संप्रत्युवाच । नीते मेरौ समाप्तिं कनकवितरणैः श्रीजगद्देवनाम्ना सूर्येणान्तर्हितेऽस्मिन्कतिपयदिवसैर्वासराद्वैतसृष्टिः ॥ ८० ॥ **श्रीकर्णः** ॥ मुखे हारावाप्तिर्नयनयुगले कङ्कणभरो नितम्बे पत्राली सतिलकमभूत्पाणियुगलम् । अरण्ये श्रीकर्ण त्वदरियुवतीनां विधिवशादपूर्वोऽयं भूपाविधिरहह जातः किमधुना ॥ ८१ ॥ त्वं द्वित्राणि पदानि गच्छसि महीमुल्लङ्घ्य यान्ति द्विषस्त्वं बाणान्दशपञ्च मुञ्चसि

१. ब्रह्मा २ पिधानम्; (पक्षे) भाण्डागारम् ३ उल्लासनम्; (पक्षे) प्रकृष्ट कम्पम् ४ क्षान्तिम्; (पक्षे) पृथ्वीम्.

परे सर्वाणि शस्त्राण्यपि । ते देवीपतयस्त्वदस्त्रनिहतास्त्वं मानुषीणां पतिर्निन्दा तेषु कथं स्तुतिस्तव कथं श्रीकर्ण निर्णीयताम् ॥ ८२ ॥ पाण्ड्यः ॥ तवाङ्गणे सुन्दर वीर पाण्ड्य मतंगजाः शृङ्खलिनो विभान्ति । आवासदानादरिभूपतीनामाशान्तशैला इव सापराधाः ॥८३॥ विन्ध्याद्रिः करिसाधनीनिरुपमो रत्नाकरः कोशभृत्सौगन्धी मलयाचलः परिचराः सर्वेऽपि विद्याधराः । विश्वाशापरिपूरणं वितरणं देशोऽप्यहो दक्षिणः पाण्ड्याखण्डल वीर पाण्ड्य भवतः किं किं न लोकोत्तरम् ॥ ८४ ॥ एतद्दन्तिबलैर्विलोक्य निखिलामालिङ्गिताङ्गीं भुवं संग्रामाङ्गणसीम्नि जंगमगिरिस्तोमभ्रमाधायिभिः । पृथ्वीन्द्रः पृथुरेतदुग्रसमरप्रेक्षोपनेप्रामरश्रेणीमध्यचरः पुनः क्षितिधरक्षेपाय धत्ते धियम् ॥ ८५ ॥ नृसिंहः ॥ कौमुदीव तुहिनांशुमण्डलं जाह्नवीव शशिखण्डमण्डनम् । पश्य कीर्तिरनुरूपमाश्रिता त्वां विभाति नरसिंहभूपते ॥ ८६ ॥ गण्डाभोगे विरहति मदैः पिच्छिले दिग्गजानां वैरिस्त्रीणां नयनकमलेष्वञ्जनानि ममार्ष्टि । यद्यप्येषा हिमकरकराद्वैतसौवस्तिकी[3] ते कीर्तिर्दिक्षु स्फुरति तदपि श्रीनृसिंह क्षितीन्द्र ॥ ८७ ॥ विद्यारत्नं सरसकविता यानरत्नं तुरंगो वाञ्छारत्नं परमपदवी भोगरत्नं मृगाक्षी । स्रोतोरत्नं विबुधतटिनी मासरत्नं वसन्तो भूभृद्रत्नं कनकशिखरी भूपरत्नं नृसिंहः ॥ ८८ ॥ निशारत्नं चन्द्रः शयनतलरत्नं शशिमुखी सभारत्नं विद्वाञ्श्रवणपुटरत्नं हरिकथा । कलारत्नं गानं दिविगमनरत्नं दिनकरो महीरत्नं मन्ये सपदि नरसिंहः क्षितिपतिः ॥ ८९ ॥ श्रीलक्ष्मीनरसिंहसान्द्रजलदे चञ्चन्नखालीतडिद्धाम्नि च्छन्नरिपुप्रतापतपने कोपावलिं वर्षति । पूर्णा शोणितवाहिनी सुरमनःसंतापदावानलः शान्तोऽभूद्विरराम वैरिवनितासीमन्तमार्गोदयः ॥ ९० ॥ निर्यच्छोणितपूरताम्रवपुषः स्वैरं रुदन्तो मुहुर्देव श्रीनरसिंह ते रिपुजना दिग्वाससो निस्त्रपाः । उद्गच्छज्जठरान्त्रनालसहितास्ते नूनमासन्पुनर्जन्मानो रणभूमिमातुरुदरात्तत्कालमेव च्युताः ॥ ९१ ॥ देव त्वत्तरुणप्रतापशिखिनो निःशेषमर्धायते शत्रूणां पटलं तदीयमयशो जानामि धूमायते । मार्तण्डांशुलसन्नखावलिरसौ ज्वालाकलापायते दुःखानां निकरस्तथा सुमनसां संघः पतङ्गायते ॥ ९२ ॥ किं मध्याह्नदिवाकरोऽयमपरः किं वायमौर्वानलः किं वासौ चपलाचयः पशुपतेः किं भालनेत्रानलः । किं वासौ प्रलयानलः किमथवा सर्वोऽपि भौमानलः श्रीमत्सिंह भवत्प्रतापमहिमा नोदेति केषां मतिः॥९३॥ काठिण्यं कुचकुम्भयोर्नयनयोश्चाञ्चल्यमेतद्द्वयं भो ब्रह्मन्भवता कथं न पदयोरस्माकमासादितम् । इत्थं श्रीनरसिंह ते त्रिभुवनाधीशस्य धाटीभिया कान्तारेषु मिथः पलायनपरा जल्पन्ति वैरिस्त्रियः ॥ ९४ ॥ एताः संप्रति गर्भगौरवभराद्राज्ञोऽवरोधाङ्गनाः कान्तारेषु पलायितुं बत कथं पद्भ्यां भवेयुः क्षमाः । इत्थं चेतसि संविभाव्य सदयं वैकुण्ठकण्ठीरव त्वन्नादावलिभिः सखीभिरिव किं तद्गर्भपातः कृतः ॥ ९५ ॥ स्नातस्त्वद्रिपुरक्तपाथसि यशोधौताम्बर धारयं-

---

१. देवाङ्गनास्वामिन . २. उपगतानाम् ३ स्वस्तीत्याहेत्यर्थे

लक्ष्मीश त्वदरातिवक्त्रकमलैर्भूदेवतां पूजयन् । जुह्वच्चैतदसून्प्रकोपदहने युष्मत्प्रतापोदयः शत्रुच्छत्रधरार्थदर्पयशसां प्राणाहुतीराददे ॥ ९६ ॥ कीर्तिः श्रीनरसिंह ते त्रिपथगा तत्रोदितं कैरवं चान्द्रं मण्डलमत्र नीलमिव यत्तद्भृङ्गवृन्दं किमु । यद्वा त्वद्दलितारिवृन्दतरुणीचित्तेन्धनाग्नेः स्थलं चन्द्रस्तत्र विभाति नीलमिव यद्धूमः स मन्यामहे ॥ ९७ ॥ अन्तर्विष्णोस्त्रिलोकी निवसति फणिनामीश्वरे सोऽपि शेते सिन्धोः सोऽप्येकदेशे तमपि चुलुकयां कुम्भयोनिश्चकार । धत्ते खद्योतलीलामयमपि नभसि श्रीनृसिंह क्षितीन्द्र त्वत्कीर्तेः कर्णनीलोत्पलमिदमपि च प्रेक्षणीयं विभाति ॥ ९८ ॥ नृत्यद्भर्गाट्टहासप्रचरसहचरैस्तावकीनैर्यशोभिर्धावल्यं नीयमाने त्रिजगति परितः श्रीनृसिंह क्षितीन्द्र । नेदृग्यद्येष नाभीकमलपरिमलप्रौढिमासादयिष्यद्देवानां नाभविष्यत्कथमपि कमलाकामुकस्यावबोधः ॥ ९९ ॥ श्रीमद्वैकुण्ठकण्ठीरव तव निनदाकर्णनत्रासधावच्छक्रेभोद्भिन्नगण्डस्थलविगलदतिस्वच्छमुक्तामणीनाम् । माला तारावलीयं विलसति च पतद्दानपाथःपयोधिर्नो चेत्कल्या नु तारावलिरथ लवणः सागरोऽसौ कुतस्त्यः ॥ १०० ॥ **वीरवरः** ॥ कामो वामदृशां निधिर्नयजुषां कालानलो विद्विषां स्वःशाखी विदुषां गुरुर्गुणवतां पार्थो धनुर्धारिणाम् । लीलावासगृहं कलाकुलजुषां कर्णः सुवर्णार्थिनां श्रीमान्वीरवरः क्षितीश्वरवरो वर्वर्ति सर्वोपरि ॥ १०१ ॥ **वीरभानुः** ॥ लङ्काधामनि वीरभानुनृपतेः प्रेक्ष्य प्रतापोदयं प्रत्यागारमधीरनीरजदृशो भूयो हुताशभ्रमात् । क्षुभ्यद्वाणिविधूतपाणिविगलन्मुक्तामणिप्रस्खलद्बाष्पश्रेणिविलोलवेणिदयितं कण्ठस्थले बिभ्रति ॥ १०२ ॥ **वीरसिंहः** ॥ वीरसिंहारिनारीणामञ्जनाक्ताश्रुबिन्दवः । उरोजे पतिता रेजुः सरोजे मधुपा इव ॥ १०३ ॥ यस्योच्छिन्ना न वेदा मनसि सदयता दूषणानामभावो दक्षो दूरेऽणुदृष्ट्या जहाति कठिणतां दानशक्तिर्गरिष्ठा । आधत्ते यश्च कुन्दं शिरसि दरवतां यश्च दूरीकृतार्तिः स श्रीमान्वीरसिंह त्वमिव तव रिपुस्तत्र दम्भं प्रतीमः ॥ १०४ ॥ **रूपनारायणः** ॥ अये यदि समीहसे परपुरावरोधं सदा समाकलय मद्वचः किमपि रूपनारायण । प्रतीपनृपनागरीनयननीरकल्लोलिनीसमुत्तरणचातुरी तुरगराजमध्यापय ॥ १०५ ॥ **रामजामः** ॥ क्षुभ्यत्प्रत्यर्थिपृथ्वीपतिहृदयसरस्तोषशोषं दधाने त्वद्दोष्णां सुप्रतापे तपति बहुगुणा रामजाम क्षितीन्द्र । सूर्यो मित्रत्वमायात्समजनि दहनः कृष्णवर्त्मा निमज्जन्पारावाराम्बुपूरे निवसति वडवावह्निरन्यत्किमु ब्रूमः ॥ १०६ ॥ **श्रीवीरः** ॥ मन्येऽरण्ये कुलगिरिगुहागह्वरे पर्यटन्ती विद्धा दर्भैः किमपि चरणे वीरवर्यस्य कीर्तिः । इन्दौ कुन्दे कुमुदमुकुले चामरे चन्दने वा दत्वा दत्वा मृदुनि पुरतः पादमेषा प्रयाति ॥ १०७ ॥ दृष्टः साक्षादसुरविजयी नाकिनां चक्रवर्ती मात्स्यो न्यायः कथयति यथा वारुणीदण्डनीतेः । पातालेन्द्रादहिभयमथास्त्येव नित्यानुषक्तं तन्नः पुण्यैरजनि भवता वीर

१. त्रिष्णोरुदरे २ शेषे.

राजन्वती भूः ॥ १०८ ॥ ऐश्वर्यं नहुषस्य शंभुविषयश्रद्धा दशास्यस्य सा शौर्यं श्रीरघुनायकस्य सहजं गाम्भीर्यमम्भोनिधेः। दातृत्वं बलिकर्णयोरिह जगत्येकत्र चेत्स्यात्तदा श्रीवीरक्षितिपालमौलिनृपतेः साम्यं कथंचिद्भवेत् ॥ १०९ ॥ भिक्षुद्वारि सदानवारिमधुपश्रेणीमिमान्दूभ्रमान्धत्ते यन्नृवधूर्वधूकरतलं शोणाम्बुजाशङ्कया। सैवान्वेति पलायितेति चकिता हस्ताग्रमाधुन्वती मुग्धा वीरमहीपते तदखिलं त्वद्दानलीलायितम् ॥ ११० ॥ श्रीवीर क्षितिपाल ते सुललितं दानोद्यमे यद्वचः क्वास्ते सर्वहिरण्यमित्युदभवत्तत्कालमाकर्ण्य तत्। तापः प्राप हिरण्यरेतसि जानें जाड्यं हिरण्याचले स्वेदाम्भोऽपि हिरण्यगर्भवपुषि, स्वापाय संत्रासतः ॥ १११ ॥ राजानः शशिभास्करान्वयभुवः के के न संजज्ञिरे भर्तारं पुनरेकमेव हि भुवस्त्वां वीर मन्यामहे। येनाङ्गं परिमृद्य कुन्तलमथाकृष्य व्युदस्यायतं चोलं प्राप्य च मध्यदेशमसक्तत्काञ्च्यां करः प्रापितः ॥ ११२ ॥ स्वान्ते वैभवमस्ति नैव परतः प्रामाण्यनिर्धारणं नैवातद्वति तत्प्रकारकमतिर्नैवोपमानं तव। त्वद्देशेषु विभाति न च्छलकथा नो वा क्वचित्संशयः श्रीवीर प्रथिता कथं पुनरियं नैयायिकत्वप्रथा ॥ ११३ ॥ कीर्तिस्ते धनिकाधनं मधुरिमा तस्याधमर्णा सुधा शीतांशुः प्रतिभूस्तदर्थनकृते सैषा दिवं धावति। सालीना तव वाचि वीरनृपते चन्द्रो निराङ्घ्रिध्वनिः शङ्कातङ्कभृदंशुकावृततनुर्नक्तं परिभ्राम्यति ॥ ११४ ॥ वीरक्षीरसमुद्रसान्द्रलहरीलावण्यलक्ष्मीमुषस्त्वत्कीर्तेस्तुलनां मृगाङ्कमालिनो धत्तां कथं चन्द्रमाः। स्यादेतत्त्वदरातिसौधशिखरप्रोद्भूतदूर्वाङ्कुरग्रासव्यग्रमतिः पतेद्यादि पुनस्तस्याङ्कशायी मृगः ॥ ११५ ॥ श्रीमद्वीर महीमहेन्द्र भवतः प्रस्थानकालोद्भवद्वादित्रध्वनिभीतभानुहरयो द्रागम्बरं प्रागमन्। तस्मिन्नेवमुपद्रवे किल विपर्यस्तं समस्तं रवेर्युग्यैः सप्तरथाङ्गमेकमपदं सूतश्चिरादुद्भ्रमः ॥ ११६ ॥ गर्वग्रन्थिलगुर्जरज्वरकरः कर्णाटकर्णाटवीदावाग्निर्द्रविणेन्द्रवीर्यदलनो गौडेन्द्रनिद्राहरः। हम्मीरप्रमदामदालसलसद्भ्रूनर्तनस्तम्भनः प्रस्थाने तव वीर डिण्डिमचमत्कारः समुज्जृम्भते ॥ ११७ ॥ श्रीकण्ठासक्तहस्तोऽधिगतमणिगणः शैशवाभ्यस्तविद्यो लावण्यध्वस्तकामो कविजनमिलितो यौवनाप्तप्रकामः। आदत्तक्षोणिदण्डो द्विजवशकृतधीः कङ्कणाहारयुक्तः स श्रीमान्वीर वीर त्वमिव तव रिपुस्तत्र मुक्तादिवर्णः ॥ ११८ ॥ लोकानां मानमात्रं मनुजजनरतिः स्कंससूटाङ्घ्रिरक्षो राज्ञामासत्त्वदक्ष॰ कृतसमयमरामण्डितो वीरवर्गैः। कायत्विण्मीनकेतुः करकलितयवा कोषमानैर्विहीनः श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मन्दं प्रतीमः ॥ ११९ ॥ वादानाशानुयुक्तो नगरकृतमतिर्यौवनाक्रान्तदेहः संग्रामप्राप्तधैर्यो न विदलितरुची राजलक्ष्म्यातिहीनः। नित्यं दारासभस्थः प्रखरतनुनिभो यः सुभिक्षानुवर्ती श्रीमद्वीराधिराज त्वमिव तव रिपुस्तत्र मुक्तादिवर्णः ॥ १२० ॥ वल्लालः ॥ वल्लाल क्षोणिपाल त्वदहितनगरे संचरन्ती किराती कीर्णान्यालोक्य रत्नान्युरु-

१ अश्वा.

तरखदिराङ्गारशङ्काकुलाङ्गी । मुक्त्वा श्रीखण्डखण्डं तदुपरि मुकुलीभूतनेत्रा धमन्ती श्वासामोदानुयातैर्मधुकरनिकरैर्धूमशङ्कां बिभर्ति ॥ १२१ ॥ मणिपालः ॥ प्रामाण्यं परतो न शक्तिगणना सादृश्यलोपः सदा कार्ये चेश्वरकर्तृ नन्वनुमितौ ज्ञानं विशिष्टात्मकम् । सर्वं न्यायनयानुसारिविबुधे चैतन्यनाशोपमान्नश्येत्तन्मणिपाल भूप भवतो नैयायिकत्वं कुतः ॥ १२२ ॥ मुकुन्ददेवः ॥ करवारिरुहेण संधुनाने तरवारिं नृपतौ मुकुन्ददेवे । वरयन्त्यमरावतीतरुण्यः प्रथमं काञ्चनपारिजातमालाः ॥ १२३ ॥ रुद्रः ॥ कतिपयदिवसैः क्षयं प्रयायात्कनकगिरिः कृतवासरावसानः । इति मुदमुपयाति चक्रवाकी वितरणशालिनि वीररुद्रदेवे ॥ १२४ ॥ कवीन्द्राणामासन्प्रथमतरमेवाङ्गणभुवश्चलद्भृङ्गासङ्गाकुलकरिमदामोदमधुराः । अमी पश्चात्तेषामुपरि पतिता रुद्रनृपतेः कटाक्षाः क्षीरोदप्रसरदुरुवीचीसहचराः ॥ १२५ ॥ चन्द्रोऽनेन कलङ्कितो बत वने रामोऽमुना वञ्चितः किं चानेन कुलाङ्गनानयनयोर्लावण्यलक्ष्मीर्हृता । शस्यानामभिलापकस्य भवतः श्रीरुद्र चन्द्र प्रभो तन्मन्ये हरिणस्य हन्त हननायाखेटकोपक्रमः ॥ १२६ ॥ भार्गवः ॥ तन्वन्ती तिमिरद्युतिं कृतवती प्रत्यर्थिचक्रव्यथामेषा भार्गव तावकी विजयते निस्त्रिंशधारा निशा । युद्धक्रुद्धविपक्षपक्षविदलत्कुम्भीन्द्रकुम्भस्थलभ्रश्यन्मौक्तिककैतवेन परितस्तारावलीं वर्षति ॥ १२७ ॥ भीमः ॥ युष्मद्दोर्दण्डमण्डत्पवनमितरणच्चण्डकोदण्डदण्डोन्मुक्तैःपूच्छिन्नमूर्च्छत्प्रतिनृपतिभुजाखण्डमुण्डा च कीर्णा । गायन्नृत्यत्प्रवल्गद्व्रजनिचरवधूदत्ततालैः करालैर्वेतालैरट्टहासप्रकटितदशनैर्युद्धभूर्भाति भीम ॥ १२८ ॥ मानसिंहः ॥ काञ्चीं काञ्ची न धत्ते कलयति न दृशा केलितल्पं कलिङ्गी सिन्दूरं दूर एव क्षिपति करतलन्यस्तमाङ्गी पुरंध्री । सौराष्ट्री मार्ष्टि भूयः सपदि नयनयो रक्तता रक्तिमानं कार्णाटी कर्णिकायां मलिनयति मनो मानसिंहप्रयाणे ॥ १२९॥ मल्लशाहः ॥ मृगः प्रमीललोचनः पिकः कृतोक्तिमोचनः श्रितानतिः कृताततिर्मरालिका स्खलद्गतिः । निरीक्ष्यते लसन्मते सुमल्लशाह भूपते तवारिकामिनी वृथाद्भुतं द्रुताटवी यथा ॥ १३० ॥ पलायिता तवारिवामलोचना यदा यदा पुलिन्दनायकैः सुलिप्तकालकूटसायकैः । विहाय नासिकासु मौक्तिकं स्रजं च मौक्तिकीं विलुण्ठिताः पुमर्थपञ्चमेह मल्लभूपते ॥ १३१॥ आदायादाय मुक्तास्तदनु शिखिधियादाय माणिक्यसर्वं धूमभ्रान्ति वहन्त्यः स्ववदनकमलामोदलुब्धालिवृन्दे । पक्तुं भिल्लच्यः प्रवृत्ताः सरभसमसकृद्याद्विपत्पत्तनेषु ब्रूमः किं कीर्तिपूरं धवलितवसुधं मल्लशाहस्य तस्य ॥ १३२ ॥ निजामशाहः ॥ धरणिधर निजामशाह युष्मत्करकरवालकरालकालसर्पः । द्विपदमुपवनं निपीय पीनो दिशि दिशि मुञ्चति कञ्चुकं यशांस्ते ॥ १३३ ॥ अटत्कटकघोटकप्रकटटापटङ्कारवच्चटच्चटदिति स्फुटं स्फुटति मेदिनी खर्परम् । निजामधरणीपतौ वलति कौतुकाडम्बरादिदं भुवनमण्डलं दरदरीदरीदर्यहो ॥ १३४॥ क्षोणीकाम निजामशाह भवतः प्रौढैः प्रतापानलैर्द्रागेव द्रवरूपतामुपगते चामीकराणां चये ।

शति विषमान्काननान्तान्वराहः ॥ ६ ॥ आस्तीर्यन्तामुपान्ते वनवृतिनिपुणैर्जालिकैर्जालबन्धा मुच्यन्तां शृङ्खलाभ्यः श्वगणिभिरटवीगह्वरे सारमेयाः । आकीर्यन्तां स्थलानि श्रमशिथिलहयैः सादिभिः पाशहस्तैर्व्याधूयन्तां कृतान्तैरिव महिषचरैर्दण्डिभिः काननानि ॥ ७ ॥ शङ्कुव्याकीर्णरङ्कुद्रुतनिशितशरक्षुण्णदिव्यन्तरक्षुत्याघोषक्षुब्धकण्ठीरवरवचकितव्यस्तमातङ्गयूथम् । खड्गव्यालूनकण्ठं तुमुलकलकलभ्रान्तकूजच्छकुन्तं भल्लध्वस्ताच्छभल्लं वनभुवि मृगयाकर्म तेन प्रतेने ॥ ८ ॥

## मृगयानिवृत्तिः ।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु । विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥ १ ॥

## ऋष्याश्रमवर्णनम् ।

विष्वक्तपोवनकुमारसमर्प्यमाणश्यामाकतण्डुलहृतां च पिपीलिकानाम् । श्रेणीभिराश्रमपथाः प्रथमानचित्रपत्रावलीवलयिनो मुदमुद्वहन्ति ॥ १ ॥ मधुरमिव वदन्ति स्वागतं भृङ्गनादैर्नतिमिव फलनम्रैः कुर्वतोऽमी शिरोभिः । ननु ददत इवार्घं पुष्पवृष्टिं किरन्तः कथमतिथिसपर्यां शिक्षिताः शाखिनोऽपि ॥ २ ॥ नीपस्कन्धे कुहरिणि शुकाः स्वागतं व्याहरन्ति घ्राणग्राही हरति हृदयं हव्यगन्धः समीरः । एता मृग्यः सलिलपुलिनोपान्तसंसक्तदर्भे पश्यन्त्योऽस्मान्सचकितदृशो निर्भराम्भः पिबन्ति ॥ ३ ॥ कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूला भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन । एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायां नष्टातङ्का हरिणशिशवो मन्दमन्दं चरन्ति ॥ ४ ॥ रसालानामन्तर्मदकलरणत्कोकिलकुलं समन्तादुन्मीलद्बकुलमुकुलामोदभरितम् । घनस्निग्धच्छायं क्रमुककदलीशीतलतलं ननु प्रीतिं धत्ते नवमिदमृषेराश्रमपदम् ॥ ५ ॥ नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः । विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगास्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥ ६ ॥ तत्तादृक्तृणपूलकोपनयनक्लेशाच्चिरद्वेषिभिर्मेध्या वत्सतरी विहस्य बटुभिः सोल्लुण्ठमालभ्यते । अप्येष प्रतनूभवत्यतिथिभिः सोच्छ्वासनासापुटैरापीतो मधुपर्कपाकसुरभिः प्राग्वंशजन्मानिलः ॥ ७ ॥ प्रत्यासन्नतुषारदीधितिकरक्लिश्यत्तमोवल्लरीकल्पाभिर्मखधूमवल्लिभिरमी संमीलितव्यञ्जनाः । श्वः सचीवरयिष्यमाणबटुकव्याधौतशुष्यत्त्वचो निद्राणातिथयस्तपोवनगृहाः कुर्वन्ति नः कौतुकम् ॥ ८ ॥ नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूताप्रियापीतादप्यधिकं तपोवनमृगः पर्याप्त-

१ अरण्यवेष्टनपटुभि २. अग्ररसम्.

माचामति । गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥ ९ ॥ आमूलं क्वचिदुद्धृता क्वचिदपि छिन्ना स्थली बर्हिणामानम्रा कुसुमोच्चयाच्च सदयाकृष्टाग्रशाखा लता । एते पूर्वविलूनवल्कलतया रूढव्रणाः शाखिनः-सद्यश्छेदममी वदन्ति समिधां प्रस्यन्दिनः पादपाः ॥ १० ॥ वासोर्थं दययैव नातिपृथवः कृत्तास्तरूणां त्वचो भग्नानेकजरत्कमण्डलनभः स्वच्छं पयोनैर्झरम् । दृश्यन्ते त्रुटितोज्झिताश्च बटुभिर्मौञ्ज्यः क्वचिन्मेखला नित्याकर्णनया शुकेन च पदं साम्नामिदं गीयते ॥ ११ ॥ पक्कानि प्रच्यवन्ते क्रमुकविटपिनामुच्छ्रितानां फलानि स्पन्दन्ते राजरम्भाः फलभरनमिता वाति मन्दानिलोऽपि । संदृश्यन्ते विपाकच्युतमधुरफलव्याप्तमूला रसाला भारेणामी फलानां युवतिकुचभरस्पर्धिनो नालिकेराः ॥ १२ ॥

---

## राजनीतिः ।

**राजा** ॥ राजास्य जगतो वृद्धेर्हेतुर्वृद्धाभिसंगतः । नयनानन्दजननः शशाङ्क इव वारिधेः ॥ १ ॥ राजानं प्रथमं विन्देत्ततो भार्या ततो धनम् । राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ॥ २ ॥ धार्मिकं पालनपरं सम्यक्परपुरंजयम् । राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः ॥ ३ ॥ पर्जन्य इव भूतानामाधारः पृथिवीपतिः । विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥ ४ ॥ सदानुरक्तप्रकृतिः प्रजापालनतत्परः । विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते ॥ ५ ॥ सर्वदेवमयो राजा मनुना संप्रकीर्तितः । तस्मात्तमेव सेवेत न व्यलीकेन कर्हिचित् ॥ ६ ॥ सर्वदेवमयस्यापि विशेषो भूपतेरयम् । शुभाशुभफलं सद्यो नृपाद्देवाद्भवान्तरे ॥ ७ ॥ बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः । महती देवता ह्येषा नररूपेण तिष्ठति ॥ ८ ॥ यस्य प्रसादे पद्मास्ते विजयश्च पराक्रमे । मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ ९ ॥ पात्रे त्यागी गुणे रागी भोगी परिजनैः सह । भावबोद्धा रणे योद्धा प्रभुः पञ्चगुणो भवेत् ॥ १० ॥ इन्द्रात्प्रभुत्वं ज्वलनात्प्रतापं क्रोधो यमाद्वैश्रवणात्सुवित्तम् । पराक्रमं रामजनार्दनाभ्यामादाय राज्ञः क्रियते शरीरम् ॥ ११ ॥ उत्खातान्प्रतिरोपयन्कुसुमितांश्चिन्वंल्लघून्वर्धयन्नत्युच्चान्नमयन्नतान्समुदयान्विश्लेषयन्संहतान् । क्षुद्रान्कण्टकिनो बहिर्नियमयन्म्लानान्पुनः सेचयन्मालाकार इव प्रयोगनिपुणो राजा चिरं जीवति ॥ १२ ॥ **सभासदः** ॥ धर्मशास्त्रार्थकुशलाः कुलीनाः सत्यवादिनः । समाः शत्रौ च मित्रे च नृपतेः स्युः सभासदः ॥ १३ ॥ श्रुत्यध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः । राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ १४ ॥ **पुरोहितः** ॥ वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायण. । आशीर्वादपरो नित्यमेष राजपुरोहितः ॥ १५ ॥ **धर्माध्यक्षः** ॥ कुलशीलगुणोपेतः सर्वधर्म-

---

१ पिबति. २ अन्नस्य ३ सघृतस्य

परायणः । प्रवीणः प्रेषणाध्यक्षो धर्माध्यक्षो विधीयते ॥ १६ ॥ वैद्यः ॥ आयुर्वेदकृताभ्यासः सर्वेषां प्रियदर्शनः । आर्यशीलगुणोपेत एष वैद्यो विधीयते ॥ १७ ॥ मन्त्री ॥ मन्त्रतन्त्रार्पितप्रीतिर्देशकालोचितस्थितिः । यश्च राज्ञि भवेद्भक्तः सोऽमात्यः पृथिवीपतेः ॥ १८ ॥ स ह्यमात्यः सदा श्रेयान्काकिनी यः प्रवर्धयेत् । कोषः कोषवतः प्राणाः प्राणाः प्राणा न भूपतेः ॥ १९ ॥ कमण्डलूपमोऽमात्यस्तनुत्यागो बहुग्रहः । नृपतेः किंक्षणो मूर्खो दरिद्रः किंवराटकः ॥ २० ॥ प्राप्तार्थग्रहणं द्रव्यपरिवर्तोऽनुरोधनम् । उपेक्षा बुद्धिहीनत्वं भोगोऽमात्यस्य दूषणम् ॥ २१ ॥ स्वदेशजं कुलाचारं विशुद्धमथवा शुचिम् । मन्त्रज्ञमव्यसनिनं व्यभिचारविवर्जितम् ॥ २२ ॥ अधीतव्यवहारज्ञं मौलं ख्यातं विपश्चितम् । अर्थस्योत्पादकं चैव विदध्यान्मन्त्रिण नृपः ॥ २३ ॥ अन्तःसारैरकुटिलैरच्छिद्रैः सुपरीक्षितैः । मन्त्रिभिर्धार्यते राज्यं सुस्तम्भैरिव मन्दिरम् ॥ २४ ॥ संग्रहं नाकुलीनस्य[1] सर्पस्येव करोति यः । स एव श्लाघ्यते मन्त्री सम्यग्गारुडिको यथा ॥ २५ ॥ पृष्टो ब्रूते न सत्यं यः परिणामे सुखावहम् । मन्त्री चेत्प्रियवक्ता स्यात्केवलं स रिपुः स्मृतः ॥ २६ ॥ मूर्खं व्यसनिनं लुब्धमप्रगल्भं भयाकुलम् । क्रूरमन्यायकर्तारं नाधिपत्ये नियोजयेत् ॥ २७ ॥ दूरादर्थं घटयति नवं दूरतश्चापशब्दं त्यक्त्वा भूयो भवति निरतः सत्सभारञ्जनेषु । मन्दं मन्दं रचयति पदं लोकचित्तानुवृत्त्या कामं मन्त्री कविरिव सदा खेदभारैरमुक्तः ॥ २८ ॥ शास्त्रज्ञः कपटानुसारकुशलो वक्ता न च क्रोधनस्तुल्यो मित्रपरस्वकेषु चरितं दृष्ट्वैव दत्तोत्तरः । क्लीबान्पालयिता शठान्व्यथयिता धर्म्येऽतिलोभान्वितो द्वार्भावे परतत्त्ववद्धहृदयो राज्ञश्च कोपापहः ॥ २९ ॥ सेनापतिः ॥ समस्तनीतिशास्त्रज्ञो वाहने पूजितश्रमः । शौर्यवीर्यगुणोपेतः सेनाध्यक्षो विधीयते ॥ ३० ॥ शूरोऽर्थशास्त्रनिपुणः कृतशास्त्रकर्मा सङ्ग्रामकेलिचतुरश्च तुरंगयुक्तः । भर्तुर्निदेशवशगोऽभिमतश्च तन्त्रे सेनापतिर्नरपतेर्विजयागमाय ॥ ३१ ॥ गजाः ॥ यतः सत्यं ततो धर्मो यतो धर्मस्ततो धनम् । यतो रूपं ततः शीलं यतो नागास्ततो जयः ॥ ३२ ॥ यद्वद्वनमसिंहं च यद्वद्राष्ट्रमपार्थिवम् । यद्वच्छौर्यमशस्त्रं तु तद्वत्सैन्यमकुञ्जरम् ॥ ३३ ॥ प्राकारगोपुराट्टालकपाटोद्घाटनादिषु । भञ्जने मर्दने चैव नागा वज्रोपमाः स्मृताः ॥ ३४ ॥ शरजालाञ्चितमुखः कोऽन्यः शक्तः परं गजात् । हन्तुं प्राकारमुन्मथ्य रथांश्च नरकुञ्जरान् ॥ ३५ ॥ एकशक्तिप्रहारेण म्रियतेऽश्वो नरोऽपि च । सहेच्छतं प्रहाराणां महायुद्धेषु वारणः ॥ ३६ ॥ क्रीडासु च नरेन्द्राणां जले पुष्पितपङ्कजे । स्नपयन्ति गजा हस्तैर्लग्नपुष्करपुष्करैः ॥ ३७ ॥ स्त्रियोऽवतारयन्त्येते मृण्मया इव निश्चलाः । नास्ति हस्तिसमो बन्धुर्नास्ति हस्तिसमः सखा ॥ ३८ ॥ चलन्ति येषां न शतं गजेन्द्राः पुरः प्रयाणे बत शैलतुल्याः । वाञ्छन्ति नैवं विजयं कथं ते राजेति शब्दं च कथं लभन्ते ॥ ३९ ॥ रक्षन्ति

१. न अकुलीनस्य, ( पक्षे ) नाकुर्लक्ष्मीकं तत्र लीनस्य.

पक्षं मुदिताः स्वकीयं मथ्नन्ति सैन्यं कुपिताः परेषाम्। प्राणैरपीच्छन्ति हितं प्रभूणां गजैः समानं क्व बलं बलीयः॥ ४०॥ सैन्योत्तारणतो धुनीषु सततं यो वारिवन्धायते यो मथनन्पारितः परोद्धृतवलं युद्धेषु योधायते। यः स्वीयक्षितिनाथरक्षणविधौ प्रोच्चैकदुर्गायते स प्राज्ञैर्विजिगीषुभिर्गजगणः कैः पार्थिवैर्नोऽर्थ्यते॥ ४१॥ मातङ्गैरथ यैर्महेन्द्रभवन पुण्याधिकं जन्यते यैः श्यामैरपि सर्वलोकसहिता कीर्तिः सितातन्यते। यैर्मत्तैरपि संगरे रिपुमदः शेषं समानीयते तेऽमी भाग्यवतः प्रयान्ति पुरतः स्तम्बेरमा भूपतेः॥ ४२॥ चीत्कारैर्नाशयन्तः स्वपतिभटमनो मोदयन्तो मदाढ्याः प्रौढाः सङ्ग्रामसीम्नि स्वबलबहलतां बाढमाढौकमानाः। शुण्डादण्डप्रहारैः परममपि बलं कम्पयन्तः परेषां येषां सर्वे गजेन्द्रा भुवि विजयविधौ ते मता भूमिपालाः॥ ४३॥ सेतुं संभेदयन्तो बलविकटभटप्रोन्नतिं त्रोटयन्तः प्राकारं दारयन्तः परमनसि परां भीतिमुत्पादयन्तः। व्यूहं विद्रावयन्तः सुघनमपि वनं हेलयोत्पाटयन्तो येषामाजौ गजेन्द्राः खलु धरणिभुजां तज्जयः सिद्ध एव॥ ४४॥ तावद्गर्जन्ति वीर्योत्परनिधनविधौ युद्धमध्येऽपि धीरास्तावद्धावन्ति वेगं परमपि दधतः संमुखीनास्तुरंगाः। शूरारूढः सुसज्जो मदमुदितमना मानिमानं विधुन्वन्यावन्नायाति कोपात्कृतविविधरवाटोप एकोऽपि नागः॥४५॥ **तुरगाः**॥अश्वा यस्य जयस्तस्य यस्याश्वास्तस्य मेदिनी। अश्वा यस्य यशस्तस्य यस्याश्वास्तस्य काञ्चनम्॥ ४६॥ निपत्य युधि वेगेन मिषतां सर्वधन्विनाम्। शत्रुं निहत्य यात्येकः शूरो वाजिप्रभावतः॥ ४७॥ शस्त्रास्त्रैर्भिन्नदेहोऽपि श्रान्तोऽपि गुरुभारतः। न मुञ्चति रणे नाथमतः कोऽन्यो हयात्सुहृत्॥ ४८॥ दूरस्थोऽपि बली शत्रुर्न शेते रजनीष्वपि। तस्य भीत्या गृहे यस्य हरयो वेगवत्तराः॥ ४९॥ न गजैर्न नरैः कार्यसिद्धिमभ्येति भूभृताम्। तथा निमेषमात्रेण यथा वाहैः सुसाधितैः॥ ५०॥ पादाः कन्दुकवत्स्थितिश्च गिरिवद्धेषारवो मेघवन्नेत्रे नीरजवज्जवः पवनवच्चास्फालनं सिंहवत्। विन्यासो नटवन्मुखं कुलवधूवक्रेन्दुवद्वाजिनो यस्य क्षोणिभुजो विशस्तदितरे साम्राज्यमुर्वीतले॥५१॥ **खड्गः**॥ खड्गाल्लक्ष्मीस्तथा राज्यं यशः खड्गादवाप्यते। खड्गाद्वैरिविनाशं च यत्नात्तमभिदध्महे॥ ५२॥ **सैन्यम्**॥ प्रथमं युद्धकारित्वं समस्तबलपालनम्। दिङ्मार्गयोधशोधित्वं पत्तिकर्म प्रचक्षते॥ ५३॥ स्वभावशूरमस्त्रज्ञमविरक्तं जितश्रमम्। प्रसिद्धक्षात्रियप्रायं बलं श्रेष्ठतमं विदुः॥ ५४॥ वरमल्पबलं सारं न वह्वी मुण्डमालिका। कुर्यादसारभङ्गो हि सारभङ्गमपि स्फुटम्॥ ५५॥ **दुर्गाः**॥ न गजानां सहस्रेण न लक्षेण च वाजिनाम्। तथा सिध्यन्ति कार्याणि यथा दुर्गप्रभावतः॥ ५६॥ अदुर्गो विषयः कस्य नारेः परिभवास्पदम्। अदुर्गोऽनाश्रयो राजा पोतच्युतमनुष्यवत्॥ ५७॥ विषहीनो यथा नागो मदहीनो यथा गजः। सर्वेषां वश्यतां याति दुर्गहीनस्तथा नृपः॥ ५८॥ शतमेकोऽपि संधत्ते प्राकारस्थो धनुर्धरः। तस्माद्दुर्गं प्रशसन्ति नीतिशास्त्रविदो जनाः॥ ५९॥ एकः शतं योधयते प्राका-

रस्थो धनुर्धरः । शतं सहस्राणि तथा सहस्रं लक्षमेव च ॥ ६० ॥ दुर्गाणि राज्ञा कार्याणि सजलानि दृढानि च । द्रव्यमन्नं च तेष्वेव स्थापनीयं प्रयत्नतः ॥ ६१ ॥ **दूतः** ॥ मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः । धीरो यथोक्तवादी च एष दूतो विधीयते ॥ ६२ ॥ उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा । सदैवावध्यभावेन यथार्थस्य हि वाचकः ॥ ६३ ॥ भक्तो गुणी शुचिर्दक्षः प्रगल्भोऽव्यसनी क्षमी । ब्राह्मणः परमर्मज्ञो दूतः स्यात्प्रतिभाववान् ॥ ६४ ॥ साकारो निःस्पृहो वाग्मी नानाशास्त्रविचक्षणः । परचित्तावगन्ता च राज्ञो दूतः स इष्यते ॥ ६५ ॥ **भाण्डागारी** ॥ प्रवीणो वाक्पटुर्धीमान्स्वामिभक्तश्च नित्यशः । अलुब्धः सत्यवादी च भाण्डागारी स इष्यते ॥ ६६ ॥ **लेखकः** ॥ सकृदुक्तगृहीतार्थो लघुहस्तो जितेन्द्रियः । शब्दशास्त्रपरिज्ञाता एष लेखक इष्यते ॥ ६७ ॥ **प्रतीहारी** ॥ इङ्गिताकारतत्त्वज्ञो बलवान्प्रियदर्शनः । समयज्ञः स्वामिभक्तः प्रतीहारी स इष्यते ॥ ६८ ॥ **सूपकारः** ॥ पुत्रपौत्रगुणोपेतः शास्त्रज्ञो मिष्टपाचकः । शूरश्च कठिनश्चैव सूपकारः स इष्यते ॥ ६९ ॥ **चाराः** ॥ भवेत्स्वपरराष्ट्राणां कार्याकार्यावलोकने । चारचक्षुर्महीभर्तुर्यस्य नास्त्यन्ध एव सः ॥ ७० ॥ **अन्तःपुरवर्गाः** ॥ काणाः कुब्जाश्च पण्ढाश्च तथा वृद्धाश्च पङ्गवः । एते चान्तःपुरे नित्यं नियोक्तव्याः क्षमाभृता ॥ ७१ ॥ **स्त्रियः** ॥ पक्वान्नमिव राजेन्द्र सर्वसाधारणाः स्त्रियः । परोक्षे च समक्षे च रक्षितव्याः प्रयत्नतः ॥७२॥ सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो रक्ष्या नार्यो हि सर्वदा । द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥ ७३ ॥ **महिषी** ॥ महिष्या हृष्टया भाव्यं गृहकार्येषु दक्षया । सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥ ७४ ॥ **भृत्याः** ॥ बहूनामप्यसाराणां समुदायो हि दारुणः । राज्ञा भृत्याः प्रकर्तव्यास्ते हि सर्वक्रियाक्षमाः ॥ ७५ ॥ तृणैरावेष्ट्यते रज्जुस्तया नागो हि बध्यते । एवं ज्ञात्वा नरेन्द्रेण भृत्याः कार्या विचक्षणाः ॥ ७६ ॥ कुलीनाः शौर्यसंपन्ना भक्ताः शस्त्रसमाहताः । महावृष्टि समुदिता तृणराशिर्व्यपोहति ॥ ७७ ॥ न विना पार्थिवो भृत्यैर्न भृत्याः पार्थिवं विना । तेषां च व्यवहारोऽयं परस्परनिबन्धनः ॥ ७८ ॥ भृत्यैर्विना स्वयं राजा लोकानुग्रहकार्यपि । मयूखैरिव दीप्तांशुस्तेजस्व्यपि न शोभते ॥ ७९ ॥ अरैः संधार्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः । स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्तते ॥ ८० ॥ शिरसा विधृता नित्य तथा स्नेहेन पालिताः । केशा अपि विरज्यन्ते नि स्नेहाः किं न सेवकाः ॥ ८१ ॥ ताडितोऽपि दुरुक्तोऽपि दण्डितोऽपि महीभुजा । न चिन्तयति यः पापं स भृत्योऽर्हो महीभुजाम् ॥ ८२ ॥ योऽनाहूतः समभ्येति द्वारे तिष्ठति सर्वदा । पृष्टः सत्य मित ब्रूते स भृत्योऽर्हो महीभुजाम् ॥ ८३ ॥ अनादिष्टोऽपि भूपस्य दृष्ट्वा हानिकर च यः । यतते तस्य नाशाय स भृत्योऽर्हो महीभुजाम् ॥ ८४ ॥ न क्षुधा पीड्यते यस्तु निद्रया न कदाचन । न च शीतातपाद्यैश्च स भृत्योऽर्हो महीभुजाम् ॥ ८५ ॥ श्रुत्वा सांग्रामिकीं वार्तां भविष्यां

स्वामिनं प्रति । प्रसन्नास्यो भवेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥ ८६ ॥ सीमावृद्धिं समायाति शुक्लपक्ष इवोडुराट् । नियोगसंस्थिते यस्मिन्स भृत्योऽर्हो महीभुजाम् ॥ ८७ ॥ सीमासंकोचमायाति वह्नौ चर्म इवाहितम्[1] । स्थिते यस्मिन्स तु त्याज्यो भृत्यो राज्यं समीहता ॥ ८८ ॥ स्वाम्यादिष्टस्तु यो भृत्यः समं विषममेव च । मन्यते न स संधार्यो भूभुजा भूतिमिच्छता ॥ ८९ ॥ स्वाम्यादेशात्सुभृत्यस्य न भीः संजायते क्वचित् । प्रविशेन्मुखमाहेयं दुस्तरं वा महार्णवम् ॥ ९० ॥ सालसं मुखरं क्रूर स्तब्धं व्यसनिनं शठम् । असंतुष्टमभक्तं च त्यजेद्भृत्यं नराधिपः ॥ ९१ ॥ स्वाम्युक्ते यो न यतते स भृत्यो भृत्यपाशकः । तज्जीवनमपि व्यर्थमजागलकुचाविव ॥ ९२ ॥ द्विजा अपि न गच्छन्ति यां गतिं नैव योगिनः । स्वाम्यर्थे संत्यजेत्प्राणास्तां गतिं याति सेवकः ॥ ९३ ॥ राजा तुष्टोऽपि भृत्यानां मानमात्रं प्रयच्छति । तेऽपि संमानमात्रेण प्राणैः प्रत्युपकुर्वते ॥ ९४ ॥ सारासारपरिच्छेत्ता स्वामी भृत्यस्य दुर्लभः । अनुकूलः शुचिर्दक्षः प्रभोर्भृत्यो हि दुर्लभः ॥ ९५ ॥ **स्नानम्** ॥ स्नानं नाम मनःप्रसादजननं दुःस्वप्नविध्वंसनं शौचस्यायतनं मलापहरणं संवर्धनं तेजसः । रूपोद्द्योतकरं गदप्रशमनं कामाग्निसंदीपनं नारीणां च मनोहरं श्रमहरं स्नाने दशैते गुणाः ॥ ९६ ॥ **ताम्बूलम्** ॥ ताम्बूलं मुखरोगनाशि निपुणं संवर्धनं तेजसो नित्यं जाठरवह्निवृद्धिजननं दुर्गन्धदोषापहम् । वक्त्रालंकरणं प्रहर्षजननं विद्वन्नृपाग्रे **रणे** कामस्यायतनं समुद्भवकरं लक्ष्म्याः सुखस्यास्पदम् ॥ ९७ ॥ **शस्त्रधारणम्** ॥ दुष्टाविनीतशत्रूणां भयकृद्बन्धुसंनिभम् । शस्त्रधारणमौजस्यं रक्षोविद्युद्ग्रहापहम् ॥ ९८ ॥ **छत्रधारणम्** ॥ वर्षानिलरजोघर्महिमादीनां निवारणम् । राज्यलक्ष्म्या गृहं धन्यं चक्षुष्यं छत्रधारणम् ॥ ९९ ॥ **चामरम्** ॥ चामरं श्रीकरं दिव्यं राज्यशोभाकरं परम् । **सिंहासनम्** ॥ सिंहासनं सुखैश्वर्यकरं लोकानुरञ्जनम् ॥ १०० ॥ **मालाधारणम्** ॥ सुमनोवररत्नानां धारणं दिव्यरूपकृत् । **चन्दनलेपः** ॥ पापलक्ष्मीप्रशमनं चन्दनाद्यनुलेपनम् ॥ १०१ ॥ **मृगया** ॥ मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः । उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ १०२ ॥ **कटकप्रयाणम्** ॥ वाजी चारुगतिः शशाङ्कधवलं छत्रं प्रिया पृष्ठतः प्रोत्तुङ्गस्तनमण्डलाविजयिनो भृत्याः पुरः पञ्चशः । ताम्बूलं मधुरं सखा सुचतुरः संपद्यते चेत्पथि प्राहुस्तत्कटकप्रयाणमितरत्प्राणप्रयाणं बुधाः ॥ १०३ ॥ **नीतिः** ॥ सुलभाः पुरुषा राजन्सततं प्रियवादिनः । अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १०४ ॥ यः कुलाभिजनाचारैरतिशुद्धः प्रतापवान् । धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥ १०५ ॥ प्रजां संरक्षति नृपः सा वर्धयति पार्थिवम् । वर्धनाद्रक्षणं श्रेयस्तन्नाशेऽन्यत्सद-

1. हितस्य

प्यसत् ॥ १०६ ॥ आत्मानं प्रथमं राजा विनयेनोपपादयेत् । ततोऽमात्यांस्ततः भृत्यांस्ततः पुत्रांस्ततः प्रजाः ॥ १०७ ॥ राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः । लोकास्तमुपवर्तन्ते यथा राजा तथा प्रजाः ॥ १०८ ॥ नृपाणां च नराणां च केवलं तुल्यमूर्तिता । आधिक्यं तु क्षमा धैर्यमाज्ञा दानं पराक्रमः ॥ १०९ ॥ प्रजां न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः । अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ ११० ॥ अजामिव प्रजां हन्याद्यो मोहात्पृथिवीपतिः । तस्यैका जायते तृप्तिर्द्वितीया न कथंचन ॥ १११ ॥ प्रजापीडनसंतापात्समुद्भूतो हुताशनः । राज्ञः कुलं श्रियं प्राणानादग्ध्वा विनिवर्तते ॥ ११२ ॥ यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिवर्धितः । फलप्रदो भवेत्काले तद्वल्लोकाः सुरक्षिताः ॥ ११३ ॥ निजवर्षा इति स्नेहा बहुभक्तजनान्विताः । सुकाला इव जायन्ते प्रजाः पुण्येन भूभृतः ॥ ११४॥ यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा । अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ ११५॥ प्रकृतिः स्वामिन त्यक्त्वा समृद्धापि न जीवति । अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ॥ ११६॥ नरेशे जीवलोकोऽयं न मीलति निमीलति । उदेत्युदीयमाने च रवाविव सरोरुहम्॥ ११७॥ हिरण्यधान्यरत्नानि गजेन्द्राश्चापि वाजिनः । तथान्यदपि यत्किंचित्प्रजाभ्यः स्यान्महीपतेः ॥ ११८ ॥ मा तात साहसं कार्षीर्विभवैर्गर्वमागतः । स्वगात्राण्यपि भाराय भवन्ति हि विपर्यये ॥ ११९ ॥ मा त्वं तात बले स्थित्वा बाधिष्ठा दुर्बलं जनम् । न हि दुर्बलदग्धानां काले किंचित्प्ररोहति ॥ १२० ॥ यानि मिथ्याभिभूताना पतन्त्यश्रूणि रोदताम् । तानि संतापकान्घ्नन्ति सपुत्रपशुबान्धवान् ॥ १२१ ॥ मा तात संपदामग्रमारूढोऽस्मीति विश्वसीः । दूरारोहपरिभ्रंशविनिपातो हि दारुणः ॥ १२२ ॥ कितवा यं प्रशंसन्ति यं प्रशंसन्ति चारणाः । यं प्रशसन्ति बन्धक्यः स पार्थ पुरुषाधमः ॥ १२३ ॥ राजानो यं प्रशंसन्ति यं प्रशसन्ति वै द्विजाः । साधवो यं प्रशंसन्ति स पार्थ पुरुषोत्तमः ॥ १२४ ॥ प्रज्ञागुप्तशरीरस्य किं करिष्यन्ति संहताः । गृहीतहस्तच्छत्रस्य वारिधारा इवारयः ॥१२५॥ कोऽत्रेत्यहमिति ब्रूयात्सम्यगादेशयेति च । आज्ञामवितथां कुर्याद्यथाशक्ति महीपते. ॥१२६॥ अलेपेच्छुर्धृतिमान्प्राज्ञश्छायेवानुगतः सदा । आदिष्टो न विकल्पेत स राजवसतौ वसेत् ॥ १२७ ॥ अप्राप्तकालवचन बृहस्पतिरपि ब्रुवन् । प्राप्नुयाद्बुद्ध्यवज्ञानमपमानं च शाश्वतम् ॥ १२८ ॥ आपद्युन्मार्गगमने कार्यकालात्ययेषु च । अपृष्टेनापि वक्तव्यं भृत्येन हितमिच्छता ॥ १२९ ॥ किं भक्तेनासमर्थेन किं शक्तेनापकारिणा । भक्तं शक्तं च मा राजन्नवज्ञातुं त्वमर्हसि ॥ १३० ॥ जनं जनपदा नित्यमर्चयन्ति नृपार्चितम् । नृपेणावमतो यस्तु स सर्वैरवमन्यते ॥ १३१ ॥ नानिवेद्य प्रकुर्वीत भर्तुः किंचिदपि स्वयम् । कार्यमापत्प्रतीकारादन्यत्र जगतीपते ॥ १३२ ॥ अतिव्ययोऽनपेक्षा च तथार्जनमधर्मतः । मोक्षणं दूरसंस्थानं कोषव्यसनमुच्यते ॥ १३३ ॥ क्षिप्रमायमनालोच्य व्ययानश्च स्ववाञ्छया । परिक्षीयत

एवासौ धनी वैश्रवणोपमः ॥ १३४ ॥ यो यत्र कुशलः कार्ये तं तत्र विनियोजयेत् । कर्मस्वदृष्टकर्मा यः शास्त्रज्ञोऽपि विमुह्यति ॥ १३५ ॥ एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता । बुद्धिर्बुद्धिमता युक्ता हन्ति राष्ट्रं सनायकम् ॥ १३६ ॥ न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न च पत्तिभिः । कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥ १३७ ॥ दुर्योधनः समर्थोऽपि दुर्मन्त्री-प्रलयं गतः । राज्यमेकं चकारोच्चैः सुमन्त्री चन्द्रगुप्तकः ॥ १३८ ॥ अशृण्वन्नपि वोद्धव्यो मन्त्रिभिः पृथिवीपतिः । यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः ॥ १३९ ॥ सभा वा न प्रवेष्टव्या वक्तव्य नासमञ्जसम् । अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥ १४० ॥ तस्मात्सभ्यः सभां गत्वा रागद्वेषविवर्जितः । वचस्तथाविधं ब्रूयाद्यथा न नरकं व्रजेत् ॥ १४१ ॥ माता पिता गुरुर्भ्राता भार्या पुत्रः पुरोहितः । नादण्ड्यो नाम राज्ञोऽस्ति स्वधर्मे यो न तिष्ठति ॥ १४२ ॥ विशोधय महीपाल मन्त्रिशालां विशेषतः । अयुक्तो नार्हसि स्थातुमस्यां मन्त्ररहस्यवित् ॥ १४३ ॥ षट्कर्णो भिद्यते मन्त्रश्चतुःकर्णः स्थिरो भवेत् । द्वि-कर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं न गच्छति ॥ १४४ ॥ त्रिविधाः पुरुषा राजन्नुत्तमाधमम-ध्यमा । नियोजयेत्तथैवैतांस्त्रिविधेष्वपि कर्मसु ॥ १४५ ॥ तुल्यार्थं तुल्यसामर्थ्यं सर्वज्ञं व्यव-सायिनम् । अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥ १४६ ॥ निर्विशेषो यदा राजा समं भृत्येषु तिष्ठति । तत्रोद्यमसमर्थानामुत्साहः परिहीयते ॥ १४७ ॥ प्रसादो निष्फलो यस्य यस्य क्रोधो निरर्थकः । न तं राजानमिच्छन्ति षण्ढं पतिमिवाङ्गनाः ॥ १४८ ॥ त्यजे-त्स्वामिनमत्युग्रमत्युग्रात्कृपणं त्यजेत् । कृपणादविशेषज्ञं तस्माच्च कृतनाशनम् ॥ १४९ ॥ अविवेकिनि भूपाले नश्यन्ति गुणिनां गुणाः । प्रवासरसिके कान्ते यथा साध्व्याः स्तनोन्न-तिः ॥ १५० ॥ न कश्चिच्चण्डकोपानामात्मीयो नाम भूभृताम् । होतारमपि जुह्वन्तं दहत्येव हुताशनः ॥ १५१ ॥ चक्रं सेव्यं नृपः सेव्यो न सेव्यः केवलो नृपः । पश्य चक्रस्य मा-हात्म्य मृत्पिण्ड पात्रता गतः ॥ १५२ ॥ यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः । कुली-नो वाकुलीनो वा स श्रियो भाजनं भवेत् ॥ १५३ ॥ राज्ञि मातरि देव्यां च कुमारे मुख्य-मन्त्रिणि । पुरोहिते प्रतीहारे समं वर्तेत राजवत् ॥ १५४ ॥ पानमक्षास्तथा नार्यो मृगया गीतवादिते । एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥ १५५ ॥ आयाच्चतुर्थभागेन व्ययकर्म प्रवर्तयेत् । प्रभूततैलदीपो हि चिरं भद्राणि पश्यति ॥ १५६ ॥ अर्थानामर्जनं कार्यं वर्धनं रक्षणं तथा । भक्ष्यमाणो निरादाय सुमेरुरपि हीयते ॥ १५७ ॥ कर्मणा मनसा वाचा चक्षुषापि चतुर्विधम् । प्रसादयति लोकं यस्तं लोको नु प्रसीदति ॥ १५८ ॥ संभोजनं सक-थनं संप्रश्नोऽथ समागमः । ज्ञातिभिः सह कार्याणि न विरोधः कदाचन ॥ १५९ ॥ संग-तिः श्रेयसी राजन्विगुणेष्वपि बन्धुषु । तुषैरपि परित्यक्ता न प्ररोहन्ति तण्डुलाः ॥ १६० ॥

१ भेद प्राप्नोति सर्वथा ज्ञानविषयो भवतीति भाव २ विचार . ३ पारम् ४ होमकर्तारम्

मृदोः परिभवो नित्यं वैरं तीक्ष्णस्य नित्यशः । उत्सृज्य तद्द्वयं तस्मान्मध्यां वृत्तिं समाश्रयेत् ॥ १६१ ॥ अबुद्धिमाश्रितानां च क्षन्तव्यमपराधिनाम् । नहि सर्वत्र पाण्डित्यं सुलभं पुरुषे क्वचित् ॥ १६२ ॥ किमप्यसाध्यं महतां सिद्धिमेति लघीयसाम् । प्रदीपो भूमिगेहान्तर्ध्वान्तं हन्ति न भानुमान् ॥ १६३ ॥ अरावप्युचितं कार्यमातिथ्यं गृहमागते । छेत्तुमप्यागते छायां नोपसंहरते द्रुमः ॥ १६४ ॥ हन्तुमेषोऽपसरति मृगेन्द्रः संकुचत्यति । बुद्धिमन्तः सहन्ते च निधाय हृदि कंचन ॥ १६५ ॥ अगाधहृदया भूपाः कूपा इव दुरासदाः । घटका[1] गुणिनो[2] नो चेत्कथं लभ्येत जीवनम्[3] ॥ १६६ ॥ कथं नाम न सेव्यन्ते यत्नतः परमेश्वराः । अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥ १६७ ॥ भोगिनैः[4] कञ्चुका[5]सक्ताः क्रूराः कुटिलगामिनः । सुदुष्टा मन्त्र[6]साध्याश्च राजानः पन्नगा[7] इव ॥ १६८ ॥ अकस्माद्द्वेष्टि यो भक्त[8]माजन्मपरिसेवितम् । नैव्यंजने[9] रुचिर्यस्य त्याज्यो नृप इवातुरः[10] ॥१६९॥ सुगन्धं केतकीपुष्पं कण्टकैः परिवेष्टितम् । यथा पुष्पं तथा राजा दुर्जनैः परिवेष्टितः ॥ १७० ॥ असत्प्रलापः पारुष्यं पैशून्यमनृतं तथा । चत्वारि वाचा राजेन्द्र न जल्पेन्नैव चिन्तयेत् ॥ १७१ ॥ प्राज्ञे नियोज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः । यशः स्वर्गनिवासश्च विपुलश्च धनागमः ॥ १७२ ॥ मूर्खे नियोज्यमाने तु त्रयो दोषा महीपतेः । अयशश्चार्थनाशश्च नरके गमनं तथा ॥ १७३ ॥ इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम् । यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥ १७४ ॥ मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि । चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥ १७५ ॥ आत्मोदयः परग्लानिर्द्वयं नीतिरितीयती । तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतीयते ॥ १७६ ॥ तृप्तियोगः परेणापि महिम्ना न महात्मनाम् । पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥ १७७ ॥ संपदा सुस्थिरंमन्यो भवति स्वल्पयापि य. । कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥१७८॥ बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः । चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ १७९ ॥ तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः । नैकमोजः प्रसादो वा रसभावविदः कवेः ॥१८०॥ कृतापचारोऽपि परैरनाविष्कृतविक्रियः । असाध्यः कुरुते कोपं प्राप्ते काले गदो यथा ॥ १८१ ॥ मृदुव्यवहितं तेजो भोक्तुमर्थान्प्रकल्पते । प्रदीपः स्नेहमादत्ते दशयाभ्यन्तरस्थया ॥ १८२ ॥ नालम्बते दैष्टिकतां न निषीदति पौरुषे । शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ १८३ ॥ स्थायिनोऽर्थे प्रवर्तन्ते भावाः संचारिणो यथा । रसस्यैकस्य भूयांसस्तथा नेतुर्महीभृतः ॥ १८४ ॥ तन्त्रावापविदा योगैर्मण्डलान्यधितिष्ठता । सुनिग्रहा नरेन्द्रेण फणीन्द्रा इव शत्रवः ॥ १८५ ॥ करप्रचेयामुत्तुङ्गः प्रभुशक्तिं प्रथीय-

१ कार्यसाधका ; ( पक्षे ) कुम्भा २ गुणवन्त ; ( पक्षे ) रज्जुयुक्ता ३ जीवनोपायभूत द्रव्यम्, ( पक्षे ) उदकम् ४. विलासिन ; ( पक्षे ) भोगवत ५ कवचम्, ( पक्षे ) सर्पकञ्चुकम् ६. विचार ; ( पक्षे ) शाबरादि ७ सर्पा . ८ सेवकम्, ( पक्षे ) ओदनम् ९. नवीने जने, ( पक्षे ) तेमने न १०. रोगी

सीम् । प्रज्ञाबलबृहन्मूलः फलत्युत्साहपादपः ॥ १८६ ॥ स दोषः सचिवस्यैव यदसत्कुरुते नृपः । याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥ १८७ ॥ न सर्पस्य मुखे रक्तं न दुष्टस्य कलेवरे । न प्रजासु न भूपाले धनं दुरधिकारिणि ॥ १८८ ॥ यद्यपि क्षितिपालानामाज्ञा सर्वत्रगा स्वयम् । तथापि शास्त्रदीपेन चरत्येव मतिः सताम् ॥ १८९ ॥ असाध्यमन्यथा दोषं परिच्छिद्य शरीरिणाम् । यथा वैद्यस्तथा राजा शस्त्रपाणिर्विषह्यति ॥ १९० ॥ जातमात्रं न यः शत्रुं व्याधिं वा प्रशमं नयेत् । अतिपुष्टाङ्गयुक्तोऽपि स पश्चात्तेन हन्यते ॥ १९१ ॥ पातकानां समस्तानां द्वे परे तात पातके । एकं दुःसचिवो राजा द्वितीयं च तदाश्रयः ॥१९२॥ राजा संपत्तिहीनोऽपि सेव्यः सेव्यगुणाश्रयः । भवत्याजीवनं तस्मात्फलं कालान्तरादपि ॥ १९३ ॥ स जयी वरमातङ्गा यस्य तस्यास्ति मेदिनी । कोशो यस्य सुदुर्धर्षो दुर्गस्तस्य सुदुर्जयः ॥ १९४ ॥ सुवर्णैः पट्टचेलैश्च शोभा स्याद्वारयोषिताम् । पराक्रमेण दानेन राजन्ते राजनन्दनाः ॥ १९५ ॥ यं यं नृपोऽनुरागेण संमानयति संसदि । तस्य तस्योत्सारणाय यतन्ते राजवल्लभाः ॥ १९६ ॥ ब्राह्मणः क्षत्रियो बन्धुर्नाधिकारे प्रशस्यते । ब्राह्मणः सिद्धमप्यर्थं कृच्छ्रेणापि न यच्छति ॥ १९७ ॥ नियुक्तः क्षत्रियो द्रव्ये खड्गं दर्शयते ध्रुवम् । सर्वस्वं ग्रसते बन्धुराक्रम्य ज्ञातिभावतः ॥ १९८ ॥ अपराधेऽपि निःशङ्को नियोगी चिरसेवकः । स स्वामिनमवज्ञाय चरेच्च निरवग्रहः ॥१९९॥ उपकर्ताधिकारस्थः स्वापराधं न मन्यते । उपकारं ध्वजीकृत्य सर्वमेवावलुम्पति ॥ २०० ॥ आज्ञाभङ्गकरान्राजा न क्षाम्येत्स्वसुतानपि । विशेषः कोऽनुरागस्य राजचित्तगतस्य च ॥ २०१ ॥ तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात् । नृपतिर्निजलोभाच्च प्रजा रक्षेत्पितेव हि ॥२०२॥ भोगस्य भाजनं राजा न राजा कार्यभाजनम् । राजकार्यपरिध्वंसान्मन्त्री दोषेण लिप्यते ॥ २०३ ॥ वरं प्राणपरित्यागः शिरसो वापि कर्तनम् । न तु स्वामिपदावाप्तिपातकेच्छोरुपेक्षणम् ॥ २०४ ॥ विषदिग्धस्य भक्तस्य दन्तस्य चलितस्य च । अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम् ॥ २०५ ॥ यः कुर्यात्सचिवायत्तां श्रियं तद्व्यसने सति । सोऽन्धवज्जगतीपालः सीदेत्संचारकैर्विना ॥ २०६ ॥ सदामात्यो न सिद्धः स्यात्समृद्धः सर्व एव हि । सिद्धानामयमादेश ऋद्धिश्चित्तविकारिणी ॥ २०७ ॥ मूलभृत्यान्परित्यज्य नागन्तून्प्रतिमानयेत् । नातः परतरो दोषो राज्यभेदकरो यतः ॥ २०८ ॥ मन्त्रबीजमिदं गुप्तं रक्षणीयं यथा तथा । मनागपि न भिद्येत तद्भिन्नं न प्ररोहति ॥ २०९ ॥ मन्त्रिणा पृथिवीपालचित्तं विघटितं क्वचित् । वलयं स्फटिकस्येव को हि संधातुमीश्वरः ॥२१०॥ वज्रं च राजतेजश्च द्वयमेवातिभीषणम् । एकमेकत्र पतति पतत्यन्यत्समन्ततः ॥ २११ ॥ मृतः प्राप्नोति वा स्वर्गं शत्रुं हत्वा सुखानि वा । उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ ॥ २१२ ॥ यत्रायुद्धे ध्रुवं मृत्युर्युद्धे जीवितसंशयः । तमेव कालं युद्धस्य प्रवदन्ति मनी-

षिणः ॥ २१३ ॥ अयुद्धे हि यदा पश्यन्न किंचिद्धितमात्मनः । युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥ २१४ ॥ जये च लभते लक्ष्मीं मृते चापि सुराङ्गनाम् । क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे ॥ २१५ ॥ पिता वा यदि वा भ्राता पुत्रो वा यदि वा सुहृत् । प्राणच्छेदकरा राज्ञा हन्तव्या भूतिमिच्छता ॥ २१६ ॥ राज्यलोभादहंकारादिच्छतः स्वामिनः पदम् । प्रायश्चित्तं तु तस्यैकं जीवोत्सर्गो न चापरम् ॥२१७॥ आत्मनश्च परेषां च यः समीक्ष्य बलाबलम् । अन्तरं नैव जानाति स तिरस्क्रियतेऽरिभिः ॥ २१८॥ राजा मत्तः शिशुश्चैव प्रमादी धनगर्वितः । अप्राप्यमपि वाञ्छन्ति किं पुनर्लभ्यतेऽपि यत् ॥ २१९ ॥ वर्णाकारप्रतिध्वानैर्नेत्रवक्त्रविकारतः । अप्यूहन्ति मनो धीरास्तस्माद्रहसि मन्त्रयेत् ॥२२०॥ आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च । नेत्रवक्त्रविकाराभ्यां ज्ञायतेऽन्तर्गतं मनः ॥२२१॥ षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्तया । इत्यात्मना द्वितीयेन मन्त्रः कार्यो महीभृता ॥२२२॥ मन्त्रभेदेऽपि ये दोषा भवन्ति पृथिवीपते. । न शक्यास्ते समाधातुमिति नीतिविदां मतम् ॥२२३॥ न तथोत्थाप्यते ग्रावा प्राणिभिर्दारुणा यथा । अल्पोपायान्महासिद्धिरेतन्मन्त्रफलं महत् ॥ २२४ ॥ विजेतुं प्रयतेतारीन्न युद्धेन कदाचन । अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः ॥ २२५ ॥ साम्ना दानेन भेदेन समस्तैरथवा पृथक् । साधितुं प्रयतेतारीन्न युद्धेन कदाचन ॥ २२६ ॥ बलिना सह योद्धव्यमिति नास्ति निदर्शनम् । तद्युद्धं हस्तिना सार्धं नराणां मृत्युमावहेत् ॥ २२७ ॥ स मूर्खः कालमप्राप्य योऽपकर्तरि वर्तते । कलिर्बलवता सार्धं कीटपक्षोद्गमो यथा ॥ २२८ ॥ महत्यल्पेऽप्युपायज्ञः सममेव भवेत्क्षमः । समुन्मूलयितुं वृक्षांस्तृणानीव नदीरयः ॥ २२९ ॥ धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात् । निक्षिप्तं हि मुखे रत्नं न कुर्यात्प्राणधारणम् ॥ २३० ॥ यथा प्रभुकृतान्मानाद्युध्यन्ते भुवि मानवाः । न तथा बहुभिर्दत्तैर्द्रविणैरपि भूपते ॥ २३१ ॥ अविद्वानपि भूपालो विद्यावृद्धोपसेवया । परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥ २३२ ॥ पानं स्त्री मृगया द्यूतमर्थदूषणमेव च । वाग्दण्डयोश्च पारुष्यं व्यसनानि महीभुजाम् ॥ २३३ ॥ शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनायकः । त्यज्यते किं पुनर्नान्यैर्यश्चाप्यात्मंभरिर्नरः ॥ २३४ ॥ सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः । एभिर्मुक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥ २३५ ॥ यो येन प्रतिबुद्धः स्यात्सह तेनोदयी व्ययी । स विश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च ॥ २३६ ॥ धूर्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः । अनीतिपवनाक्षिप्तः कार्याब्धौ स निमज्जति ॥ २३७ ॥ हर्षक्रोधौ समौ यस्य शास्त्रार्थे प्रत्ययः सदा । नित्यं भृत्यानपेक्षा च तस्य स्याद्धनदा धरा ॥ २३८ ॥ दाता क्षमी गुणग्राही स्वामी दुःखेन लभ्यते । शुचिर्दक्षोऽनुरक्तश्च जाने भृत्योऽपि दुर्लभः ॥ २३९ ॥ आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः । भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ २४० ॥ कृतकृत्यस्य

भृत्यस्य कृतं नैव प्रणाशयेत् । फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत् ॥ २४१ ॥ कोपप्रसादवस्तूनि ये विचिन्वन्ति सेवकाः । आरोहन्ति शनैः पश्चाद्धुन्वन्तमपि पार्थिवम् ॥ २४२ ॥ विद्यावतां महेच्छानां शिल्पविक्रमशालिनाम् । सेवावृत्तिविदां चैव नाश्रयः पार्थिवं विना ॥ २४३ ॥ ये जात्यादिमहोत्साहान्नरेन्द्रान्नोपयान्ति च । तेषामामरण भिक्षा प्रायश्चित्तं विनिर्मितम् ॥ २४४ ॥ ये च प्राहुर्दुरात्मानो दुराराध्या महीभुजः । प्रमादालस्यजाड्यानि ख्यापितानि निजानि तै. ॥ २४५ ॥ सर्पान्व्याघ्रान्गजान्सिंहान्दृष्ट्वोपायैर्वशीकृतान् । राजेति कियती मात्रा धीमतामप्रमादिनाम् ॥ २४६ ॥ राजानमेव संश्रित्य विद्वान्याति परां गतिम् । विना मलयमन्यत्र चन्दनं न प्ररोहति ॥ २४७ ॥ धवलान्यातपत्राणि वाजिनश्च मनोरमाः । सदा मत्ताश्च नागेन्द्रा प्रसन्ने सति भूपतौ ॥२४८॥ सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति त्रयो जनाः । शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ २४९ ॥ सा सेवा या प्रभुहिता ग्राह्या वाक्यविशेषतः । आश्रयेत्पार्थिवं विद्वांस्तद्द्वारेणैव नान्यथा ॥ २५० ॥ यो न वेत्ति गुणान्यस्य न तं सेवेत पण्डित. । न हि तस्मात्फलं तस्य सुकृष्टादूषरादिव ॥ २५१ ॥ द्रव्यप्रकृतिहीनोऽपि सेव्यः सेव्यगुणान्वितः । भवत्याजीवनं तस्मात्फल कालान्तरादपि ॥ २५२ ॥ अपि स्थाणुवदासीनः शुष्यन्परिगतः क्षुधा । न त्वेवानात्मसंपन्नाद्वृत्तिमीहेत पण्डितः ॥ २५३ ॥ सेवकः स्वामिनं द्वेष्टि कृपणं परुषाक्षरम् । आत्मानं किं स न द्वेष्टि सेव्यासेव्यं न वेत्ति यः ॥ २५४ ॥ यमाश्रित्य न विश्रामं क्षुधार्ता यान्ति सेवकाः । सोऽर्कवन्नृपतिस्त्याज्यः सदा पुष्पफलोऽपि सन् ॥२५५॥ जीवेति प्रब्रुवन्प्रोक्तः कृत्य कृत्यविचक्षणः । करोति निर्विकल्पं यः स भवेद्राजवल्लभः ॥ २५६ ॥ प्रभुप्रसादजं वित्तं सुपात्रे यो नियोजयेत् । वस्त्राद्यं विदधात्यङ्गे स भवेद्राजवल्लभः ॥ २५७ ॥ अन्त पुरचरैः सार्धं यो मन्त्रं न समाचरेत् । न कलत्रैर्नरेन्द्रस्य स भवेद्राजवल्लभः ॥ २५८ ॥ संमतोऽहं प्रभोर्नित्यमिति मत्वा व्यतिक्रमेत् । कृच्छ्रेष्वपि न मर्यादां स भवेद्राजवल्लभ ॥ २५९ ॥ द्वेषिद्वेषपरो नित्यमिष्टानामिष्टकर्मकृत् । यो नरो नरनाथस्य स भवेद्राजवल्लभः ॥ २६० ॥ धूतं यो यमदूताभं हालां हालाहलोपमाम् । पश्येद्दारान्वृथाकारान्स भवेद्राजवल्लभ ॥ २६१ ॥ युद्धकालेऽग्रगो यः स्यात्सदा पृष्ठानुगः पुरे । प्रभोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभः ॥ २६२ ॥ अप्राप्तकाल वचन बृहस्पतिरपि ब्रुवन् । लभते बुद्ध्यवज्ञानमपमानं च पुष्कलम् ॥ २६३ ॥ दुराराध्या हि राजानः पर्वता इव सर्वदा । व्यालाकीर्णाः सुविषमा कठिना दुःखसेविताः ॥ २६४ ॥ भोगिनः कञ्चुकाविष्टा. कुटिलाः क्रूरचेष्टिताः । सुदुष्टा मन्त्रसाध्याश्च राजानः पन्नगा इव ॥ २६५ ॥ दुरारोहं पदं राज्ञा सर्वलोकनमस्कृतम् । स्वल्पेनाप्यपकारेण ब्राह्मण्यमिव दुष्यति ॥ २६६ ॥ दुराराध्याः श्रियो राज्ञां दुरापा दुष्परिग्रहाः । तिष्ठन्त्याप इवाधारे

चिरमात्मनि संस्थिताः ॥ २६७ ॥ अनभिज्ञो गुणानां यो न भृत्यैरनुगम्यते । धनाढ्योऽपि कुलीनोऽपि क्रमायातोऽपि भूपतिः ॥ २६८ ॥ सव्यदक्षिणयोर्यत्र विशेषो नोपलभ्यते । कस्तत्र क्षणमप्यार्यो विद्यमानगतिर्वसेत् ॥ २६९ ॥ काचे मणिर्मणौ काचो येषां बुद्धिः प्रवर्तते । न तेषां संनिधौ भृत्यो नाममात्रोऽपि तिष्ठति ॥ २७० ॥ यत्र स्वामी निर्विशेषं समं भृत्येषु वर्तते । तत्रोद्यमसमर्थानामुत्साहः परिहीयते ॥ २७१ ॥ यस्मिन्कृत्यं समावेश्य निर्विशङ्केन चेतसा । आस्यते सेवकः स स्यात्कलत्रमिव चापरम् ॥ २७२ ॥ यः कृत्वा सुकृतं राज्ञो दुष्करं हितमुत्तमम् । लज्जया वक्ति नो किंचित्तेन राजा सहायवान् ॥ २७३ ॥ कुतः सेवाविहीनानां चामरोद्धूतसंपदः । उद्दण्डधवलच्छत्रवाजिवारणवाहिनी ॥ २७४ ॥ अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम् । देवानां च विनश्येत स द्रुतं सुमहानपि ॥ २७५ ॥ अकुलीनोऽपि मूर्खोऽपि भूपालं योऽत्र सेवते । अपि संमानहीनोऽपि स सर्वत्रापि पूज्यते ॥ २७६ ॥ अपि कापुरुषो भीरुः स्याच्चेन्नृपतिसेवकः । यदाप्नोति फलं लोकात्तस्यांशमपि नो गुणी ॥ २७७ ॥ यत्सकाशान्न लाभः स्यात्केवलाः स्युर्विपत्तयः । स स्वामी दूरतस्त्याज्यो विशेषादनुजीविभिः ॥ २७८॥ फलहीनं नृपं भृत्याः कुलीनमपि चोन्नतम् । सत्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजाः ॥ २७९ ॥ भूपः कूप इवाभाति नमज्जनसुखावहः[1]। ददाति गुणैसंबन्धाद्यथामात्रानुरूपतः ॥ २८० ॥ अपि संमानसंयुक्ताः कुलीना भक्तितत्पराः । वृत्तिभङ्गान्महीपालं त्यक्त्वा यान्ति सुसेवकाः ॥ २८१ ॥ कालातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः । कदाचित्तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः ॥ २८२ ॥ देशानामुपरि क्ष्मापा आतुराणां चिकित्सकाः । वणिजो ग्राहकाणां च मूर्खाणामपि पण्डिताः ॥ २८३ ॥ प्रमादिनां तथा चौरा भिक्षुका गृहमेधिनाम् । गणिका कामुकानां च सर्वलोकस्य शिल्पिनः ॥ २८४ ॥ सामादिसाज्जितैः पाशैः प्रतीक्षन्ते दिवानिशम् । भुञ्जते च यथाशक्ति जलजाञ्जलजा यथा ॥ २८५ ॥ शनैः शनैश्च यो राज्यमुपभुङ्क्ते यथाबलम् । रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत् ॥ २८६ ॥ विधिना मन्त्रयुक्तेन रूक्षापि मथितापि च । प्रयच्छति फलं भूमिररणीव हुताशनम् ॥ २८७ ॥ प्रजानां पालनं सस्य स्वर्गकोशस्य वर्धनम् । पीडनं धर्मनाशाय पापायायशसे स्थितम् ॥ २८८ ॥ गोपालेन प्रजाधेनोर्वित्तदुग्धं शनैः शनैः । पालनात्पोषणाद्ग्राह्यं न्याय्यां वृत्तिं समाचरेत् ॥ २८९ ॥ फलार्थी नृपतिर्लोकान्पालयेद्यत्नमास्थितः । दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ २९० ॥ नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि । अन्तरस्थैर्गुणैः शुभ्रैर्लक्ष्यते नैव केनचित् ॥ २९१ ॥ यथा गौर्दुह्यते काले पाल्यते च तथा प्रजाः । सिच्यते चीयते

[1] नमन्तो नम्रा ये जनास्तेषां सुखावह; (पक्षे) मज्जने सुखावहो न भवतीति न मज्जनसुखावह. विद्याविनयादि.; (पक्षे) रज्जव.

चैव लता पुष्पफलप्रदा ॥ २९२ ॥ लोकानुग्रहकर्तारः प्रवर्धन्ते नरेश्वराः । लोकानां संक्षयाच्चैव क्षयं यान्ति न संशयः ॥ २९३ ॥ उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता । समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥ २९४ ॥ मृतानां स्वामिनः कार्ये भृत्यानामनुवर्तिनाम् । भवेत्स्वर्गेऽक्षयो वासः कीर्तिश्च धरणीतले ॥ २९५ ॥ न यज्वानोऽपि गच्छन्ति तां गतिं नैव योगिनः । यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः ॥ २९६ ॥ चाटतस्करदुर्वृत्तैस्तथा साहसिकादिभिः । पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मादिभिस्तथा ॥ २९७ ॥ प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः । अधर्मादपि षड्भागो जायते यो न रक्षति ॥२९८॥ राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम् । राजा पिता च माता च सर्वेषां न्यायवर्तिनाम् ॥ २९९ ॥ गुणालयोऽप्यसन्मन्त्री नृपतिर्नाधिगम्यते । प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ ३०० ॥ चित्रास्वादकथैर्भृत्यैरनायासितकार्मुकैः । ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥ ३०१ ॥ यः संमानं समाधत्ते भृत्यानां क्षितिपोऽधिकम् । वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥ ३०२ ॥ विश्वासः संपदां मूलं तेन यूथपतिर्गजः । सिंहो मृगाधिपत्येऽपि न मृगैरुपयुज्यते ॥ ३०३ ॥ कारुण्यं संविभागश्च यस्य भृत्येषु सर्वदा । संभवेत्स महीपालस्त्रैलोक्यस्यापि रक्षणे ॥ ३०४ ॥ अपृष्टस्तु नरः किंचिद्यो ब्रूते राजसंसदि । न केवलमसंमानं लभते च विडम्बनम् ॥३०५॥ अजन्मा पुरुषस्तावद्गतासुस्तृणमेव वा । यावन्नेषुभिरादत्ते विलुप्तमरिभिर्यशः ॥ ३०६ ॥ विपाकदारुणो राज्ञां रिपुरल्पोऽप्यरुंतुदः । उद्वेजयति सूक्ष्मोऽपि चरणं कण्टकाङ्कुरः ॥३०७॥ रिक्ताः कर्मणि पटवस्तृप्तास्त्वलसा भवन्ति भृत्या ये । तेषां जलौकसामिव पूर्णानां रिक्तता कार्या ॥ ३०८ ॥ गन्तव्या राजसभा द्रष्टव्या राजपूजिता लोकाः । यद्यपि न भवन्त्यर्था स्तथाप्यनर्था विनश्यन्ति ॥ ३०९ ॥ अतितेजस्व्यपि राजा पानासक्तो न साधयत्यर्थान् । तृणमपि दग्धुमशक्तो वडवाग्निः संपिबन्नब्धिम् ॥३१०॥ अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् । नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥३११॥ सप्रतिबन्धं कार्यं प्रभुरधिगन्तुं सहायवानेव । दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ ३१२ ॥ अभिमुखनिहतस्य सतस्तिष्ठतु तावज्जयोऽथवा स्वर्गः । उभयबलसाधुवादः श्रवणसुखस्यैव तात्पर्यम् ॥ ३१३ ॥ स्पृहयति भुजयोरन्तरमायतकरवालकररुहविदीर्णम् विजयश्रीर्वीराणां व्युत्पन्नप्रौढवनितेव ॥ ३१४ ॥ अविवेकमतिर्नृपतिर्मन्त्रिषु गुणवत्सु वक्रितग्रीवः । यत्र खलाश्च प्रबलास्तत्र कथं सज्जनावसरः ॥३१५॥ अतिगम्भीरे भूपे कूप इव जनस्य दुरवतारस्य । दधति समीहितसिद्धिं गुणवन्तः पार्थिवा घटकाः ॥३१६॥ सदवनमसदनुशासनमाश्रितभरणं च राजचिह्नानि । अभिषेकः पट्टबन्धो बालव्यजनं व्रणस्यापि॥३१७॥ यदि तव हृदयं विद्वन्सुनयं स्वप्नेऽपि मा स्म सेविष्ठाः । सचिवजितं षण्ढजितं युवतिजितं

चैव राजानम् ॥ ३१८ ॥ आश्रयितव्यो नरपतिरार्जयितव्यानि भूरि वित्तानि । आरब्धव्यं वितरणमानेतव्यं यशो दशापि दिशः ॥ ३१९ ॥ असमैः समीयमानः समैश्च परिहीयमाणसत्कारः । धुरि यो न युज्यमानस्त्रिभिरर्थपतिं त्यजति भृत्यः ॥ ३२० ॥ न सा सभा यत्र न सन्ति वृद्धा वृद्धा न ते ये न विदन्ति धर्मम् । धर्मः स नो यत्र न सत्यमस्ति सत्यं न तद्यच्छलमभ्युपैति ॥ ३२१ ॥ स क्षत्रियस्त्राणसहः सतां यस्तत्कार्मुकं कर्मसु यस्य शक्तिः । वहन्द्वयीं यद्यफलेऽर्थजाते करोत्यसंस्कारहतामिवोक्तिम् ॥ ३२२ ॥ क्षतात्किल त्रायत इत्युदग्रः क्षत्रस्य शब्दो भुवनेषु रूढः । राज्येन किं तद्विपरीतवृत्तेः प्राणैरुपक्रोशमलीमसैर्वा ॥ ३२३ ॥ अत्युच्छ्रिते मन्त्रिणि पार्थिवे च विष्टभ्य पादावुपतिष्ठते श्रीः । सा स्त्रीस्वभावादसहा भरस्य तयोर्द्वयोरेकतरं जहाति ॥ ३२४ ॥ यः काकिनीमप्यपथप्रपन्नां समुद्धरेन्निष्कसहस्रतुल्याम् । कालेषु कोटिष्वपि मुक्तहस्तस्तं राजसिंहं न जहाति लक्ष्मीः ॥ ३२५ ॥ उपेक्षितः क्षीणबलोऽपि शत्रुः प्रमाददोषात्पुरुषैर्मदान्धैः । साध्योऽपि भूत्वा प्रथमं ततोऽसावसाध्यतां व्याधिरिव प्रयाति ॥३२६॥ मित्राणि शत्रुत्वमिवानयन्ती मित्रत्वमप्यर्थवशाच्च शत्रून् । नीतिर्नमत्यस्मृतपूर्ववृत्तं जन्मान्तरं जीवत एव पुंसः ॥ ३२७ ॥ सन्मन्त्रिणा वर्धयते नृपाणां लक्ष्मीमहीधर्मयशःसमूहः । दुर्मन्त्रिणा नाशयते तथैव लक्ष्मीमहीधर्मयशःसमूहः ॥ ३२८ ॥ नियुक्तहस्तार्पितराज्यभारास्तिष्ठन्ति ये सौधविहारसाराः । विडालवृन्दार्पितदुग्धपूराः स्वपन्ति ते मूढधियः क्षितीन्द्राः ॥३२९॥ सुहृदामुपकारकारणाद्द्विषतामप्यपकारकारणात् । नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्ति केवलम् ॥३३०॥ नयनाद्वितथप्रमाथिनः समुपेक्षेत समुन्नतिं द्विषः । सुजयं खलुतागतान्तरे विपदन्ता ह्यनिवृत्तसंपदः ॥ ३३१ ॥ विषमो[1]ऽपि विगाह्यते[2] नयः कृततीर्थैः[3] पयसामिवाशयः । स तु तत्र विशेषदुर्लभः सदुपन्यस्यति[4] कृत्यवर्त्म[5] यः[6] ॥३३२॥ द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरः[7] सुमर्षणः । न महानपि भूतिमिच्छता फलसंपत्[8]प्रवणः परिक्षयः ॥ १३३ ॥ अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः । क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥ ३३४ ॥ अनुपालयतामुदेष्यतीं प्रभुशक्तिं द्विषतामनीहया[9] । अपयान्त्यचिरान्महीभुजां जननिर्वादभयादिव श्रियः ॥ ३३५ ॥ क्षययुक्तमपि स्वभावजं दधतं धाम[10] शिवं समृद्धये । प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥ ३३६ ॥ प्रभवः खलु कोश[11]दण्ड[12]योः

१ दुर्बोधोऽपि, (पक्षे) दुःप्रवेशोऽपि २. विगृह्यते; (पक्षे) प्रविश्यते ३. कृताभ्यासाद्यपायैः सन्; (पक्षे) कृतजलावतारः सन्. ४. देशकालाद्यविरुद्धम्. यथार्थमित्यर्थः, (पक्षे) गर्तग्राहपाषाणादिरहितम्. ५ संधिविग्रहादिकार्यम्; (पक्षे) स्नानादिकम् ६. यथा केचित्कृततीर्थे पयसि गम्भीरेऽपि प्रवेष्टार सन्ति तीर्थकरस्तु विरलस्तद्वन्नीतावपि निगूढमपि तत्त्व सति वक्तरि बोद्धार' सन्ति वक्ता तु न सुलभ इत्यर्थः. ७. अत्यन्तदुरन्त क्षयोन्मुख इत्यर्थ. ८. फलसिद्ध्युन्मुखः. ९. अनुत्साहेन. १०. क्षात्र तेजः; (पक्षे)प्रकाशम् ११. अर्थराशि. १२. तुरगसैन्यम्.

कृतपञ्चाङ्गविनिर्णयो नयः । स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥ ३३७ ॥ अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः । विनिपातनिवर्तनक्षमं तममालम्बनमात्मपौरुषम् ॥ ३३८ ॥ विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः । नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥ ३३९ ॥ चञ्चलं वसु नितान्तमुन्नता मेदिनीमपि हरन्त्यरातयः । भूधरस्थिरमुपेयमागतं मावमंस्त सुहृदं महीपतिम् ॥ ३४० ॥ आज्ञा कीर्तिः पालनं ब्राह्मणानां दानं भोगो मित्रसंरक्षणं च । येषामेते षड्गुणा न प्रवृत्ताः कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ३४१ ॥ स किं सखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः । सदानुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसंपदः ॥ ३४२ ॥ नराधिपा नीचजनानुवर्तिनो बुधोपदिष्टेन न यान्ति ये पथा । विशन्त्यतो दुर्गममार्गनिर्गमं समस्तसंबाधमनर्थपञ्जरम् ॥ ३४३ ॥ नृपोऽपकृष्टः सचिवात्तदर्पणस्तनंधयोऽत्यन्तशिशुः स्तनादिव । अदृष्टलोकव्यवहारमूढधीर्मुहूर्तमप्युत्सहते न वर्तितुम् ॥ ३४४ ॥ व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः । प्रविश्य हि घ्नन्ति शठास्तथाविधा न संवृताङ्गान्निशिता इवेषवः ॥ ३४५ ॥ क्रतौ विवाहे व्यसने रिपुक्षये यशस्करे कर्मणि मित्रसंग्रहे । प्रियासु नारीष्वधनेषु बन्धुषु धनव्ययस्तेषु न गण्यते बुधैः ॥ ३४६ ॥ परं विनीतत्वमुपैति सेवया महीपतीनां विनयो हि भूषणम् । प्रवृत्तदानो मृदु संचरत्करः करीव भद्रो विनयेन शोभते ॥ ३४७ ॥ यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम् । अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः क्रियेत ॥ ३४८ ॥ आसन्नमेव नृपतिर्भजते मनुष्यं विद्याविहीनमकुलीनमसंगतं वा । प्रायेण भूमिपतयः प्रमदा लताश्च यः पार्श्वतो भवति तं परिवेष्टयन्ति ॥ ३४९ ॥ सत्यानृता च परुषा प्रियवादिनी च हिंस्रा दयालुरपि चार्थपरा वदान्या । नित्यव्यया प्रचुरनित्यधनागमा च वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ ३५० ॥ सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः संभावनागुणमवेहितमीश्वराणाम् । किं प्राभविष्यदरुणस्तमसां वधाय तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ३५१ ॥ तातार्यमन्त्रिसुतसोदरपण्डितानां नित्यं भजन्ति विभजीकृतभव्यभोगान् । तस्मात्कदाचन रहस्यपि तद्विधानामाज्ञा विभज्य न दिशन्ति महीं महीशाः ॥ ३५२ ॥ नरपतिहितकर्ता द्वेष्यतां याति लोके जनपदहितकर्ता त्यज्यते पार्थिवेन । इति महति विरोधे विद्यमाने समाने नृपतिजनपदानां दुर्लभः कार्यकर्ता ॥३५३॥ नियतविषयवर्ती प्रायशो दण्डयोगाज्जगति परवशेऽस्मिन्दुर्लभः साधुवृत्तः । कृशमपि विकलं वा व्याधित वाधनं वा पतिमिव कुलनारी दण्डभीत्याभ्युपैति ॥३५४ ॥ नृपः कामासक्तो गणयति न कार्यं न च

१ "सहाया साधनोपाया विभागो देशकालयो । विनिपातप्रतीकार. सिद्धि पञ्चाङ्ग इष्यते" इति २. कर्कशा. ३ घातुका. ४. दानशौण्डा ५ भृत्या ६. राज्ञाम्. ७. सूर्यसारथि' ८ सूर्य.

हितं यथेच्छं स्वच्छन्दश्चरति किल मत्तो गज इव । ततो मानध्मातः पतति तु यदा शोकगहने तदा भृत्ये दोषान्क्षिपति न निजं वेत्त्यविनयम् ॥३५५॥ अवज्ञानात्प्राज्ञो भवति मतिहीनः परिजनस्ततस्तत्प्रामाण्याद्भवति न समीपे बुधजनः । बुधैस्त्यक्ते राज्ये न हि भवति नीतिर्गुणवती विपन्नायां नीतौ सकलमवशं सीदति जगत् ॥ ३५६ ॥ अयुक्तं युक्तं वा यदभिहितमज्ञेन विभुना स्तुयादेतन्नित्यं जडमपि गुरुं तस्य विनुयात् । विवत्सुर्नैस्पृह्यं कथमपि सभायामभिनयेत्स्वकार्यं संतुष्टे क्षितिभृति रहस्येव कथयेत् ॥ ३५७ ॥ मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना मुहुः संपूर्णाङ्गी मुहुरतिकृशा कार्यवशतः । मुहुर्भ्रश्यद्बीजा मुहुरपि बहुप्रापितफलेत्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ॥ ३५८ ॥ इच्छेद्यस्तु सुखं निवस्तुमवनौ गच्छेत्स राज्ञः सभां कल्याणीं गिरमेव संसदि वदेत्कार्यं विदध्यात्कृती । अक्लेशाद्धनमर्जयेदधिपतेरावर्जयेद्वल्लभान्कुर्वीतोपकृतिं जनस्य जनयेत्कस्यापि नापक्रियाम् ॥ ३५९ ॥ अज्ञो वा यदि वा विपर्ययगते ज्ञानेऽथ संदेहभृद्दृष्टादृष्टविरोधि कर्म कुरुते यस्तस्य गोप्ता गुरुः । निःसंदेहविपर्यये सति पुनर्ज्ञाने विरुद्धक्रियं राजा चेत्पुरुषं न शास्ति तदयं प्राप्तः प्रजाविप्लवः ॥३६०॥ सूचीमात्रविभेदसंभ्रमगुणः क्षोणीशवामभ्रुवामुत्तुङ्गस्तनमण्डलेषु लभते लीलारतिं कञ्चुकः । नाराचैर्निबिडैर्विभिन्नवपुषां पुंसां महायोधने स्वर्गस्त्रीकुचकुम्भसंभ्रमपरीरम्भः कथं दुर्लभः ॥ ३६१ ॥ एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा तं मोहाच्छ्रयते मदः स च मदालस्येन निर्भिद्यते । निर्भिन्नस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणान्तिकं द्रुह्यति ॥ ३६२ ॥ ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया । भर्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया भक्त्या कार्यधुरां वहन्ति कृतिनस्ते दुर्लभास्तादृशाः ॥३६३ ॥ धर्मः प्रागेव चिन्त्यः सचिवमतिगतिर्भावनीया सदैव ज्ञेया लोकानुवृत्तिर्वरचरनयनैर्मण्डलं वीक्षणीयम् । प्रच्छाद्यौ रागरोषौ मृदुपरुषयुतौ वर्जनीयौ च काले स्वात्मा यत्नेन रक्ष्यो रणशिरसि पुनः सोऽपि नापेक्षणीयः ॥ ३६४ ॥ कोऽहं कौ देशकालौ समविषमगुणाः केऽरयः के सहायाः का शक्तिः कोऽभ्युपायः फलमिह च कियत्कीदृशी दैवसंपत् । संपत्तौ को निबन्धः प्रविदितवचनस्योत्तरं किं नु मे स्यादित्येवं कार्यसिद्धाववहितमनसो हस्तगाः संपदः स्युः ॥ ३६५ ॥

---

## सामान्यनीतिः ।

अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते । स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति

१. उक्तम् २. तद्गुरो स्तवन कुर्यात्. ३ निस्पृहताम्. ४. अभिनयपूर्वक दर्शयेत् ५. एकान्ते. ६. पृथिव्याम् ७. मनोज्ञाम्. ८. सभायाम्. ९. प्रियान्. १०. अपकारम्.

॥ १ ॥ प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः। किं नु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥ २ ॥ सद्भिरेव सहासीत सद्भिः कुर्वीत संगतिम्। सद्भिर्विवादं मैत्रीं च नासद्भिः किंचिदाचरेत् ॥ ३ ॥ न द्विषन्ति न याचन्ते परनिन्दां न कुर्वते। अनाहूता न चायान्ति तेनाश्मानोऽपि देवताः ॥ ४ ॥ पठतो नास्ति मूर्खत्वं जपतो नास्ति पातकम्। मौनिनः कलहो नास्ति न भयं चास्ति जाग्रतः ॥ ५ ॥ गतेऽपि वयसि ग्राह्या विद्या सर्वात्मना बुधैः। यद्यपि स्यान्न फलदा सुलभा सान्यजन्मनि ॥ ६ ॥ यस्य चाप्रियमन्विच्छेत्तस्य कुर्यात्सदा प्रियम्। व्याधा मृगवधं कर्तुं सम्यग्गायन्ति सुस्वरम् ॥ ७ ॥ प्रहरिष्यन्प्रियं ब्रूयात्प्रहृत्यापि प्रियोत्तरम्। अपि चास्य शिरश्छित्त्वा रुद्याच्छोचेत्तथापि च ॥ ८ ॥ सुमन्त्रिते सुविक्रान्ते सुकृते सुविचारिते। प्रारम्भे कृतबुद्धीनां सिद्धिरव्यभिचारिणी ॥ ९ ॥ नालसाः प्राप्नुवन्त्यर्थान्न शठा न च मायिनः। न च लोकरवाद्भीता न च संपत्प्रतीक्षिणः ॥ १० ॥ नोदन्वानर्थितामेति सदाम्भोभिः प्रपूर्यते। आत्मानुपात्रतां नेयः पात्रमायान्ति संपदः ॥ ११ ॥ काकतालीययोगेन यदनात्मवती क्षणम्। करोति प्रणयं लक्ष्मीस्तदस्याः स्त्रीत्वचापलम् ॥ १२ ॥ यो यमर्थं प्रार्थयते यदर्थं घटतेऽपि च। अवश्यं तदवाप्नोति न चेच्छान्तो निवर्तते ॥ १३ ॥ केचिदज्ञानतो नष्टाः केचिन्नष्टाः प्रमादतः। केचिज्ज्ञानावलेपेन केचिन्नष्टैस्तु नाशिताः ॥ १४ ॥ मित्रस्वजनबन्धूनां बुद्धेर्धैर्यस्य चात्मनः। आपन्निकषपाषाणे नरो जानाति सारताम् ॥ १५ ॥ दुःस्थैरपि निजैरेव प्रावृतं सर्वमुत्तमम्। वृत्तं जीर्णाम्बरे वापि हट्टे कर्पटमर्हति ॥ १६ ॥ चिन्तनीया हि विपदामादावेव प्रतिक्रियाः। न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ १७ ॥ वरं दारिद्र्यमन्यायप्रभवाद्विभवादिह। कृशताभिमता देहे पीनता न तु शोभते ॥ १८ ॥ अपरीक्ष्य न कर्तव्यं कर्तव्यं सुपरीक्षितम्। पश्चाद्भवति संतापो ब्राह्मणी नकुले यथा ॥ १९ ॥ स्त्री विनश्यति रूपेण ब्राह्मणो राजसेवया। गावो दूरप्रचारेण हिरण्यं लोभलिप्सया ॥ २० ॥ अतिदानाद्बलिर्बद्धो ह्यतिमानात्सुयोधनः। विनष्टो रावणो लौल्यादति सर्वत्र वर्जयेत् ॥ २१ ॥ धनमस्तीति वाणिज्यं किंचिदस्तीति कर्षणम्। सेवा न किंचिदस्तीति भिक्षा नैव च नैव च ॥ २२ ॥ स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः। हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ॥ २३ ॥ जानन्ति पशवो गन्धाद्वेदाज्जानन्ति पण्डिताः। चाराज्जानन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ २४ ॥ युक्तियुक्तं प्रगृह्णीयाद्बालादपि विचक्षणः। रवेरविषये वस्तु किं न दीपः प्रकाशयेत् ॥ २५ ॥ वृथा वृष्टिः समुद्रेषु वृथा तृप्तस्य भोजनम्। वृथा दानं समर्थस्य वृथा दीपो दिवापि च ॥ २६ ॥ अजायुद्धमृषिश्राद्धं प्रभाते मेघडम्बरम्। दंपत्योः कलहश्चैव परिणामे न किंचन ॥ २७ ॥ अर्थनाशं मनस्तापं गृहे दुश्चरितानि च। वञ्चनं चापमानं च मतिमान्न प्रकाशयेत् ॥ २८ ॥ अव्यक्तिकं

१. वृद्धत्वेऽपि.

त्यजेद्देशं वृत्तिं सोपद्रवां त्यजेत् । त्यजेन्मायाविनं मित्रं धनं प्राणहरं त्यजेत् ॥ २९ ॥ सौहृदेन परित्यक्तं निःस्नेहं खलवत्त्यजेत् । सोदरं भ्रातरमपि किमुतान्यं वृथाजनम् ॥३०॥ यन्निमित्तं भवेच्छोको दुःखं वा त्रास एव च । आयासो वा यतः शूलस्तदेकाङ्गमपि त्यजेत् ॥ ३१ ॥ त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे ह्यात्मार्थे पृथिवीं त्यजेत् ॥ ३२ ॥ न गणस्याग्रतो गच्छेत्सिद्धे कार्ये समं फलम् । यदि कार्यविपत्तिः स्यान्मुखरस्तत्र हन्यते ॥ ३३ ॥ धनिकः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः । पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥ ३४ ॥ चलत्येकेन पादेन तिष्ठत्येकेन पण्डितः । नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ ३५ ॥ अनायके न वस्तव्यं न वसेद्बहुनायके । स्त्रीनायके न वस्तव्यं न वसेद्बालनायके ॥ ३६ ॥ सर्वथा संत्यजेद्वादं न किंचिन्मर्मणि स्पृशेत् । सर्वान्परित्यजेदर्थान्स्वाध्यायस्य विरोधतः ॥ ३७ ॥ अनभिध्या परस्वेषु सर्वसत्त्वेषु सौहृदम् । कर्मणां फलमस्तीति मनसा त्रितयं चरेत् ॥ ३८ ॥ प्राणातिपातः स्तैन्यं च परदाराभिमर्शणम् । त्रीणि पापानि कायेन नित्यशः परिवर्जयेत् ॥ ३९ ॥ न कश्चिदपि जानाति किं कस्य श्वो भविष्यति । अतः श्वः करणीयानि कुर्यादद्यैव बुद्धिमान् ॥ ४० ॥ अनेन मर्त्यदेहेन यल्लोकद्वयशर्मदम् । विचिन्त्य तदनुष्ठेयं कर्म हेयं ततोऽन्यथा ॥ ४१ ॥ उपकारः परो धर्मः परार्थं कर्म नैपुणम् । पात्रे दानं परः कामः परो मोक्षो वितृष्णता ॥ ४२ ॥ अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु संचयम् । अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ ४३ ॥ परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित् । न हीदृशमनायुष्यं त्रिषु लोकेषु विद्यते ॥ ४४ ॥ मात्रा स्वस्रा दुहित्रा वा नैकशय्यासनो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ ४५ ॥ परदारपरद्रव्यपरद्रोहपराङ्मुखः । गङ्गा ब्रूते कदागत्य मामयं पावयिष्यति ॥ ४६ ॥ ब्रह्महत्यासुरापानं स्तेयं च गुरुतल्पगः । महान्ति पातकान्याहुस्तत्संसर्गी च पञ्चमः ॥ ४७ ॥ स्त्रीबालस्वामिमित्रघ्नो गोघ्नो विश्वासघातकः । सुरापो ब्रह्महा चोरो यान्त्येते सर्वनारकान् ॥ ४८ ॥ अकृतज्ञमकार्यं च दीर्घरोषमनार्जवम् । चतुर्विधा हि चाण्डाला जन्मना सह पञ्चमः ॥ ४९ ॥ कूटसाक्षी मृषावादी यश्चासदनुशास्ति वै । ते मोहमृत्यवः सर्वे तथा ये वेदनिन्दकाः ॥ ५० ॥ सर्वे यत्र विनेतारः सर्वे पण्डितमानिनः । सर्वे महत्त्वमिच्छन्ति तद्बृन्दमवसीदति ॥५१॥ घटं भिन्द्यात्पटं छिन्द्यात्कुर्याद्रासभरोहणम् । येन केन प्रकारेण प्रसिद्धः पुरुषो भवेत् ॥५२॥ न हीदृशं संवलनं त्रिषु लोकेषु विद्यते । दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥५३॥ विवादो धनसंबन्धो याचनं स्त्रीषु संगतिः । आदानमग्रतः स्थायि मैत्रीभङ्गस्य हेतवः ॥५४॥ दर्शितानि कलत्राणि गृहे भुक्तमशङ्कितम् । कथितानि रहस्यानि सौहृदं किमतःपरम् ॥५५॥ दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते । भिन्नश्लिष्टा तु या प्रीतिः सा दुःखैकप्रदायिनी॥५६॥ययोरेव समं वित्तं ययोरेव समं

कुलम्। तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥ ५७ ॥ दाने तपसि शौर्ये च यस्य न प्रथितं यशः। विद्यायामर्थलाभे वा तस्य जन्म निरर्थकम् ॥ ५८ ॥ उत्तमा आत्मना ख्याताः पितुः ख्याताश्च मध्यमाः। अधमा मातुलात्ख्याताः श्वशुराच्चाधमाधमाः ॥ ५९ ॥ ऋणशेषश्चाग्निशेषः शत्रुशेषस्तथैव च। पुनः पुनः प्रवर्तन्ते तस्माच्छेषं न रक्षयेत्॥ ६० ॥ कुभोज्येन दिनं नष्टं कुकलत्रेण शर्वरी। कुपुत्रेण कुलं नष्टं तन्नष्टं यन्न दीयते ॥ ६१ ॥ वर्वरश्च तपस्वी स्याच्छूरश्चाप्यकृतव्रणः। मद्यपा स्त्री सती राजन्निति न श्रद्दधामहे ॥६२॥ नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः। नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥ ६३ ॥ सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः। तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ ६४ ॥ व्रजत्यधः प्रयात्युच्चैर्नरः स्वैरेव चेष्टितैः। अधः कूपस्य खनक ऊर्ध्वं प्रासादकारकः ॥ ६५ ॥ कुर्यान्न परदारेच्छां विश्वासं स्त्रीषु वर्जयेत्। हतो दशास्यः सीतार्थी हतः पत्न्या विदूरथः ॥ ६६ ॥ न मद्यव्यसने क्षीबः कुर्याद्वार्ताविपल्लवम्। वृष्णयो हि ययुः क्षीबास्तृणैः प्रहरणैः क्षयम् ॥ ६७ ॥ दानं सत्त्वाश्रितं कुर्यान्न पश्चात्तापवान्भवेत्। वलिनात्मार्थितो वन्धे दानशेषस्य शुद्धये ॥ ६८ ॥ न स्त्रीजितः प्रमूढः स्याद्गाढरागवशीकृतः। पुत्रशोकाद्दशरथो जीवं जायाजितोऽत्यजत् ॥६९॥ क्षिपेद्वाक्यशरान्घोरान्न पारुष्यविषप्लुतान्। वाक्पारुष्यरुषा चक्रे भीमः कुरुकुलक्षयम् ॥ ७० ॥ परेषां क्लेशदं कुर्यान्न पैशून्यं प्रभुप्रियम्। पैशून्येन गतौ राहोश्चन्द्रार्कौ भक्षणीयताम् ॥ ७१॥ कुर्यान्नीचजनाभ्यस्तां न याच्ञां मानहारिणीम्। बलिप्रार्थनया प्राप लघुतां पुरुषोत्तमः ॥ ७२ ॥ वक्रैः क्रूरतरैर्लुब्धैर्न कुर्यात्प्रीतिसंगतिम्। वसिष्ठस्याहरद्धेनुं विश्वामित्रो निमन्त्रितः ॥ ७३ ॥ तीव्रे तपसि लीनानामिन्द्रियाणां न विश्वसेत्। विश्वामित्रोऽपि सोत्कण्ठं कण्ठे जग्राह मेनकाम् ॥ ७४ ॥ भक्तं रक्तं सदासक्त मिर्दोषं न परित्यजेत्। रामस्त्यक्त्वा सती सीतां शोकशल्याकुलोऽभवत् ॥७५ ॥ वर्जयेदिन्द्रियजयैर्निर्जने जननीमपि। पुत्रीकृतोऽपि प्रद्युम्नः कामितः शम्बरस्त्रिया ॥ ७६ ॥ प्रभुप्रसादे विश्वास न कुर्यात्स्वप्नसंनिभे। नन्देन मन्त्री निक्षिप्तः शकटारोपिवन्धने ॥ ७७ ॥ अप्युन्नतपदारूढः पूज्यान्नैवापमानयेत्। नहुषः शक्रतां प्राप्य च्युतोऽगस्त्यावमाननात् ॥ ७८ ॥ हितोपदेशं शृणुयात्कुर्वीत च यथोदितम्। विदुरोक्तमकृत्वाभूत्कौरवः शोकशल्यभाक् ॥ ७९ ॥ न पुत्रायत्तमैश्वर्यं कुर्यादार्यः कथंचन। पुत्रार्पितप्रभुत्वोऽभूद्धृतराष्ट्रस्तृणोपमः ॥८०॥ श्रुतिस्मृत्युक्तमाचारं न त्यजेत्साधुसेवितम्। दैत्यानां श्रीवियोगोऽभूत्सत्यधर्मक्रियामुचाम् ॥८१॥ नदीनां च नखीनां च शृङ्गिणां शस्त्रपाणिनाम्। विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ॥ ८२ ॥ न कुर्यादभिचारोग्रवश्यादिकुहकक्रियाम्। लक्ष्मणेनेन्द्रजित्कृत्याभिचारसमये

---

१. मत्तः.

हतः ॥८३॥ व्याकुलोऽपि विपत्पातैः स्मरेद्विष्णुं सदा हृदि । शरतल्पगतो भीष्मः सस्मार गरुडध्वजम् ॥ ८४ ॥ चिन्ता जरा मनुष्याणामनध्वा वाजिनां जरा । असंभोगो जरा स्त्रीणां वस्त्राणामातपो जरा ॥ ८५ ॥ प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः । तस्मात्तदेव वक्तव्यं वचने का दरिद्रता ॥ ८६ ॥ पञ्चभिः सह गन्तव्यं स्थातव्यं पञ्चभिः सह । पञ्चभिः सह वक्तव्यं न दुःखं पञ्चभिः सह ॥ ८७ ॥ यान्ति न्यायप्रवृत्तस्य[1] तिर्यञ्चो[2]ऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥८८॥ विद्याभ्यासो विचारश्च समयोरेव शोभते । विवाहश्च विवादश्च समयोरेव शोभते ॥८९॥ लक्ष्मीर्वसति जिह्वाग्रे जिह्वाग्रे मित्रबान्धवाः । जिह्वाग्रे बन्धनं प्राप्तं जिह्वाग्रे मरणं ध्रुवम् ॥९०॥ यस्मिन्देशे न संमानो न प्रीतिर्न च बान्धवाः । न च विद्यागमः कश्चिन्न तत्र दिवसं वसेत् ॥ ९१ ॥ वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः । अथैवमागते काले भिन्द्याद्घटमिवाश्मनि ॥ ९२ ॥ सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः । अर्धेन कुरुते कार्यं सर्वनाशो न जायते ॥ ९३ ॥ मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च । द्विषतां संप्रयोगेण पण्डितोऽप्यवसीदति ॥ ९४ ॥ मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च । चतुर्णामपि चैतेषां निष्कृतिर्नैव विश्रुता ॥९५॥ गतश्रीर्गणकान्द्वेष्टि गतायुश्च चिकित्सकान् । गतश्रीश्च गतायुश्च ब्राह्मणान्द्वेष्टि भारत ॥९६॥ आत्मबुद्धिः सुखायैव गुरुबुद्धिर्विशेषतः । परबुद्धिर्विनाशाय स्त्रीबुद्धिः प्रलयावहा ॥९७॥ विस्मयः सर्वथा हेयः[3] प्रत्यूहः[4] सर्वकर्मणाम् । तस्माद्विस्मयमुत्सृज्य साध्यसिद्धिर्विधीयताम् ॥ ९८ ॥ विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् । नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ ९९ ॥ लुब्धमर्थेन गृह्णीयात्क्रुद्धमञ्जलिकर्मणा । मूर्खं छन्दानुवृत्त्या च तत्त्वार्थेन च पण्डितम् ॥ १०० ॥ जानीयात्संगरे भृत्यान्बान्धवान्व्यसनागमे । आपत्कालेषु मित्राणि भार्यां च विभवक्षये ॥ १०१ ॥ खरं श्वानं गजं मत्तं रण्डां च बहुभाषिणीम् । राजपुत्रं कुमित्रं च दूरतः परिवर्जयेत् ॥ १०२ ॥ दूरस्थं जलमध्यस्थं धावन्तं धनगर्वितम् । क्रोधवन्तं मदोन्मत्तं नमस्कारोऽपि वर्जयेत् ॥ १०३ ॥ पिपीलिकार्जितं धान्यं मक्षिकासंचितं मधु । लुब्धेन संचितं द्रव्यं समूलं च विनश्यति ॥ १०४ ॥ न सारणीया धीरेण रसना नीरसे जने । को नाम कुरुते फेरौ नायकः सायकक्षतिम् ॥ १०५ ॥ धातुवादेन वित्ताशा मोक्षाशा कौलिके मते । जामातरि च पुत्राशा त्रयमेतन्निरर्थकम् ॥ १०६ ॥ द्वाविमौ पुरुषौ लोके सुखिनौ न कदाचन । यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरम् ॥ १०७ ॥ द्वाविमौ पुरुषौ लोके परप्रत्ययकारकौ । स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः ॥ १०८ ॥ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥१०९॥ द्वाविमौ पुरुषौ लोके स्वर्गस्योपरि तिष्ठतः । प्रभुश्च क्षमया युक्तो

1. न्यायमार्गानुसारिण 2. तिर्यग्जातीया.. पशव इत्यर्थः. 3. त्याज्यः. 4. विघ्नरूपः.

दरिद्रश्च प्रदानवान् ॥११०॥ द्वाविमौ पुरुषौ लोके न भूतौ न भविष्यतः । प्रार्थितं यश्च कुरुते यश्च नार्थयते परम् ॥ १११ ॥ द्वाविमौ पुरुषौ लोके शिरःशूलकरावुभौ । गृहस्थश्च निरारम्भो यतिश्च सपरिग्रहः ॥ ११२ ॥ शत्रुर्दहति संयोगे वियोगे मित्रमप्यहो । उभयोर्दुःखदायित्व को भेदः शत्रुमित्रयोः ॥ ११३ ॥ दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः । ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ ११४ ॥ ददतो युध्यमानस्य पठतः पुलको न चेत् । आत्मनश्च परेषां च धिक्त्यागं पौरुषं श्रुतम् ॥ ११५ ॥ न तद्भुक्तं न तत्पीतं न तत्सुप्तं न तद्गतम् । यन्मांसमाहिषक्षीरललनावाजिवर्जितम् ॥ ११६ ॥ निःसारस्य पदार्थस्य प्रायेणाडम्बरो महान् । न सुवर्णे ध्वनिस्तादृग्यादृक्कांस्ये प्रजायते ॥ ११७ ॥ मासि मासि समा ज्योत्स्ना पक्षयोरुभयोरपि । तत्रैकः शुक्लपक्षोऽभूद्यशः पुण्यैरवाप्यते ॥ ११८ ॥ मत्स्यादयोऽपि जानन्ति नीरक्षीरविवेचनम् । प्रसिद्धिरेव हंसस्य यशः पुण्यैरवाप्यते ॥ ११९ ॥ पञ्चभिः कामिता कुन्ती तद्वधूरथ पञ्चभिः । सतीं वदति लोकोऽयं यशः पुण्यैरवाप्यते ॥ १२० ॥ सौभाग्यं विरलस्य स्यात्समकर्णगुणेष्वपि । षड्विंशदायुधा पृथ्वी खड्गायत्तेव दृश्यते ॥ १२१ ॥ हस्तादपि न दातव्यं गृहादपि न दीयते । परोपकरणार्थाय वचने किं दरिद्रता ॥ १२२ ॥ वनानि दहतो वह्नेः सखा भवति मारुतः । स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ १२३ ॥ भोज्यं भोजनशक्तिश्च रतिशक्तिर्वरास्त्रियः । विभवो दानशक्तिश्च नाल्पस्य तपसः फलम् ॥ १२४ ॥ जानन्ति हि गुणान्वक्तुं तद्विधा एव तादृशाम् । वेत्ति विश्वंभरा भारं गिरीणां गरिमाश्रयम् ॥ १२५ ॥ जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः । दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥१२६॥ अत्यासन्ना विनाशाय दूरतश्च फलप्रदाः । मध्यभावेन सेव्यन्ते राजा वह्निर्गुरुः स्त्रियः ॥ १२७ ॥ अमृतं दुर्लभं नृणां देवानामुदकं तथा । पितॄणां दुर्लभः पुत्रस्तक्रं शक्रस्य दुर्लभम् ॥ १२८ ॥ शनैः पन्थाः शनैः कन्था शनैः पर्वतमस्तके । शनैर्विद्या शनैर्वित्तं पञ्चैतानि शनैः शनैः ॥ १२९ ॥ अन्वयागतविद्यानामन्वयागतसंपदाम् । विदुषां च प्रभूणां च हृदयं नावलिप्यते ॥ १३० ॥ मक्षिका मशको वेश्या मूषिको याचकस्तथा । ग्रामणीर्गणकश्चैव सप्तैते परभक्षकाः ॥ १३१ ॥ अकृतोपद्रवः कश्चिन्महानपि न पूज्यते । अर्चयन्ति नरा नागं न तार्क्ष्यं न गजादिकम् ॥ १३२ ॥ शोभन्ते विद्यया विप्राः क्षत्रिया विजयश्रिया । श्रियोऽनुकूलदानेन लज्जया च कुलाङ्गनाः ॥ १३३ ॥ ब्राह्मणा गणका वेश्याः सारमेयाश्च कुक्कुटाः । दृष्ट्वान्येषु कुप्यन्ति न जाने तस्य कारणम् ॥ १३४ ॥

---

१. मित्रभाव २ पञ्चसु वाक्येषु अतिवाह्यते सिध्यति आरोहति प्राप्यते वर्धते इति पञ्चक्रियाध्याहारः. ३ मार्गातिवाहनादीनि. ४ एतानि त्वरया न भवन्तीत्यर्थः. ५ वंशपरंपरागतविद्यानाम् ६. सगर्वं न भवति. ७. कुलस्त्रियः. ८ श्वान

पुत्रपौत्रवधूभृत्यैः संपूर्णमपि सर्वदा । भार्याहीनगृहस्थस्य शून्यमेव गृहं मतम् ॥ १३५ ॥ एकं दृष्ट्वा शतं दृष्ट्वा दृष्ट्वा पञ्चशतान्यपि । अतिलोभो न कर्तव्यश्चक्रं भ्रमति मस्तके ॥ १३६ ॥ अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा । तदिदं देहि देहीति विपरीतमुपस्थितम् ॥ १३७ ॥ नवे वयसि यः शान्तः स शान्त इति मे मतिः । धातुषु क्षीयमाणेषु शान्तिः कस्य न जायते ॥१३८॥ धिग्गृहं गृहिणीशून्यं धिक्कलत्रमपुत्रकम् । धिक्पुत्रमविनीतं च धिग्ज्योतिषमजातकम् ॥१३९॥ अश्वं नैव गजं नैव व्याघ्रं नैव च नवै च। अजापुत्रं वलिं दद्याद्देवो दुर्वलघातकः ॥१४०॥ दुर्मन्त्री राज्यनाशाय ग्रामनाशाय कुञ्जरः। श्यालको गृहनाशाय सर्वनाशाय मातुलः ॥१४१॥ जले तैलं खले गुह्यं पात्रे दानं मनागपि[1]। प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः[2] ॥ १४२ ॥ उद्योगः कलहः कण्डूर्द्यूतं मद्यं परस्त्रियः । आहारो मैथुनं निद्रा सेवनात्तु विवर्धते ॥ १४३ ॥ कृतार्थः स्वामिनं द्वेष्टि कृतदारस्तु[3] मातरम् । जातापत्या पतिं द्वेष्टि गतरोगश्चिकित्सकम् ॥ १४४ ॥ चक्षुःपूतं न्यसेत्पादं वस्त्रपूतं जलं पिवेत् । सत्यपूतं वदेद्वाणीं मनःपूतं समाचरेत् ॥ १४५ ॥ नास्ति यज्ञः स्त्रियः किंचिन्न व्रतं नोपवासकम् । या तु भर्तरि शुश्रूषा तया स्वर्गं जयत्यसौ ॥ १४६ ॥ शुचिर्भूमिगतं तोयं शुचिर्नारी पतिव्रता । शुचिः क्षेमकरो राजा संतोषी ब्राह्मणः शुचिः ॥ १४७ ॥ नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने । वत्सोऽपि स्तनपाने स्याच्छ्वा मृगग्रहणे शुचिः ॥ १४८ ॥ भर्ता देवो गुरुर्भर्ता धर्मतीर्थव्रतानि च । तस्मात्सर्वं परित्यज्य पतिमेकं भजेत्सती ॥ १४९ ॥ असारे खलु संसारे सारमेतच्चतुष्टयम् । काश्यां वासः सतां सङ्गो गङ्गाम्भः शंभुसेवनम् ॥ १५० ॥ उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् । विरक्तस्य तृणं भार्या निःस्पृहस्य तृणं जगत् ॥ १५१ ॥ क्षान्तितुल्यं[5] तपो नास्ति न तोषात्परमं सुखम् । नास्ति तृष्णापरो व्याधिर्न च धर्मो दयापरः ॥ १५२ ॥ सप्तैतानि न पूर्यन्ते पूर्यमाणान्यनेकशः । ब्राह्मणोऽग्निर्यमो राजा पयोधिरुदरं गृहम् ॥ १५३ ॥ कल्पान्तवातसंक्षोभलङ्घिताशेषभूभृतः । स्थैर्यप्रसादमर्यादास्ता एव हि महोदधेः ॥ १५४ ॥ संपत्सरस्वती सत्यं संतानं सदनुग्रहः । सत्ता सुकृतसंभारः सकाराः सप्त दुर्लभाः ॥ १५५ ॥ अभ्रच्छाया खलप्रीतिर्नवसस्यानि योषितः । किंचित्कालोपभोग्यानि यौवनानि धनानि च ॥ १५६ ॥ परोऽपि हितवान्बन्धुर्बन्धुरप्यहितः परः । अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ १५७ ॥ जलविन्दुनिपातेन क्रमशः पूर्यते घटः । स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥ १५८ ॥ सौवर्णानि सरोजानि निर्मातुं सन्ति शिल्पिनः । तत्र सौरभनिर्माणे चतुरश्चतुराननः ॥ १५९ ॥ साक्षरं पुरुषं दृष्ट्वा यो नरो नाभिमन्यते । वलीवर्दसमो लोके खुरशृङ्गविवर्जितः ॥ १६० ॥ को न याति वशं लोके मुखे

१ स्वल्पमपि २ वस्तुमाहात्म्यने ३ कृता दारा स्त्री येन स ४. वैद्यम् ५ क्षमा.

पिण्डेन पूरितः। मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ १६१ ॥ लुब्धानां याचकः शत्रुश्चोराणां चन्द्रमा रिपुः। जारस्त्रीणां पतिः शत्रुर्मूर्खाणां बोधको रिपुः ॥ १६२ ॥ अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम्। अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ॥ १६३ ॥ परोपदेशवेलायां शिष्टाः सर्वे भवन्ति वै। विस्मरन्तीह शिष्टत्वं स्वकार्ये समुपस्थिते ॥ १६४ ॥ गुणिनां निर्गुणानां च दृश्यते महदन्तरम्। हारः कण्ठगतः स्त्रीणां नूपुराणि च पादयोः ॥ १६५ ॥ अलभ्यं लब्धुकामस्य जनस्य गतिरीदृशी। अलभ्येषु मनस्तापः संचितार्थो विनश्यति ॥ १६६ ॥ शत्रुवाक्यामृतं श्रुत्वा तेन सौहार्दमार्जवम्। न हि धीरेण कर्तव्यमात्मनः शुभमिच्छता ॥ १६७॥ शूरश्च कृतविद्यश्च रूपवत्यश्च योषितः। यत्र यत्र गमिष्यन्ति तत्र तत्र कृतादराः ॥ १६८ ॥ चत्वारो धनदायादा धर्माग्निनृपतस्कराः। तेषां ज्येष्ठावमानेन त्रयः कुप्यन्ति बान्धवाः ॥ १६९ ॥ शीलभारवती कान्ता पुष्पभारवती लता। अर्थभारवती वाणी भजते कामपि श्रियम्¹ ॥ १७० ॥ पूरोत्पीडे तडागस्य परीवाहः² प्रतिक्रिया। शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥ १७१ ॥ उपभोक्तुं न जानाति श्रियं प्राप्यापि मानवः। आकण्ठजलमग्नोऽपि श्वा लिहत्येव जिह्वया ॥१७२॥ आर्ता देवान्नमस्यन्ति तपः कुर्वन्ति रोगिणः। निर्धना दानमिच्छन्ति वृद्धा नारी पतिव्रता ॥ १७३ ॥ जामाता जठरं जाया जातवेदा जलाशयः। पूरिता नैव पूर्यन्ते जकाराः पञ्च दुर्भराः ॥ १७४ ॥ जननी जन्मभूमिश्च जाह्नवी च जनार्दनः। जनकः पञ्चमश्चैव जकाराः पञ्च दुर्लभाः ॥ १७५ ॥ सा श्रीर्यो न मदं कुर्यात्स सुखी तृष्णयोज्झितः। तन्मित्रं यस्य विश्वासः पुरुषः स जितेन्द्रियः ॥ १७६ ॥ सुलभं वस्तु सर्वस्य न यात्यादरणीयताम्। स्वदारपरिहारेण परदारार्थिनो जनाः ॥ १७७ ॥ एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम्। गतानुगतिको लोको न लोकः पारमार्थिकः ॥ १७८ ॥ क्वचिद्रुष्टः क्वचित्तुष्टो रुष्टस्तुष्टः क्षणे क्षणे। अव्यवस्थितचित्तस्य प्रसादोऽपि भयंकरः ॥ १७९ ॥ गुरुपत्न्यां निशाधीशो ब्राह्मण्यां पाकशासनः। गतः पञ्चेषुलक्ष्यत्वं का कथान्यस्य देहिनः ॥ १८० ॥ यस्मिन्रुष्टे भय नास्ति तुष्टे चैव धनागमः। निग्रहानुग्रहौ न स्तः स रुष्टः किं करिष्यति ॥ १८१ ॥ आलस्योपहता विद्या परहस्तगताः स्त्रियः। अल्पबीजं हतं क्षेत्रं हतं सैन्यमनायकम् ॥ १८२ ॥ निर्विषेणापि सर्पेण कर्तव्या महती फणा। विषमस्तु न चाप्यस्तु खटाटोपो भयंकरः ॥ १८३ ॥ एक एव पदार्थस्तु त्रिधा भवति वीक्षितः। कुणपं कामिनी मांसं योगिभिः कामिभिः श्वभिः ॥ १८४ ॥ नारी परमुखद्रष्ट्री कविरव्यवहारवित्³। अपथ्यसेवी रोगी च कियद्भिर्नोपहस्यते ॥ १८५ ॥ अन्यदा भूषणं पुंसां क्षमा लज्जेव योषिताम्। पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ १८६ ॥ सांसारिकसुखासक्तं

१ अचिन्त्याम् २. शोभाम् ३. प्रवहणम् ४ उपाय.

ब्रह्मज्ञोऽस्मीति वादिनम्। कर्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ॥ १८७ ॥ शैले शैले न माणिक्यं मौक्तिकं न गजे गजे। साधवो नहि सर्वत्र चन्दनं न वने वने ॥ १८८ ॥ प्रीतिर्लक्ष्मीर्व्ययः क्लेशः सा किं सा किं स किं स किम्। या लोभाद्या परद्रोहात्परार्थे यः परार्थकृत् ॥ १८९ ॥ मनो मधुकरो मेघो मानिनी मदनो मरुत्। मामदो मर्कटो मत्स्यो मकारा दश चञ्चलाः ॥ १९० ॥ सुवर्णपुष्पितां पृथ्वीं चिन्वन्ति पुरुषास्त्रयः। शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ १९१ ॥ यावज्जीवं सुखं जीवेदृणं कृत्वा घृतं पिबेत्। भस्मीभूतस्य जीवस्य पुनरागमनं कुतः ॥ १९२ ॥ असार एष संसारः सारं सारंगलोचनाः। तदर्थं धनमिच्छन्ति न त्यागेन धनेन किम् ॥ १९३ ॥ सत्यानुसारिणी लक्ष्मीः कीर्तिस्त्यागानुसारिणी। अभ्याससारिणी विद्या बुद्धिः कर्मानुसारिणी ॥ १९४ ॥ उपाध्यायश्च वैद्यश्च ऋतुकाले वरस्त्रियः। सूतिका दूतिका नौका कार्यान्ते ते च शष्पवत् ॥ १९५ ॥ विशाखान्ता गता मेघाः प्रसूतान्तं च यौवनम्। प्रणामान्तः सतां कोपो याचनान्तं हि गौरवम् ॥ १९६ ॥ कृतान्तपाशबद्धानां दैवोपहतचेतसाम्। बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १९७ ॥ सदयं हृदयं यस्य भाषितं सत्यभूषितम्। कायः परहितो यस्य कलिस्तस्य करोति किम् ॥ १९८ ॥ अपत्यदर्शनस्यार्थे दारानपि च या त्यजेत्। त्यजन्ति तामपि क्रूरा मातरं दारहेतवे ॥ १९९ ॥ पुत्रसूः पाककुशला पवित्रा च पतिव्रता। पद्माक्षी पञ्चभिर्नारी भुवि संयाति गौरवम् ॥ २०० ॥ दातुरुन्नतवित्तस्य गुणयुक्तस्य चार्थिनः। दुर्लभः खलु संयोगः सद्बीजक्षेत्रयोरिव ॥ २०१ ॥ आज्ञामात्रफलं राज्यं ब्रह्मचर्यफलं तपः। परिज्ञानफलं विद्या दत्तभुक्तफलं धनम् ॥ २०२ ॥ आयुर्वित्तं गृहच्छिद्रं मन्त्रमौषधमैथुने। दानं मानापमानौ च नव गोप्यानि कारयेत् ॥ २०३ ॥ अग्नौ दग्धं जले मग्नं हृतं तस्करपार्थिवैः। तत्सर्वं दानमित्याहुर्यदि क्लैब्यं न भाषते ॥ २०४ ॥ पात्रे त्यागी गुणे रागी भोगी परिजनैः सह। शास्त्रे बोद्धा रणे योद्धा पुरुषः पञ्चलक्षणः ॥ २०५ ॥ संभ्रमः स्नेहमाख्याति वपुराख्याति भोजनम्। विनयो वंशमाख्याति देशमाख्याति भाषितम् ॥ २०६ ॥ किं विद्यया किं तपसा किं योगेन श्रुतेन च। किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् ॥ २०७ ॥ यश्च मूढतमो लोके यश्च बुद्धेः परं गतः। तावुभौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥ २०८ ॥ त्यजेत्स्वामिनमत्युग्रमत्युग्रात्कृपणं त्यजेत्। कृपणादविशेषज्ञं तस्माच्च कृशनाशनम् ॥ २०९ ॥ पात्रापात्रविवेकोऽस्ति धेनुपन्नगयोरिव। तृणात्संजायते क्षीरं क्षीरात्संजायते विषम् ॥ २१० ॥ शनैर्विद्यां शनैरर्थानारोहेत्पर्वतं शनैः। शनैरध्वसु वर्तेत योजनान्न परं व्रजेत् ॥ २११ ॥ योजनानां सहस्राणि शनैर्याति पिपीलिका। अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥ २१२ ॥ द्यूतं पुस्तकवाद्ये च नाटकेषु च सक्तिता। स्त्रियस्तन्द्री च निद्रा च विद्याविघ्नकराणि षट् ॥ २१३ ॥ अतिथिर्बालकश्चैव जननी जनक-

स्तथा। पञ्चैते गृहिणः पोष्या इतरे च स्वशक्तितः ॥ २१४ ॥ गाढं गुणवती विद्या न मुदे विनयं विना। मूर्खतापि मुदे भूयान्महत्सु विनयान्विता ॥ २१५ ॥ अहो साहजिकं प्रेम दूरादपि विराजते। चकोरनयनद्वन्द्वमाल्हादयति चन्द्रमाः ॥ २१६ ॥ साक्षरा विपरीताश्चेद्राक्षसा एव केवलम्। सरसो विपरीतश्चेत्सरसत्वं न मुञ्चति ॥ २१७ ॥ यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा। परापवादसस्येभ्यो गां चरन्तीं निवारय ॥ २१८ ॥ एकस्तपो द्विरध्यायी त्रिभिर्गीतं चतुः पथम्। सप्त पञ्च कृषीणां च संग्रामो बहुभिर्जनैः ॥ २१९ ॥ काकः पक्षिषु चाण्डालः स्मृतः सर्वेषु निन्दकः। नराणां कोऽपि चाण्डालः स्मृतः सर्वेषु निन्दकः ॥ २२० ॥ दातृत्वं प्रियवक्तृत्वं धीरत्वमुचितज्ञता। अभ्यासेन न लभ्येयुश्चत्वारः सहजा गुणाः ॥ २२१ ॥ लोभमूलानि पापानि रसमूलानि व्याधयः। इष्टमूलानि शोकानि त्रीणि त्यक्त्वा सुखी भव ॥ २२२ ॥ प्रदोषे दीपकश्चन्द्रः प्रभाते दीपको रविः। त्रैलोक्ये दीपको धर्मः सुपुत्रः कुलदीपकः ॥ २२३ ॥ सुखार्थी त्यजते विद्यां विद्यार्थी त्यजते सुखम्। सुखार्थिनः कुतो विद्या विद्यार्थिनः कुतः सुखम् ॥ २२४ ॥ अन्नं दानात्परं दानं विद्यादानमतः परम्। अन्नेन क्षणिका तृप्तिर्यावज्जीवन्ति विद्यया ॥ २२५ ॥ दूरस्थाः पर्वता रम्या वेश्या च मुखमण्डने। युद्धस्य वार्ता रम्या च त्रीणि रम्याणि दूरतः ॥ २२६ ॥ माता यदि विषं दद्याद्विक्रीणाति पिता सुतम्। राजा हरति सर्वस्वं तत्र का परिदेवता ॥ २२७ ॥ अहेरिव गुणाद्भूतः परान्नाच्च विषादिव। राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छति ॥ २२८ ॥ अवज्ञात्रुटितं प्रेम न विकर्तुं क ईश्वरः। सधि न याति स्फुटितं लाक्षालेपेन मौक्तिकम् ॥ २२९ ॥ संनिकर्षोऽत्र मर्त्यानामनादरणकारणम्। गाङ्गं हित्वा यथान्याम्भस्तत्रत्यो याति शुद्धये ॥ २३० ॥ लेखनी पुस्तकं रामा परहस्ते गता गता। कदाचित्पुनरायाता भ्रष्टा मुष्टा च चुम्बिता ॥ २३१ ॥ पूर्वदत्तेषु या विद्या पूर्वदत्तेषु यद्धनम्। पूर्वदत्तेषु या भार्या अग्रे धावति धावति ॥ २३२ ॥ क्षमातुल्यं तपो नास्ति सतोषान्न पर सुखम्। न दयासदृशं ज्ञान नास्ति प्राणसमं भयम् ॥ २३३ ॥ श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम्। श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षं च विन्दति ॥ २३४ ॥ मनो धावति सर्वत्र मदोन्मत्तगजेन्द्रवत्। ज्ञानाङ्कुशसमा बुद्धिस्तस्य निश्चलते मनः ॥ २३५ ॥ इच्छेच्चेद्विपुलां मैत्रीं त्रीणि तत्र न कारयेत्। वाग्वादमर्थसंबन्धं तत्पत्नीपरिभाषणम् ॥ २३६ ॥ अयुक्तं स्वामिनो युक्तं युक्तं नीचस्य दूषणम्। अमृतं राहवे मृत्युर्विषं रुद्रस्य भूषणम् ॥ २३७ ॥ पण्डिते चैव मूर्खे च वलवत्यपि दुर्जने। ईश्वरे च दरिद्रे च मृत्योः सर्वत्र तुल्यता ॥ २३८ ॥ संग्रामे सुभटेन्द्राणां कवीनां कविमण्डले। दीप्तिर्वा दीप्तिहानिर्वा मुहूर्तादेवं जायते ॥ २३९ ॥ विषस्य विषयाणां हि दृश्यते महदन्तरम्। उपभुक्तं विषं हन्ति विषयः स्मरणादपि ॥ २४० ॥ पुराणान्ते श्मशा-

नान्ते मैथुनान्ते च या मतिः । सा मतिः सर्वदा चेत्स्यात्को न मुच्येत बन्धनात् ॥२४१॥ आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम् । गर्भस्थं केतकीपुष्पमामोदेनैव षट्पदाः ॥ २४२ ॥ न ज्ञातुं नाप्यनुज्ञातुं नेक्षितुं नाप्युपेक्षितुम् । स्वजनः स्वजने जातं विपत्पातं समीहते ॥२४३॥ प्रायो दुरन्तपर्यन्ताः संपदोऽपि दुरात्मनाम् । भवन्ति हि सुखोदर्का विपदोऽपि महात्मनाम् ॥ २४४ ॥ उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते । चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका ॥ २४५ ॥ अकाण्डपातजातानामार्द्राणां मर्मभेदिनाम् । गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ २४६ ॥ अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा । निमित्तादपराद्धेषोर्धानुष्कस्येव वल्गितम् ॥ २४७ ॥ शंभुः श्वेतार्कपुष्पेण चन्द्रमा वस्त्रतन्तुना । अच्युतः स्मृतिमात्रेण साधवः करसंपुटैः ॥ २४८ ॥ अकृत्वा पौरुषं या श्रीर्विकासिन्यपि किं तया । जरद्गवोऽपि चाश्नाति दैवादुपगतं तृणम् ॥ २४९ ॥ मन्दाकिनीपयःपानं मन्दाक्षीमुखचुम्बनम् । मन्दरोपवनक्रीडा मन्दानुष्ठानतः कुतः ॥ २५० ॥ दीपो भक्षयते ध्वान्तं कज्जलं च प्रसूयते । यदन्नं भक्षयेन्नित्यं जायते तादृशी प्रजा ॥२५१॥ मौनं कालविलम्बश्च प्रयाणं भूमिदर्शनम् । भ्रुकुट्यन्यमुखी वार्ता नकारः षड्विधः स्मृतः ॥२५२॥ अक्षराणि परीक्ष्यन्तामम्बराडम्बरेण किम् । शंभुरम्बरहीनोऽपि सर्वज्ञः किं न जायते ॥ २५३ ॥ दोषोऽपि गुणतां याति प्रभोर्भवति चेत्कृपा । अङ्गहीनोऽपि सूर्येण सारथ्ये योजितोऽरुणः ॥ २५४ ॥ उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् । नीचमल्पप्रदानेन इष्टं धर्मेण योजयेत् ॥ २५५ ॥ अकुले पतितो राजा मूर्खपुत्रो हि पण्डितः । निर्धनस्य धनप्राप्तिस्तृणवन्मन्यते जगत् ॥ २५६ ॥ लोकेषु निर्धनो दुःखी ऋणग्रस्तस्ततोऽधिकम् । ताभ्यां रोगयुतो दुःखी तेभ्यो दुःखी कुमार्यकः ॥ २५७ ॥ आज्ञाभङ्गो नरेन्द्राणां विप्राणां मानखण्डनम् । पृथक्शय्या च नारीणामशस्त्रवध उच्यते ॥ २५८ ॥ प्रस्तावसदृशं वाक्यं सद्भावसदृशं प्रियम् । आत्मशक्तिसमं कोपं कुर्वाणो न विनश्यति ॥ २५९ ॥ पठकः पाठकश्चैव ये चान्ये शास्त्रपाठकाः । सर्वे व्यसनिनो ज्ञेया यः क्रियावान्स पण्डितः ॥ २६० ॥ पण्डितैः सहसागत्यं पण्डितैः सह संकथाः । पण्डितैः सह मित्रत्वं कुर्वाणो नावसीदति ॥ २६१ ॥ शीलं शैलमनालस्यं पाण्डित्यं मित्रसंग्रहम् । अचोरहरणीयानि पञ्चैतानि क्षयोनिधि ॥ २६२ ॥ मातृवत्परदाराणि परद्रव्याणि लोष्टवत् । आत्मवत्सर्वभूतानि यः पश्यति स पश्यति ॥ २६३ ॥ धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते । अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ २६४ ॥ स जीवति गुणा यस्य धर्मो यस्य स जीवति । गुणधर्मविहीनो यो निष्फलं तस्य जीवितम् ॥ २६५ ॥ गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थं नोपलभ्यते ॥ २६६ ॥ षट्पदः पुष्पमध्यस्थो यथा सारं समुद्धरेत् । तथा सर्वेषु शास्त्रेषु सार गृह्णन्ति पण्डिताः ॥ २६७ ॥ गुणान्भूषयते रूपं

शीलं भूषयते कुलम् । सिद्धिर्भूषयते विद्यां भोगो भूषयते धनम् ॥ २६८ ॥ अगुणस्य हतं रूपमशीलस्य हतं कुलम् । असिद्धेस्तु हता विद्या अभोगस्य हतं धनम् ॥ २६९ ॥ दिवा पश्यति नोलूको काको नक्तं न पश्यति । अपूर्वः कोऽपि कामान्धो दिवा नक्तं न पश्यति ॥ २७० ॥ यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु तत्र चतुष्टयम् ॥ २७१ ॥ मुख्यमेकं पुरस्कृत्य शून्यात्मानोऽपि साधकाः । भवन्ति तं विना नैव यथा संख्याङ्कबिन्दवः ॥ २७२ ॥ वचस्तत्रैव वक्तव्यं यत्रोक्तं सफलं भवेत् । स्थायीभवति चात्यन्तं रङ्गः शुक्लपटे यथा ॥ २७३ ॥ पिण्डे पिण्डे मतिर्भिन्ना कुण्डे कुण्डे नवं पयः । जातौ जातौ नवाचारा नवा वाणी मुखे मुखे ॥ २७४ ॥ गान्धर्वगन्धसंयुक्तं ताम्बूलं भारती कथा । इष्टा भार्या प्रियं मित्रमपूर्वाणि दिने दिने ॥ २७५ ॥ विद्यया सह मर्तव्यं कुशिष्याय न दापयेत् । तथापि दीयते विद्या पश्चात्संजायते रिपुः ॥ २७६ ॥ मर्कटस्य सुरापानं तस्य वृश्चिकदंशनम् । तन्मध्ये भूतसंचारो यद्वा तद्वा भविष्यति ॥ २७७ ॥ पुस्तकेषु च या विद्या परहस्तेषु यद्धनम् । संग्रामे च गृहे सैन्यं त्रयः पुंसां विडम्बनम् ॥ २७८ ॥ असावधाने पाण्डित्यं क्रयविक्रयमैथुनम् । भोजनं च पराधीनं त्रयः पुंसां विडम्बनम् ॥ २७९ ॥ पादेन क्रम्यते पन्था मानहीनं च भोजनम् । अविवेकिप्रभोः सेवा पातकं किमतः परम् ॥ २८० ॥ तुष्यन्ति भोजनैर्विप्रा मयूरा घनगर्जितैः । साधवः परसंतोषैः खलाः परविपत्तिषु ॥ २८१ ॥ प्रत्यक्षे गुरवः स्तुत्याः परोक्षे मित्रबान्धवाः । कर्मान्ते दासभृत्याश्च पुत्रा नैव तथा स्त्रियः ॥ २८२ ॥ विनयं राजपुत्रेभ्यः पण्डितेभ्यः सुभाषितम् । अनृतं द्यूतकारेभ्यः स्त्रीभ्यः शिक्षितकैतवम् ॥ २८३ ॥ धनधान्यप्रयोगेषु विद्यासंग्रहणेषु च । आहारे व्यवहारे च त्यक्तलज्जः सुखी भवेत् ॥ २८४ ॥ मुहूर्तमपि जीवेत नरः शुक्लेन कर्मणा । न कल्पमपि कृष्णेन लोकद्वयविरोधिना ॥ २८५ ॥ गते शोको न कर्तव्यो भविष्यं नैव चिन्तयेत् । वर्तमानेन कालेन वर्तयन्ति विचक्षणाः ॥ २८६ ॥ स्वभावेन हि तुष्यन्ति देवाः सत्पुरुषाः पिता । ज्ञातयः स्नानपानेन वाक्प्रदानेन पण्डिताः ॥ २८७ ॥ नराणां नापितो धूर्तः पक्षिणां चैव वायसः । चतुःपदां शृगालस्तु स्वेच्छाचारी तपस्विनाम् ॥ २८८ ॥ चाण्डालः पक्षिणां काकः पशूनां चैव कुक्कुटः । कोपो मुनीनां चाण्डालः सर्वचाण्डालनिन्दकः ॥ २८९ ॥ भ्रमन्संपूज्यते चक्रं भ्रमन्सपूज्यते द्विजः । भ्रमन्संपूज्यते राजा स्त्री भ्रमन्ती विनश्यति ॥ २९० ॥ न पश्यति च जन्मान्धः कामान्धो नैव पश्यति । न पश्यति मदोन्मत्तो ह्यर्थी दोषं न पश्यति ॥ २९१ ॥ स्वय कर्म करोत्यात्मा स्वय तत्फलमश्नुते । स्वयं भ्रमति संसारे स्वयं तस्माद्विमुच्यते ॥ २९२ ॥ खड्गमूलं भवेद्राज्यमस्त्रीमूलं स्थिरं भवेत् । प्रजामूलं भवेदर्था वैरमूलं विनश्यति ॥ २९३ ॥ ऋणकर्ता पिता शत्रुर्माता दुश्चारिणी रिपुः । अविनीता रिपुर्भार्या पुत्रः शत्रुरपण्डितः ॥ २९४ ॥

नास्ति कामसमो व्याधिर्नास्ति मोहसमो रिपुः। नास्ति क्रोधसमो वह्निर्नास्ति ज्ञानात्परं सुखम् ॥ २९५ ॥ विद्या मित्रं प्रवासेषु भार्या मित्रं गृहेषु च। व्याधितस्यौषधं मित्रं धर्मो मित्रं मृतस्य च ॥ २९६ ॥ नास्ति मेघसमं तोयं नास्ति चात्मसमं बलम्। नास्ति चक्षुःसमं तेजो नास्ति धान्यसमं प्रियम् ॥ २९७ ॥ अधना धनमिच्छन्ति वादमिच्छन्ति गर्विताः। मानवाः स्वर्गमिच्छन्ति मोक्षमिच्छन्ति देवताः ॥ २९८ ॥ सत्येन धार्यते पृथ्वी सत्येन तपते रविः। सत्येन वायवो वान्ति सर्वं सत्ये प्रतिष्ठितम् ॥ २९९ ॥ हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम्। श्रोत्रस्य भूषणं शास्त्रं भूषणे किं प्रयोजनम् ॥ ३०० ॥ युक्तमुक्तं पुराविद्भिः चिन्ता मूर्तिः सुदारुणा। न भेषजैर्लङ्घनैर्वा न चान्यैरुपशाम्यति ॥ ३०१ ॥ आवासः क्रियतां गाङ्गे पापहारिणि वारिणि। स्तनमध्ये तरुण्या वा मनोहारिणि हारिणि ॥ ३०२ ॥ अगाधजलसंचारी न गर्वं याति रोहितः। अङ्गुष्ठोदकमात्रेण शफरी फर्फरायते ॥ ३०३ ॥ सुभाषितरसास्वादं प्रौढस्त्रीसंगमं तथा। सेवा विवेकिनो राज्ञो दुःखनिर्मूलनं त्रयम् ॥ ३०४ ॥ ईर्षी घृणी त्वसंतुष्टः क्रोधनो नित्यशङ्कितः। परभाग्योपजीवी च षडेते दुःखभागिनः ॥ ३०५ ॥ नवं वस्त्रं नवं छत्रं नव्या स्त्री नूतनं गृहम्। सर्वत्र नूतनं शस्तं सेवकान्ने पुरातने ॥ ३०६ ॥ वृद्धस्य व्यसनं ग्राह्यमापत्काले ह्युपस्थिते। सर्वत्रैवं विचारेण नाहारे न च मैथुने ॥ ३०७ ॥ अतिदूरपथश्रान्ताश्छायां यान्ति च शीतलत्म्। शीतलाश्च पुनर्यान्ति का कस्य परिदेवना ॥ ३०८ ॥ अपमानं पुरस्कृत्य मानं कृत्वा च पृष्ठके। स्वकार्यमुद्धरेत्प्राज्ञः कार्यध्वंसे हि मूर्खता ॥ ३०९ ॥ कृतस्य करणं नास्ति मृतस्य मरणं तथा। गतस्य शोचनं नास्ति ह्येतद्वेदविदां मतम् ॥ ३१० ॥ नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि। कुशकण्टकविद्धोऽपि प्राप्तकालो न जीवति ॥ ३११ ॥ निमग्नस्य पयोराशौ पर्वतात्पतितस्य च। तक्षकेनापि दष्टस्य आयुर्मर्माणि रक्षति ॥ ३१२ ॥ ना ऋषिः कुरुते काव्यं ना रुद्रः क्रमपाठकः। ना देवांशो ददात्यन्नं ना विष्णुः पृथिवीपतिः ॥ ३१३ ॥ कवयः किं न पश्यन्ति किं न भक्षन्ति वायसाः। मद्यपाः किं न जल्पन्ति किं न कुर्वन्ति योषितः ॥ ३१४ ॥ वह्निज्वालेव गृहिणी रक्षणीया प्रयत्नतः। वृद्धिक्षयविकाराभ्यां स्वाश्रयक्षेममिच्छता ॥ ३१५ ॥ ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति। भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ ३१६ ॥ अस्थिरं जीवितं लोके अस्थिरं धनयौवने। अस्थिराः पुत्रदाराश्च धर्मः कीर्तिर्द्वयं स्थिरम् ॥ ३१७ ॥ लालयेत्पञ्चवर्षाणि दशवर्षाणि ताडयेत्। प्राप्ते षोडशवर्षाणि पुत्रे मित्रवदाचरेत् ॥ ३१८ ॥ गणेशः स्तौति मार्जारं स्ववाहस्याभिरक्षणे। महानपि प्रसङ्गेन नीचं सेवितुमिच्छति ॥ ३१९ ॥ श्यामा मन्थरगामिन्यः पीनोन्नतपयोधराः। महिष्यश्च महिष्यश्च सन्ति पुण्यवतां गृहे ॥ ३२० ॥ पदे पदे च रत्नानि योजने रसकूपिका। भाग्य-

हीना न पश्यन्ति बहुरत्ना वसुंधरा ॥ ३२१ ॥ राजा वेश्या यमो वह्निः प्राघूर्णो बालया-चकौ । परदुःखं न जानाति ह्यष्टमो ग्रामकण्टकः ॥ ३२२ ॥ क्रोधो मूलमनर्थानां क्रोधः संसारबन्धनम् । धर्मक्षयकरः क्रोधस्तस्मात्क्रोधं विवर्जयेत् ॥ ३२३ ॥ प्रेम सत्यं तयोरेव ययोर्योगवियोगयोः । वत्सरा वासरीयन्ति वासरीयन्ति वत्सराः ॥ ३२४ ॥ यावतः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावतोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ३२५ ॥ किं धनेन कुबेरस्य सुभाषितगुणेन किम् । वाचस्पतेश्च दीपेन रवेः सिन्धोश्च बिन्दुना ॥ ३२६ ॥ वचस्तत्रैव वक्तव्यं यत्रोक्तं सफलं भवेत् । स्थायीभवति चात्यन्तं रङ्गः शुक्लपटे यथा ॥ ३२७ ॥ मधुना सिञ्चितो निम्बः किं निम्बो मधु जायते । जातिस्वभावदोषोऽयं कटुकत्वं न मुञ्चति ॥ ३२८ ॥ शक्यते येन केनापि जीवनेनैव जीवितुम् । किंतु कौलव्रतोद्भङ्गप्रसङ्गः परदुःसहः ॥ ३२९ ॥ कर्तव्यमेव कर्तव्यं प्राणैः कण्ठगतैरपि । अकर्तव्यं न कर्तव्यं प्राणैः कण्ठगतैरपि ॥ ३३० ॥ अग्निहोत्रं गृहं क्षेत्रं सखाभार्यासुतं शिशुम् । रिक्तपाणिर्न पश्येत राजानं देवता गुरुम् ॥ ३३१ ॥ उत्तमं स्वार्जितं भुक्तं मध्यमं पितुरर्जितम् । कनिष्ठं भ्रातृवित्तं च स्त्रीवित्तमधमाधमम् ॥ ३३२ ॥ अलसस्य कुतो विद्या अविद्यस्य कुतो धनम् । अधनस्य कुतो मित्रममित्रस्य कुतः सुखम् ॥ ३३३ ॥ अनर्घ्यमपि माणिक्यं हेमाश्रयमपेक्षते । अनाश्रया न शोभन्ते पण्डिता वनिता लताः ॥ ३३४ ॥ विप्रार्थेषु धनं क्षीणं स्वदारागतयौवनम् । स्वामिकार्ये हतप्राणमन्ते तिष्ठति माधवम् ॥ ३३५ ॥ न विश्वसेदमित्रस्य मित्रस्यापि न विश्वसेत् । कदाचित्कुपिते मित्रे सर्वं गुह्यं प्रकाश्यति ॥ ३३६ ॥ चापल्यं लोलुपं कोपं मिथ्या पैशून्यतत्परम् । द्वेषं परगृहे वासं त्यजेदेतानि बुद्धिमान् ॥ ३३७ ॥ अभ्रच्छाया तृणाग्निश्च खले प्रीतिः स्थले जलम् । वेश्यासक्तिः कुमित्रं च षडेते बुद्बुदोपमाः ॥ ३३८ ॥ प्रमदा मदिरा लक्ष्मीर्विज्ञेया त्रिविधा सुरा । दृष्ट्वैवोन्मादयत्येका पीता चान्यातिसंचयात् ॥ ३३९ ॥ राजपत्नी गुरोः पत्नी भ्रातृपत्नी तथैव च । पत्नीमाता स्वमाता च पञ्चैते मातरः स्मृताः ॥ ३४० ॥ अल्पोदकचलत्कुम्भि अल्पक्षीरगवाम्बुधि । अल्पविद्या महागर्वी कुरूपी बहुचेष्टिकः ॥ ३४१ ॥ पुनर्गेहं पुना राज्यं यौवन न पुनः पुनः । पुनर्दाराः पुनर्वित्तं न शरीरं पुनः पुनः ॥ ३४२ ॥ इक्षुदण्डास्तिलाः शूद्रा कामिनी हेम मेदिनी । दधिचन्दनताम्बूलमर्दनं गुणवर्धनम् ॥ ३४३ ॥ पराधीनं वृथा जन्म परस्त्रीषु वृथा सुखम् । परगृहे वृथा लक्ष्मीर्विद्या या पुस्तके वृथा ॥ ३४४ ॥ सत्यं जनविरोधाय असत्यं जनरञ्जने । सुरासने विक्रीणानि दधि क्षीरं गृहे गृहे ॥ ३४५ ॥ असमाने तपोवृद्धिः संमानाच्च तपक्षयः । पूजया पुण्यहानिः स्यान्निन्दया सद्गतिर्भवेत् ॥ ३४६ ॥ ध्यानशस्त्रं बकानां च वेश्यानां मोहशस्त्रकम् । साधुत्वशस्त्रं मैन्दानां परप्राणार्थहारकम् ॥ ३४७ ॥ कृतेऽभिगम्यते दानं त्रेतामाहूय दीयते । द्वापरे याचितादानं सेवादानं कलौ

युगे ॥ ३४८ ॥ मक्षिका मारुतो योगी धेनुरग्निर्महानदी । पन्था नावा धनं धान्यं विप्ररत्नं सदा शुचिः ॥ ३४९ ॥ ललितान्तानि गीतानि प्रसूतान्तं च यौवनम् । विशाखान्तानि मेघानि तक्रान्तं खलु भोजनम् ॥ ३५० ॥ धातुः परीक्षा दुर्भिक्षे स्त्रीपरीक्षा च निर्धने । युद्धे शूरपरीक्षा च मृत्योरत्यन्तमापदि ॥ ३५१ ॥ अन्यमाश्रयते लक्ष्मीस्त्वन्यमन्यं च मेदिनी । अनन्यगामिनी पुंसां कीर्तिरेका पतिव्रता ॥ ३५२ ॥ न कालः खड्गमुद्यम्य शिरः कृन्तति कस्यचित् । कालस्य बलमेतावद्विपरीतार्थदर्शनम् ॥ ३५३ ॥ जानन्नपि जनो दैवात्प्रकरोति विगर्हितम् । न कर्म गर्हितं लोके कस्यचिद्रोचते कृतम् ॥ ३५४ ॥ सद्भावेन जयेन्मित्रं सद्भावेन च बान्धवान् । स्त्रीभृत्यान्दानमानाभ्यां दाक्षिण्येनेतरं जनम् ॥ ३५५ ॥ संतोषस्त्रिषु कर्तव्यः स्वदारे भोजने धने । त्रिषु चैव न कर्तव्यो दाने तपसि पाठने ॥ ३५६ ॥ न पुत्रात्परमो लाभो न भार्यायाः परं सुखम् । न धर्मात्परमं मित्रं नानृतात्पातकं परम् ॥ ३५७ ॥ ज्यायांसमपि शीलेन विहीनं नैव पूजयेत् । अपि शूद्रं च धर्मज्ञं सद्वृत्तमभिपूजयेत् ॥ ३५८ ॥ शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि । सर्वदा सर्वयत्नेन पुत्रे शिष्यवदाचरेत् ॥ ३५९ ॥ सुकुले योजयेत्कन्यां पुत्रं विद्यासु योजयेत् । व्यसने योजयेच्छत्रुमिष्टं धर्मेण योजयेत् ॥ ३६० ॥ नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः । पृथिवीभूषणं राजा विद्या सर्वस्य भूषणम् ॥ ३६१ ॥ लालने बहवो दोषास्ताडने बहवो गुणाः । तस्मात्पुत्रं च शिष्यं च ताडयेन्न तु लालयेत् ॥ ३६२ ॥ दूरतः शोभते मूर्खो लम्बशाटपटावृतः । तावच्च शोभते मूर्खो यावत्किंचिन्न भाषते ॥ ३६३ ॥ सकृद्दुष्टं च मित्रं यः पुनः संधातुमिच्छति । स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ३६४ ॥ जानीयात्प्रेषणे भृत्यान्बान्धवान्व्यसनागमे । मित्रं चापदि काले च भार्यां च विभवक्षये ॥ ३६५ ॥ न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः । कारणेन हि जानाति मित्राणि च रिपूंस्तथा ॥ ३६६ ॥ हस्ती हस्तसहस्रेण शतहस्तेन वाजिनः । शृङ्गिणो दशहस्तेन स्थानत्यागेन दुर्जनः ॥ ३६७ ॥ आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि । आत्मान सततं रक्षेद्दारैरपि धनैरपि ॥ ३६८ ॥ परदारं परद्रव्यं परीवादं परस्य च । परिहासं गुरोः स्थाने चापल्यं च विवर्जयेत् ॥ ३६९ ॥ अप्रगल्भस्य या विद्या कृपणस्य च यद्धनम् । यच्च बाहुबलं भीरोर्व्यर्थमेतत्त्रयं भुवि ॥ ३७० ॥ शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः । बुद्धिप्रारब्धकार्यस्य नास्ति किंचन दुष्करम् ॥ ३७१ ॥ असूयया हतेनैव पूर्वोपायोद्यमैरपि । कर्तॄणां गृह्यते संपत्सुहृद्भिर्मन्त्रिभिस्तथा ॥ ३७२ ॥ अतिदाक्षिण्ययुक्तानां शङ्कितानां पदे पदे । परापवादभीरूणां दूरतो यान्ति संपदः ॥ ३७३ ॥ आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः । क्षिप्रमक्रियमाणस्य काल. पिबति संपदः ॥ ३७४ ॥ अवमानं पुरस्कृत्य मानं कृत्वा च पृष्ठतः । स्वार्थं

१ वरिष्ठम्

समुद्धरेत्प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥ ३७५ ॥ न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः । एतदेवातिपाण्डित्यं यत्स्वल्पाद्भूरिनाशनम् ॥ ३७६ ॥ अफलानि दुरन्तानि समव्ययफलानि च । अशक्यानि च वस्तूनि नारभेत विचक्षणः ॥ ३७७ ॥ किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः । इति संचिन्त्य मनसा प्राज्ञः कुर्वीत वा न वा ॥ ३७८ ॥ देहे पातिनि का रक्षा यशो रक्ष्यमपातवत् । नरः पतितकायोऽपि यशःकायेन जीवति ॥३७९॥ निमेषमात्रमपि ते वयो गच्छन्न तिष्ठति । तस्माद्देहेष्वनित्येषु कीर्तिमेकामुपार्जयेत् ॥३८०॥ बुधाग्रे न गुणान्ब्रूयात्साधु वेत्ति यतः स्वयम् । मूर्खाग्रेऽपि च न ब्रूयाद्बुधप्रोक्तं न वेत्ति सः ॥ ३८१ ॥ यावत्स्वस्थमिदं देहं यावन्मृत्युश्च दूरतः । तावदात्महितं कुर्यात्प्राणान्ते किं करिष्यसि ॥ ३८२ ॥ यः करोति वधोदर्का निःश्रेयसकरीः क्रियाः । ग्लानिदोषच्छिदः स्वच्छाः स मूढः पङ्कयत्यपः ॥ ३८३ ॥ मूलं दोषस्य हिंसादेरर्थकामौ स्म मा मुषः । तौ हि तत्त्वाववोधस्य दुरुच्छेदावुपप्लवौ ॥ ३८४ ॥ अभिद्रोहेण भूतानामर्जयन्गत्वरीः श्रियः । उदन्वानिव सिन्धूनामापदामेति पात्रताम् ॥ ३८५ ॥ यागम्याः सत्सहायानां यासु खेदो भयं यतः । तासां किं यन्न दुःखाय विपदामिव संपदाम् ॥ ३८६ ॥ दुरासदानरीनुग्रान्धृतेर्विश्वासजन्मनः । भोगान्भोगानिवाहेयानध्यास्यापन्न दुर्लभाः ॥३८७॥ नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते । आसक्तास्तास्वमी मूढा वामशीला हि जन्तवः ॥ ३८८ ॥ कोऽपवादः स्तुतिपदे यदशीलेषु चञ्चलाः । साधुवृत्तानपि क्षुद्रा विक्षिपन्त्येव संपदः ॥ ३८९ ॥ कृतवानन्यदेहेषु कर्ता च विधुरं मनः । अप्रियैरेव सयोगो विप्रयोगः प्रियैः सह ॥ ३९० ॥ शून्यमाकीर्णतामेपि तुल्यं व्यसनमुत्सवैः । विप्रलम्भोऽपि लाभाय सति प्रियसमागमे ॥ ३९१ ॥ तदा रम्याण्यरम्याणि प्रियाः शल्य तदासवः । तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा ॥ ३९२ ॥ युक्तः प्रमाद्यसि हितादपेतः परितप्यसे । यदि नेष्टात्मन. पीडा मासञ्जि भवता जन ॥ ३९३ ॥ जन्मिनोऽस्य स्थिति विद्वांल्लक्ष्मीमिव चलाचलाम् । भवान्मा स्म वधीन्न्याय्यं न्यायाधारा हि साधवः ॥ ३९४ ॥ अविज्ञातप्रबन्धस्य वचो वाचस्पतेरिव । व्रजत्यफलतामेव नयद्रुह इवेहितम् ॥ ३९५ ॥ कर्मायत्तं फल पुसां बुद्धिः कर्मानुसारिणी । तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ३९६ ॥ मनसा चिन्तितं कर्म वचसा न प्रकाशयेत् । अन्यलक्षितकार्यस्य यतः सिद्धिर्न जायते ॥ ३९७ ॥ कुदेशं च कुवृत्तिं च कुभार्यां कुनदीं तथा । कुद्रव्यं च कुभोज्य च वर्जयेत्तु विचक्षणः ॥ ३९८ ॥ अस्ति पुत्रो वशे यस्य भृत्यो भार्या तथैव च । अभावे सति संतोषः स्वर्गस्थोऽसौ महीतले ॥ ३९९ ॥ माता यस्य गृहे नास्ति भार्या चाप्रियवादिनी । अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥४००॥ कोकिलानां स्वरो रूपं नारीरूपं पतिव्रता । विद्या रूपं कुरूपाणां क्षमारूप तपस्विनाम् ॥४०१॥ अविद्याजीवनं शून्यं

दिक्शून्या चेदबान्धवा । पुत्रहीनं गृहं शून्यं सर्वशून्या दरिद्रता ॥ ४०२ ॥ अदाता वंशदोषेण कर्मदोषाद्दरिद्रता । उन्मादो मातृदोषेण पितृदोषेण मूर्खता ॥ ४०३ ॥ अतिदर्पे हता लङ्का अतिमाने च कौरवाः । अतिदाने बलिर्बद्धः सर्वमत्यन्तगर्हितम् ॥ ४०४ ॥ वस्त्रहीनस्त्वलंकारो घृतहीनं च भोजनम् । स्तनहीना च या नारी विद्याहीनं च जीवनम् ॥ ४०५ ॥ पुत्रप्रयोजना दाराः पुत्रः पिण्डप्रयोजनः । हितप्रयोजनं मित्रं धनं सर्वप्रयोजनम् ॥ ४०६ ॥ दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत्सुतः । दुर्लभा सदृशी भार्या दुर्लभः स्वजनः प्रियः ॥ ४०७ ॥ अशोच्यो निर्धनः प्राज्ञोऽशोच्यः पण्डितबान्धवः । अशोच्या विधवा नारी पुत्रपौत्रप्रतिष्ठिता ॥ ४०८ ॥ अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम् । निराहाराः प्रजाः शोच्याः शोच्यं राज्यमराजकम् ॥ ४०९ ॥ कुलीनैः सह संपर्कं पण्डितैः सह मित्रताम् । ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति ॥ ४१० ॥ कष्टा वृत्तिः पराधीना कष्टो वासो निराश्रयः । निर्धनो व्यवसायश्च सर्वकष्टा दरिद्रता ॥ ४११॥ तस्करस्य कुतो धर्मो दुर्जनस्य कुतः क्षमा । वेश्यानां च कुतः स्नेहः कुतः सत्यं च कामिनाम् ॥४१२॥ प्रेषितस्य कुतो मानं कोपनस्य कुतः सुखम् । स्त्रीणां कुतः सतीत्वं च कुतो मैत्री खलस्य च ॥४१३॥ दुर्बलस्य बलं राजा बालानां रोदनं बलम् । बलं मूर्खस्य मौनित्वं चोराणामनृतं बलम् ॥ ४१४ ॥ यो ध्रुवाणि परित्यज्य अध्रुवं परिषेवते । ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ ४१५ ॥ शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि । प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ ४१६ ॥ सद्यो मांसं नवान्नं च बाला स्त्री क्षीरभोजनम् । घृतमुष्णोदकं चैव सद्यः प्राणकराणि षट् ॥ ४१७ ॥ सिंहादेकं बकादेकं षड्शुनस्त्रीणि गर्दभात् । वायसाच्च पञ्चः शिक्षेच्चत्वारि कुक्कुटादपि ॥ ४१८ ॥ प्रभूतमल्पकार्यं वा यो नरः कर्तुमिच्छति । सर्वारम्भेण तत्कुर्यात्सिंहादेकं प्रकीर्तितम् ॥ ४१९ ॥ सर्वेन्द्रियाणि संयम्य बकवत्पतितो जनः । कालदेशोपपन्नानि सर्वकार्याणि साधयेत् ॥ ४२० ॥ बह्वाशी स्वल्पसंतुष्टः सुनिद्रः शीघ्रचेतनः । प्रभुभक्तश्च शूरश्च ज्ञातव्याः षड्शुनो गुणाः ॥४२१॥ अविश्राम वहेद्भारं शीतोष्णं च न विन्दति । ससंतोषस्तथा नित्यं त्रीणि शिक्षेत गर्दभात् ॥ ४२२ ॥ गूढमैथुनधाष्टर्यं च काले चालयसंग्रहम् । अप्रमादमनालस्यं पञ्च शिक्षेत वायसात् ॥ ४२३ ॥ युद्धं च प्रातरुत्थानं भोजनं सह बन्धुभिः । स्त्रियमापद्गतां रक्षेच्चतुः शिक्षेत कुक्कुटात् ॥ ४२४ ॥ कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् । को विदेशः सविद्यानां कः परः प्रियवादिनाम् ॥ ४२५ ॥ आपदां कथितः पन्था इन्द्रियाणामसंयमः । तज्जयः संपदां मार्गो येनेष्टं तेन गम्यताम् ॥ ४२६ ॥ न च विद्यासमो बन्धुर्न च व्याधिसमो रिपुः । न चापत्यसमः स्नेहो न च दैवात्परं बलम् ॥ ४२७ ॥ समुद्रावरणा भूमिः प्राकारावरणं गृहम् । नरेन्द्रावरणा देशाश्चरित्रावरणाः स्त्रियः ॥४२८॥

घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान्। तस्माद्घृतं च वह्निं च नैकत्र स्थापयेद्बुधः ॥४२९॥ आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा। षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ ४३० ॥ जीर्णमन्नं प्रशंसीयाद्भार्यां च गतयौवनाम्। रणात्प्रत्यागतं शूरं सस्यं च गृहमागतम् ॥ ४३१ ॥ असंतुष्टा द्विजा नष्टाः संतुष्टाश्च महीभुजः। सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः ॥ ४३२ ॥ अवंशपातितो राजा मूर्खपुत्रश्च पण्डितः। अधनेन धनं प्राप्य तृणवन्मन्यते जगत् ॥४३३॥ पुस्तकस्था तु या विद्या परहस्तगतं धनम्। कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ॥ ४३४ ॥ पादपानां भयं वातात्पद्मानां शिशिराद्भयम्। पर्वतानां भयं वज्रात्साधूनां दुर्जनाद्भयम् ॥ ४३५ ॥ यस्य क्षेत्रं नदीतीरे भार्या वापि परप्रिया। पुत्रस्य विनयो नास्ति मृत्युरेव न संशयः ॥ ४३६ ॥ असंभाव्यं न वक्तव्यं प्रत्यक्षमपि दृश्यते। शिला तरति पानीयं गीतं गायति वानर. ॥ ४३७ ॥ सुभिक्षं कृषके नित्यं नित्यं सुखमरोगिणि। भार्या भर्तुः प्रिया यस्य तस्य नित्योत्सवं गृहम् ॥ ४३८ ॥ हेला स्यात्कार्यनाशाय बुद्धिनाशाय निर्धनम्। याचना माननाशाय कुलनाशाय भोजनम् ॥ ४३९ ॥ सेवितव्यो महावृक्षः फलच्छायासमन्वितः। यदि दैवात्फल नास्ति छाया केन निवार्यते ॥४४०॥ प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम्। तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ॥४४१॥ नदीकूले च ये वृक्षाः परहस्तगतं धनम्। कार्यं स्त्रीगोचरो यत्स्यात्सर्वं तद्विफलं भवेत् ॥ ४४२ ॥ कूपोदकं वटच्छाया श्यामा स्त्री चेष्टकालयम्। शीतकाले भवेदुष्ण ग्रीष्मकाले च शीतलम् ॥ ४४३ ॥ विषं चङ्क्रमणं रात्रौ विषं राज्ञोऽनुकूलता। विषं स्त्रियोऽप्यन्यहृदो विष व्याधिरवीक्षितः ॥ ४४४ ॥ दुरधीता विषं विद्या अजीर्णे भोजनं विषम्। विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम् ॥ ४४५ ॥ प्रदोषे निहतः पन्थाः पतिता निहताः स्त्रियः। अल्पबीजं हतं क्षेत्र भृत्यदोषाद्धतः प्रभुः ॥ ४४६ ॥ हतमश्रोत्रिय श्राद्धं हतो यज्ञस्त्वदक्षिणः। हता रूपवती वन्ध्या हत सैन्यमनायकम् ॥ ४४७ ॥ किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते। नग्नक्षपणके देशे रजकः किं करिष्यति ॥ ४४८ ॥ अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत्। गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ४४९ ॥ यौवनं धनसंपत्तिः प्रभुत्वमविवेकता। एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ ४५० ॥ आयुः कर्म च वित्तं च विद्या निधनमेव च। पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ ४५१ ॥ यदभावि न तद्भावि भावि चेन्न तदन्यथा। इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥ ४५२ ॥ नाद्रव्ये निहिता काचित्क्रिया फलवती भवेत्। न व्यापारशतेनापि शुकवत्पाठ्यते बकः ॥ ४५३ ॥ शोकस्थानसहस्राणि भयस्थानशतानि च। दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ४५४ ॥ उत्थायोत्थाय बोद्धव्य महद्भयमुपस्थितम्। मरणव्याधिशोकानां किमद्य निपतिष्यति

॥ ४५५ ॥ अनिष्टादिष्टलाभेऽपि न गतिर्जायते शुभा । यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे ॥ ४५६ ॥ न संशयमनारुह्य नरो भद्राणि पश्यति । संशयं पुनरारुह्य यदि जीवति पश्यति ॥ ४५७ ॥ गतानुगतिको लोकः कुट्टिनीमुपदेशिनीम् । प्रमाणयति नो धर्मे यथा गोघ्नमपि द्विजम् ॥ ४५८ ॥ प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ॥ ४५९ ॥ प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये । आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ ४६० ॥ अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया । दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना ॥ ४६१ ॥ शङ्काभिः सर्वमाक्रान्तमन्नं पानं च भूतले । प्रवृत्तिः कुत्र कर्तव्या जीवितव्यं कथं नु वा ॥ ४६२ ॥ सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः । छेत्तारः संशयानां च क्लिश्यन्ते लोभमोहिताः ॥ ४६३ ॥ षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता । निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥ ४६४ ॥ माता मित्रं पिता चेति स्वभावात्त्रितयं हितम् । कार्यकारणतश्चान्ये भवन्ति हितबुद्धयः ॥ ४६५ ॥ जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् । व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत् ॥ ४६६ ॥ तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता । एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥ ४६७ ॥ न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः । व्यवहारेण मित्राणि जायन्ते रिपवस्तथा ॥ ४६८ ॥ आपत्सु मित्रं जानीयाद्युद्धे शूरमृणे शुचिम् । भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान् ॥ ४६९ ॥ सुहृदां हितकामानां यः शृणोति न भाषितम् । विपत्संनिहिता तस्य स नरः शत्रुनन्दनः ॥४७०॥ अपराधो न मेऽस्तीति नैतद्विश्वासकारणम् । विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥४७१॥ दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुंधतीम् । न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः ॥ ४७२ ॥ मार्जारो महिषो मेषः काकः कापुरुषस्तथा । विश्वासात्प्रभवन्त्येते विश्वासस्तत्र नो हितः ॥ ४७३ ॥ यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत् । नोदके शकटं याति न च नौर्गच्छति स्थले ॥ ४७४ ॥ द्रवत्वात्सर्वलोहानां निमित्तान्मृगपक्षिणाम् । भयाल्लोभाच्च मूर्खाणां संगतं दर्शनात्सताम् ॥ ४७५ ॥ पटुत्वं सत्यवादित्वं कथायोगेन बुध्यते । अस्तब्धत्वमचापल्यं प्रत्यक्षेणावगम्यते ॥ ४७६ ॥ लोकयात्रा भयं लज्जा दाक्षिण्यं त्यागशीलता । पञ्च यत्र न विद्यन्ते न कुर्यात्तत्र संस्थितिम् ॥ ४७७ ॥ अपुत्रस्य गृहं शून्यं सन्मित्ररहितस्य च । मूर्खस्य च दिशः शून्याः सर्वशून्या दरिद्रता ॥ ४७८ ॥ परिच्छेदो हि पाण्डित्यं यदापन्ना विपत्तयः । अपरिच्छेदकर्तॄणां विपदः स्युः पदे पदे ॥ ४७९ ॥ पानीयं वा निरायासं स्वाद्वन्नं वा भयोत्तरम् । विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥ ४८० ॥ जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः । निमित्तं किंचिदासाद्य देही प्राणान्विमुञ्चति ॥ ४८१ ॥ नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् । आपत्स्वपि न

मुह्यन्ति नराः पण्डितबुद्धयः ॥ ४८२ ॥ सुखमापतितं सेव्यं दुःखमापतितं तथा । चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च ॥ ४८३ ॥ वृत्त्यर्थं नातिचेष्टेत सा हि धात्रैव निर्मिता । गर्भादुत्पतिते जन्तौ मातुः प्रस्रवतः स्तनौ ॥ ४८४ ॥ येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः । मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति ॥ ४८५ ॥ धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ ४८६ ॥ जन्मनि क्लेशबहुले किं नु दुःखमतः परम् । इच्छासंपद्यतो नास्ति यच्चेच्छा न निवर्तते ॥ ४८७ ॥ यद्यदेव हि वाञ्छेत ततो वाञ्छा प्रवर्तते । प्राप्त एवार्थतः सोऽर्थो यतो वाञ्छा निवर्तते ॥४८८॥ अम्भांसि जलजन्तूनां दुर्गं दुर्गनिवासिनाम् । स्वभूमिः श्वापदादीनां राज्ञां मन्त्री परं बलम् ॥४८९॥ कायः संनिहितापायः संपदः पदमापदाम् । समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥४९०॥ अधोऽधः पश्यतः कस्य महिमा नोपचीयते । उपर्युपरि पश्यन्तः सर्व एव दरिद्रति ॥४९१॥ अलब्धं चैव लिप्सेत लब्धं रक्षेदवेक्षया । रक्षितं वर्धयेत्सम्यग्वृद्धं तीर्थेषु निक्षिपेत् ॥४९२॥ शीतवातातपक्लेशान्सहन्ते यान्पराश्रिताः । तदंशेनापि मेधावी तपस्त्यक्त्वा सुखी भवेत् ॥ ४९३ ॥ एतावज्जन्मसाफल्य यदनायत्तवृत्तिता । ये पराधीनतां यातास्ते वै जीवन्ति के मृताः ॥ ४९४ ॥ आश्रितानां भृतौ स्वामिसेवायां धर्मसेवने । पुत्रस्योत्पादने चैव न सन्ति प्रतिहस्तकाः ॥ ४९५ ॥ पृष्ठतः सेवयेदर्कं जठरेण हुताशनम् । स्वामिनं सर्वभावेन परलोकममायया ॥ ४९६ ॥ पञ्चभिर्याति दासत्वं पुराणैः कोऽपि मानवः । कोऽपि लक्षैः कृती कोऽपि लक्षैरपि न लभ्यते ॥ ४९७ ॥ वाजिवारणलोहानां काष्ठपाषाणवाससाम् । नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ ४९८ ॥ आरोप्यते शिला शैले यत्नेन महता यथा । निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः ॥ ४९९ ॥ प्रस्तावसदृशं वाक्यं सद्भावसदृशं प्रियम् । आत्मशक्तिसमं कोपं यो जानाति स पण्डितः ॥ ५०० ॥ अनाहूतो विशेद्यस्तु अपृष्टो बहु भाषते । आत्मानं मन्यते प्रीतं भूपालस्य स दुर्मतिः ॥५०१॥ किमप्यस्ति स्वभावेन सुन्दरं वाप्यसुन्दरम् । यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम् ॥ ५०२ ॥ यस्य यस्य हि यो भावस्तेन तेन हि तं नरम् । अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥५०३॥ दोषभीतेरनारम्भस्तत्कापुरुषलक्षणम् । कैरजीर्णभयाद्भ्रातर्भोजनं परिहीयते ॥ ५०४ ॥ स्थान एव नियोज्यन्ते भृत्याश्चाभरणानि च । न हि चूडामणिः पादे नूपुरं मूर्ध्नि धार्यते ॥ ५०५ ॥ मुकुटे रोपितः काचश्चरणाभरणे मणिः । न हि दोषो मणेरस्ति किंतु साधोरविज्ञता ॥ ५०६ ॥ बालादपि गृहीतव्यं युक्तमुक्तं मनीषिभिः । रवेरविषये किं न प्रदीपस्य प्रकाशनम् ॥ ५०७ ॥ बन्धुस्त्रीभृत्यवर्गस्य बुद्धेः सत्त्वस्य चात्मनः । आपन्निकषपाषाणे नरो जानाति सारताम् ॥ ५०८ ॥ आज्ञाभङ्गो नरेन्द्राणां ब्राह्मणानामनादरः । पृथक्शय्या च नारीणामशस्त्रविहितो वधः ॥ ५०९ ॥ आपद्युन्मार्गगमने कार्यकालात्ययेषु च ।

कल्याणवचनं ब्रूयादपृष्टोऽपि हितो नरः ॥ ९१० ॥ कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः। अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः ॥९११॥ अप्रियाण्यपि कुर्वाणो यः प्रियः प्रिय एव सः। दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः ॥ ९१२ ॥ अप्रियस्यापि वश्यस्य परिणामः सुखावहः। वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ॥ ९१३ ॥ न परस्यापराधेन परेषां दण्डमाचरेत्। आत्मनावगतं कृत्वा बध्नीयात्पूजयेच्च वा ॥९१४॥ गुणदोषावनिश्चित्य विधिर्न ग्रहनिग्रहे। स्वनाशाय यथा न्यस्तो दर्पात्सर्पमुखे करः ॥ ९१५ ॥ पराभवं परिच्छेत्तुं योग्यायोग्य न वेत्ति यः। अस्तीह यस्य विज्ञानं स कृच्छ्रेऽपि न सीदति ॥ ९१६ ॥ द्वयोरेव समं वित्तं द्वयोरेव समं बलम्। तयोर्विवादो मन्तव्यो नोत्तमाधमयोः क्वचित् ॥ ९१७ ॥ बलवानपि निस्तेजाः कस्य नाभिभवास्पदम्। निःशङ्कं दीयते लोकैः पश्य भस्मचये पदम् ॥ ९१८ ॥ बन्धुः को नाम दुष्टानां कुप्येत्को नातियाचितः। को न तृप्यति वित्तेन कुकृत्ये को न पण्डितः ॥ ९१९ ॥ धर्मार्थकामतत्त्वज्ञो नैकान्तकरुणो भवेत्। न हि हस्तस्थमप्यन्नं क्षमावान्भक्षितुं क्षमः ॥ ९२० ॥ क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम्। अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ९२१ ॥ सेवितव्यो महावृक्षः फलच्छायासमन्वितः। यदि दैवात्फलं नास्ति छाया केन निवार्यते ॥९२२॥ हीनसेवा न कर्तव्या कर्तव्यो महदाश्रयः। पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते ॥ ९२३ ॥ महानप्यल्पतां याति निर्गुणे गुणविस्तरः। आधाराधेयभावेन गजेन्द्र इव दर्पणे ॥ ९२४ ॥ स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः। पलायन्नपि भूपालः प्रहसन्नपि दुर्जनः ॥ ९२५ ॥ वैद्यानामातुरः श्रेयान्व्यसनीशो वियोगिनाम्। विदुषां जीवनं मूर्खः सद्वर्णो जीवनं सताम् ॥ ९२६ ॥ तावद्भयाद्धि भेतव्यं यावद्भयमनागतम्। आगतं तु भयं वीक्ष्य प्रहर्तव्यमभीतवत् ॥ ९२७ ॥ सुपूरा स्यात्कुनदिका सुपूरो मूषिकाञ्जलिः। सुसंतुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ ९२८ ॥ यस्य यस्य हि यो भावस्तस्य तस्य हि तं नरः। अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ ९२९ ॥ अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः। पैशून्याद्भिद्यते स्नेहो वाचा भिद्येत कातरः ॥ ९३० ॥ अन्यप्रतापमासाद्य यो दृढत्वं न गच्छति। जतुजाभरणस्येव रूपेणापि हि तस्य किम् ॥ ९३१ ॥ भये वा यदि वा हर्षे संप्राप्ते यो विमर्शयेत्। कृत्यं न कुरुते वेगान्न स संतापमाप्नुयात् ॥ ९३२ ॥ न वध्यन्ते ह्यविश्वस्ता बलिभिर्दुर्बला अपि। विश्वस्तास्त्वेव वध्यन्ते बलिनो दुर्बलैरपि ॥ ९३३ ॥ महामतिरपि प्राज्ञो न विश्वासं व्रजेद्द्विषो। विश्वासात्त्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ९३४ ॥ न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न पदातिभिः। कार्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम् ॥ ९३५ ॥ मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके। कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः ॥ ९३६ ॥ अमृतं शिशिरे वह्नि-

रमृतं प्रियदर्शनम् । अमृतं राजसंमानममृतं क्षीरभोजनम् ॥ ५३७ ॥ नाग्निस्तृप्यति-काष्ठानां नापगानां महोदधिः । नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥ ५३८ ॥ सर्पाणां च खलानां च परद्रव्यापहारिणाम् । अभिप्राया न सिध्यन्ति तेनेदं वर्तते जगत् ॥ ५३९ ॥ नाविदग्धः प्रियं ब्रूयात्स्फुटवक्ता न वञ्चकः । निःस्पृहो नाधिकारी स्यान्नाकामी मण्डनप्रियः ॥ ५४० ॥ औषधार्थसुमन्त्राणां बुद्धेश्चैव महात्मनाम् । असाध्यं नास्ति लोकेऽत्र यद्ब्रह्माण्डस्य मध्यगम् ॥ ५४१ ॥ न यस्य चेष्टितं विद्यान्न कुलं न पराक्रमम् । न तस्य विश्वसेत्प्राज्ञो यदीच्छेच्छ्रियमात्मनः ॥ ५४२ ॥ नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः । पण्डितानां च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥ ५४३ ॥ अशोच्यानीह भूतानि यो मूढस्तानि शोचति । स दुःखे लभते दुःखं द्वावनर्थौ निषेवते ॥ ५४४ ॥ स सुहृद्व्यसने यः स्यात्स पुत्रो यस्तु भक्तिमान् । स भृत्यो यो विधेयज्ञः सा भार्या यत्र निर्वृतिः ॥ ५४५ ॥ यत्र देशेऽथवा स्थाने भोगान्भुक्त्वा स्ववीर्यतः । तस्मिन्विभवहीनो यो वसेत्स पुरुषाधमः ॥ ५४६ ॥ येनाहंकारयुक्तेन चिरं विलसितं पुरा । दीनं वदति तत्रैव यः परेषां स निन्दितः ॥ ५४७ ॥ मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः । व्रतिनः पापशीलानामसतीनां कुलस्त्रियः ॥ ५४८ ॥ मित्रद्रोही कृतघ्नश्च तथा विश्वासघातकः । ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ५४९ ॥ जिह्वालौल्यप्रसक्तानां जलमध्यनिवासिनाम् । अचिन्तितो वधोऽज्ञानां मीनानामिव जायते ॥ ५५० ॥ कृतान्तपाशबद्धानां दैवोपहतचेतसाम् । बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ ५५१ ॥ व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते । स तेषां पारमभ्येति तत्प्रभावादसंशयम् ॥ ५५२ ॥ मित्रवान्साधयत्यर्थान्दुःसाध्यानपि वै यतः । तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः ॥५५३॥ अपि संपूर्णतायुक्तैः कर्तव्या सुहृदो बुधैः । नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते ॥५५४॥ यो मित्रं कुरुते मूढ आत्मनोऽसदृशं कुधीः । हीनं वाप्यधिकं वापि हास्यतां यात्यसौ जनः ॥ ५५५ ॥ कारणान्मित्रतां याति कारणाद्याति शत्रुताम् । तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता ॥ ५५६ ॥ उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम् । भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात्सताम् ॥ ५५७ ॥ ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ ५५८ ॥ यस्य न ज्ञायते वीर्यं न कुलं न विचेष्टितम् । न तेन सगतिं कुर्यादित्युवाच बृहस्पतिः ॥ ५५९ ॥ शनैः शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम् । रसायनमिव प्राज्ञैर्हेलया न कदाचन ॥ ५६० ॥ मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम् । मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ ५६१ ॥ गुरोः सुता मित्रभार्या स्वामिसेवकगेहिनीम् । यो गच्छति पुमांल्लोके तमाहुर्ब्रह्मघातिनम् ॥५६२॥ अयशः प्राप्यते येन येन चापगतिर्भवेत् । स्वर्गाच्च भ्रश्यते येन तत्कर्म न समाचरेत्

॥ ९६३ ॥ यः स्तोकेनापि संतोषं कुरुते मन्दधीर्जनः। तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥ ९६४ ॥ कृतनिश्चयिनो वन्द्यास्तुङ्गिमा नोपभुज्यते। चातकः को वराकोऽयं यस्येन्द्रो वारिवाहकः ॥ ९६५ ॥ तावत्स्यात्सर्वकृत्येषु पुरुषोऽत्र स्वयं प्रभुः। स्त्रीवाक्याङ्कुशविक्षुण्णो यावन्नो ध्रियते बलात् ॥ ९६६ ॥ अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगम्। अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः ॥ ९६७ ॥ अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम्। रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ ९६८ ॥ आपन्नाशाय विबुधैः कर्तव्याः सुहृदोऽमलाः। न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥ ९६९ ॥ व्यसनं प्राप्य यो मोहात्केवलं परिदेवयेत्। क्रन्दनं वर्धयत्येव तस्यान्तं नाधिगच्छति ॥९७०॥ केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः। तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ ९७१ ॥ नदीनां च कुलानां च मुनीनां च महात्मनाम्। परीक्षा न प्रकर्तव्या स्त्रीणां दुश्चरितस्य च ॥ ९७२ ॥ सद्भिः संबोध्यमानोऽपि दुरात्मा पापपौरुषः। घृष्यमाण इवाङ्गारो निर्मलत्वं न गच्छति ॥ ९७३ ॥ जनिता[1] चोपनेता[2] च यश्च विद्यां प्रयच्छति। अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ॥ ९७४ ॥ वरं वरयते कन्या माता वित्तं पिता श्रुतम्। बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥ ९७५ ॥ यः पृष्ट्वा कुरुते कार्यं प्रष्टव्यान्स्वान्हितान्गुरून्। न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्मणि ॥ ९७६ ॥ कलहान्तानि हर्म्याणि कुवाक्यान्तं च सौहृदम्। कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥ ९७७ ॥ कृते प्रतिकृतिं कुर्याद्धिंसिते प्रतिहिंसितम्। न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत् ॥९७८॥ न विश्वसेदविश्वस्ते विश्वस्ते नापि विश्वसेत्। विश्वासाद्भयमुत्पन्नं मूलादपि निकृन्तति ॥ ९७९ ॥ सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये। सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ ९८० ॥ योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम्। एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते ॥ ९८१ ॥ मर्तव्यमिति यद्दुःख पुरुषस्योपजायते। शक्यते नानुमानेन परेण परिवर्णितुम् ॥ ९८२ ॥ स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते। अस्य दग्धोदरस्यार्थे कः कुर्यात्पातकं महत् ॥९८३॥ विद्यया विनयावाप्तिः सा चेदविनयावहा। किं कुर्मः कं प्रति ब्रूमो गरदायां स्वमातरि ॥ ९८४ ॥ वीणेव श्रोत्रहीनस्य लोलाक्षीव विचक्षुषः। व्यसोः कुसुममालेव विद्या स्तब्धस्य निष्फला॥९८५॥वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च। तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः॥९८६॥भूमिपतावर्थपतौ बाले वृद्धे तपोनिधौ विदुषि। योषिति मूर्खे गुरुषु च विदुषा नैवोत्तरं देयम् ॥ ९८७ ॥ कटुकं वा मधुरं वा प्रस्तुतवाक्यं मनोहारि। वामे गर्दभनादश्चित्तप्रीत्यै प्रयाणेषु ॥९८८॥ अतिपरिचयादवज्ञा संततगमनादनादरो भवति। लोकः प्रयागवासी कूपे स्थानं समाचरति ॥ ९८९ ॥

---

[1] उत्पादक [2] उपनयनकर्ता

अतिपरिचयादवज्ञा संततगमनादनादरो भवति । मलये[1] भिल्ल[2]पुरंध्री चन्दनतरुकाष्ठमिन्धनं कुरुते ॥ ५९० ॥ अतिपरिचयादवज्ञा इति यद्वाक्यं मृषैव तद्भाति । अतिपरिचितेऽप्यनादौ संसारेऽस्मिन्न जायतेऽवज्ञा ॥ ५९१ ॥ अविधेयो भृत्यजन शठानि मित्राण्यदायकः स्वामी । अविनयवती च भार्या मस्तकशूलानि चत्वारि ॥ ५९२ ॥ वैद्यस्तर्कविहीनो निर्लज्जा कुलवधूर्यतिर्मूर्खः । कटके च प्राहुणिको[3] मस्तकशूलानि चत्वारि ॥ ५९३ ॥ शक्तिरहितोऽपि कुप्यति सेवासक्तोऽपि मानमुद्वहति । अधनोऽपि हि कामयते जानाति विधिर्विडम्बयितुम् ॥ ५९४ ॥ त्यजति भयमकृतपापं सुमित्रमयशः प्रमादिनं विद्या । ह्रीः कामिनमलसं श्रीः क्रूर स्त्री दुर्जन लोकः ॥ ५९५ ॥ अनुचितकर्मारम्भः स्वजनविरोधो बलीयसि[4] स्पर्धा[5] । प्रमदा[6]जनविश्वासो मृत्युद्वाराणि चत्वारि ॥५९६॥ अन्यमुखे दुर्वादो[7] यः प्रियवचने स एव परिहासः । इतरेन्धन[8]जन्मा यो धूमः सोऽगुरुभवो धूपः॥५९७॥अशठमलोभ[9]मजिह्मं त्यागिन[10]मनुरागिणं विशेषज्ञम् । यदि नाश्रयति नरं श्रीः श्रीरेव हि वञ्चिता तस्य ॥ ५९८ ॥ व्यथयतितरामुपेतः स्वस्थप्रकृतीनवद्यलेशोऽपि । भृशमुद्विजते चक्षुः सक्तेन रजःकणेनापि ॥ ५९९ ॥ शरदि समग्रनिशाकरकरशतहततिमिरसंचया रजनी । जलदान्तरितार्कामपि दिवसच्छायां न पूरयति ॥ ६०० ॥ यत्र न फलितास्तरवो विकसितसरसीरुहाः सरस्यो वा । न च सज्जनाः स देशो गच्छतु निधनं श्मशानसमः ॥ ६०१ ॥ गुणमधिगतमपि धनवानचिरान्नाशयति रक्षति दरिद्रः । मज्जयति रज्जुमम्भसि पूर्णः कुम्भः सखि न खलु तुच्छः ॥ ६०२ ॥ अन्नुधा अजगमा अपि कयापि गत्या परं पदमवाप्ताः । मन्त्रिण इति कीर्त्यन्ते न यवलगुटिका इव जनेन ॥ ६०३ ॥ स्वल्पा अपि रामवलैर्ये न्यस्ताः नाशये पयोराशेः । ते शैला स्थितिमन्तो हन्त लघिम्नैव बहुमानः ॥ ६०४ ॥ यत्रार्जवेन लघिमा गरिमाणं वक्रता तनुते । छन्दःशास्त्र इवास्मिल्लोके सरलः सखे किमसि ॥ ६०५ ॥ सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियासु नारीषु । स्वामिनि शक्तिसमेते निवेद्य दुःखं जनः सुखी भवति ॥६०६॥ प्राप्य चलानधिकाराञ्शत्रुषु मित्रेषु बन्धुवर्गेषु । नापकृत नोपकृतं न सत्कृतं किं कृतं तेन ॥ ६०७ ॥ वित्तं परिमितमधिकव्ययशीलं पुरुषमाकुलीकुरुते । ऊनांशुक[11]मिव पीनस्तनजघनायाः कुलीनायाः ॥ ६०८ ॥ अप्रतिबुद्धे[12] श्रोतरि वक्तुर्वाक्यं प्रयाति वैफल्यम् । नयनविहीने भर्तरि लावण्यमिवेह खञ्जनाक्षीणाम्[13] ॥ ६०९ ॥ बहुतर[14]रहिते रसातल उत्तिष्ठन्ते हि सुमनस[15]स्तपसि[16] । कान्तारे[17]जनवेगं विपद्य सद्र-

१. मलयपर्वते २ भिल्लस्त्री ३ आगन्तुक ४ बलवद्विषये ५ विग्रह ६ स्त्रीषु विश्वास. ७ दुष्टभाषणम् ८ काष्ठम् ९ सरलम् १० दानशीलम् ११. अल्प वस्त्रम् १२ मूर्खे. १३ खञ्जरीटनयनानाम्. १४ त-रहिते रसातले. आम्रवृक्षे इत्यर्थ १५ पुष्पाणि, (पक्षे) शोभनमनस मुनय इत्यर्थ १६ माघमासे; (पक्षे) तपश्चर्यायाम्. १७. कान्तारमरण्यम् दुर्गममार्ग इति यावत्. तरसपन्धि एजनवेग कपनवेग विपद्य

सफलास्तु विरलाः स्युः ॥ ६१० ॥ प्रतिगृहकोणं गुणिनो लूताकीटा इव स्फुरन्ति शतम् । तद्भासकः स्वगोभिः को वा रविरिव गुणज्ञोऽस्ति ॥ ६११ ॥ रमणीयः स हि पुरुषो रमणी यत्रैव रज्यति विदग्धा । श्लोकः स एव सुभगश्चित्तं सक्तं हि यत्र रसिकस्य ॥ ६१२ ॥ आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् । बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ ६१३ ॥ अबला यत्र प्रबला शिशुरवनीशो निरक्षरो मन्त्री । नाहि नहि तत्र धनाशा जीवित आशापि दुर्लभा भवति ॥ ६१४ ॥ ज्वलति चलितेन्धनोऽग्निर्विप्रकृतः पन्नगः फणं कुरुते । प्रायः स्वं महिमानं क्षोभात्प्रतिपद्यते जन्तुः ॥ ६१५ ॥ राजनि विदुषां मध्ये वरसुरतानां समागमे स्त्रीणाम् । सौध्वसदूषितहृदयो वाक्पटुरपि कातरो भवति ॥ ६१६ ॥ अलिरनुसरति परिमलं लक्ष्मीरनुसरति नयगुणसमृद्धिम् । निम्नमनुसरति सलिलं विधिलिखितं बुद्धिरनुसरति ॥ ६१७ ॥ स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति । सपूर्णेऽपि तडागे काकः कुम्भोदकं पिबति ॥ ६१८ ॥ कि क्रूरं फणिहृदय पुनरपि कि क्रूरमङ्गनाहृदयम् । क्रूरात्क्रूरतरं कि पतिसुतधनहीनमङ्गनाहृदयम् ॥ ६१९ ॥ अनुकूलां विमलाङ्गीं कुलजां कुशलां सुशीलसंपन्नाम् । पञ्चलकारां भार्यां पुरुषः पुण्योदयाल्लभते ॥ ६२० ॥ अरसिकजनभाषणतो रसिकजनैः सह वरं कलहः । लम्बकुचालिङ्गनतो लिकुचकुचापादताडन श्रेयः ॥ ६२१ ॥ आपदि मित्रपरीक्षा शूरपरीक्षा रणाङ्गणे भाति । विनये वशपरीक्षा स्त्रियः परीक्षा तु निर्धने पुसि ॥ ६२२ ॥ अनवसरे च यदुक्त सुभाषितं तच्च भवति हास्याय । रहसि प्रौढवधूनां रतिसमये वेदपाठ इव ॥ ६२३ ॥ मूर्खोऽपि न द्रष्टव्यो द्रष्टव्यश्चेन्न तेन सह तिष्ठेत् । यदि तिष्ठेन्न तु कथयेद्यदि कथयेन्मूर्खवत्कथयेत् ॥ ६२४ ॥ आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म । स्वाधीनता च पुंसा महदैश्वर्यं विनाप्यर्थैः ॥ ६२५ ॥ अवसरपठिता वाणी गुणगणरहितापि शोभते पुंसाम् । रतिसमये युवतीनां भूषाहानिर्विभूषण भवति ॥ ६२६ ॥ अव्याकरणमधीत भिन्नद्रोण्या तरंगिणीतरणम् । भेषजमपथ्यसहितं त्रयमिदमकृतं वरं न कृतम् ॥ ६२७ ॥ यः पठति लिखति पश्यति परिपृच्छति पण्डितानुपासयति । तस्य दिवाकरकिरणैर्नलिनीदलमिव विकास्यते बुद्धिः ॥ ६२८ ॥ विरला जानन्ति गुणान्विरलाः कुर्वन्ति निर्धनस्नेहान् । विरलाः परकार्यरताः परदुःखेनापि दुःखिता विरलाः ॥ ६२९ ॥ सरलो न कुटिलसङ्गं कुरुते यदि सद्गुणी भवेत्कुटिलः । कुरुते गुणोऽपि यावद्गुणो न भवेद्यथा शरो धनुषः ॥ ६३० ॥ अनवसरे याचितमपि सत्पात्रमपि कुप्यते दाता । रतिसमये च रुदन्तं प्रियमपि पुत्राय कुप्यते माता ॥ ६३१ ॥ उद्वेजयति दरिद्रं परमुद्राया झणत्कारः । गृहपति-

महित्वा सद्रसानि फलानि येषामेवंविधा विरला स्यु; (पक्षे) कान्ता स्त्री रा द्रव्य जनवेगो जनसताप. एतान्मर्पयित्वा सद्रस मोक्षरस· स एव फल येषामेतादृशा विरला स्यु

१ प्रकाशक २ स्वेन्द्रिय; (पक्षे) स्वकिरणै ३ चतुर ४. अविश्वस्तम् ५ भयम् ६. वाग्मी.

रतिमिलितायाः कङ्कणनादो यथा जारम् ॥ ६३२ ॥ कोऽन्धो योऽकार्यरतः को बधिरो यः शृणोति नैतानि। को मूको यः काले प्रियाणि वक्तुं न जानाति ॥ ६३३ ॥ कुत्र विधेयो यत्नो विद्याभ्यासे सदौषधे दाने। अवधीरणा क्व कार्या खलपरयोषित्परधनेषु ॥ ६३४ ॥ कुत्र विधेयो वासः सज्जनकण्ठे यथा काश्याम्। कः परिहार्यो देशः पिशुनयुतो लुब्धभूपश्च ॥ ६३५ ॥ दधि मधुरं मधु मधुरं द्राक्षा मधुरा सुधापि मधुरैव। तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम् ॥६३६॥ अविदितपरमानन्दो वदति जनो विषयमेव रमणीयम्। तिलतैलमेव मिष्टं येन न दृष्टं घृतं क्वापि ॥ ६३७ ॥ रोगी चिरप्रवासी परान्नभोजी परावसथशायी। यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः ॥ ६३८ ॥ को धर्मो भूतदया किं सौख्यं नित्यमरोगिता जगति। कः स्नेहः सद्भावः किं पाण्डित्यं परिच्छेदः ॥ ६३९ ॥ दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम्। वित्तं त्यागनियुक्तं दुर्लभमेतच्चतुष्टयं लोके ॥ ६४० ॥ कल्पयति येन वृत्तिं येन च लोके प्रशस्यते सद्भिः। स गुणस्तेन च गुणिना रक्ष्यः संवर्धनीयश्च ॥ ६४१ ॥ दुर्जनगम्या नार्यः प्रायेणापात्रभृद्भवति राजा। कृपणानुसारि च धनं मेघो गिरिजलधिवर्षी च ॥ ६४२ ॥ कृतशतमसत्सु नष्टं सुभाषितशतं च नष्टमबुधेषु। वचनशतमवचनकरे बुद्धिशतमचेतने नष्टम् ॥ ६४३ ॥ चन्दनतरुषु भुजङ्गा जलेषु कमलानि तत्र च ग्राहाः। गुणघातिनश्च खला भोगेष्वलं सुखान्यविघ्नानि ॥ ६४४ ॥ दक्षः श्रियमधिगच्छति पथ्याशी कल्पतां सुखमरोगी। उद्युक्तो विद्यान्तं धर्मार्थयशांसि च विनीतः ॥ ६४५ ॥ निरतिशयं गरिमाणं तेन जनन्याः स्मरन्ति विद्वांसः। यत्कमपि वहति गर्भं महतामपि यो गुरुर्भवति ॥ ६४६ ॥ अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते। निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः ॥६४७ ॥ विषमस्थस्वादुफलग्रहणव्यवसायनिश्चयो येषाम्। उष्ट्राणामिव तेषां मन्येऽहं शासितं जन्म ॥ ६४८ ॥ दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम्। जयति तुलामधिरूढो भास्वानपि जलदपटलानि ॥ ६४९ ॥ आपदि येनोपकृतं येन च हसितं दशासु चान्त्यासु। उपकृदपकृदपि च तयोर्यस्तं पुरुषं परं मन्ये ॥ ६५० ॥ असती भवति सलज्जा क्षारं नीरं च शीतलं भवति। दम्भो भवति विवेकी प्रियवक्ता भवति धूर्तजनः ॥ ६५१ ॥ पश्यति परस्य युवतिं सकाममपि तन्मनोरथं कुरुते। ज्ञात्वैव तदप्राप्तिं व्यर्थं मनुजो हि पापभाग्भवति ॥ ६५२ ॥ स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि। मधुरापि हि मूर्छयते विषविटपिसमाश्रिता वल्ली ॥ ६५३ ॥ सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य। हस्ततुलयापि निपुणाः पलप्रमाणं विजानन्ति ॥ ६५४ ॥ कविहृदयेष्वनसूया कस्तूरीकर्दमेष्वमालिन्यम्। अक्षारता पयोधाववनीपालेषु पाण्डित्यम् ॥ ६५५ ॥ वस्तुनि चिराभिलषिते कथमपि दैवात्प्रसक्तसंघटने। प्राक्प्राप्तान्यपि बहुशो दुःखानि परं सुखानि जायन्ते

॥ ६५६ ॥ विस्रब्धघातदोषः स्ववधाय खलस्य वीरकोपकरः । नवतरुभङ्गध्वनिरिव हरिनिद्रातस्करः करिणः ॥ ६५७ ॥ सत्यपि च सुकृतकर्मणि दुर्नीतिश्चेच्छ्रियं हरत्येव । तैलैः सदोपयुक्तां दीपशिखां विदलयति हि वातालिः ॥ ६५८ ॥ उपचारः कर्तव्यो यावदनुत्पन्नसौहृदाः पुरुषाः । उत्पन्नसौहृदानामुपचारः कैतवं भवति ॥ ६५९ ॥ स्नेहो हि वरमघटितो न वरं संजातविघटितस्नेहः । हृतनयनो हि विषादी न विषादी भवति स खलु जात्यन्धः ॥ ६६० ॥ सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः । विद्यते नहि स कश्चिदुपायः सर्वलोकपरितोषकरो यः ॥ ६६१ ॥ कस्यचित्किमपि नो हरणीयं मर्मवाक्यमपि नोच्चरणीयम् । श्रीपतेः पदयुगं स्मरणीयं लीलया भवजलं तरणीयम् ॥ ६६२ ॥ आसुरं कुलमनादरणीयं चित्तमेतदमलीकरणीयम् । रामधाम शरणीकरणीयं लीलया भवजलं तरणीयम् ॥ ६६३ ॥ जीवितं तदपि जीवितमध्ये गण्यते सुकृतिभिः किमु पुंसाम् । ज्ञानविक्रमकलाकुललज्जात्यागभोगरहितं विफलं यत् ॥ ६६४ ॥ लोक एष गतलोचनत्रयः कस्य वा न विवृणोति वाच्यताम् । लोचनोत्सवमशेषजीवनं यत्कलङ्कयति चन्द्रमण्डलम् ॥ ६६५ ॥ यः परस्य विषमं विचिन्तयेत्प्राप्नुयात्स कुमतिः स्वयं हि तत् । पूतना हरिवधार्थमाययौ प्राप सैव वधमात्मनस्ततः ॥ ६६६ ॥ काके शौचं द्यूतकारे च सत्यं सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः । क्लीबे धैर्यं मद्यपे तत्त्वचिन्ता राजा मित्रं केन दृष्टं श्रुतं वा ॥ ६६७ ॥ एको देवः केशवो वा शिवो वा एकं मित्रं भूपतिर्वा यतिर्वा । एका भार्या सुन्दरी वा दरी वा एको वासः पट्टने वा वने वा ॥ ६६८ ॥ चित्तायत्तं धातुबद्धं शरीरं नष्टे चित्ते धातवो यान्ति नाशम् । तस्माच्चित्तं सर्वदा रक्षणीयं स्वस्थे चित्ते बुद्धयः संभवन्ति ॥ ६६९ ॥ मांसं मृगाणां दशनौ गजानां मृगद्विषां चर्म फलं द्रुमाणाम् । स्त्रीणां स्वरूपं च नृणां हिरण्यमेते गुणा वैरकरा भवन्ति ॥ ६७० ॥ शाठ्येन धर्मं कपटेन मित्रं परोपतापेन समृद्धिभावम् । सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये व्यक्तमपण्डितास्ते ॥ ६७१ ॥ राजा घृणी ब्राह्मणः सर्वभक्षी स्त्री चावशा दुष्टबुद्धिः सहायः । प्रेष्यः प्रतीपोऽधिकृतः प्रमादी त्याज्या इमे यश्च कृतं न वेत्ति ॥ ६७२ ॥ मूर्खो द्विजातिः स्थविरो गृहस्थः कामी दरिद्रो धनवांस्तपस्वी । वेश्या कुरूपा नृपतिः कदर्यो लोके षडेतानि विडम्बितानि ॥ ६७३ ॥ दानं दरिद्रस्य प्रभोश्च शान्तिर्यूनां तपो ज्ञानवतां च मौनम् । इच्छानिवृत्तिश्च सुखान्वितानां दया च भूतेषु दिवं नयन्ति ॥ ६७४ ॥ अर्थागमो नित्यमरोगिता च प्रिया च भार्या प्रियवादिनी च । वश्यश्च पुत्रोऽर्थकरी च विद्या षड्जीवलोकेषु सुखानि राजन् ॥ ६७५ ॥ आरोग्यमानृण्यमविप्रवासः संप्रत्यया वृत्तिरभीतिवासः । सद्भिर्मनुष्यैः सह सम्प्रयोगः षड्जीवलोकेषु सुखानि राजन् ॥ ६७६ ॥ मृतस्य लिप्सा कृपणस्य दित्सा विमार्गगायाश्च रुचिः स्वकान्ते । सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ न हि दृष्टपूर्वा ॥ ६७७ ॥ आर-

म्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात्। दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥ ६७८ ॥ भार्यावियोगः स्वजनापवादो ऋणस्य शेषं कृपणस्य सेवा। दारिद्र्यकाले प्रियदर्शनं च विनाग्निना पञ्च दहन्ति कायम् ॥ ६७९ ॥ अश्वप्लुतं वासवगर्जितं च स्त्रीणां च चित्तं पुरुषस्य भाग्यम्। अवर्षणं चाप्यतिवर्षणं च देवो न जानाति कुतो मनुष्यः ॥ ६८० ॥ राष्ट्रस्य चित्तं कृपणस्य वित्तं मनोरथं दुर्जनमानुषाणाम्। स्त्रियश्चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्यः ॥ ६८१ ॥ किं पौरुषं रक्षति यो न वार्तान्कि वा धनं नार्थिजनाय यत्स्यात्। सा किं क्रिया या न हितानुबद्धा किं जीवितं साधुविरोधि यद्वै ॥ ६८२ ॥ अन्यायवित्तेन कृतोऽपि धर्मः सव्याज इत्याहुरशेषलोकाः। न्यायार्जितार्थेन स एव धर्मो निर्व्याज इत्यार्यजना वदन्ति ॥ ६८३ ॥ यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसख्यामतिवर्तितुं वा। निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ६८४ ॥ शास्त्रेषु निष्ठा सहजश्च बोधः प्रागल्भ्यमभ्यस्तगुणा च वाणी। कालानुरोधः प्रतिभानवत्त्वमेते गुणाः कामदुघाः क्रियासु ॥ ६८५ ॥ न स्वल्पमप्यध्यवसायभीरोः करोति विज्ञानविधिर्गुणं हि। अन्धस्य किं हस्ततलस्थितोऽपि प्रकाशयत्यर्थमिह प्रदीपः ॥ ६८६ ॥ न कस्यचित्कश्चिदिह स्वभावाद्भवत्युदारोऽभिमतः खलो वा। लोके गुरुत्वं विपरीततां वा स्वचेष्टितान्येव नरं नयन्ति ॥ ६८७ ॥ अपायसंदर्शनजां विपत्तिमुपायसंदर्शनजां च सिद्धिम्। मेधाविनो नीतिविधिप्रयुक्तां पुरः स्फुरन्तीमिव दर्शयन्ति ॥ ६८८ ॥ दन्तस्य निर्घर्षणकेन राजन्कर्णस्य कण्डूयनकेन वापि। तृणेन कार्यं भवतीश्वराणां किमङ्गवाक्पाणिमता नरेण ॥ ६८९ ॥ त्यजेत्क्षुधार्तो महिलां स्वपुत्रं खादेत्क्षुधार्ता भुजगी स्वमण्डम्। बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति ॥ ६९० ॥ दारेषु किंचित्स्वजनेषु किंचिद्गोप्यं वयस्येषु सुतेषु किंचित्। युक्तं न वा युक्तमिदं विचिन्त्य वदेद्विपश्चिन्महतोऽनुरोधात् ॥ ६९१ ॥ मृगा मृगैः सङ्गमनुव्रजन्ति गावश्च गोभिस्तुरगास्तुरंगैः। मूर्खाश्च मूर्खैः सुधियः सुधीभिः समानशीलव्यसनेषु सख्यम् ॥ ६९२ ॥ त्याज्यं न धैर्यं विधुरेऽपि काले धैर्यात्कदाचिद्गतिमाप्नुयात्सः। यथा समुद्रेऽपि च पोतभङ्गे सांयात्रिको वाञ्छति तर्तुमेव ॥ ६९३ ॥ दानेन तुल्यो विधिरस्ति नान्यो लोभाच्च नान्योऽस्ति परः पृथिव्याम्। विभूषणं शीलसमं न चान्यत्संतोषतुल्यं धनमस्ति नान्यत् ॥ ६९४ ॥ एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य। तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥ ६९५ ॥ क्षते प्रहारा निपतन्त्यभीक्ष्णं धनक्षये वर्धति जाठराग्निः। आपत्सु वैराणि समुद्भवन्ति छिद्रेष्वनर्था बहुलीभवन्ति ॥ ६९६ ॥ अर्थातुराणां न गुरुर्न बन्धुः कामातुराणां न भयं न लज्जा। विद्यातुराणां न सुखं न निद्रा क्षुधातुराणां न रुचिर्न वेला ॥ ६९७ ॥ विवाहकाले ऋतुसंप्रयोगे प्राणात्यये सर्वधनापहारे। विप्रस्य चार्थेऽप्यनृतं वदेयुः पञ्चानृतान्या-

हुरपातकानि ॥ ६९८ ॥ यत्रास्ति लक्ष्मीर्विनयो न तत्र अभ्यागतो यत्र न तत्र लक्ष्मीः । उभौ च तौ यत्र न तत्र विद्या नैकत्र सर्वो गुणसंनिपातः ॥ ६९९ ॥ द्वारि प्रविष्टः सहसा ततः किं दृष्टः प्रभुः स्मेरमुखस्ततः किम् । कथा श्रुता श्रोत्ररमा ततः किं व्यथा न शान्ता यदि जाठरीया ॥ ७०० ॥ सुपात्रदानाच्च भवेद्धनाढ्यो धनप्रभावेण करोति पुण्यम् । पुण्यप्रभावात्सुरलोकवासी पुनर्धनाढ्यः पुनरेव भोगी ॥ ७०१ ॥ कुपात्रदानाच्च भवेद्दरिद्रो दारिद्र्यदोषेण करोति पापम् । पापप्रभावान्नरकं प्रयाति पुनर्दरिद्रः पुनरेव पापी ॥ ७०२ ॥ प्रभुर्विवेकी धनवांश्च दाता विद्वान्विरागी प्रमदा सुशीला । तुरंगमः शस्त्रनिपातधीरो भूमण्डलस्याभरणानि पञ्च ॥ ७०३ ॥ स्वदेशजातस्य नरस्य नूनं गुणाधिकस्यापि भवेदवज्ञा । निजाङ्गना यद्यपि रूपराशिस्तथापि लोकः परदारसक्तः ॥ ७०४ ॥ गन्धः सुवर्णे फलमिक्षुदण्डे नाकारि पुष्पं खलु चन्दनेषु । विद्वान्धनाढ्यो न तु दीर्घजीवी धातुः पुरा कोऽपि न बुद्धिदोऽभूत् ॥ ७०५ ॥ सर्पस्य रत्ने कृपणस्य वित्ते सत्याः कुचे केसरिणश्च केशे । मानोन्नतानां शरणागते च मृतौ भवेदन्यकरप्रचारः॥७०६॥श्रुतिर्विभिन्ना स्मृतयश्च भिन्ना नैको मुनिर्यस्य वचः प्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥७०७॥ प्रागल्भ्यहीनस्य नरस्य विद्या शस्त्रं यथा कापुरुषस्य हस्ते । न तृप्तिमुत्पादयते शरीरे वृद्धस्य दारा इव दर्शनीयाः ॥ ७०८ ॥ राजाश्रयस्तस्करताश्वपण्यमाथर्वणं चापि समुद्रयानम् । एतानि सिध्यन्ति महाफलानि विपर्यये प्राणहराणि पञ्च ॥ ७०९ ॥ स्वर्गच्युतानामिह भूमिलोके चत्वारि चिह्नानि वसन्ति देहे । दानप्रसङ्गो मधुरा च वाणी सुरार्चनं ब्राह्मणतर्पणं च ॥ ७१० ॥ निरक्षरे वीक्ष्य महाधनत्वं विद्या न हेया विदुषा कदापि । रत्नावतंसाः कुलटाः समीक्ष्य किमार्यनार्यः कुलटा भवन्ति ॥ ७११ ॥ गीर्भिर्गुरूणां परुषाक्षराभिस्तिरस्कृता यान्ति नरा महत्त्वम् । अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो वसन्ति ॥ ७१२ ॥ किमिष्टमन्नं खरसूकराणां किं रत्नहारो मृगपक्षिणां च । अन्धस्य दीपो बधिरस्य गीतं मूर्खस्य किं शास्त्रकथाप्रसङ्गः ॥ ७१३ ॥ ये शान्तदान्ताः श्रुतिपूर्णकर्णा जितेन्द्रियाः स्त्रीविषये निवृत्ताः । प्रतिग्रहे संकुचिताभिहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ ७१४ ॥ पतिव्रतायाः कुचकुम्भयुग्ममत्युग्रशार्दूलनखावलिश्च । वीरस्य शस्त्रं कृपणस्य वित्तं लभ्यन्ति चत्वारि तदन्तकाले॥७१५॥देशाटनं पण्डितमित्रता च वाराङ्गना राजसभाप्रवेशः । अनेकशास्त्राणि विलोकितानि चातुर्यमूलानि भवन्ति पञ्च ॥ ७१६ ॥ न वेत्ति यो यस्य गुणप्रकर्षं स तं सदा निन्दति नात्र चित्रम् । यथा किराती करिकुम्भजातां मुक्तां परित्यज्य बिभर्ति गुञ्जाम् ॥ ७१७ ॥ गिरौ मयूरा गगने पयोदा लक्षान्तरेऽर्कश्च जलेषु पद्मम् । द्विर्लक्षसोमात्कुमुदोत्पलानि स्नेहेषु मैत्री न कदापि दूरा ॥ ७१८ ॥ सुभाषितज्ञेन जनेन साकं संभाषणं सुप्रभुसेवनं च । आलिङ्गनं तुङ्गपयोधराणां

प्रत्यक्षसौख्यं त्रयमेव लोके ॥ ७१९ ॥ अर्थो नराणां पतिरङ्गनानां वर्षा नदीनामृतुराट् तरूणाम् । स्वधर्मचारी नृपतिः प्रजानां गतं गतं यौवनमानयन्ति ॥ ७२० ॥ जितेन्द्रियत्वं विनयस्य पुंसां गुणप्रकर्षो विनयादवाप्यते । गुणाधिके पुंसि जनोऽनुरज्यते जनानुरागः प्रभवो हि संपदः॥७२१॥मनः पवित्रं सदनं विचित्रं स्तुत्यं कलत्रं स्मरणीयगोत्रम्।आरोग्यगात्रं ध्रुवभाविपात्रं पुत्राः पवित्राः फलमीशभक्तेः ॥ ७२२ ॥ संपूर्णकुम्भो न करोति शब्दमर्धो घटो घोषमुपैति नूनम् । विद्वान्कुलीनो न करोति गर्वं गुणैर्विहीना बहु जल्पयन्ति ॥ ७२३ ॥ अक्रोधवैराग्यजितेन्द्रियत्वं क्षमादयाशान्तिजनप्रियत्वम् । निर्लोभदाता भयशोकहीनं ज्ञानस्य चिह्नं दशलक्षणानि ॥ ७२४ ॥ धिग्जीवितं शास्त्रकलोज्झितस्य धिग्जीवितं चोद्यमवर्जितस्य । धिग्जीवितं व्यर्थमनोरथस्य धिग्जीवितं ज्ञातिपराजितस्य ॥ ७२५ ॥ रूपं जरा सर्वसुखानि तृष्णा खलेषु सेवा पुरुषाभिमानम् । याच्ञा गुरुत्वं गुणमात्मपूजा चिन्ता बलं हन्त्यदया च लक्ष्मीम् ॥ ७२६ ॥ शुष्केन्धने वह्निरुपैति वृद्धिं बालेषु शोकश्चपलेषु कोपः । कान्तासु कामो निपुणेषु चित्तं धर्मो दयावत्सु महत्सु धैर्यम् ॥ ७२७ ॥ निर्वाणदीपे किमु तैलदानं चौरे गते वा किमु सावधानम् । वयो गते किं वनिताविलासः पयोगते किं खलु सेतुबन्धः ॥ ७२८ ॥ त्रिविक्रमोऽभूदपि वामनोऽसौ स शूकरश्चेति स वै नृसिंहः । नीचैरनीचैरतिनीचनीचैः सर्वैरुपायैः फलमेव साध्यम् ॥ ७२९ ॥ कुग्रामवासः कुजनस्य सेवा कुभोजनं क्रोधमुखी च भार्या । मूर्खश्च पुत्रो विधवा च कन्या विनाग्निना संदहते शरीरम् ॥ ७३० ॥ अल्पीयसामेव निवासभूमि त्यागाद्विपत्तिर्महतां न जातु । रत्नाकरात्सन्मणयोऽभियान्ति राज्ञां शिरः काकमुखास्तु भेकाः ॥ ७३१ ॥ अनेकशास्त्रं बहु वेदितव्यमल्पश्च कालो बहवश्च विघ्ना । यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमध्यात्॥७३२॥ अनन्तपारं किल शब्दशास्त्रं स्वल्पं यथायुर्बहवश्च विघ्नाः। सारं ततो ग्राह्यमपास्य फल्गु हंसो यथा क्षीरमिवाम्बुमध्यात्॥७३३॥ क्रोधो हि शत्रुः प्रथमं नराणां देहस्थितो देहविनाशनाय । यथा स्थितः काष्ठगतो हि वह्निः स एव वह्निर्दहते शरीरम् ॥ ७३४ ॥ यथा विहंगास्तरुमाश्रयन्ति नद्यो यथा सागरमाश्रयन्ति । यथा तरुण्यः पतिमाश्रयन्ति सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ७३५ ॥ यती व्रती चापि पतिव्रताश्च वीराश्च शूराश्च दयापराश्च । त्यागी च भोगी च बहुश्रुताश्च सुसङ्गमात्रेण दहन्ति पापम् ॥ ७३६ ॥ जवो हि सप्तेः परमं विभूषणं त्रपाङ्गनायाः कृशता तपस्विनः । द्विजस्य विद्या नृपतेरपि क्षमा पराक्रमः शस्त्रबलोपजीविनाम् ॥ ७३७ ॥ धनेन किं यो न ददाति याचके बलेन किं यश्च रिपुं न बाधते । श्रुतेन किं यो न च धर्ममाचरेत्किमात्मना यो न जितेन्द्रियो भवेत् ॥ ७३८ ॥ श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा । निशा शशाङ्केन धृतिः समाधिना नयेन चालंक्रियते नरेन्द्रता ॥ ७३९ ॥ प्रकीर्णकेशामनवे-

क्ष्यकारिणीं सदा च भर्तुः प्रतिकूलभाषिणीम् । परस्य वेश्माभिरतामपत्रपामेवंविधां योषितमाशु वर्जयेत् ॥ ७४० ॥ मनीषिणः सन्ति न ते हितैषिणो हितैषिणः सन्ति न ते मनीषिणः । सुहृच्च विद्वानपि दुर्लभो नृणां यथौषधं स्वादु हितं च दुर्लभम् ॥ ७४१ ॥ परोऽवजानाति यदज्ञताजडस्तदुन्नतानां न विहन्ति धीरताम् । समानवीर्यान्वयपौरुषेषु यः करोत्यतिक्रान्तिमसौ तिरस्क्रिया ॥ ७४२ ॥ यदा विगृह्णाति हतं तदा यशः करोति मैत्रीमथ दूषिता गुणाः । स्थितिं समीच्योभयथा परीक्षकः करोत्यवज्ञोपहतं पृथग्जनम् ॥ ७४३ ॥ वनेषु दोषाः प्रभवन्ति रागिणां गृहेषु पञ्चेन्द्रियनिग्रहस्तपः । अकुत्सिते कर्मणि यः प्रवर्तते निवृत्तरागस्य गृहं तपोवनम् ॥ ७४४ ॥ सुजीर्णमन्नं सुविचक्षणः सुतः सुशासिता स्त्री नृपतिः सुसेवितः । सुचिन्त्य चोक्तं सुविचार्य यत्कृतं सुदीर्घकालेऽपि न याति विक्रियाम् ॥ ७४५ ॥ तृणानि नोन्मूलयति प्रभञ्जनो मृदूनि नीचैः प्रणतानि सर्वतः । समुच्छ्रितानेव तरून्प्रबाधते महान्महत्येव करोति विक्रमम् ॥ ७४६ ॥ निमित्तमुद्दिश्य हि यः प्रकुप्यति ध्रुवं स तस्यापगमे प्रसीदति । अकारणद्वेषि मनस्तु यस्य वै कथं जनस्तं परितोषयिष्यति ॥ ७४७ ॥ न साहसैकान्तरसानुवर्तिना न चाप्यपायोपहतान्तरात्मना । विभूतयः शक्यमवाप्तुमूर्जिता नये च शौर्ये च वसन्ति संपदः ॥ ७४८ ॥ मुदं विषादः शरदं हिमागमस्तमो विवस्वान्सुकृतं कृतघ्नता । प्रियोपपत्तिः शुचमापदं नयः श्रियः समृद्धा अपि हन्ति दुर्णयः ॥ ७४९ ॥ उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति चोदिताः । अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥ ७५० ॥ असत्यता निष्ठुरताकृतज्ञता भयं प्रमादोऽलसता विषादिता । वृथाभिमानो ह्यतिदीर्घसूत्रता तथाङ्गरौक्ष्याद्दिवि नाशनं श्रियः ॥ ७५१ ॥ दरिद्रता धीरतया विराजते कुरूपता शीलतया विराजते । कुभोजनं चोष्णतया विराजते कुवस्त्रता शुभ्रतया विराजते ॥ ७५२ ॥ यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः । तथा चतुर्भिः पुरुषः परीक्ष्यते श्रुतेन शीलेन कुलेन कर्मणा ॥ ७५३ ॥ कुदेशमासाद्य कुतोऽर्थसंचयः कुपुत्रमासाद्य कुतो जलाञ्जलिः । कुगेहिनीं प्राप्य गृहे कुतः सुखं कुशिष्यमध्यापयतः कुतो यशः ॥ ७५४ ॥ मातासमं नास्ति शरीरपोषणं चिन्तासमं नास्ति शरीरशोषणम् । भार्यासमं नास्ति शरीरतोषणं विद्यासमं नास्ति शरीरभूषणम् ॥ ७५५ ॥ गुणी गुणं वेत्ति न वेत्ति निर्गुणो बली बलं वेत्ति न वेत्ति निर्बलः । पिको वसन्तस्य गुणं न वायसः करी च सिंहस्य बलं न मूषिकः ॥ ७५६ ॥ सुखं तु दुःखान्यनुभूय शोभते घनान्धकारेष्विव दीपदर्शनम् । सुखाच्च यो याति नरो दरिद्रतां धृतः शरीरेण मृतः स जीवति ॥ ७५७ ॥ स दीक्षितो यः सकलं यदीक्षते स पण्डितो यः करणैरखण्डितः । स तापसो यः परतापकर्षणः स धार्मिको यः परमर्म न स्पृशेत् ॥ ७५८ ॥ प्रकटं मृदु नाम जल्पतः परुषं सूचयतोऽर्थ-

मन्तरा । शकुनादिव मार्गवर्तिभिः पुरुषादुद्विजितव्यमीदृशात् ॥ ७५९ ॥ सुकुलजन्म विभूतिरनेकधा प्रियसमागमसौख्यपरंपरा । नृपकुले गुरुता विमलं यशो भवति पुण्यतरोः फलमीदृशम् ॥ ७६० ॥ कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रणिधीयते । न स विरौति न चापि हि शोभते भवति योजयितुर्वचनीयता॥७६१॥मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा । इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन् ॥ ७६२ ॥ महतां यदि निन्दने रतिर्गुणसंख्यैव तदा विधीयताम् । असतामपि चेत्स्तवे रतिर्ननु तद्दूषणमेव गण्यताम् ॥ ७६३ ॥ जरा रूपं हरति हि धैर्यमाशा मृत्युः प्राणान्धर्मचर्यामसूया । कामो ह्रियं वृत्तमनार्यसेवा क्रोधः श्रियं सर्वमेवाभिमानः॥७६४॥ मणिना वलयं वलयेन मणिर्मणिना वलयेन विभाति करः । कविना च विभुर्विभुना च कविः कविना विभुना च विभाति सभा ॥७६५॥ शशिना च निशा निशया च शशिः शशिना निशया च विभाति नभः। पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः॥७६६॥गुणवानपि नोपयाति पूजां पुरुषः सत्पुरुषैरकत्थ्यमानः । न हि सौरमणिः स्वभावकान्ति रविपादैरनधिष्ठितः करोति ॥७६७॥ सहसा विदधीत न क्रियामविवेकः परमापदां पदम् । वृणुते हि विमृश्य कारिणं गुणलुब्धाः स्वयमेव संपदः ॥ ७६८ ॥ विना गोरसं को रसो भोजनानां विनागोरसं को रसो भूपतीनाम् । विना गोरसं को रसः कामिनीनां विना गोरसं को रसः पण्डितानाम् ॥ ७६९ ॥ सकलापि कला कलावतां विकला पुण्यकलां विना खलु । सकला नयना वृथा यथा तनुभाजां हि कनीनिकां विना ॥ ७७० ॥ सहजमलिनवक्रभावभाजां भवति भवः प्रभवात्मनाशहेतुः । जलधरपदवीमवाप्य धूमो ज्वलनविनाशमनुप्रयाति नाशम् ॥७७१॥ स्तब्धस्य नश्यति यशो विषमस्य मैत्री नष्टक्रियस्य कुलमर्थपरस्य धर्मः । विद्याफलं व्यसनिनः कृपणस्य सौख्यं राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ ७७२ ॥ दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः संतापयन्ति कमपथ्यभुजं न रोगाः । कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः कं स्वीकृता न विषया ननु तापयन्ति ॥ ७७३ ॥ वित्तेन किं वितरणं यदि नास्ति दीने किं सेवया यदि परोपकृतौ न यत्नः । किं सगमेन तनयो यदि नेक्षणीयः किं यौवनेन विरहो यदि वल्लभायाः ॥ ७७४ ॥ कि भूषणं सुदृढमत्र यशो न रत्नं किं कार्यमार्यचरितं सुकृतं न दोषः । किं चक्षुरप्रतिहतं धिषणा न नेत्र जानाति कस्त्वदपरः सदसद्विवेकम् ॥ ७७५ ॥ प्राप्ताः श्रियः सकलकामदुघास्ततः किं दत्तं पदं शिरसि विद्विषतां ततः किम् । संप्रीणिताः प्रणयिनो विभवैस्ततः कि कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ॥७७६॥ आदौ न वा प्रणयिनां प्रणयो विधेयो दत्तोऽथवा प्रतिदिन परिपोषणीयः । उत्क्षिप्य यत्क्षिपति तत्प्रकरोति लज्जां भूमौ स्थितस्य पतनाद्भयमेव नास्ति ॥ ७७७ ॥ वाञ्छैव सूचयति पूर्वतरं भविष्यं पुंसां यदन्यतनुजं त्वशुभं शुभं वा । विज्ञायते शिशुरजा-

तकलापचिह्नः प्रत्युद्गतैरपसरन्सरसः कलापी ॥ ७७८ ॥ शस्त्रैर्हतास्तु रिपवो न हता भवन्ति प्रज्ञाहताश्च नितरां सुहता भवन्ति । शस्त्रं निहन्ति पुरुषस्य शरीरमेकं प्रज्ञा कुलं च विभवं च यशश्च हन्ति ॥ ७७९ ॥ स्थानेषु शिष्यनिवहैर्विनियुज्यमाना विद्या गुरुं हि गुणवत्तरमातनोति । आदाय शुक्तिषु बलाहकविप्रकीर्णै रत्नाकरो भवति वारिभिरम्बुराशिः ॥ ७८० ॥ वार्ता च कौतुककरी विमला च विद्या लोकोत्तरः परिमलश्च कुरंगनाभेः । तैलस्य बिन्दुरिव वारिणि दुर्निवारमेतत्त्रयं प्रसरति स्वयमेव भूमौ ॥ ७८१ ॥ अत्यन्तमन्थनकदर्थनमुत्सहन्ते मर्यादया नियमिताः किमु साधवोऽपि । लक्ष्मीसुधाकरसुधाद्युपनीय शेषे रत्नाकरोऽपि गरलं किमु नोज्जगार ॥ ७८२ ॥ अर्था हसन्त्युचितदानविहीनलुब्धं भूम्यो हसन्ति मम भूमिरिति ब्रुवाणम् । जारा हसन्ति तनयानुपलालयन्तं मृत्युर्हसत्यवनिपं रणरङ्गभीरुम् ॥ ७८३ ॥ वैद्या वदन्ति कफपित्तमरुद्विकाराञ्ज्योतिर्विदो ग्रहगतिं परिवर्तयन्ति । भूताभिषङ्ग इति भूतविदो वदन्ति प्राचीनकर्म बलवन्मुनयो वदन्ति ॥ ७८४ ॥ कस्यापि कोऽप्यतिशयोऽस्ति स तेन लोके ख्यातिं प्रयाति न हि सर्वविदस्तु सर्वे । किं केतकी फलति किं पनसः सुपुष्पः किं नागवल्ल्यपि च पुष्पफलैरुपेता ॥ ७८५ ॥ शीलावलम्बनमहर्निशमिष्टचिन्ता वित्तानुरूपमशनाभरणादि कार्यम् । वार्यं च दुर्जनसमाजनिजप्रशंसा हास्यादि सज्जनवचो हृदये विधेयम् ॥ ७८६ ॥ पश्यन्ति नैव कवयो निजकाव्यदोषं भक्षन्ति नो बलिभुजो निजजातिमांसम् । जल्पन्ति नैव मधुपा निजमर्मवाक्यं कुर्वन्ति नो युवतयः पुरुषेषु बीजम् ॥ ७८७ ॥ कीर्तिं मृणालकमनीयभुजामनिद्रचन्द्राननां स्मितसरोरुहचारुनेत्राम् । ज्योत्स्नास्मितामपहतां दयितामिव स्वां लब्धुं न कः परमुपक्रममातनोति ॥७८८॥ शास्त्रं सुनिश्चलधिया परिचिन्तनीयं सेव्यो नृपोऽपि सततं परिसेवनीयः । अङ्के स्थितापि युवतिः परिरक्षणीया शास्त्रे नृपे च युवतौ च कुतो वशित्वम् ॥ ७८९ ॥ हंसो विभाति नलिनीदलतालमध्ये सिंहो विभाति गिरिगह्वरकन्दरासु । जात्यो विभाति तुरगो रणयुद्धमध्ये विद्वान्विभाति पुरुषेषु विचक्षणेषु ॥ ७९० ॥ हंसो न भाति बलिभोजनवृन्दमध्ये गोमायुमण्डलगतो न विभाति सिंहः । जात्यो न भाति तुरगः खरयुद्धमध्ये विद्वान्न भाति पुरुषेषु निरक्षरेषु ॥ ७९१ ॥ विश्वेश्वरस्तु सुधिया गलितेऽपि भेदे भावेन भक्तिसहितेन समर्चनीयः । प्राणेश्वरश्चतुरया मिलितेऽपि चित्ते चैलाञ्चलव्यवहितेन निरीक्षणीयः ॥ ७९२ ॥ किं कोकिलस्य विरुतेन गते वसन्ते किं कातरस्य बहुशस्त्रपरिग्रहेण । मित्रेण किं व्यसनकालपराङ्मुखेन किं जीवितेन पुरुषस्य निरक्षरेण ॥ ७९३ ॥ हारः प्रलम्बितपयोधरमध्यवर्ती शुष्कस्तनान्तरगतो वरकञ्चुकश्च । काणेक्षणाञ्जनममूर्ध्नि च पुष्पमाला दीनाश्रयो बुधजनः खलु पञ्च दुःखम् ॥ ७९४ ॥ उचितमनुचितं वा कुर्वता कार्यजातं परिणतिरवधार्या यत्नतः पण्डितेन । अतिरभस-

कृतानां कर्मणामा विपत्तेर्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ७९५ ॥ व्यतिषजति पदार्थानान्तरः कोऽपि हेतुर्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते । विकसति हि [illegible]स्योदये पुण्डरीकं द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ ७९६ ॥ प्रथमदिवसचन्द्रः सर्वलोकैकवन्द्यः स च सकलकलाभिः पूर्णचन्द्रो न वन्द्यः । अतिपरिचयदोषात्कस्य नो मानहानिर्नवनवगुणरागी प्रायशः सर्वलोकः ॥ ७९७ ॥ शशिनि खलु कलङ्कः कण्टकः पद्मनाले जलधिजलमपेयं पण्डिते निर्धनत्वम् । दयितजनवियोगो दुर्भगत्वं स्वरूपे धनवति कृपणत्वं रत्नदोषी विधाता ॥ ७९८ ॥ वरं तुङ्गाच्छृङ्गाद्गुरुशिखरिणः क्वापि पुलिने पतित्वायं कायः कठिणदृषदन्तर्विदलितः । वरं न्यस्तो हस्तः फणिपतिमुखे तीव्रदशने वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ७९९ ॥ विदैवज्ञं ग्रामं विबुधविधुरां भूपतिसभां मुखं श्रुत्या हीनं मनुजपतिशून्यं च विषयम् । अनाचारान्दारानपहरिकथं काव्यमपि च प्रवक्तृत्वापेतं गुरुमपि सुबुद्धिः परिहरेत् ॥ ८०० ॥ मणिः शाणोल्लीढः समरविजयी हेतिनिहतो मदक्षीणो नागः शरदि सरितः श्यानपुलिनाः । कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नृपाः ॥ ८०१ ॥ परिक्षीणः कश्चित्स्पृहयति यवानां प्रसृतये स पश्चात्संपूर्णः कलयति धरित्री तृणसमाम् । अतश्चानैकान्त्याद्गुरुलघुतयार्थेषु धनिनामवस्था वस्तूनि प्रथयति च सकोचयति च ॥ ८०२ ॥ किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः । किमाराध्यं पुण्यं किमभिलषणीयं च करुणा यदासक्त्या चेतो निरवधि विमुक्तौ प्रभवति ॥ ८०३ ॥ वरं मौनं कार्यं न च वचनमुक्तं यदनृत वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम् । वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचिर्वरं भिक्षाशित्व न च परधनास्वादनसुखम् ॥ ८०४ ॥ वरं शून्या शाला न च खलु वरो दुष्टवृषभो वरं वेश्या पत्नी न पुनरविनीता कुलवधूः । वरं वासोऽरण्ये न पुनरविवेकाधिपपुरे वरं प्राणत्यागो न पुनरधमानामुपगमः ॥ ८०५ ॥ दृढः प्रेमा भग्नः सदसिरिव संधिं न भजते भजेतापि प्रायः स्खलति खलु यत्नैरपि धृतः । स्खलेन्नो चेत्साम्यं भजति न भजेद्वा न भवति च्युताशङ्कश्चेत्स्यात्स्मृतिमुपगतस्तु व्यथयति ॥ ८०६ ॥ इयं प्रीतिर्वल्ली हृदयभुवि दैवात्समुदिता तथा यत्नाद्रक्ष्या प्रकृतिमृदुलापायबहुला । यथा नैनां स्फीतां पिशुनजनदुर्वाक्यदहनो दहत्यन्तः शोषं व्रजति न पुनः सौहृदनिधे ॥ ८०७ ॥ न रम्यं नारम्यं प्रकृतिगुणतो वस्तु किमपि प्रियत्वं यत्र स्यादितरदपि तद्ग्राहकवशात् । रथाङ्गाह्वानानां भवति विधुरङ्गारशकटीपटीराम्भः कुम्भः स भवति चकोरीनयनयोः ॥ ८०८ ॥ अरण्यं सारङ्गैर्गिरिकुहरगर्भाश्च हरिभिर्दिशो दिङ्मातङ्गैः सलिलमुषितं पङ्कजवनैः । प्रियाचक्षुर्मध्यस्तनवदनसौन्दर्यविजितैः सतां माने म्लाने मरणमथवा दूरगमनम् ॥ ८०९ ॥ नभोभूषा पूषा कमलवनभूषा मधुकरो वचोभूषा सत्यं वरविभवभूषा वितरणम् । मनोभूषा मैत्री

मधुसमयभूषा मनसिजः सदोभूषा सूक्तिः सकलगुणभूषा च विनयः ॥ ८१० ॥ कलासीमा काव्यं सकलगुणसीमा वितरणं भये सीमा मृत्युः सकलसुखसीमा सुवदना । तपःसीमा मुक्तिः सकलकृतिसीमाशृतिभृतिः प्रिये सीमाह्लादो श्रवणसुखसीमा हरिकथा ॥ ८१[illegible] शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः । प्रभुर्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ८१२ ॥ स्वफलनिचयः शाखाभङ्गं करोति वनस्पतेर्गमनमनसं बर्हाटोपः करोति शिखण्डिनः । चतुरगमनो जात्यो योऽश्वः स गौरिव वाह्यते गुणवति जने प्रायेणैते गुणाः खलु दूषणम् ॥८१३॥ कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं निरुपमरसप्रीत्या खादन्नरास्थि निरामिषम् । सुरपतिमपि श्वा पार्श्वस्थं विलोक्य न शङ्कते नहि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥८१४॥ दद्यात्साधुर्यदि निजपदे दुर्जनाय प्रवेशं तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः । तस्माद्देयो विपुलमतिभिर्नावकाशोऽधमानां जारोऽपि स्याद्गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥ ८१५ ॥ मौने मौनी गुणिनि गुणवान्पण्डिते पण्डितोऽसौ दीने दीनः सुखिनी सुखवान्भोगिनि प्राप्तभोगः । मूर्खे मूर्खो युवतिषु युवा वाग्मिषु प्रौढवाग्मी धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः ॥८१६॥ विद्यातीर्थे जगति विबुधाः साधवः सत्यतीर्थे गङ्गातीर्थे मलिनमनसो योगिनो ध्यानतीर्थे । धारातीर्थे धरणिपतयो दानतीर्थे धनाढ्या लज्जातीर्थे कुलयुवतयः पातकं क्षालयन्ति ॥ ८१७ ॥ साध्वीस्त्रीणां दयितविरहे मानिनां मानभङ्गे सल्लोकानामपि जनरवे निग्रहे पण्डितानाम् । अन्योद्रेके कुटिलमनसां निर्गुणानां विदेशे भृत्याभावे भवति मरणं किं तु संभावितानाम् ॥ ८१८ ॥ शीतेऽतीते वसनमशनं वासरान्ते निशान्ते क्रीडारम्भः कुवलयदृशां यौवनान्ते विवाहः । सेतोर्बन्धः पयसि चलिते वार्धके तीर्थयात्रा वित्तेऽतीते वितरणमतिं कर्तुमिच्छन्ति मूढाः ॥ ८१९ ॥ श्रेयो नूनं व्रजति स पुमाञ्शिक्षया वर्जितो यः स्वच्छन्दं यश्चरति स पराभूतिमाप्नोति काले । पूज्यो वेणुर्भवति च नतिं प्रापितो भूपतीनामन्यं नृत्तोचितमिनि खरे नर्तकाः कल्पयन्ति ॥ ८२० ॥ बाले बाला विदुषि विबुधा गायके गायकेशाः शूरे शूरा निगमविदि चाम्नायलीलागृहाणि । सिद्धे सिद्धा मुनिषु मुनयः सत्सु सन्तो महान्तः प्रौढे प्रौढाः किमिति वचसा तादृशा यादृशेषु ॥ ८२१ ॥ प्रसरति मनः कार्यारम्भे दृढीभवति स्पृहा स्वयमुपनयन्नर्थान्मन्त्रो न गच्छति विप्लवम् । फलति सकलं कृत्यं चित्तं समुन्नतिमश्नुते भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥ ८२२ ॥ सरसि बहुशस्ताराच्छाये क्षणात्परिवञ्चितः कुमुदविटपान्वेषी हंसो निशासु विचक्षणः । न दशति पुनस्ताराशङ्की दिवापि सितोत्पलं कुहकचकितो लोकः सत्येऽप्यपायमपेक्षते ॥ ८२३ ॥ यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः । आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्संदीप्ते भवने

तु कूपखननं प्रत्युद्यमः कीदृशः ॥८२४॥ पाथोधिं विनिधाय पाणिपुटके कुम्भोद्भवः पीतवान्विन्ध्याद्रिं नमयांचकार चपणां वृद्धेर्मतिं कुण्ठवान्। नायं कुम्भगुणः कदापि घटते नो वा कुलालात्मनः श्रीमन्माधवपादपद्ममहिमा सोऽयं समुज्जृम्भते ॥८२५॥ निर्वृत्ताध्वरकृत्य ऋत्विजमहोत्तीर्णापगो नाविकं युद्धान्ते सुभटं च सिद्धविजयो वोढारमाप्तस्थलः। वृद्धं वारवधूजनं च कितवो निर्घृष्टतद्यौवनो ध्वस्तातङ्कचयश्चिकित्सकमपि द्वेष्टि प्रदेयार्थिनम् ॥८२६॥ मित्रं स्वच्छतया रिपुं नयबलैर्लुब्धं धनैरीश्वरं कार्येण द्विजमादरेण युवतिं प्रेम्णा शमैर्बान्धवान्। अत्युग्रं स्तुतिभिर्गुरुं प्रणतिभिर्मूर्खं कथाभिर्बुधं विद्याभी रसिकं रसेन सकलं शीलेन कुर्याद्वशम् ॥ ८२७ ॥ दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालनाद्विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात्। ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयान्मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ ८२८ ॥ कोऽर्थान्प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गताः स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः। कः कालस्य न गोचरान्तरगतः कोऽर्थी गतो गौरवं को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ॥ ८२९ ॥ वैद्यं पानरतं नटं कुपठितं स्वाध्यायहीनं द्विजं योधं कापुरुषं हयं गतरयं मूर्खं परिव्राजकम्। राजानं च कुमन्त्रिभिः परिवृतं देशं च सोपद्रवं भार्यां यौवनगर्वितां पररतां मुञ्चन्ति ते पण्डिताः ॥ ८३० ॥ वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं मन्त्रिणः। पुष्पं पर्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः सर्वे कार्यवशाज्जनोऽभिरमते तत्कस्य को वल्लभः ॥ ८३१ ॥ सन्तश्चेदमृतेन किं यदि खलस्तत्कालकूटेन किं दातारो यदि कल्पशाखिभिरलं यद्यर्थिनः किं तृणैः। किं कर्पूरशलाकया यदि दृशः पन्थानमेति प्रिया संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ॥ ८३२ ॥ लोभश्चेदगुणेन किं पिशुनता[1] यद्यस्ति किं पातकैः सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम्। सौजन्यं यदि किं गुणैः स्वमहिमा यद्यस्ति किं मण्डनैः सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ ८३३ ॥ स्वर्गः किं यदि वल्लभा निजवधूः किंवा विभूषाविधिर्लावण्यं यदि किं सुधाकरकरैः शृङ्गारगर्भा गिरः। मृत्युः किं यदि दुर्जनेष्ववनतिः किं धिग्यदि प्रार्थना प्राप्तेष्टः करिकेतनो यदि भवेत्किं कल्पभूमीरुहैः ॥ ८३४ ॥ राजा धर्मविना द्विजः शुचिविना ज्ञानं विना योगिनः कान्ता सत्यविना हयो गतिविना भूषा च ज्योतिर्विना। योद्धा शौर्यविना तपो व्रतविना छन्दो विना गायनं भ्राता स्नेहविना नरो हरिविना मुञ्चन्ति शीघ्रं बुधाः ॥ ८३५ ॥ छेदश्चन्दनचूतचम्पकवने रक्षापि शाखोटके हिंसा हंसमयूरकोकिलकुले काकेषु नित्यादरः। मातङ्गेन खरक्रयः समतुला कर्पूरकार्पासयोरेषा यत्र विचारणा गुणिगणे देशाय तस्मै नमः ॥ ८३६ ॥ या राका श-

१. दुष्टता.

शिशोभना गतघना सा यामिनी यामिनी या सौन्दर्यगुणान्विता पतिरता सा कामिनी कामिनी । या गोविन्दरसप्रमोदमधुरा सा माधुरी माधुरी या लोकद्वयसाधनी तनुभृतां सा चातुरी चातुरी ॥ ८३७ ॥ किं तीर्थं हरिपादपद्मभजनं किं रत्नमच्छा मतिः किं शास्त्रं श्रवणेन यस्य गलति द्वैतान्धकारोदयः । किं मित्रं सततोपकाररसिकं तत्त्वावबोधः सखे कः शत्रुर्वद खेददानकुशलो दुर्वासनासंचयः ॥ ८३८ ॥ क्षान्तिश्चेद्वचनेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् । किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्यानवद्या यदि व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम् ॥ ८३९ ॥ सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः स्निग्धं मित्रमवञ्चकः परिजनो निःक्लेशलेशं मनः । आकारो रुचिरः स्थिरश्च विभवो विद्यावदातं मुखं तुष्टे विष्टपहारिणीष्टदहरौ संप्राप्यते देहिना ॥ ८४० ॥ का श्लाघ्या गुणिनां क्षमा परिभवः को यः स्वकुल्यैः कृतः किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य आश्रीयते । को मृत्युर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः कैर्विज्ञातमिदं विराटनगरे छन्नस्थितैः पाण्डवैः ॥८४१॥ स स्निग्धोऽकुशलान्निवारयति यस्तत्कर्म यन्निर्मलं सा स्त्री यानुविधायिनी स मतिमान्यः सद्भिरभ्यर्च्यते । सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया मुच्यते तन्मित्रं यदकृत्रिमं स पुरुषो यः खिद्यते नेन्द्रियैः ॥ ८४२ ॥ प्रायेणात्र कुलान्वितं कुकुलजाः श्रीवल्लभं दुर्भगा दातारं कृपणा ऋजूननृजवो वित्तान्वितं निर्धनाः । वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनो नानाशास्त्रविचक्षणं च पुरुषं निन्दन्ति मूर्खा जनाः ॥ ८४३ ॥ पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्रामेणापि कथं न हेमहरिणस्यासंभवो लक्षितः । अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं प्रत्यासन्नविपत्तिमूढमनसां प्रायो मतिः क्षीयते ॥ ८४४ ॥ सिंहो व्याकरणस्य कर्तुरहरत्प्राणान्प्रियान्पाणिनेर्मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम् । छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलमज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ॥ ८४५ ॥ शक्तेनापि सता जनेन विदुषा कालान्तरप्रेक्षिणा वस्तव्यं खलु वज्रपातविषमे क्षुद्रेऽपि पापे जने । दर्वीव्यग्रकरेण धूममलिनेनायासयुक्तेन किं भीमेनातिबलेन मत्स्यभवनेऽपूपा न संघट्टिताः ॥ ८४६ ॥ सिद्धिं वाञ्छयता जनेन विदुषा तेजो निगृह्य स्वकं सत्त्वोत्साहवतापि दैवगतिषु स्थैर्यं प्रकार्यं क्रमात् । देवेन्द्रद्रविणोपमैर्बहुगुणैरभ्यर्चितो भ्रातृभिः किं क्लिष्टः सुचिरं विराटभवने पूर्वं न धर्मात्मजः ॥ ८४७ ॥ रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना गन्तव्यानि दिनानि दैववशतो भूयो धनं वाञ्छता । सैरन्ध्रीति विगर्हिता युवतिभिः साक्षेपमाज्ञाभयाद्द्रौपद्या किल मत्स्यराजभवने घृष्टं न किं चन्दनम् ॥ ८४८ ॥ किं चित्रं यदि राजनीतिकुशलो राजा भवेद्धार्मिकः किं

१ गगनः. २ पाठी.

चित्रं यदि वेदशास्त्रनिपुणो विप्रो भवेत्पण्डितः । तच्चित्रं यदि रूपयौवनवती साध्वी भवेत्कामिनी तच्चित्रं यदि निर्दयोऽपि पुरुषः पापं न कुर्यात्किचित् ॥ ८४९ ॥ वासांसि व्रजचारिवारिजदृशां हृत्वा हठादुच्चकैर्यः प्राग्भूरुहमारुरोह स पुनर्वस्त्राणि विस्तारयन् । व्रीडाभारमपाचकार सहसा पाञ्चालजायाः स्वयं को जानाति जनो जनार्दनमनोवृत्तिः कदा कीदृशी ॥ ८५० ॥ अर्थी लाघवमुच्छ्रितो निपतन कामातुरो लाञ्छनं[1] निःस्वो[2] वञ्चनमुन्मना[3] विकलतां दोपाकुलः संशयम् । लुब्धोऽकीर्तिमसंगरैः[4] परिभवं दुष्टोऽन्यदोषे रतिं दुर्वागप्रियतां[5] दुरोदरवशः[6] प्राप्नोति कष्टं मुहुः ॥ ८५१ ॥ नीतिर्भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां रतिर्दंपत्योः शिशवो गृहस्य कविता बुद्धेः प्रसादो गिराम् । लावण्यं वपुषः श्रुतं सुमनसः शान्तिर्द्विजस्य क्षमा शक्तस्य द्रविणं गृहाश्रमवतां स्वास्थ्यं सतां मण्डनम् ॥ ८५२ ॥ कार्पण्येन यशः क्रुधा[7] गुणचयो[8] दम्भेन सत्यं क्षुधा मर्यादा व्यसनैर्धनं च विपदा स्थैर्यं प्रमादैर्द्विजः । पैशून्येन कुलं मदेन विनयो दुश्चेष्टया पौरुषं दारिद्र्येण जनादरो ममतया चात्मप्रकाशो हतः ॥ ८५३ ॥ चन्द्रे लाञ्छनता हिमं हिमगिरौ क्षारं जलं सागरे वृद्धश्चन्दनपादपो विषधरै रत्नेषु काठिण्यता । स्त्रीरत्नेषु जरा कुचेषु पतनं विद्वत्सु दारिद्र्यता सर्वं रत्नमुपद्रवेण सहितं निर्दोषमेकं यशः ॥ ८५४ ॥ पुण्यं स्वातिजलं सरित्सु पतितं शुक्तौ च मुक्ताफलं कर्पूरं कदलीवनेषु गरलं व्याले स्थले कर्दमः । क्षीरं क्षीरनिधौ तदम्बुपतितं क्षारोदकं सागरे इच्छादानपरोपकारकरण पात्रानुरूपं फलम् ॥ ८५५ ॥ तारुण्यं तरुणीजने विकचता पुष्पे विधौ चन्द्रिका कासारे कुमुदं वने पिचुवनं दानं द्विपेऽनर्गलं । आनृण्यं गृहिणां गृहस्य गृहिणीपित्रोः शुभा संततिर्लावण्यं तनुते द्विजेऽतिपलिते विद्वच्चतुर्थाश्रमः ॥ ८५६ ॥ माधुर्यं प्रमदाजनेषु ललितं दाक्षिण्यमार्ये जने शौर्यं शत्रुषु नम्रता गुरुजने धर्मिष्ठता साधुषु । मर्मज्ञेष्वनुवर्तनं बहुविधं मानं जने पण्डिते शाठ्यं पापिजने नरस्य कथिताः पर्यन्तमष्टौ गुणाः ॥ ८५७ ॥ इन्दुं निन्दति तस्करो गृहपतिं जारो सुशीलं खलः साध्वीमप्यसती कुलीनमकुलो जह्याज्जरत्वं युवाम् । विद्यावन्तमनक्षरो धनपतिं नीचश्च रूपोज्ज्वलं वैरूप्येण हतः प्रबुद्धमबुधो कष्टं निकृष्टो जनः ॥ ८५८ ॥ विद्वान्संसदि[9] पांक्षिक[10]परवशो मानी दरिद्रो गृही[11] द्रव्याढ्यः कृपणो यतिर्वसुमना वृद्धोऽपि वाहोद्यतः । राजा दुःसचिवप्रियः सुकुलजो मूर्खः पुमान्स्त्रीजितो[12] वेदान्ती हतसत्क्रियः किमपरं हास्यास्पदं[13] भूतले ॥ ८५९ ॥ का विद्या कवितां विनार्थिनि जने त्यागं विना श्रीश्च का को धर्मः कृपया विना क्षितिपतिः को नाम नीतिं विना । कः सूनुर्विनयं विना कुलवधूः का स्वामिभक्तिं विना भोग्यं किं रमणीं विना क्षितितले किं जन्म कीर्तिं विना ॥ ८६० ॥ स्वाधीना

१ कलङ्कम् २ निर्धन ३ अस्वस्थान्तःकरण. ४ अदृष्टयुद्धप्रसङ्ग ५ दुर्वचनशील. ६ द्यूतवशः. ७. क्रोधेन ८. गुणसमुदाय. ९ सभायाम् १०. पक्षधारी. ११. गृहस्थाश्रमी १२ स्त्रैण. १३ हास्यस्थानम्.

दयिता सुतावधि सुतोऽसौ षोडशाब्दावधि स्यात्कन्या करपीडनावधि सुतस्त्रीस्तद्दशत्वावधि । जामाता बहुलार्पितावधि सखा साधुप्रलापावधि शिष्यो गुह्यनिरूपणावधि परे चैते धनत्वावधि ॥ ८६१ ॥ स्त्रीणां यौवनमर्थिनामनुगमो राज्ञां प्रतापः सतां स्वास्थ्यं स्वल्पधनस्य संहतिरसद्वृत्तेश्च वाग्डम्बरः । स्वाचारस्य सदर्चनं परिणतेर्विद्या कुलस्यैकता प्रज्ञाया धनमुन्नतेररतिनतिः शान्तेर्विवेको बलम् ॥ ८६२ ॥ नागो भाति मदेन कं[1] जलरुहैः पूर्णेन्दुना शर्वरी शीलेन प्रमदा जवेन[2] तुरगो नित्योत्सवैर्मन्दिरम् । वाणी व्याकरणेन हंसमिथुनैर्नद्यः सभा पण्डितैः सत्पुत्रेण कुलं नृपेण वसुधा लोकत्रयं विष्णुना ॥ ८६३ ॥ एहि स्वागतमाविशासनमिदं कस्माच्चिराद्दृश्यसे का वार्ता परिदुर्बलोऽसि[3] नितरां प्रीतोऽस्मि ते दर्शनात् । इत्येवं समुपागतं द्विजवरं संभावयन्त्यादरात्तेषां युक्तमशङ्कितेन मनसा गेहेषु गन्तुं सदा ॥ ८६४ ॥ स्यादत्यन्तनिरक्षरः क्षितिपतिः श्रीकारमात्राश्रयान्मन्त्री तत्कथितार्थलेखनपरस्तत्सेवको जायते । अध्येता तदगारमेव भजते विद्वांस्तु तं याचते यावान्यस्य गिरा समं परिचयस्तावान्विदूरे श्रियः ॥ ८६५ ॥ को लाभो गुणिसंगमः किमसुखं प्राज्ञेतरैः[4] संगतिः का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः । कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥८६६॥ सस्यानि स्वयमत्ति चेद्वसुमती माता सुतं हन्ति चेद्वेलामम्बुनिधिर्विलङ्घयति चेद्भूमिं दहेत्पावकः । आकाशं जनमस्तके पतति चेदन्नं विषं चेद्भवेदन्यायं कुरुते यदि क्षितिपतिः कस्तं निरोद्धुं क्षमः ॥ ८६७ ॥ मूर्खोऽशान्तस्तपस्वी क्षितिपतिरलसो मत्सरो धर्मशीलो दुःस्थो मानी गृहस्थः प्रभुरतिकृपणः शास्त्रभृद्धर्महीनः । आज्ञाहीनो नरेन्द्रः शुचिरपि सततं यः परान्नोपभोजी वृद्धो रोगी दरिद्रः स च युवतिपतिर्धिग्विडम्बप्रकारान् ॥ ८६८ ॥ ख्यातः शक्रो भगाङ्को विधुरपि मलिनो माधवो गोपजातो वेश्यापुत्रो वसिष्ठो रतिपतिरतनुः सर्वभक्षी हुताशः । व्यासो मत्स्योदरीयो लवणजलनिधिः पाण्डवा जारजाता रुद्रो प्रेतास्थिधारी त्रिभुवनविषये कस्य दोषो न चास्ति ॥ ८६९ ॥ प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं काले शक्त्या प्रदानं युवतिजनकथामूकभावः[5] परेषाम् । तृष्णास्रोतोविभङ्गो[6] गुरुषु च विनयः सर्वभूतानुकम्पा[7] सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ ८७० ॥

## इति श्रीसुभाषितरत्नभाण्डागारे तृतीयं प्रकरणं समाप्तम् ।

१ उदकम् २ वेगेन ३ कृश.. ४ मूर्खे ५ स्त्रीजनवार्ता. ६. तृष्णाप्रवाहोपरोध.. ७ दया

# प्रकरणम् ४।

## समस्याख्यानम्।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। दलितश्चकितश्छन्नस्तव सैन्ये विसर्पति ॥१॥ कामं कामदुघं धुक्ष्व मित्राय वरुणाय च। वयं धीरेश दानेन सर्वान्कामानशीमहि ॥ २ ॥ असमाने समानत्वं भविता कलहे मम। इति मत्वा ध्रुवं मानी मृगार्तिसिंहः पलायते ॥ ३ ॥ हीनहत्या दधात्येव लाघवं महतामपि। इति मत्वा द्विपद्वेषी मृगार्तिसिंहः पलायते ॥ ४ ॥ तिष्ठार्जुनाद्य संग्रामे त्वां हनिष्याम्यहं शरैः। तिष्ठामि कर्ण किं मूढ मृगार्तिसिंहः पलायते ॥ ५ ॥ ऋषेरस्याश्रमे पुण्ये शापसंत्रस्तमानसः। मुद्गोघतापि प्रायोऽयं मृगार्तिसिंहः पलायते ॥ ६ ॥ अयं मृगः समायाति त्वरितैस्त्वरितैः पदैः। ततो वेगात्पलायस्व मृगार्तिसिंहः पलायते ॥ ७ ॥ विद्यायां दुर्मदो येषां कार्पण्यं विभवे सति। तेषां दैवाभिशप्तानां सलिलादग्निरुत्थितः ॥ ८ ॥ सीतासमागमोत्कण्ठाकर्णान्ताकृष्टधन्वनः। राघवस्य शैराङ्गारैः[1] समुद्रादग्निरुत्थितः ॥ ९ ॥ दामोदरकराघातविह्वलीकृतचेतसा। दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥ १० ॥ चलत्तरङ्गरङ्गायां गङ्गायां प्रतिबिम्बितम्। सचन्द्रं शोभतेऽत्यर्थं शतचन्द्रं नभस्तलम् ॥ ११ ॥ विधे पिधेहि शीतांशुं यावन्नायाति मां प्रियः। आगते दयिते कुर्याः शतचन्द्रं नभस्तलम् ॥ १२ ॥ सुमेरुशिखरप्रान्तस्फुरद्दिव्यवधूमुखैः। परितः स्फुरितैः शङ्के शतचन्द्रं नभस्तलम् ॥ १३ ॥ भीष्म[2]ग्रीष्मर्तुसंतप्तशून्यरथ्यान्तरस्थयोः। [3]अन्योन्यालापसुखिनोर्यूनोश्चन्द्रायते रविः ॥ १४ ॥ स्वस्ति क्षत्रियदेवाय जगद्देवाय भूभुजे। यद्यशःपुण्डरीकान्तर्गगनं भ्रमरायते ॥ १५ ॥ स्फुरिते जठरे विष्णोर्नवनीतभुजः शिशोः। मक्षिकापादघातेन कम्पितं भुवनत्रयम् ॥ १६ ॥ अतसीपुष्पसकाशं खं वीक्ष्य जलदागमे। ये वियोगेऽपि जीवन्ति न तेषां विद्यते भयम् ॥ १७ ॥ वागर्थाविव संपृक्तौ शतकोटिप्रविस्तरम्। [4]तुरासाहं पुरोधाय नेमुः सर्वे सुराः शिवौ[5] ॥ १८ ॥ [6]आषाढी कार्तिकी माघी वचा शुण्ठी

---

(१) "सहस्रशीर्षापुरुष. सहस्राक्ष सहस्रपात्" इति समस्या (२) "काम कामदुघ धुक्ष्व मित्राय वरुणाय च" "सर्वान्कामानशीमहि" इति समस्या. (३, ४, ५, ६, ७) "मृगार्तिसिंह पलायते" इति समस्या. (८) "सलिलादग्निरुत्थित" इति समस्या (९) "समुद्रादग्निरुत्थितः" इति समस्या. (१०, ११, १२, १३) "शतचन्द्र नभस्तलम्" इति समस्या (१४) "यूनोश्चन्द्रायते रवि." इति समस्या. (१५) "गगन भ्रमरायते" इति समस्या (१६) "मक्षिकापादघातेन कम्पित भुवनत्रयम्" इति समस्या (१७) "अतसीपुष्पसकाशम्" "न तेषा विद्यते भयम्" इति समस्या (१८) "वागर्थाविव

---

१. शरा एवाङ्गाराः. २ दारुण ३ अन्योन्यभाषणेन जाताह्लादयो ४ इन्द्रम् ५ पार्वतीशंकरौ ६. आषाढी कार्तिकी माघी एकादशी पुण्या. वचा शुण्ठी हरीतकी श्लेष्महरा. गयाया पिण्डदानेनानृणी पितॄणां- न्मुक्त इति योजना

हरीतकी । गयायां पिण्डदानेन पुण्या श्लेष्महरानृणी ॥ १९ ॥ जम्बूफलानि पक्कानि पतन्ति विमले जले । कपिकम्पितशाखाभ्यो गुलुगुग्गुलुगुग्गुलू ॥ २० ॥ विदग्धे सुमुखे रक्ते नितम्बोपरि संस्थिते । कामिन्याश्लिष्टसुगले कूजितं रतिकूजितम् ॥ २१ ॥ प्रलयसहायकरा इति गोलानाचम्य सकलभूमिरुहाम् । विलसति दवदहनावलिरिह जलवाहः परं शरणम् ॥ २२ ॥ निजपतिराद्यः प्रणयी हरिर्द्वितीयः करोमि किं गोपि । शृणु सखि पाणिनिसूत्रं विप्रतिषेधे परं कार्यम् ॥२३ ॥ दैत्यानां मनसि दया जाता कृष्णं हि रक्षितुं कस्मात् । द्रष्टुं देवमजस्रं दैत्यस्त्रीणामपि प्रीतिः ॥ २४ ॥ श्रीनाथ नः श्रुतमिति बहुधा भ्रमता मया नृलोकेषु । शीलं वारवधूनां दैत्यस्त्रीणामपि प्रीतिः ॥ २५ ॥ रामाभिषेके मदविह्वलाया हस्ताच्च्युतो हेमघटस्तरुण्याः । सोपानमासाद्य करोति शब्दं ठंठंठठंठंठठठंठठंठः ॥ २६ ॥ कर्पूरपूरच्छविवादविद्यासंवावदूकद्युतिशुक्तिताभ्रे । इन्दौ नृपद्वेषि तमो वितान सूर्योदये रोदिति चक्रवाकी ॥ २७ ॥ विलोक्य बालामुखचन्द्रबिम्बं कण्ठे च मुक्तावलिहारताराः । पुनर्निशाया भयभीतभीता सूर्योदये रोदिति चक्रवाकी ॥ २८ ॥ सर्वस्य जन्तोर्भवति प्रमोदो विरोधिवर्गे परिभूयमाने । तिरोहिते त्वद्यशसा नरेन्द्र चन्द्रोदये नृत्यति चक्रवाकी॥२९॥ न क्वापि रामाहितसंशयो या विना न नात्वं जनकात्मजायाः । पुरः सुराणाङ्कपुरःसराणामङ्गारपूर्णं कमलं प्रफुल्लम् ॥ ३० ॥ पुञ्जायमानारुणरत्नहारे कान्तोरसि स्त्रावदनङ्ग भाति । सिद्ध्येदमुष्योपमितिर्यदि स्यादङ्गारपूर्णं कमलं प्रफुल्लम् ॥ ३१ ॥ रे पुत्र सत्सङ्गमवाप्नुहि त्वमसत्प्रसङ्गं त्वरया विहाय । धन्योऽपि निन्दां लभते कुसङ्गात्सिन्दूरबिन्दुर्विधवाललाटे ॥ ३२ ॥ सुतं पतन्तं प्रसमीक्ष्य पावके न बोधयामास पतिं पतिव्रता । तदा ह्यसौ तद्व्रतशक्तिपीडितो हुताशनश्चन्दनपङ्कशीतलः ॥ ३३ ॥ उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या । कूजितं भवति मानधनाया हूहुहूंहुहुहुहूंहूहुहुहूंहूं ॥ ३४ ॥ मम करग्रहणाय पणीकृतं न यदि राघवतोऽप्यधिरोहति । सखि तदैवमभून्मम जीवितं शशकशृङ्गमयं कठिनं

---

मपृक्तौ " " शतकोटिप्रविस्तरम् " इति समस्या. (१९) " पुण्या श्लेष्महरानृणी " इति समस्या (२०) " गुलुगुग्गुलुगुग्गुलू " इति समस्या (२१) " कूजित रतिकूजितम् " इति समस्या (२२) "प्रलयसहायकरा इति गोलानाचम्य " इति समस्या (२३) " विप्रतिषेधे पर कार्यम् " इति समस्या. (२४, २५) " दैत्यस्त्रीणामपि प्रीति " इति समस्या (२६) " ठठठंठठठठठठठ " इति समस्या. (२७, २८) " सूर्योदये रोदिति चक्रवाकी " इति समस्या (२९) " चन्द्रोदये नृत्यति चक्रवाकी " इति समस्या (३०, ३१) " अङ्गारपूर्ण कमल प्रफुल्लम् " इति समस्या (३२) सिन्दूरबिन्दुर्विधवाललाटे " इति समस्या (३३) " हुताशनश्चन्दनपङ्कशीतल." इति समस्या. (३४) " हूहुहूहुहुहूहूहुहुहूहू " इति समस्या.

---

१. केशग्रहसहितम् २ मुखम् ३. चुम्बन कुर्वति सति. ४. कान्ते ५. बलात्कारेण ६. कण्ठेऽव्यक्तशब्द . ७. मान एव धन यस्या.. मानिन्या इत्यर्थ .

धनुः ॥ ३५ ॥ नीलाब्जद्युतिनयनं नितान्तवृत्तमास्यश्रीपरिचितचन्द्रिकाविलासम् । स्नातायाः सरसि विलोक्य वक्रचन्द्रं मध्याह्ने मुकुलितमम्बुजं वनान्ते ॥ ३६ ॥ कांचिद्दिनार्धसमये रविरश्मितप्तां नीलांशुकाञ्चलनिलीनमुखेन्दुबिम्बाम् । तां तादृशीं समनुवीक्ष्य कविर्जगाद राहुर्दिवा ग्रसति पर्वविना किलेन्दुम् ॥ ३७ ॥ बहलबलसमर्था मेघनादादयो मे सपदि युधि विशन्तः कीटहस्ते निपेतुः । इति वदति दशास्ये हस्ततालं वितत्य मशकगलकरन्ध्रे हस्तियूथं प्रविष्टम् ॥ ३८ ॥ मृगशिशुनयनाया अक्षिपक्ष्मप्रकोणे विलसति तरलाया तारका तारकेव । प्रतिफलित इहोष्ट्रे भ्रान्तिरास्ते जनानां तिलतुषपुटकोणे मक्षिकोष्ट्रं प्रसूता ॥३९॥ मधौ मन्दं मन्दं मरुति शिशिरे वाति रुचिरे कुलस्त्रीभिः कृष्णे विहरति तथा वृष्णिनिकरे। उषा योषा तोषाद्वदनमनिरुद्धस्य मिषतो पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती ॥४०॥ स्वयं संराध्येशं पुरभिदमनल्पेन तपसा महेन्द्रं संतोष्य त्रिदशारिपुनाशादमुकरात् । समायाते पार्थे द्रुपदतनया क्लेशविकला पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती ॥ ४१ ॥ कदाचित्पाञ्चाली विपिनभुवि भीमेन बहुशः कृशाङ्गि श्रान्तासि क्षणमिह निषीदेति गदिता । शनैः शीतच्छायं तटविटपिनं प्राप्य मुदिता पुरः पत्युः कामाच्छ्वशुरमियमालिङ्गति सती॥४२॥ तपापाये गोदापरतटभुवि स्थातुमनसि प्रविष्टे तत्पूरं भगवति मुनौ कुम्भजनुषि । द्रुतं लोपामुद्रा स्वयमविकलं गन्तुमुदितात्पुर पत्युः कामाच्छ्वशुरमियमालिङ्गति सती ॥ ४३ ॥ सर्वस्य द्वे सुमतिकुमती संपदापत्तिहेतू एको गोत्रे प्रभवति पुमान्यः कुटुम्बं बिभर्ति । वृद्धो यूना सह परिचयात्त्यज्यते कामिनीभिः स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम् ॥ ४४ ॥ ये पापं शमयन्ति सगतिभृतां ये दानशृङ्गारिणो येषां चित्तमतीव निर्मलतरं येषां न भग्नं व्रतम् । ये सर्वान्सुखयन्ति हि प्रतिदिनं ते साधवो दुर्लभा गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत् ॥ ४५ ॥ दासो भाति कुचद्वय तव शुभे मध्ये वपुः सद्वचः केशा नासिकमौक्तिकं सुवदनं दर्पाङ्गरागो दृशः । गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवज्जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ४६ ॥ यत्कण्ठे गरल विराजतितरां शीर्षे च

(३५) "शशकशृङ्गमय कठिन धनु" इति समस्या (३६) "मध्याह्ने मुकुलितमम्बुज वनान्ते" इति समस्या (३७) "राहुर्दिवा ग्रसति पर्वविना किलेन्दुम्" इति समस्या. (३८) "मशकगलकरन्ध्रे हस्तियूथ प्रविष्टम्" इति समस्या (३९) "तिलतुषपुटकोणे मक्षिकोष्ट्र प्रसूता" इति समस्या (४०, ४१, ४२, ४३) "पुर पत्यु कामाच्छ्वशुरमियमालिङ्गति सती" इति समस्या. (४४) "सर्वस्य द्वे" "एको गोत्रे" "वृद्धो यूना" "स्त्रीपुवच्च" इति चत्वारि पाणिने सूत्राणि समस्या. (४५) "गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत्" इति समस्या (४६) "गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवज्जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्"

१ मध्याह्ने २ सूर्यकिरणसततप्ताम् ३ नीलवस्त्राञ्चलपिहितमुखचन्द्राम् ४ द्रौपद्या. श्वशुरो वायु. ५ लोपामुद्राया श्वशुर पूरतरणसाधन कुम्भ. ६ ये गङ्गावत्सगतिभृता पाप शमयन्ति ये गजगण्डवद्दानशृङ्गारिण. येषां चित्त गगनवदतीव निर्मलतरम् येषा व्रत गाङ्गेयवन्न भग्नम् ये गेयवत्सर्वान्सुखयन्ति इति योजना. ७. कर्दमवत्.

मन्दाकिनी उत्सङ्गे च शिवामुखं कटितटे शार्दूलचर्माम्बरम् । माया यस्य रुणद्धि विश्वमखिलं तस्मै नमः शंभवे जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ४७ ॥ ख्यातस्त्वं फलवृष्टिपुष्टिसुमनस्वाधीनजाम्बूनदः शीर्णास्ते रिपुसंपदः प्रतिदिनं मित्रोदये मोदसे । पान्थानां कुरुषे विलम्बनमहो दत्तान्तरस्तेजसा जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ४८ ॥ सङ्ग्रामे रिपुभूभुजां मुखरुचिर्जीवश्च देवाङ्गनाचक्षुः प्रोल्लसदस्त्रमांसनिवहैस्तन्मेदिनीमण्डलम् । त्वच्चापोद्गतबाणसंहतिरभूच्छ्रीराम भूमीपते जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ४९ ॥ वैदेहीं समवाप्य दाशरथिनारब्धे प्रयाणेऽग्रतो दृष्टाः पुष्पकसंस्थितेन रभसादाकाशमारोहता । लङ्कासागरजानकीवनरणक्षौण्यश्चमत्कारिका जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५० ॥ यो द्रोणाचलमादधौ करतले योऽतीतरत्सागरं यश्चोत्खातितवांस्तरूनुदवहत्पुच्छेन दावानलम् । यो रक्षान्समरेऽरुणत्कपिवरः पायाद्धनूमान्नतौ जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५१ ॥ कस्तूरीतिलकं ललाटरचितं नासामणि निस्तलं वक्र कुञ्चितकेशपाशमनिशं दृष्टिं निसृष्टां पुरः । पुंसां मानसमत्स्यबन्धनविधौ धत्सेऽत्र वत्से स्वयं जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५२ ॥ विद्धि श्रीहृदयं सदान्तमलिनं भीमं भवाम्भोनिधिं विज्ञाने सुरतं महीशभवनं गूढं दृढं कण्टकैः । दारागारसमागमं सुविषमं मोहं परं दुस्तरं जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत् ॥ ५३ ॥ अस्माकं जलैजीविनां जलमिदं सद्वाजिराजिव्रजैः पातव्यं पररक्तरक्तमनसां तृप्तिः पतीनां क्षयः । मत्वैवं किल राजदेव नृपते त्वज्जैत्रयात्रोत्सवे मत्स्यी रोदिति मक्षिका च हसति ध्यायन्ति वामभ्रुवः ॥ ५४ ॥ श्रुत्वा सागरबन्धनं दशशिराः सर्वैर्मुखैरेकदा तूर्णं पृच्छति वार्तिकान्सचकितो भीत्या परं संभ्रमात् । बद्धः सत्यमपांनिधिर्जलनिधिः कीलालधिस्तोयधिः पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ ५५ ॥ पाषाणाः पयसि प्रबद्धवपुषस्तिष्ठन्ति सेतुं गताः श्रुत्वैवं वदतां दशाननधरः क्रुद्धः समुद्रं प्रति । धिक्त्वां नाम तवाम्बुधिः सलिलधिः पानीयधिस्तोयधिः पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ ५६॥ अम्बा कुप्यति तात मूर्ध्नि विधृता गङ्गेयमुत्सृज्यतां विद्वन्षण्मुख का गतिर्मम चिर मूर्ध्नि स्थिताया वद । कोपावेशवशादशेषवे-

इति समस्या. ( ४७, ४८, ४९, ५०, ५१, ५२, ५३ ) "जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवत्" इति समस्या. ( ५४ ) "मत्स्यी रोदिति मक्षिका च हसति ध्यायन्ति वामभ्रुवः" इति समस्या. ( ५५ ) "अपानिधिर्जलनिधि कीलालधिस्तोयधि पाथोधिर्जलधि. पयोधिरुदधिर्वारानिधिर्वारिधि." इति समस्या. ( ५६ ) "अम्बुधि सलिलधिः पानीयधिस्तोयधि पाथोधिर्जलधि. पयोधिरुदधिर्वारानिधिर्वारिधि." इति समस्या.

१ जलैकजीवितानाम्. २ तुरगपङ्क्तिसमूहैः ३ विजययात्रोत्सवे. ४. सेतुबन्धम्. ५ रावण. ६ झटिति. ७ वृत्तान्तज्ञापकान्. ८ माता. ९ मस्तके. १०. त्यज्यताम्. ११. क्रोधपरत्वेन १२. षड्भिर्मुखैरित्यर्थः.

दनैः प्रत्युत्तरं दत्तवान्पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥ ५७ ॥ माध्वीके विधुमण्डले वरवधूवक्रे च गीतान्तरे सक्ते वक्त्रचतुष्टये दशमुखो विज्ञापितस्तच्चरैः । बद्धोऽसाविति चेतरैर्भयवशादूचे वचःसंभ्रमात्पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः॥५८॥ पीतस्त्वं कलशोद्भवेन मुनिना ध्वस्तोऽसि देवासुरैराबद्धोऽसि च राघवेण मृदुना शाखामृगैर्लङ्घितः । नाम्नामारभटी तथैव भवतो लोकैरियं घुष्यते पाथोधिर्जलधिः पयोधिरुदधिर्वारांनिधिर्वारिधिः ॥५९॥ ततुं पर्वतसंनिभेन कपिना लीबूकृतां वक्षसि क्षिप्रं वीक्ष्य निमज्जतीमथ तव स्पृष्टास्तरन्तीः शिला । लोके नृत्यपरे विभीषणजने सेत्याह सेतूद्यमे तुम्बी मज्जति संतरन्ति दृपदः प्रेतो दिवा नृत्यति ॥ ६० ॥ त्वं नो गोत्रपतिस्तवेन्दुरधिपस्तस्यामृतं त्वत्करे तेन व्याधशराहतां प्रणयिनीमेनां पुनर्जीवय । इत्यूर्ध्वं गगने निशापतिमृगे कारुण्यमातन्वतः शृङ्गाग्रादपतन्मृगस्य रुदतो बाष्पाम्बु भूमण्डले ॥ ६१ ॥ उन्नादाम्बुदवर्धितान्धतमसि प्रभ्रष्टदिङ्मण्डले काले यामिकजाग्रदुग्रसुभटव्याकीर्णकोलाहले । कर्णस्यासुहृदर्णवाम्बुवडवावह्नेर्यदन्तःपुरादाभातासि तदम्बुजाक्षि कृतकं मन्ये भयं योषितम् ॥६२॥ उग्रग्राहमुदन्वतो जलमतिक्रामत्यनालम्बने व्योम्नि भ्राम्यति दुर्गमक्षितिभृतां मूर्धानमारोहति । व्याप्तं याति विषाकुलैरहिकुलैः पातालमेकाकिनी कीर्तिस्ते मदनाभिराम कृतकं मन्ये भय योषितम् ॥ ६३ ॥ चित्रं नर्तनमम्बरं शिखरिणौ शीतांशुबिम्बे तमः संचारं जलजं कपोतरणितं कामागमप्रक्रिया । मीनौ विद्युति तारकं विहरणं ज्योत्स्नापि कोशाम्बुजे कुर्वाते कुरुते करोति कुरुतः कुर्वत्यलंकुर्वते ॥ ६४ ॥ कश्चित्पान्थस्तृषार्तः पथि तपनकृतौ गम्यमानोऽन्यपान्थं पप्रच्छानन्दलीनो वद पथिक कुतो जह्नुकन्याप्रवाहः । तेनासौ शीघ्रवाचा प्रचलितमनसा विप्रवर्येण वाचा सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः ॥ ६५ ॥ राम त्वत्कीर्तिवृक्षाद्बहुतरममलादुत्थिताः कोरका ये तन्मध्ये रुद्ररूपोऽप्यजनि खलु यशःकोरकस्तस्य चाज्ये । अस्यश्रोताक्षिकूपास्तुदुपरि च शिरस्तत्र चास्ति स्रवन्ती सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः ॥ ६६ ॥ उद्दामार्कांशुदीप्यद्दिनमणिमणिभिर्भस्मितान्ते समन्ताद्वायुव्याधूयमानज्वलनकणगणाकीर्णधूलिप्रकीर्णे । कान्तारेऽस्मिन्नृपार्ते पथि पथिकभवे कापि पाथोथतेना सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाहः ॥ ६७ ॥ मां साक्षीकृत्य मुग्धे विजयमभिलषंल्लेखयामास शंभुर्भूत्या मन्मौलिमालां सदशनवशतीमक्ष-

---

( ५७, ५८, ५९ ) " पाथोधिर्जलधि पयोधिरुदधिर्वारानिधिर्वारिधि " इति समस्या ( ६० ) " तुम्बी मज्जति सतरन्ति दृषदः प्रेतो दिवा नृत्यति " इति समस्या ( ६१ ) " शृङ्गाग्रादपतन्मृगस्य रुदतो बाष्पाम्बु भूमण्डले " इति समस्या. ( ६२, ६३ ) " कृतकं मन्ये भय योषितम् " इति समस्या ( ६४ ) " कुर्वाते कुरुते करोति कुरुत कुर्वत्यलकुर्वते " इति समस्या. ( ६५, ६६, ६७ ) " सूच्यग्रे कूपषट्कं तदुपरि नगरी तत्र गङ्गाप्रवाह ." इति समस्या

पातान्विजित्य । गौर्यप्यानैश्चदृष्टीर्जितनखनवभूस्तान्वि शेषा तदित्थं शीर्षाणां सैव वन्ध्या मम नवतिरभूल्लोचनानामशीतिः ॥ ६८ ॥ प्रत्येकं दिक्पतीशानिलतपनवसून्सन्नतस्त्वं यथा भूरश्रौषीस्त्वं यथा च स्वरसहितलसन्मूर्छनागानतानात् । कृष्णन्यस्तान्यमौलीक्षणवदवसरे सा च सा च प्रसादाच्छीर्षाणां शेष वन्ध्या तव नवतिरभूल्लोचनानामशीतिः ॥ ६९ ॥ इन्द्राद्या लोकपाला हरिविधुतपना नागविद्याधराद्या द्रष्ट्या सर्वेऽपि देवा प्रिय तव वरदः कोऽस्ति वन्द्यो गरीयान् । श्रुत्वा वाचं प्रियाया इति दशमुखतः प्राह वाक्यं दशास्यः शूली शंभुः पिनाकी शिवभवपशुपाः शर्व ईशश्च भर्गः ॥ ७० ॥

---

## प्रहेलिका ।

अपदो दूरगामी च साक्षरो न च पण्डितः । अमुखः स्फुटवक्ता च यो जानाति स पण्डितः ॥ १ ॥ वने जाता वने त्यक्ता वने तिष्ठति नित्यशः । पण्यस्त्री न तु सा वेश्या यो जानाति स पण्डितः ॥ २ ॥ गोपालो नैव गोपालस्त्रिशूली नैव शंकरः । चक्रपाणिः स नो विष्णुर्यो जानाति स पण्डितः ॥ ३ ॥ उच्छिष्टं शिवनिर्माल्यं वमनं शवकर्पटम् । काकविष्ठासमुत्पन्नः पञ्चैतेऽतिपवित्रकाः ॥ ४ ॥ अनेकसुषिरं वाद्यं कान्तं च ऋषिसंज्ञितम् । चक्रिणा च सदाराध्यं यो जानाति स पण्डितः ॥ ५ ॥ वने वसति को वीरो योऽस्थिमांसविवर्जितः । असिवत्कुरुते कार्यं कार्यं कृत्वा वनं गतः ॥ ६ ॥ रविजा शशिकुन्दाभा तापहारी जगत्प्रिया । वर्धते वनसङ्गेन न तापी यमुनापि न ॥ ७ ॥ तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रित. । गुरूणां संनिधानेऽपि कः कूजति मुहुर्मुहुः ॥ ८ ॥ अवलोक्य स्तनौ

---

(६८) शीर्षाणा सैव वन्ध्या मम नवतिरभूल्लोचनानामशीति" इति समस्या (६९) "शीर्षाणा शेष वन्ध्या तव नवतिरभूल्लोचनानामशीति" इति समस्या. (७०) "शूली शभु पिनाकी शिवभवपशुपा शर्व ईशश्च भर्ग" इति समस्या.

(१) लेखापत्रम् (२) नौका (३) महोक्षा (४) दुग्ध गङ्गा मधु पट्टाम्बर पिप्पलश्च (५) वल्मीकम् (६) कुलालदोरक.. (७) तक्रम् (८) कलश·

---

१. सहस्रशीर्षो द्विसहस्राक्षस्य स्वभार्यां प्रति गौरीगिरीशद्यूतक्रीडोपन्यासः. २ अरण्ये काष्ठरूपेणोत्पन्ना. ३. उदके ४ मूल्यं दत्वा भोग्या स्त्री गणिका यथा द्रव्यदानेन भोग्या तथेयमपीत्यर्थ. ५. येनूना पतित्वात्पालक. ६ तप्तत्रिशूलाङ्कितत्वात्तच्चिह्नवान्. ७ वाही तप्तचक्राङ्कितत्वात्तच्चिह्नवान् ८. विलम् ९. वकार आद्यो यस्य १० ककारोऽन्ते यस्य ११. सपेण. १२.कुम्भ कूपसरोवरादौ जलेन भृत्वा शिरस्यारोपणसमये तरुण्या हस्ताभ्यामालिङ्ग्यते भर्तापि तरुण्य सोत्कण्ठमालिङ्ग्यते १३. कुम्भो नितम्बस्थाने गृह्यते भर्तापि नितम्बस्थाने गुह्यप्रदेशे तिष्ठेत् १४. कुम्भो गुरूणा वृद्धघटानामुपर्युपविश्य कूजति चद्चदायते. भर्तापि गुरूणा मातृपितृश्वश्रुश्वशुरजनानामग्रे स्त्रियं कामयते

वध्वा गुञ्जाफलविभूषितौ। निःश्वस्य रोदितुं लग्ना कुतो व्याधकुटुम्बिनी ॥ ९ ॥ आपाण्डु पीनकठिनं वर्तुलं सुमनोहरम्। करैराकृष्यतेऽत्यर्थं किं वृद्धैरपि सस्पृहम् ॥ १० ॥ एकचक्षुर्न काकोऽयं बिलमिच्छन्न पन्नगः। क्षीयते वर्धते चैव न समुद्रो न चन्द्रमाः ॥ ११ ॥ अस्थि नास्ति शिरो नास्ति बाहुरस्ति निरङ्गुलिः। नास्ति पादद्वयं गाढमङ्गमालिङ्गति स्वयम् ॥ १२ ॥ अस्ति ग्रीवा शिरो नास्ति द्वौ भुजौ करवर्जितौ। सीताहरणसामर्थ्यो न रामो न च रावणः ॥ १३ ॥ नरनारीसमुत्पन्ना सा स्त्री देहविवर्जिता। अमुखी कुरुते शब्दं जातमात्रा विनश्यति ॥ १४ ॥ दन्तैर्हीनः शिलाभक्षी निर्जीवो बहुभाषकः। गुणस्यूतिसमृद्धोऽपि परपादेन गच्छति ॥ १५ ॥ न तस्यादिर्न तस्यान्तो मध्ये यस्तस्य तिष्ठति। तवाप्यस्ति ममाप्यस्ति यदि जानासि तद्वद ॥ १६ ॥ य एवादिः स एवान्तो मध्ये भवति मध्यमः। य एतन्नाभिजानीयात्तृणमात्रं न वेत्ति सः ॥ १७ ॥ पर्वताग्रे रथो याति, भूमौ तिष्ठति सारथिः। चलते वायुवेगेन पदमेकं न गच्छति ॥ १८॥ श्यामं च वर्तुलाकारं पुंनाम चतुरक्षरम्। शकारादिमकारान्तं यो जानाति स पण्डितः ॥ १९ ॥ अर्धचन्द्रवदाकारं स्त्रीनाम तृतीयाक्षरम्। नकारादि रिकारान्त यो जानाति स पण्डितः ॥२० ॥ अष्टपादश्चतुःकर्णो द्विमुखी द्विमुखस्तथा। राजद्वारे पठेद्वोरो न च देवो न राक्षसः ॥ २१ ॥ वृक्षस्याग्रे फलं दृष्टं फलाग्रे वृक्ष एव च। अकारादि सकारान्तं यो जानाति स पण्डितः ॥ २२ ॥ चतुर्मुखो न च ब्रह्मा वृषारूढो न शंकरः। निर्जीवी च निराहारी अजस्रं धान्यभक्षणम् ॥२३॥ कृष्णमुखी न मार्जारी द्विजिह्वा न च सर्पिणी। पञ्चभर्ता न पाञ्चाली यो जानाति स पण्डितः ॥ २४ ॥ अपूर्वोऽयं मया दृष्टो कान्ते कमललोचने। शोऽन्तरं यो विजानाति स विद्वान्नात्र संशयः ॥ २५ ॥ पर्वताग्रे रथारूढो भूमौ तिष्ठति सारथिः। चक्रवद्भ्रमते पृथ्वी तस्याहं कुलबालिका ॥ २६ ॥ अर्धचन्द्रसमायुक्तं पुंनाम चतुरक्षरम्। ककारादि लकारान्तमिह जानाति पण्डितः ॥ २७ ॥ अनुनेतुं मानिन्या दयितश्चरणे सरागचरणायाः। यावत्पतितः स तया तत्क्षणमवतारितः कस्मात् ॥ २८ ॥ गीत्वा किमपि व्याधः शृङ्गं जग्राह तरुणहरिणस्य। तमथ समीक्ष्योद्यतकरमेणीमपि लज्जिता व्याधी ॥ २९ ॥ काचिन्मृगाक्षी प्रियवि-

(९) शबरस्त्री पुत्रजायाया. स्तनौ गुञ्जाफलालङ्कृतौ दृष्ट्वा कुतो नि श्वस्य रुरोद यतो मत्पुत्र एतामनुरक्तस्तथा क्षीणता गतो यथा गजान्विनिहत्य गजमुक्ताफलहारै स्तनौ विभूषयितु नालम्, अतो नि प्रयासप्राप्यैर्गुञ्जाफलैर्विभूषयति क्षीणे च सति पुत्रे तदर्जितनिर्वाहवृत्ते सर्वस्यापि कुटुम्बस्य जीवितसदेह अतो व्याधकुटुम्बिनी दु खान्नि श्वस्य रोदितु लग्ना (१०) पक्वबिल्वफल कुचयुगल च (११) सूचिका (१२,१३) कञ्चुक (१४) छोटिका (१५) उपानत् (१६) नयनम् (१७) यवसम् (१८,१९, २०,२१)[2] (२२) अननस (२३)[2] (२४) लेखनी (२५) अशोक (२६) कुम्भकारस्य (२७)[2] (२८) रजस्वला यत (२९) व्याध किमप्यद्भुत गीत्वा गीतविमूर्च्छितविलीनचित्तस्य तरुणहरिणस्य

१ नासिकाचूर्णनिक्षेपणार्थं वृद्धैरपि ध्रियत इति प्रसिद्धि २ अङ्गुष्ठमध्यमाङ्गुली

प्रयोगे निशीथिनीपारमपारयन्ती । आगातुमादाय करेण वीणामुद्ग्रीवमालोक्य शनैरहासीत् ॥ ३० ॥ सदारिमध्यापि न वैरियुक्ता नितान्तरक्तापि सितैव नित्यम् । यथोक्तवादिन्यपि नैव दूती का नाम कान्तेति निवेदयाशु ॥ ३१ ॥ वृक्षाग्रवासी न च पक्षिराजस्त्रिनेत्रधारी न च शूलपाणिः । त्वग्वस्त्रधारी न च सिद्धयोगी जलं च बिभ्रन्न घटो न मेघः ॥ ३२ ॥ वृक्षाग्रवासी न च पक्षिजातिस्तृणं च शय्या न च राजयोगी । सुवर्णकाया न च हेमधातुः पुंसश्च नाम्ना न च राजपुत्रः ॥ ३३ ॥ नाहं मनुष्यो न च देवयक्षो न ब्राह्मणक्षत्रियवैश्यशूद्राः । न ब्रह्मचारी न गृही वनस्थो भिक्षुर्न चाहं निजबोधरूपः ॥ ३४ ॥ चक्री त्रिशूली न हरो न विष्णुर्महान्बलिष्ठो न च भीमसेनः । स्वच्छन्दचारी नृपतिर्न योगी सीतावियोगी न च रामचन्द्रः ॥ ३५॥ सर्वस्वापहरो न दस्युकुलजः खट्वाङ्गभृन्नेश्वरो दोषानिष्टकरो न धर्मनिरतः कीलालपो नासुरः । नृणां पृष्ठपलायनो न पिशुनः शीघ्रंगमो नो हयः शश्वद्रात्रिचरो न राक्षसगणः कोऽयं सखि ब्रूहि मे ॥ ३६ ॥ सर्वस्वापहरो न तस्करगणो रक्षो न रक्ताशनः सर्पो नैव बिलेशयोऽखिलनिशाचारी न भूतोऽपि च । अन्तर्धानपटुर्न सिद्धपुरुषो नाप्याशुगो मारुतस्तीक्ष्णास्यो न तु सायकस्तमिह ये जानन्ति ते पण्डिताः ॥ ३७ ॥ जाता शुद्धकुले जघान पितरं हत्वापि शुद्धा पुनः स्त्री चैषा वनिता पितैव सततं विश्वस्य या जीवनम् । सङ्गं प्राप्य पितामहेन जनकं प्रासूत या कन्यका सा सर्वैरपि वन्दिता क्षितितले सा नाम का नायिका ॥ ३८ ॥

---

शृङ्ग जग्राह किमर्थम् यतो मद्गीतसुखितस्त्व याचकस्य म इद शिरो दान देहीति. अथ त हरिण शिरोदानायोद्यतकरं समीक्ष्य तज्जाया हरिणीमपि पत्युर्भक्त्या निजशिरोदानायोद्यतकरा समीक्ष्य धर्मार्थं चारिणी व्याधी लज्जिता केन हेतुना. यतोऽयं हरिणो दाता, इय च हरिणी पतिभक्ता दातृजाया-मत्कान्तस्तु याचक , अह च याचकजाया वरमेते पशवो न वय मनुष्या इत्यभिप्रेत्य लज्जितेति प्रथमोऽर्थं ॥ अथवा व्याधजायाया पूर्वपरिणीतपुरुषो मृत स च विद्यमान सगृहीतो द्वितीय पुरुष त च विलोक्य चिन्तितवती यतो निजकान्तवियोगासहिष्णु शिरोदानायोद्यतकरा पतिभक्ता वरमिय हरिणी अह च परिणीतप्रियमरणेऽपि जीविता सगृहीतभर्तृका चासती मानुषी इति लज्जितेति द्वितीयोऽर्थं ॥ अथवा इति चिन्तितं तया यतो येन कर्णेन गीत श्रुत तस्य दातु कर्णस्य पुरो याच्ञायै करो न प्रसारितो व्याधेन नीरसकठिनकुटिलस्य शृङ्गस्य तु पुर प्रसारित इत्यनुचित कृत मूढेन कृतेऽप्यनौचित्ये स्वय मृगयूथपतिर्गीतरसज्ञोऽकृतपात्रविचार स्वभावकृपण याचक जानन्निजशिरोदानायोद्यतकरो जात अतो व्याधी त चतुरं ज्ञात्वा त च व्याध मूर्ख ज्ञात्वैर्णी चैतादृशचतुरपतिपत्नीत्वेन सुभगा सभाव्य लज्जितेति तृतीयोऽर्थं (३०) यतोऽय गीतप्रियो मृगाङ्क मृगो मत्प्रयुक्त गीतमाकर्णयितु चन्द्रादवतरेत्तदा चन्द्रो नि कलङ्कः स्यान्मन्मुखसाम्य च लभेत प्रियविप्रयोगे सतापकरो मे हिमाशु अतोऽस्य शत्रोर्मन्मुखसाम्य मा भूदित्याशयेन वीणामहासीदित्यर्थं (३१) सारिका (३२) नारिकेरफलम् (३३) आम्र (३४)[१] (३५) वृषभ (३६, ३७) मत्कुण (३८)[१]

---

१. रिकारो मध्ये यस्याः २. सकारेणैता युक्ता ३ ककारोऽन्ते यस्याः.

## अपह्नुतयः ।

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया । पतिं बुद्ध्वा सखि ततः प्रबुद्धास्मीत्यपूरयत् ॥ १ ॥ रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति । तत्किं तरुणी नहि नहि वाणी वाणस्य मधुरशीलस्य ॥ २ ॥ सीत्कारं संजनयति व्रणयत्यधरं तनोति रोमाञ्चम् । नागरिक. किं मिलितो नहि नहि सखि हैमनः[1] पवनः ॥ ३ ॥ काले पयोधराणामपतितया नैव शक्यते स्थातुम् । उत्कण्ठितासि वाले नहि नहि सखि पिच्छिलः[2] पन्थाः ॥ ४ ॥ प्रहरति न पञ्चवाणः केवलमवले निमेषोऽपि । वर्षति परं न देवः क्षणदायी विप्रयोगं ते ॥५॥ मधुरस्वना धृतोर्णी[3] मण्याभरणा सुशोभना सुदती[4] । मत्स्कन्धोचितदण्डा भिक्षो दयितास्ति किं न मे वीणा ॥ ६ ॥ रागी[5] भिनत्ति निद्रां तल्पं न जहाति निष्ठुर दशति । चतुरे किं प्राणेशो नहि नहि सखि मत्कुणव्रातः ॥ ७ ॥ आदौ गृहीतपाणिः पश्चादारूढजघनकटिभागा । नखमुखलालनसुखदा सा किं रामास्ति नैव भो पामा[6] ॥ ८ ॥ नाथ विलोकय मेघ[7] नहि नहि पापं तवातिपुण्यायाः । नहि कथयामि पयोधरमपसारय कञ्चुकीमुरसः ॥९॥ पञ्चदशीरजनिसमा तारामणिभूषणापि कोकिलवाक् । चन्द्रसमा गतवसना हस्तगता स्त्री न मे वीणा ॥१०॥ नाथ मयूरो नृत्यति तुरगाननवक्षसः कथं नृत्यम् । नहि कथयामि कलापिनमिह सुकलापी प्रिये कोऽस्ति ॥११॥ अक्षरमैत्रीभाजः सालंकारस्य चारुवृत्तस्य । किं ब्रूमो सखि यूनो नहि नहि सखि पद्यबन्धस्य ॥ १२ ॥ इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता । स्मरसि किं सखि कान्तरतोत्सवं न हि घनागमरीतिरुदाहृता ॥ १३ ॥ तन्वी चारुपयोधरा सुवदना श्यामा मनोहारिणी नीता निष्करुणेन केनचिदहो देशान्तरादागता । उत्सङ्गोचितया तया रहितया किं जीवनं प्रेक्षसे भिक्षो ते दयितास्ति किं नहि नहि प्राणप्रिया तुम्बिका ॥ १४ ॥ या पाणिग्रह[11]लालिता सुसरला तन्वी सुवंशोद्भवा[12] गौरी स्पर्शसुखावहा गुणवती नित्यं मनोहारिणी । सा केनापि हृता तया विरहितो गन्तुं न शक्तोऽस्म्यहं रे भिक्षो तव कामिनी नहि नहि प्राणप्रिया यष्टिका ॥१५॥

## कूटानि ।

[13]केशवं पतितं दृष्ट्वा [14]द्रोणो हर्षमुपागतः । रुदन्ति कौरवाः[15][16] सर्वे हा केशव कथं गतः

१ हेमन्तसवन्धी २ पङ्किल ३ धृतोर्णादिदशा, ( पक्षे ) धृतोर्णावस्त्रा ४ शोभना दन्ता यस्या सा, ( पक्षे ) हस्तिदन्तनिर्मितालकारवती ५ अनुरक्त, ( पक्षे ) रक्तवर्ण ६ कण्डू ७ अम्बुदम्, ( पक्षे ) मेऽघ पापम् ८ मेघम्, ( पक्षे ) स्तनम् ९ 'मे उर' इति पदच्छेद १०. समीपे स्थातु योग्यया, ( पक्षे ) अङ्कमागेडु योग्यया ११ विवाह, ( पक्षे ) पाणौ धारणम् १२ कुलम्, ( पक्षे ) वेणु १३ जले १४ मृतकम् १५ कृष्णकाक १६ शृगाला

॥ १ ॥ पानीयं पातुमिच्छामि त्वत्तः कमललोचने । [1]यदि दास्यसि नेच्छामि नो दास्यसि पिबाम्यहम् ॥ २ ॥ [2]विषं भुङ्क्ष्व महाराज स्वजनैः परिवारितः । विना [3]केन विना [4]नाभ्यां [5]कृष्णाजिनमकण्टकम् ॥ ३ ॥ अर्जुनस्य इमे बाणा नेमे बाणाः [6]शिखण्डिनः । सीदन्ति मम गात्राणि [7]माघमासे गवा इव ॥ ४ ॥ यस्य षष्ठी चतुर्थी च विहस्य च विहाय च । अहं कथं द्वितीया स्याद्द्वितीया [8]स्यामहं कथम् ॥ ५ ॥ समरे हेमरेखाङ्कं बाणं मुञ्चति राघवे । सरावणोऽपि मुमुचे [9]मध्येरीतिधरं शरम् ॥ ६ ॥ [10]शिलार्पितपदद्वन्द्वा [11]नासार्पितकरद्वया । अभूद्व्यक्तस्तनी नारी कथमेतद्भविष्यति ॥ ७ ॥ [12]सुवर्णस्य [13]सुवर्णस्य [14]सुवर्णस्य च जानकि । प्रेषिता तव रामेण [15]सुवर्णस्य च मुद्रिका ॥ ८ ॥ निश्चितं [16]ससुरः कोऽपि न [17]कुलीनः [18]समे मतिः । सर्वथा [19]सुरसंवद्धं [20]काव्यं यो नाभिनन्दति ॥ ९ ॥ येनाकारि [21]पराभूतिर्दिन[22]नायकसूनवे । यद्[23]गोत्रात्मभवाकान्तं तन्[24]महः श्रेयसोऽस्तु वः ॥ १० ॥ [25]विजितात्मभवद्वेषिगुरुपादहतो जनः । हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥ ११ ॥ [26]शंकरं पतितं दृष्ट्वा [27]पार्वती हर्षनिर्भरा । रुरुदुः पन्नगाः सर्वे हा हा शंकर शंकर ॥ १२ ॥ हनुमन्ते [28]हतारामे वानरा हर्षनिर्भराः । रुदन्ति राक्षसाः सर्वे हाहाराम हता हताः ॥ १३ ॥ [29]विराजराजपुत्रारेर्यन्नाम चतुरक्षरम् । पूर्वार्धं तव शत्रूणां परार्धं तव संगरे ॥ १४ ॥ [30]अष्टशूला जनपदाः शिवशूलाश्चतुष्पथाः । प्रमदाः केशशूलिन्यो भविष्यन्ति कलौ युगे ॥ १५ ॥ कुन्दकुड्मलमुं

---

१ यदि दासी असि नेच्छामि न दासी असि तदा पिबाम्यहमिति पदच्छेद २ विगत षकारो यस्मात्. ३ ककारेण विना ४ नकारद्वयरहितम् ५ कृष्णाजिनम् अत्र ककार-षकार-णकार-नकाराणां निष्कासने ऋ आ जि अम् इति स्थिते सधौ कृते "राज्यम्" ६ शत्रुरहितम् ७ "माघमा कर्कटी प्रोक्ता तदपत्यानि सेगवा" इत्युक्ते कर्कटया अपत्यानि यथा जन्मसमये तस्या अङ्गानि विदार्य बहिर्यान्ति तद्वदिमे बाणा ममाङ्गानि विदारयन्तीत्यर्थ ८ सहधर्मिणी ९ मध्यभागे रीति पित्तल तद्विशिष्टम्, ( पक्षे ) मध्ये रीकारविशिष्ट शरम् शरीरमित्यर्थ १० "अधस्ताद्दारुणि शिला" ११ "नासा दारूपरि स्थितम्" १२ उज्ज्वलवर्णस्य १३ शोभना वर्णा नामाक्षराणि यत्र तस्य १४ अशीतिरत्तिकापरिमितस्य १५ काञ्चनस्य. १६ सुरया सहित मद्यप इत्यर्थ ; (पक्षे) स सुर इति पदच्छेदे सुरो देव १७ सत्कुलप्रसूत ; (पक्षे) कौ लीन १८ समे साधौ अमति . श्रद्धारहित इति यावत्; (पक्षे) समे विष्णौ मतिर्यस्य स १९ शोभनरसविशिष्ट बद्ध रचितम्; (पक्षे) असुरै सबद्ध युक्तम् २० कविकृतिम्; (पक्षे) शुक्रम् २१ पराजय , (पक्षे) परा उत्कृष्टा भूतिरैश्वर्यम् २२ कर्णाय सुग्रीवाय यमाय च २३ गाञ्जायन्ते ते गोपास्तेषामात्मभवा गोपिकास्तासा कान्त मनोहरम् अथ च गोत्राया पृथ्व्या आत्मभवा सीता सा कान्ता यस्य तत् अथ च गोत्रस्य हिमालयस्यात्मभवा पार्वती सा कान्ता यस्य तत्. २४ कृष्णाख्य रामाख्य शिवाख्य च. २५ विना गरुडेनामृताहरणसमये जित इन्द्रस्तदात्मभवोऽर्जुनस्तद्द्वेषी कर्णस्तद्गुरु पिता सूर्यस्तत्पादहतस्तत्किरणसतप्त हिमापहोऽग्निस्तदमित्र पानीय तद्धरो मेघ सूर्यकिरणसतप्तो जनो मेघाच्छन्नमाकाशमभिनन्दतीति तात्पर्यार्थ २६ श्रेष्ठचन्दनम् २७. पर्वतवासिनी स्त्री. भिल्ली २८ हते आरामे रावणस्योद्याने दाहिते सतीत्यर्थ २९ वय पक्षिणस्तेषा राजा गरुडस्तद्राजा विष्णुस्तत्पुत्रो मदनस्तदरि शिवस्तस्य चतुरक्षर नाम "मृत्युजय" इति तत्पूर्वार्धे मृत्युरिति संगरे तव शत्रूणाम् उत्तरार्ध जय इति तव ३०. "अष्टमन्न शिवो वेदो ब्राह्मणश्च चतुष्पथ । केशो भग इति प्रोक्त शूलो विक्रय उच्यते" इति.

पश्य सरसीरुहलोचने । [1]अमुना कुन्दकुञ्जेन सखि मे किं प्रयोजनम् ॥ १६ ॥ राजन्कमल-पत्राक्ष तत्ते भवतु चाक्षयम् । आसादयति यद्रूपं [2]करेणुः करणैर्विना ॥ १७ ॥ [3]स्तनमण्ड-लमाश्रित्य नखस्य वरयोषिताम् । कदाकर्णयते गीतं रमया सह रङ्गराट् ॥ १८ ॥ [4]एको-ना विंशतिः स्त्रीणां स्नानार्थं सरयूं गता । विंशतिः पुनरायाता एको व्याघ्रेण भक्षितः ॥ १९ ॥ [5]त्रैलोक्ये नोपमैतस्याः सखे किमिति भाषसे । अनन्तरा सा नादिर्वा न तृती-येति मे गतिः ॥ २० ॥ [6]सुवर्णालंकृता कन्या हेमालंकारवर्जिता । सा कन्या [7]विधवा जाता गृहे रोदिति तत्पतिः ॥ २१ ॥ अहं च त्वं च राजेन्द्र [8]लोकनाथावुभावपि । बहुव्रीहिरहं राजन्षष्ठीतत्पुरुषो भवान् ॥ २२ ॥ [9]अयं पिबन्प्रपापालीमनुरक्तो विलोकयन् । अगस्त्यं चिन्तयामास चतुरः सापि सागरान् ॥ २३ ॥ ब्रह्म [10]नान्तमपि क्लीब मनः [11]सान्तं न पश्यति । किं चित्रं लोकजनकं वा[12]क्कान्ता नैत्य[13]कान्तकम् ॥ २४ ॥ [14]अर्धरात्रे दिनस्यार्धे अर्धचन्द्रेऽर्ध-भास्करे । रावणेन हृता सीता कृष्णपक्षे सिताष्टमी ॥ २५ ॥ [15]शमीगर्भस्य यो गर्भस्तस्य गर्भस्य यो रिपुः । रिपुगर्भस्य यो भर्ता स मे विष्णुः प्रसीदतु ॥ २६ ॥ [16]कहमस्मि गुहा-वक्ति प्रश्नेऽमुष्मिन्किमुत्तरम् । कथमुक्तं न जानासि कदर्थयसि यत्सखि ॥ २७ ॥ [17]विषादी भैक्ष्यमश्नाति [18]सदारोगं न मुञ्चति । रुष्टेनापि त्वया वीर शंभुनारिः समः कृतः ॥ २८ ॥ [19]विहंगो वाहनं यस्य त्रि[20]कंचंधरपाणयः । पासा[21]लसहिता देवी सदा तिष्ठतु ते गृहे ॥ २९ ॥

---

१ मुकाररहितेन. मुकुन्दकुञ्जेनेति यावत् २ करेणु करणैर्विना ककार-रेफ-णकारैर्विना यद्रूपमासादयति प्राप्नोति तत्तेऽक्षय भवत्वित्यन्वय उक्तव्यञ्जनत्रयरहितम् अ ए उ. इति स्वरत्रयम् तत्र अ ए इत्यत्र वृद्धौ ऐ उ इत्यत्र आयादेशे "आयु" इति सिद्धम् ३ खस्याकाशस्य मण्डलमाश्रित्य हे कद मेघ मा स्तन गर्जित मा कुरु यतो रङ्गराड्रङ्गनाथो रमया सह वरयोषिता गीतमाकर्णयत इत्यन्वय ४ एकोना इति विंशतेर्विशेषणेन विरोध. एको ना नर इति पदच्छेदेन परिहार ५ कश्चित्स्वनायिका स्तौति त प्रति अन्य प्रतिभाषते हे सखे एतस्यास्त्रैलोक्ये उपमा नास्तीति किमिति कुतो भाषसे यत सा उपमैव अनन्तरा मध्यवर्णरहिता उमेति यावत् अथवा सैव उमा अनादि आद्यवर्णरहिता मा लक्ष्मीरिति यावत् उपमा उपमानमस्तीति भाव तृतीया नास्तीति मे बुद्धि ६ सुष्ठुवर्णेन कान्त्यालंकृता ७ विविधा धवा पतयो यस्या सा जारिणीत्यर्थः ८ ( बहुव्रीहिपक्षे ) लोका जना नाथा स्वामिनो यस्यैवविधोऽहम् याचकत्वात् (षष्ठीतत्पुरुषपक्षे) लोकाना जनाना नाथ एवविधस्त्वम् राजत्वेन पालकत्वात् ९ समुद्रमपि करे चुलुकयतो मुने सामर्थ्य मम चेत्स्यात्तर्हि झटिति तृट्शान्त्यभावाच्चिरमेनां पश्यामीति पान्थाभिप्राय यदि चतुर सागरा सन्निहिता स्युस्तदानवरत जलधारा विसृजन्ती चिरमेतद्दर्शनसुखमनुभवेयमिति प्रपापाल्यभिप्राय १० न विद्यते अन्तो यस्य तत्, (पक्षे) नकारान्तम्, ११ अन्तेन सहितम्; (पक्षे) सकारान्तम् १२ ककारोऽन्ते यस्या , ( पक्षे ) कान्ता रमणी १३ अकस्य दु खस्यान्तक नाशकम्,(पक्षे) ककारान्त न भवतीति तत् सान्त मनो नान्त ब्रह्म न पश्यतीति युक्तमेव पर स्वय कान्ता वाक् अकान्तकमपि लोकजनकत्वात्कान्त ब्रह्म नैतीति चित्रमिति भाव १४ कृष्णपक्षे या अष्टमी तस्या दिनस्यार्धे रावणेन सीता हृता किंलक्षणा अष्टमी अर्धरात्रे सिता. पु० किं०. अर्धचन्द्रे किंभूते अर्धचन्द्रे अर्ध भा करोति अर्धभास्करास्तस्मिन् १५, १६ ? १७ खिन्न ; (पक्षे) विषमत्तीति स . १८ सदा सर्वदा रोग व्याधिम्, (पक्षे) सदार सस्त्रीक अग शैलम् १९.वि गरुड , हंस ,गो वृषभ . २० त्रिशूल , कम्बु , चक्रम् २१ पार्वती, सावित्री, लक्ष्मी .

शस्त्रं न[1] खलु कर्तव्यमिति पित्रा नियोजितः । तदेव शस्त्रं कृतवान्पितुराज्ञा न लङ्घिता ॥ ३० ॥ कान्ते धावय मे पादाविति भर्त्रा निवेदिता । न[2] तया धावितौ पादौ भर्तुराज्ञा न लङ्घिता ॥ ३१ ॥ दे[3]वराजो मया दृष्टो वारि[4]र्वारणमस्तके । भक्षयित्वार्कपर्णानि विषं[5] पीत्वा क्षयं[6] गतः ॥ ३२ ॥ कु[7]मारसंभवं दृष्ट्वा रघुवंशे मनोऽदधत् । राक्षसानां कुलश्रेष्ठो रामो राजीवलोचनः ॥ ३३ ॥ विना[8]यौ वनमार्गेण गच्छन्तौ लपितं मया । हरेः कृत्यं दर्शयतां पश्येत्युक्ते न दृश्यते ॥ ३४ ॥ विना[9]यकपतिशत्रुस्तस्य नाम षडक्षरम् । पूर्वार्धं तव राजेन्द्र उत्तरार्धं तु वैरिणाम् ॥ ३५ ॥ कोला[10]कृतिरपारेवो मोरोहंसो जलोदरी । कंसारिरात्तलीलो वो वाघलो भूकलोऽवतु ॥ ३६ ॥ सु[11]रारिरिपुभृत्यस्य तस्य तातस्य वाहनम् । अन्त्याक्षरविहीनस्य तस्य कान्ता स्थिरा भव ॥ ३७ ॥ ना[12]गवल्लिरिपोः कन्या सा कन्या यस्य वल्लभा । तस्य हाररिपुस्वामी तस्य कान्ता स्थिरा भव ॥ ३८ ॥ के[13]ष्ठामानगजायुक्ता वार्चवीश्वरगोजगाः । शं वो ददतु काजेशा वेदेलास्वर्धुनीधराः ॥ ३९ ॥ रा[14]मरा मेऽतिरामेऽतिरमे रामे मनोरमे । सहस्रनामतत्तुल्यं रामनाम वरानने ॥ ४० ॥ व[15]न्धनान्मोचितो येन दैत्यसुनूतनूद्भवः । तमनोङ्ककरमहं श्रीश्रं श्रराद्दते भजे ॥ ४१ ॥ अ[16]र्जुनान्ते वरारोहे भीमान्ते च वरानने ।

---

१ नखाल्लुनातीति नखलु २ नतया नम्रीभूतया ३ हे देवर अजो मेप . ४ सेतु ५ पानीयम् ६ वास ७, ८, ९ ? १०, कसारि श्रीकृष्णो वो युष्मानवतु रक्षतु कथभूत कसारि कोलाकृति कोलस्य सूकरस्य रूप यस्य स' पु० क०. अपारेव अपारे ससारे अवति रक्षति तथा यद्वा अपारे समुद्रे वसतीति स . क्षीरसमुद्रशायीत्यर्थ पु० क०. मोरोहस माया लक्ष्म्या उरो वक्षस्तत्र हस इव हस पु० क० जलोदरी. जले उदके उदर गृह यस्यास्तीति स पु० क०. आत्तलील. आत्ता अङ्गीकृता लीला विलासो येन स पु० क० वाघल . वा निश्चयेन अघ लुनातीति स . पु० क०. भूकल भुव कलयति उद्धरति स ११ सुरारी रावणस्तस्य रिपू रामस्तस्य भृत्य सेवको हनूमास्तस्य तातो वायुस्तस्य वाहन हरिणस्तस्यान्त्याक्षरविहीनस्य. लुप्तणकारस्येत्यर्थ ततश्च हरिरिति जातम् तस्य हरे कान्ता लक्ष्मीर्भवतो गृहे स्थिरा भवेति. १२ नागवल्ली नाम उत्तमवल्ली तद्रिपुर्हिमाचलस्तत्कन्या पार्वती तत्स्वामी रुद्रस्तद्धार सर्पस्तद्रिपुर्गरुडस्तत्स्वामी विष्णुस्तत्कान्ता लक्ष्मी सा भवतो गेहे स्थिरा भवेति १३ केष्ठा ब्रह्माणी च मा रमा च नगजा गिरिजा च ताभिर्युक्तास्तथा. वार्चो हसो वीश्वरो गरुडो गोजो वृषभस्तैर्गच्छन्ति तथा वेदाश्च इला पृथ्वी च स्वर्धुनी स्वर्णदी च ता धरन्ति एवविधा कश्च अजश्च ईशश्च काजेशास्ते वो युष्माक श सुख ददतु. १४ हे वरानने अह रामे अतिरमे. कथभूते रामे अतिरामे अतिक्रान्ता रामा येनासौ तस्मिञ्शुद्धे ब्रह्मणि पु० क० मनोरमे. मनो रमयतीति तस्मिन् कथभूत अहम् रामरा राम एव रा द्रव्य यस्य स यत कारणान्मे मम सहस्रनामभिस्तुल्य रामनाम अत इति कारणात् ॥ अथवा अह रामे अतिरमे कथभूते रामे वरानने वरमानन यस्यासौ तस्मिन् उत पार्वत्या सबोधन वा कथभूत रामनाम सहस्रनामतत् सहस्रनाम तनोतीति सहस्रनामतत् "रमन्ते योगिनो यत्र परानन्दे चिदात्मनि । अतो रामपदेनासौ पर ब्रह्माभिधीयते" इति १५. दैत्यो हिरण्याक्षस्तस्य सूनुरनुजो हिरण्यकशिपुस्तस्य तनूद्भव प्रह्लादो येन वन्धनान्मोचित तम् अन शकट तस्याङ्क चक्र करे यस्य त श्रीश्च श्रीनारसिंहमह भजे इत्यन्वय श्री इत्यत्र श्रकाराद्दते विना ई अवशेष श्रमित्यत्र राद्दते रेफ विना. तत शकार शेष तेन "ईशम्" इति जातम् १६. अर्जुनो दिवसस्तदन्ते भीमा रात्रिस्तदन्ते च सायप्रातरित्यर्थ धनजयो वह्नि रक्षणीय .

पाण्डवैः सह योद्धव्यं रक्षणीयो धनंजयः ॥ ४२ ॥ चेतनं[1] पुष्करं कोशैः क्षुधाध
समन्ततः । न घृणीनामरम्याणां विवेकं यान्ति दृष्टयः ॥ ४३ ॥ शब्दस्य[2] तुरीय
पव्यान्ते राजवर्जिते । वाजं देयं प्रयत्नेन कविभ्यो वज्रनिर्मितम् ॥ ४४ ॥ बृहद्धयसह[3]
णि द्वारि तिष्ठन्तु भूपते । पिशंगिले[4] सुखं यान्तु स्थिरा भूयात्पिलिप्पिला[5] ॥ ४
यथा[6] नयति कैलासं नगं गानसरस्वती । तथा नयति कैलासं न गङ्गा न सरस्वती ॥ ४
मोमाँराममदादन्द्वे[7] हयागदलनंभषः । यस्यैतानि न विद्यन्ते स याति परमां गतिम् ॥
मा तीराण्ड[8] जनं हीनां गीर्यावच्चोदयते रविः । उदिते च दिवानाथे संगमः पुनरा
॥ ४८ ॥ तातेन कथितं पुत्र लेखं लिख ममाज्ञया । न[9] तेन लिखितो लेखः पितुराज्ञ
लोपिता ॥ ४९ ॥ वासनावासुदेव[10] स्य वासितं भुवनत्रयम् । सर्वभूतनिवासीनां वा
नमोऽस्तु ते ॥ ५० ॥ आटवी[11] कोटवीचीश्च गाढवीचिकवाहिनी । तव रक्षतु राजेन्द्र ग
वाचा प्रजापतिः ॥ ५१ ॥ अत्रिलोचनसंभूतज्योतिरुद्गमभासिभिः[12] । सदृशं शो

---

१. पुष्करमाकाश चेतनम्. इवेति शब्दोऽध्याहार्य दृश्यते इति शेष. क्षुधा निर्जलत्वेन
शब्दायमाने शारदत्वात्समन्तत परित कोशैर्मेघैरुपलक्षितम्. अतएव दृष्टय कृषीवलानां पामरजनान
घृणीनामरम्याणा विवेक न यान्ति वियतोऽभ्राच्छन्नत्वेन किमिदानीं दिनमस्ति रात्रिर्वेति निश्चय न प्र
न्तीत्यर्थ २ शब्दोऽह तस्य तुरीये भागे चतुर्थे भागे पव्यो मासस्तस्यान्तेऽमावस्याया
चन्द्रस्तेन वर्जिते वाज अन्न कविभ्यो ब्राह्मणेभ्यो वज्रेण घृतेन निमित युक्त देयम् ३. अश्वा ४ अहो
५. लक्ष्मी ६ गानसरस्वती यथा कैलास नग नयति तथा न गङ्गा न सरस्वती प्रापयति. ७
माया राग मद मल मान दम्भ द्वेष इति प्रथमार्धाक्षरानुक्रमेण ग्रहणम् ८ हे तीराण्ड चक्रवाक
तावत् हीना गी मा वद शेष स्पष्टम् ९ नतेन नम्रीभूतेन १० हे वासन वासयतीति वासन
सबुद्धौ त्व भुवनत्रय अव रक्ष पालय कथभूत भुवनत्रयम् सर्वभूतनिवासि सर्वाणि भूतानि निवस
स्मिंस्तत् हे असुदेव प्राणेश्वर इना कामादीना वासित स्य अन्त कुरु हे वासुदेव ते तुभ्य नम अ
अथवा अस्तुते न स्तौतीति अस्तुत् तस्मै स्तोतुमशक्याय वसुभिर्दिव्यतीति वासुदेव तस्य सबुद्धौ हे वासु
अथवा वसुदेवशब्दित शुद्ध सत्व तत्रभवो वासुदेवस्तस्य सबुद्धौ ते तुभ्य नम अस्तु असून्ददातीति असु
यद्वा असूना देव असुदेव हे असुदेव॥ गणेशपक्षे—हे सर्वभूतनिवासिन सर्वभूतै सह निवासकारि रुद्र स
पितृत्वात्स्वामी यस्येति तथोक्तस्तथा हे अम्बासुद अम्बा पार्वती माता तस्यै सुख ददाति तथोक्त हे पा
नन्दनेत्यर्थ . तथा हे इव इ मही वाति भक्ताननुग्रहीतु प्राप्नोतीति तत्सबुद्धौ ते तुभ्य नमो नतिरस्तु त्व भुव
त्रिलोकीं अवसि पालयसि कथभूत भुवनत्रयम् अवासितम् वास आश्रयो जातो यस्येति वासितम् न वा
अवासितम् निराश्रयमित्यर्थ . कया अवासि वास एवाश्रय एव नौ दु खसागरतरणाय हेतुभूता तरी
किं० सुदे. शोभनप्रदे वरदानपरायणे वरदसमूहे श्रेष्ठे इति शेष ॥ हरिपक्षे—हे इन स्वामिन् तथा हे अ
सुद अम्बावन्मातृवत् सुशोभन ददातीति हे तथोक्त तथा हे इव इ लक्ष्मीं वाति प्राप्नोति स इव तत्सबु
यद्वा हे अम्बासुदेव इत्येक सबोधनपदम्, अम्बा माता असुद प्राणदाता पिता कथ्यते तयैव लक्ष्मीं
प्राप्नोतीति हे तथोक्त. जगता मातृत्व पितृत्व वेति सबोधनाभिप्राय ते नमोऽस्तु. ११. गाढा या
तया कृत्वा प्रजापति अटव्या अरण्ये गच्छति सा आटवी कोटयो वीचयो यस्या सा गाढाभिर्निबिड
वीचिभि.. क जल वहते सा गङ्गा तव त्वा रक्षतु. १२ कमलैरित्यर्थः.

ऽत्यर्थं भूपाल तव चेष्टितम् ॥ ५२ ॥ केति[1] ते कवरीभारः सुमनःसङ्घा[2]त्प्रियेऽति[3] नील-त्वात् । भवति[4] च कलापवत्त्वा[5]न्निर्जर[6]सेव्यः कथं न स्यात् ॥ ५३ ॥ यामि विधा[7]वभ्युदिते पुनरेष्यामीति यदुदितं[8] भवता । जानात्युर्दन्तमेतं नेदं तत्त्वेन[9] मुग्धवधूः ॥ ५४ ॥ अधुना[10] मधुकरपतिना[11] गिलितोऽप्यपकारदंपती[12] येन । त्रातः स पालयेत्त्वां विगत[13]विकारो विनायको लक्ष्म्याः ॥ ५५ ॥ उपरिगतं[14] हि सवर्णं हृत्वा करतो ददासि रन्तुं मे । धन्यः सरोजयुगलं त्यक्त्वा स्तनयुगमथास्पृशत्कृष्णः ॥ ५६ ॥ अच्युत[15]भक्तिवशादिह समभावस्तत्प्रसङ्गेन । सारमतेरभ्युदयति रतिरिति नैवाद्भुतं किंचित् ॥ ५७ ॥ मञ्जुलघौ[16] संभावितगुणे क्वचिन्नापदाधारे । अयि सखि तत्रोपपतौ मम चेतो न त्वनीदृशे पत्यौ ॥ ५८ ॥ अयि[17] सखि शस्तः सखिवत्पतिरिति किं त्वं न जानासि । शस्तोऽतिसखिवदुपपतिरित्यालि कथं त्वयापि नावोधि ॥ ५९ ॥ द्वन्द्वो[18] द्विगु[19]रपि चाहं मद्गेहे नित्यमव्ययी[20]भावः । तत्पुरुष[21] कर्म धारय येनाहं

---

१ क इव ब्रह्मेव आचरति २ पुष्पाणाम्; (पक्षे) देवानाम् ३. अ इव विष्णुरिवाचरति. ४. भव इव शिव इवाचरति ५ कलापो भूषण तद्वत्वात्; (पक्षे) कलापश्चन्द्रस्तद्वत्वात् ६ जरारहितस्तरुणै सेव्य.; (पक्षे) निर्जरैर्देवै सेव्य . ७. दैवे; (पक्षे) चन्द्रे. ८. वृत्तान्तम्; (पक्षे) उकारान्तम् ९ इद तत्त्वेन सत्यत्वेन; (पक्षे) इदन्तत्वेन इकारान्तत्वेन १० अपगतो धुकारो यस्मात्तेन. ११ मधुकरपतिर्मकरपतिस्तेन १२ पकारशून्यो दपती. दन्तीत्यर्थ १३ विगतो विकारो यस्मात्स विनायक. नायक इत्यर्थः १४. कृष्णो राधिका पृच्छति उपरिगत सवर्ण समानवर्ण सरोजयुगल करतो हृत्वा स्वहस्तेन आहृत्य मे रन्तु ददासि. ततो राधया तस्मिन्दातु गृहीते सति उवर्णेन परिगत युक्त सवर्णरहित एतादृश सरोजयुगल उरोजयुगलमेव इति धिया कमलयुगं त्यक्त्वा स्तनयुगलमेव कृष्णोऽस्पृशत् १५ इह ससारे अच्युतभक्तिवशात्समभाव समत्व शत्रुमित्रादिषु. तत्प्रसङ्गेन भक्तिप्रसङ्गेन सारमते श्रेष्ठबुद्धे पुसः रति. प्रीतिः अभ्युदयति इति न किंचिदत्राद्भुतम् ॥ व्याकरणपक्षे—भो अच्युतभ अच्युता अहीना भा प्रतिभा यस्य. क्तिवशात् क्तिप्रत्ययवशात् स प्रसिद्धो मभाव मकारस्याभावो लोप भवतीति शेष तत्प्रसङ्गेन क्तिप्रत्ययप्रसङ्गेन रमतेर्धातो सा रति अभ्युदयतीत्यपि नाद्भुतम्. रमु क्रीडायामित्यस्माद्धातो. क्तिनि अनुदात्तोपदेशेति मलोपे रतिरिति रूप सिद्ध्यति १६ कापि विदुषितरा नायिका सखीं प्रति वदति अयि सखि तत्र तस्मिन्नुपपतौ मम चेत अस्तीति शेष कीदृशे मञ्जुलघौ. मञ्जु. सुन्दर स चासौ लघुरिष्टश्च पु० की० संभावितगुणे सभाविता गुणा सौन्दर्यादयो यत्र पु० की०. क्वचित्कदाचिदपि न आपदाधारे आपद्रहिते इत्यर्थ. अनीदृशे उक्तगुणरहिते पत्यौ मम चेतो नास्तीति ॥ व्याकरणपक्षे—उपपतौ उपपतिशब्दे मम मनोऽस्ति की० मञ्जुला घिसज्ञा यस्मिन् सभावित 'घेर्ङिति' इति गुणो यस्य ना इति पदस्य 'आङो ना स्त्रियाम्' इति सूत्रविहितस्याधारे आश्रये अनीदृशघिसज्ञागुणनादेशरहिते केवले पतिशब्दे. १७ अयि सखि पति सखिवत् शस्तः मित्रवद्विश्वसनीय इति त्व किं न जानासि. सखी प्रत्याह हे आलि उपपति जार अतिसखिवत् अतिशयितमित्रवत् शस्त इति त्वयापि कथ नावोधि ॥ व्याकरणपक्षे—पतिशब्द शस्त शस इति शस्त पञ्चम्यन्तात्तसि द्वितीयाबहुवचनात्पर सखिवत्सखितुल्यरूपो ज्ञेय नादेशाभावेन कार्यैक्यात् उपपतिशब्द शस्त द्वितीयाबहुवचनात्पर अतिसखिशब्दवत् नादेशभाक्. १८ यत स्त्रीपुरुषरूपव्यक्तिद्वयात्मक १९ द्वौ गावौ यस्य २० भावो वस्तुमात्रम् अव्ययी व्ययाभाववान् मद्गेहे कस्यापि वस्तुनो व्ययो नास्तीत्यर्थ यद्वा अव्ययीभवन अव्ययीभाव २१ तत्तस्माद्धे पुरुष येनाह बहुव्रीहिर्बहुधान्यविशिष्ट स्या तत्कर्म धारयेत्यन्वय. समासषट्कप्रतिपादनमत्र चित्रम्

स्यां वहुव्रीहिः ॥ ६० ॥ त्वद्विरह[1]मसहमाना निन्दति वाला दिवानिशं शंभुम् । राहुमपि रामचन्द्रं रामानुजमपि च पन्नगारातिम् ॥ ६१ ॥ स जयति चित्रचरित्रो यस्य हि वरे[2]चरणपुष्करकरेणुः । मैहिषी[3]मृषिसिंहस्य प्राजीजनदपि वृषोदये[4] हेतुः[5] ॥ ६२ ॥ रविसुतकृतगोकर्णः श्रुतिविषयगुणाम्बरो वनात्मधरः । नरकशिरा जगदखिलं चिरमव्याद[6]समरुक्पाणिः ॥ ६३ ॥ वाताच्छीतिररिश्रोऽरं वो हरतान्महा[7]सुरीदायितः । ब्रीडब्राज्यानौकाः वार्वाहाभो समस्तानाः ॥ ६४ ॥ लम्बोदर तव चरणावादरतो यो न पूजयति । स भवति विश्वामित्रो दुर्वासा गौतमश्चेति ॥ ६५ ॥ अम्बर[11]मम्बुनि पत्रमरातिः पीतमहीनगणस्य ददाह । यस्य वधूस्तनयं गृहमब्जा पातु स वो हरलोचनवह्निः ॥ ६६ ॥ वायु[12]मित्रसुतबन्धुवाहनारातिभूषणाशिरोवलम्बिनी । तज्जवैरिभगिनीपतेः सखा पातु मां कमललोचनो हरिः ॥ ६७ ॥ अ[13]तनुज्वरपीडितासि वाले तव सौख्याय मतो ममोप[14]वासः । र[15]सेमर्पय वैद्यनाथ नाहं भवदावेदितलङ्घने[16] समर्था ॥ ६८ ॥ अ[17]कुबेरपुरीविलोकनं न धरासूनुकरं कदाचन । अथ तत्प्रतिकारहेतवेऽदर्मयन्तीपतिलोचनं भज ॥ ६९ ॥ रा[20]मं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिग्धिक् । अस्मिन्पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग्धिक् ॥ ७० ॥ गोग[21]जवाहनभोजनभक्षोद्भूतपामित्रसपत्नजशत्रोः । वाहनवैरिकृतासनजुष्टा मामिह पातु जगत्त्रयतुष्टा ॥ ७१ ॥ नदीज[22] लङ्केशवनारिकेतुर्नगाह्वयो नाम नगारिसूनुः । एषोऽङ्गनावेषधरः प्रमाथी जित्वा वयं नेष्यति चाद्य गावः ॥ ७२ ॥ श्रुत्वा

---

१. मन्मथावशेषणाच्छंभुम् , चन्द्रावशेषणाद्राहुम्, मलयानिलवशेषणाद्रामचन्द्रम्, मन्मथजनकत्वाद्धलरामानुजम्, वायुभक्षिसर्पहननात्पन्नगारातिं गरुडं निन्दितवतीति भावः. २ वर. श्रेष्ठो यश्चरणकमलसबन्धी रेणुः. ३. ऋषिश्रेष्ठस्य गौतमस्य पत्नीम्. ४. वृष सुकृतम्. ५ उत्कृष्टचरणशुण्डाग्रो गजः सिंहस्य महिषी जनयामास वृषो वृषभस्तस्योदये हेतुरिति चित्रम् ६ न समोऽसमो विषम स चासौ रुक् च समरुक् शूलरोग. त्रिशूलमित्यायुधविशेषः स पाणौ हस्ते यस्य स. शूलपाणि शिव इत्यर्थ ७ महासुरीदयित इत्यस्मात् ईदयित इति विशेष्यपदगुप्त धृतमस्ति ८ गर्दभ . ९ दुष्ट १०. पशु ११ स कृष्णो वो युष्मान्पातु यस्याम्बरं पीतम् यस्य गृहमम्बुनि यस्य पत्र वाहन अहीनगणस्यारातिर्गरुड यस्य वधूरब्जा कमला यस्य तनयं हरलोचनवह्नि. ददाह १२ वायुमित्रमग्निस्तत्सुत. षण्मुखस्तद्बन्धुर्गजाननस्तद्वाहन मूषिकस्तदराति सर्पस्तद्भूषणः शिवस्तच्छिरोवलम्बिनी गङ्गा तज्जो भीष्मस्तद्वैरि शिखण्डी तद्भगिनी द्रौपदी तस्या पतिरर्जुनस्तत्सखा कृष्ण . १३ महान्, (पक्षे) काम.. १४ लङ्घनम्, (पक्षे) समीपस्थिति १५ भेषजम्, (पक्षे) प्रीतिम् १६. उपवासे, (पक्षे) उल्लङ्घने. १७ अनलका विधवेत्यर्थ १८ मङ्गलकारकम्. १९ अनललोचन शिवम् २०. जीविकार्थे चापण्ये इत्यत्र अपण्ये इत्युक्तत्वाद्धस्तिकान्विक्रीणीते इत्यत्रैव रामक सीतकां लक्ष्मणक इति प्रयोगा एव साधव २१ गवा गच्छतीति गोग शिवस्तज्ज कार्तिकेयस्तस्य वाहन मयूरस्तस्य भोजन भक्ष्य सर्पस्तस्य भक्ष्य वायुस्तदुद्भूतो हनूमांस्त पातीति स तत्प सुग्रीवस्तस्य मित्र रामस्तस्य सपत्न रावणस्तज्ज इन्द्रजित्तस्य शत्रुरिन्द्रस्तस्य वाहन ऐरावतस्तस्य वैरि सिंहस्तत्रोपविष्टा अतएव सर्वोपरि तुष्टा अम्बिका मा पातु रक्षतु २२ भो नदीज गङ्गातनय भीष्म एष दृश्यमान. अङ्गनावेषधर. स्त्रीरूपधारी लङ्केशवनारिकेतु रावणवनभञ्जकहनूमद्ध्वज नगाह्वयोऽर्जुननामा नगारिसूनुरिन्द्रपुत्रः. भो भो. कौरवा अद्य प्रमाथी हन्ता अद्य वो युष्माञ्जित्वा गाश्च नेष्यतीत्यर्थ..

प्रदग्धं तनयं सशोका पुनर्निशम्याप्तशरीरभावम् । पश्यत्सु देवेषु च धावमाना रमा मुदा शंकरमालिलिङ्ग ॥ ७३ ॥ गोकर्णराडाभरणं यदीयं यद्गव्यहव्यादजमाददाह । कुंभेनचूडामणिरादिगन्तात्पायादपायाद्गुरगात्मजार्धः ॥ ७४ ॥ विलासिनीं काञ्चनपट्टिकायां पाटीरपङ्कैर्विरही विलिख्य । तस्याः कपोले व्यलिखत्पवर्गं तवर्गमोष्ठे चरणे टवर्गम् ॥७५॥ काचिद्वियोगानलतप्तगात्री प्राणान्समाधारयितुं लिलेख । बाह्वोर्भुजंगं हृदि राहुबिम्बं नाभौ च कर्पूरमयं महेशम् ॥ ७६ ॥ नेतुः प्रयाणोन्मुखतां समीक्ष्य नक्षत्रमुक्तावलिमस्य कण्ठे । अधारयत्सा स तु वासराणां संख्यापरोऽभूत्सखि कोऽत्र भावः ॥ ७७ ॥ गौरीक्षणं भूधरजाहिनाथो पत्रं तृतीयं दयितोपवीतम् । यस्याम्बरं द्वादशलोचनाख्यः काष्ठा सुतः पातु सदाशिवो वः ॥ ७८ ॥ पुष्पेषुमाता पुरुषायमाणा लज्जावती विश्वसृजं विलोक्य । नाभीसरोजे नयनं मुरारेर्वामेतरं वारयति स्म चित्रम् ॥ ७९ ॥ मृगेत्रयं भाति वपुष्यवेषे फलानि चत्वारि सुमानि पञ्च । कपोलषङ्कं प्रमदालतायाः पृच्छन्ति मध्यं विदुषः कवीन्द्राः ॥८०॥ इन्दीवराक्ष्याः स्फुटविद्रुमोष्ठ्याः संकेतमुद्दिश्य वने चरन्त्याः । चोरैः समस्ताभरणानि हृत्वा नासामणिर्नोऽपहृतः किमेतत् ॥ ८१ ॥ नृसिंहदेवे चलिते भरेण प्रत्यर्थिभूतैः क्रियते भरेण । कण्ठे कुठारः कमठे ठकारः शेषे ढकारस्तपने चकारः ॥ ८२ ॥ कुध्रेनसुप्रीनयनाश्रयाश-

१ श्रेष्ठचन्दनम् २. उ शिव कु धरणिं अपायान्नाशातपायाद्रक्षतु स॰ क. गोकर्णा सर्पास्तेषां राट् वासुकि यदीय आभरणम् हूयते यद्द्रव्यम् गोरिद गव्य च तद्द्रव्य च गव्यहव्यम्. गव्यहव्यमत्तीति गव्यहव्याद् वह्नि यस्य शिवस्य. गव्यहव्याद्वह्निरित्यनेन त्र्यम्बकस्य तृतीयनेत्रोत्थवह्निरित्यर्थ. स अज अनङ्ग आददाह यस्य तृतीयनेत्रोत्थो गव्यहव्याद्वह्नि मदनं भस्मीचकारेत्यर्थ किंभूत भाना ऋक्षाणा इन. स्वामी चन्द्र स एव चूडामणिर्मुकुटरत्न यस्य स पु॰ क॰ अगात्मजा पार्वती अर्धे अर्ध वा यस्य स. आदिगन्तादिगन्तेभ्य आ इति दिशामन्त मर्यादीकृत्य आदिगन्त तस्मात् ३. चन्दनद्रवै ४ गल्ले ५ पवर्गस्य ओष्ठस्थानीयत्वात् ओष्ठाभ्या तव चुम्बन करिष्यामीति सूचितम् ६ तवर्गस्य दन्तस्थानत्वाद्दन्तैस्तवोष्ठौ खण्डयिष्यामीति सूचितम् ७ टवर्गस्य मूर्धस्थानत्वाद्यदि त्व रुष्टासि तर्हि त्वा शिरसा नमामीति सूचितम् ८ सर्पग्रासभीत्या प्राणा स्वतो न निर्गमिष्यन्तीत्याशयेन बाह्वोर्भुजग लिलेख चन्द्रश्च स्वभागतया श्रुतिसिद्ध मृताना मनो गृहीतुमागच्छेदित्याशयेन हृदि राहु मन्मथत्रासाय शिव च लिलेखेति भाव. ९. नक्षत्रमालाधारणेन नक्षत्रोदयवेलायामागमन कर्तव्यमिति तया सूच्यते. वासरसख्याकरणेन सप्तदिनमध्य एव मयागम्यत इति तेन सूचितम्. १० स सदाशिवो वो युष्मान्पातु स क यस्य गौ वृषभ पत्र रथ.. तथा ईक्षण तृतीय यस्य भूधरजा पार्वती दयिता यस्य. अहिनाथ शेष उपवीत यस्य अम्बर वस्त्र काष्ठा दिशो यस्य. द्वादशलोचनाख्य कुमार सुत यस्य इति अन्वय ११ पुष्पेषोर्मदनस्य माता लक्ष्मी॰ पुरुषायमाणा पुरुषवदाचरन्ती विपरीतरतं कुर्वतीत्यर्थ. विश्वसृज भगवन्नाभीसरोजस्थ ब्रह्माण विलोक्य लज्जावती सती मुरारेर्दक्षिण नयन वारयति स्म यतो भगवन्नेत्रे हि सूर्यचन्द्रात्मके. तत्र दक्षिणस्य सूर्यात्मकत्वात्तद्द्वारणेन सरोज मुकुलितं भवेत् ततश्च ब्रह्मापि सरोजकोशेऽन्तर्हितो भवेत् इति मनसि कृत्वा तद्वारयामासेति भाव १२ ? १३ उपरि अक्ष्णो नीलच्छाया अधस्तात् ओष्ठस्य रक्तवर्णच्छाया तयो प्रतिबिम्बित नासामौक्तिगुञ्जाफलमिति मनसि कृत्वा चौरैर्न हृतम् इति अभिप्राय १४ ? १५ कु पृथ्वीं धरन्ति ते कुध्रा पर्वतास्तेषामिन स्वामी हिमाचलस्तस्य सू॰ पुत्री पार्वती ता प्रीणातीति प्रीर्महादेवस्तस्य नयनस्य आश्रयाशो नेत्रवह्निस्तेन [illegible] ।म...न उन्मदा उन्मत्ता..

दग्धोन्मदा दर्दुर[1]हर्षकाले । स्वजन्मभक्ष[2]प्रियभोजनाशा नृत्यन्ति भीमानुजगोजभाजः ॥ ८३ ॥ शिर[3]सि देवनदीं पुरवैरिणः सपदि वीक्ष्य धराधरकन्यका । निबिडमानवती रमणाङ्कं क्वचन चुम्बनमारभत स्म सा ॥ ८४ ॥ काचिद्विलोलनयना रमणे स्वकीये दूरं गते सति मनोभवबाणखिन्ना । त्यक्तुं शरीरमचिरान्मलया[4]द्रिवायुं सौरभ्यशालिनमहो पिबति स्म चित्रम् ॥ ८५ ॥ वि[5]कसति नयनाभ्यां पङ्कजं कैरवं च श्लथयति चरणाब्जं ब्रह्मचर्यं पयोधेः । उरसि लसति यस्य श्रेयसां संप्रदायः स फणिनमधिशेते पद्मया पद्मनाभः ॥ ८६ ॥ [6]अहिरिपुपतिकान्तातातसंबद्धकान्ताहरतनयनिहन्तृप्राणदातृध्वजस्य । सखिसुतसुतकान्तातातसंपूज्यकान्तापितृशिरसि पतन्ती जान्हवी नः पुनातु ॥ ८७ ॥ वपुः[7]प्रादुर्भावादनुमितमिदं जन्मनि पुरा पुरारे न प्रायः क्षणमपि भवन्तं प्रणतवान् । न मन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिमान्महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥ ८८ ॥ इदं तावच्चित्रं यदवनितले पार्वणशशी कलङ्कान्निर्मुक्तः[8] किमपि च तदन्तर्विलसति । प्रवालं[9] माणिक्यं[10] कुवलययुगं[11] मन्मथधनु[12]र्मनोहारी वीणाध्वनि[13]रिति महच्चित्रमपरम् ॥ ८९ ॥ हरिद्रायां राहुः प्रसरपिहितेच्छापरिषदि प्रयुक्तालंकृत्यै वियुतगरुतां दुर्गकुरटीम् । वयं सार्कान्वेताः प्रहर इति सेनाधिपकृतामथात्येभ्यो लेखां प्रतिदिशति सिंहक्षितिपतिः[14] ॥ ९० ॥ गतौ[15] सा किं स्थानं पथि सह तया

१ दर्दुराणा मण्डूकाना हर्षकालो वर्षाकालस्तस्मिन् २ स्वस्माज्जन्म येषां तानि स्वजन्मानि स्वापत्यानि तानि भक्षयन्ति ते स्वजन्मभक्षा' सर्पास्त एव प्रिया भोजनस्य आशा येषा ते ईदृशा मयूरा इत्यर्थः ३ सविष गलम् ४ मलयस्थचन्दनेष्वनिश सर्पनिवासात्तच्छ्वाससपृक्तस्य वायो. सविषत्वात्तत्पानेन झटिति मे मरण स्यादिति बुद्ध्या त पपाविति गूढाशय ५ स पद्मनाभ पद्मया सह फणिन शेषमधिशेते यस्य नयनाभ्यां चन्द्रसूर्यलक्षणाभ्यां कैरव पङ्कज च विकसति यस्य चरणाब्ज गङ्गाजनक पयोधे ब्रह्मचर्य श्लथयति दूरीकरोति यस्योरसि श्रेयसां सप्रदाय कौस्तुभमणिर्लसति एवविध पद्मनाभ फणिनमधिशेते ६ अहि सर्पस्तद्रिपुर्गरुडस्तत्पतिर्विष्णुस्तत्कान्ता लक्ष्मीस्तत्तात समुद्रः स सम्यग्बद्धो येन स रामस्तत्कान्ता जानकी तस्या हरो हर्ता रावणस्तत्तनय इन्द्रजित्तन्निहन्ता लक्ष्मणस्तत्प्राणदाता हनूमान्स ध्वजे यस्यैतादृशोऽर्जुनस्तस्य सखा कृष्णस्तत्सुतो मदनस्तत्सुतोऽनिरुद्धस्तत्कान्ता उखा तत्तातो बाणासुरस्तस्य सम्यक्पूज्य शिवस्तत्कान्ता पार्वती तत्पिता हिमालयस्तच्छिरसि पतन्ती जाह्नवी. भागीरथीत्यर्थ ७ ? ८ मुखमित्यर्थ.. ९ ओष्ठ इत्यर्थः १० नासामौक्तिकमित्यर्थ ११ नेत्रे इत्यर्थ १२ भ्रुकुट्यौ इत्यर्थ १३ कण्ठध्वनिरित्यर्थ १४. सिंहक्षितिपति. सेनाधिपकृता लेखा अमात्येभ्यो प्रधानेभ्यो प्रतिदिशति कथयति इति लेखा प्रतीति किम् वयं सार्कान्वेता अर्कशब्देन इन लक्ष्यते सयुक्त इनः सेनान्विता हरिद्रायां रात्रौ राहु प्रसरपिहितेच्छापरिषदि सत्या राहुशब्देन तमः पिहितशब्देनाच्छादन इच्छाशब्देन आशा दिशा परिषत्शब्देन मण्डल प्रयुक्तो योऽलकार. हार तस्य कृत्यै प्रहारार्थे वियुतगरुता गरुत्पक्ष उच्यते विकारयुक्ता पक्षाणा विपक्षाणा दुर्गकुरटीं कुरटीशब्देन नगरी लक्ष्यते दुर्गनगरीं प्रहर इति यामलक्षित इत्यर्थ. १५ कश्चिद्राजा काचिन्नायिका स्वगृहमानयत् ततश्च तद्भर्तारमागत दृष्ट्वा तां स्वगृह प्रापयितु दूतीमाज्ञापयति स्म सा च दूती ता स्वगृह प्रापय्य पुना राजनिकटे आगत्य स्थितवती तां प्रत्याह राजा सा किं स्वस्थान गता गतवत्या तया सह पथि मार्गे का स्थितवती एव राज्ञा पृष्टा चतुरा दूती स्थितवती सती निजमलकार ‘पोहोंची’ इति भाषाप्रसिद्ध तथा शाक ‘मेथी’ इति भाषाप्रसिद्ध शाकविशेष चावलोक्य तावन्मात्रेणैव नरपतिं निराकाङ्क्षमुत्तरविषये आका

का स्थितवती नृपेणेत्थं पृष्टा सखि चतुरदूती स्थितवती। विलोक्यालंकारं निजमथ च शाकं नरपतिं निराकाङ्क्षं चक्रे कथय कथमेतत्प्रभवति ॥ ९१ ॥ काचिद्बाला [1]रमणवसतिं प्रेषयन्ती करण्ड सा तन्मूले सभयमलिखद्[2]व्यालमस्योपरिष्टात्। [3]गौरीनाथं [4]पवनतनयं [5]चम्पकं चाङ्गभावं पृच्छत्यार्यान्प्रति कथमिदं मल्लिनाथः कवीन्द्रः ॥ ९२ ॥ [6]सर्वज्ञः सन्वदसि बहुधा दीयते दीयते वै दाधातूनां भवति सदृशं रूपमेषां चतुर्णाम्। द्वौ दानार्थौ भवति च तथा पालने खण्डने वा नो जानीमः कथयति भवान्कस्य धातोः प्रयोगम् ॥ ९३ ॥ च[7]ञ्चद्द्वादशनीलनीरजयुतं सप्ताम्बुजोद्भासितं नित्यं षोडशशोणपद्मरुचिरं धात्रानिशं सेवितम्। क्षीराम्भोधिगृहं सहस्रदलसत्पर्यङ्कविश्रान्ति यत्पायाद्वः कमलाङ्कसङ्क्लिशयनं तन्नीलरोचिर्महः ॥ ९४ ॥ [8]रामं वानरवाहिनीं पुररिपुं राहुं रवेः सारथिं कुम्भीगर्भसमुद्भवं मुररिपुं मारस्य मौर्वीरवम्। तन्वी नूतनपल्लवैर्विरचिते शय्यातले शायिनी सख्या वीजिततालवृन्तपवना बाला मुहुर्निन्दति ॥ ९५ ॥ [9]सत्यासक्तमनाः प्रवृद्धनरकच्छेदी द्विजेन्द्राश्रयो युक्तानेकमुखो-

---

ङ्क्षारहित चक्रे. एतदलंकारशाकावलोकन कथ प्रभवति राज्ञो नैराकाङ्क्ष्यसपादने कथं समर्थ भवतीति कथयेति कविप्रश्न. अत्र प्रथमप्रश्नस्य प्राप्तेत्यर्थक 'पोहोंची' इति भाषयोत्तरम्. द्वितीयप्रश्नस्य तु अहमासमित्यर्थकं 'मेथी' इति भापयोत्तरमिति तात्पर्य बोध्यम् १. प्रियनिवासम्. २. करण्डस्थितपुष्पसौरभ गन्धवाहो हरेदिति तद्भक्षक सर्पम् ३. पुष्पबाणो बाणार्थं हरेदिति तद्वैरिणं शिवम् ४. सूर्य. पुष्प स्वकरै. शोषयेदिति जन्मकाले एव भक्ष्यबुद्ध्या हर्तु प्रवृत्त भयजननाय हनूमन्तम् ५.तन्मकरन्दं भृङ्गो हरेदिति चम्पकमलिखदिति भाव. चम्पके भृङ्गा न गच्छन्तीति प्रसिद्धे.. ६ त्व सर्वज्ञ सन् बहुधा वारवार दीयते दीयते इति वदसि. दीयते इति रूप चतुर्णामपि दाधातूना सदृश भवति तन्मध्ये द्वौ दानार्थौ दाण् दाने. डुदाञ् दाने इति. एक पालने देङ् रक्षणे इति एक: खण्डने दोऽवखण्डने इति एतन्मध्ये भवान्कस्य धातो: प्रयोग कृत्वा वदति त न जानीम. ७. तन्नीलरोचि: श्यामप्रभ महस्तेज कृष्णलक्षण वो युष्मान्पायात् तत्किंभूतम्. कमलाङ्कसङ्क्लिशयन लक्ष्मीसनाथम्. पु० किं०. सहस्रदलसत्पर्यङ्कविश्रान्ति सहस्रफणदिव्यशयनशेषस्थितम्. पु० किं० क्षीराम्भोधिगृह दुग्धसमुद्रनिवासम् पु० किं० धात्रा नाभिसरोरुहस्थेन ब्रह्मणा अनिश सेवितमध्यासितम् पु० किं०. षोडशशोणपद्मरुचिर षोडशारुणकमलमनोहरम्. षोडशशोणपद्मानां विवृत्ति:—विष्णोश्चत्वारो हस्ता द्वौ चरणौ तावन्त एव ब्रह्मण द्वौ करौ द्वौ चरणौ लक्ष्म्या इत्येव षोडशशोणपद्मरुचिरम्. पु० किं० नित्यमविनाशि पु०किं० सप्ताम्बुजोद्भासित सप्तकमलशोभितम् सप्ताम्बुजानां विवृत्ति:—चत्वारि मुखानि ब्रह्मण एक नाभिसरोरुहम् एक विष्णोर्मुखम् एक लक्ष्मीमुखम् इत्येव सप्ताम्बुजोद्भासितम् पु० किं०. चञ्चद्द्वादशनीलनीरजयुत शोभमानद्वादशनीलोत्पलयुक्तम् द्वादशनीलनीरजाना विवृत्ति—अष्टौ नयनानि ब्रह्मण. द्वे विष्णो. द्वे लक्ष्म्या: इत्येव द्वादशनीलनीरजयुतम् ८ कोकिलरक्षककाकावशेषकत्वाद्रामम् मलयाद्यवशेषणाद्वानरवाहिनीम् मन्मथावशेषणात्पुररिपुम्. चन्द्रावशेषणाद्राहुम् रवे: शीघ्रमस्ताद्रिप्रापणेन रात्रिसपादनादनूरुम्. चन्द्रोत्पादकसमुद्रावशेषणादगस्त्यम् मन्मथोत्पादनान्मुररिपु निनिन्देति भाव: कोकिलादीनां कामोद्दीपकत्व रसशास्त्रे प्रसिद्धम् ९. अय भवता सङ्ग: कृष्णेन रुद्रेण वा साम्य प्रयातु प्राप्नोतु किंभूतेन कृष्णेन अर्थवशाद्विपरिणाम किंभूत. सत्यासक्तमना सत्यभामायामासक्तमनो यस्यासौ. नाम्न्येकदेशे नामग्रहणम् प्रवृद्धो नरकासुरस्त छिनत्तीति द्विजाना पक्षिणामिन्द्रो गरुडस्तस्याश्रय सेवा यस्य स. युक्तान्यनेकमुखानि यस्य ब्रह्मणस्तस्य उद्भवो यस्मात्कमलात्तत् यस्यास्पदम् अलमत्यर्थं यत्र श्रीर्लक्ष्मी

द्भवास्पदमलं श्रीर्यत्र संराजते। यो गङ्गां च बिभर्ति यश्च सशिवो य कामदेहाश्रयः सङ्गः साम्यमयं प्रयातु भवतां कृष्णेन रुद्रेण वा ॥ ९६ ॥ येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो यो गङ्गां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः। यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः सोऽव्यादिष्टभुजंगहारवलयस्त्वां सर्वदोमाधवः ॥ ९७ ॥ यो व्योमाडिनगोऽहरीडुडुपगोयुग्मः क्वगृध्रापभीर्भीमर्भ्वर्यसुकी रमारतरसो नाभ्यम्बुडासीनकः। द्योषच्चम्ववनम्यपत्सलिलजो वार्धिस्वपोष्टार्धदोराद्यो गद्यसि वाडवादमृतपाः पायात्स वः कंद-

---

राजते. योऽग गोवर्धनं गां पृथ्वीं च बिभर्ति शिवेन सह वर्तमान. "विष्णोश्च हृदय शिवः" इति वचनात् यः कामदेह प्रद्युम्नस्तस्याश्रय'॥ किंभूतो रुद्र . सत्यामासक्त चित्त यस्य "उमा गौरी सती चण्डी" इत्यभिधानात्. प्रवृद्ध यन्नरस्य ब्रह्मणः क शिरस्तस्य छेत्ता. द्विजाना ब्राह्मणानामिन्द्रश्चन्द्रस्तस्याश्रय.. अनेकमुखानामुद्भवो यस्य कार्तिकेयस्य तदास्पदम् श्रीर्यत्र सराजते निधिपतित्वात् यो गङ्गा बिभर्ति. यः शिवया पार्वत्या सह वर्तमानः. य काम द्यति खण्डयति एवविधा या ईहा तस्या आश्रय' ॥ किंभूत. सङ्ग . सत्या सूनृता वाक् तत्र लग्न मनो यस्य स' प्रवृद्ध यन्नरक दुःख तस्य नाशकः द्विजेन्द्रा ब्राह्मणास्तेषामाश्रय..युक्तानि योग्यानि यानि अनेकमुखानि तेभ्यः उद्भवो यस्या धर्मवार्ताया. तस्या आस्पदम् यत्र श्रीः शोभा राजते. यो गां वाणीं धत्ते. य काम ददातीति कामदा इच्छा तदाश्रय.. १. त्वां सर्वदा स उमाधवोऽव्याद्रक्षतु. स. क.. येन बलिं जितवानिति बलिजिद्विष्णुस्तस्य काय. शरीर पुरा त्रिपुरवधकालेऽस्त्रीकृतोऽस्त्रत्वे सपादितः. किंभूतेन. ध्वस्तो मनोभवो मारो येन ध्वस्तमदन . पु० स क. यो गङ्गां दधे. पु०की०. अन्धकनामा दैत्यस्तस्यान्तकरः. पु०की० यो बर्हिर्मयूर एव पत्ररथो यस्य स. स्कन्द प्रियो यस्य सः पु०की०.स्तुत्यमीड्य नाम यस्य अमरा इति आहुः. इतीति किम्. हर इति. किंभूत. शशिमच्छिर.. शशिरस्ति यस्मिंस्तच्छशिमत् तादृश शिरो यस्य सः हाराश्च वलयानि च हारवलयम् इष्टाश्च ते भुजगाश्च इष्टभुजगा. ते हारवलयानि यस्य स.. इष्टा वल्लभा भुजंगा. सर्पा हार कण्ठभूषण वलय कटक बाहुभूषणमित्यर्थ . यद्वा इष्टानि भुजगा एव हारवलयानि यस्येति ॥ हरिपक्षे—सर्वं ददातीति सर्वदः स माधवो लक्ष्मीपति. मा लक्ष्मीस्तस्या धवो भर्ता माधव. त्वामव्यात् सः क.. येन भवेनेत्युत्पन्नमात्रेण धृतविग्रहेणेत्यर्थ.. अनो ध्वस्त शकटाकृतिं दनुज हतवानित्यर्थ.. अथवा अभवेनेति घोरससारसागरे प्राक्तनकर्मानुसारेण विद्यते भवो जन्म यस्य सः. तेन कृष्णलीलामृतविग्रह इति॰ पु० स क.. येनामृतविभागार्थ रुद्रमोक्षार्थं वा बलिजिच्चासौ कायश्चेति पुरा स्त्रीकृतः स्त्रीभाव प्रापित.. पु०की०. यः अग गोवर्धन गा पृथ्वीं च दधे. पु०की०.य. अन्धे अगाधे के जले क्षय गृह करोतीति. विष्णुस्तु जलशायीति पु०की०. बर्हिणो मयूरस्य पत्राणि बर्हीणि पिच्छानि प्रियाणि वल्लभानि यस्य सः. पु० की०. अमरा यस्य इति स्तुत्य नाम आहु'. इतीति किम्. शशिमच्छिरोहर इति. शशिन चन्द्रं मथ्नातीति शशिमत् राहु. तस्य शिर. हरतीति सः. तथा इष्ट' भुजंगहा गरुडो यस्य स . तथा अर सुदर्शन वलयं यस्य स.. तथा रवे परब्रह्मणि लयो यस्य सः रवलय इति. २ क जल ददातीति कदास्तेषा भा इव भा यस्य स श्रीकृष्णो वो युष्मान्पायाद्रक्षतु स' क . य व्योमाडिनगः व्योमाटा पक्षिणा इनो गरुडस्तेन गच्छतीति स . तथा अह. ईट् अहरीट् सूर्य. उडुपश्चन्द्रस्तौ गोयुग्म नेत्रद्वय यस्य स . तथा कुः पृथ्वी अगाः गिरय तान्धरतीति तथा. अपगता भीर्भय यस्मात्स तथा. पु० क०. भीमर्भ्वर्यसुकी. ऋभूणां देवानां अरय ऋभ्वरय भीमाश्च ते ऋभ्वरयश्च भीमर्भ्वरयः. भीमर्भ्वरीणां असून् प्राणान् किरतीति स., ऋभव. अमराश्च तेषामरयो दित्या भीमाश्च ते भीमर्भ्वर्यश्च तेषामसून् किरति कलेवराद्वियोजयति तथा तथा रमा लक्ष्मीः तस्या रते क्रीडाया रस आसक्तिर्यस्य स अप्सु रुहति इति अम्बुट् कमल नाभावम्बुटि आसीन. कः ब्रह्मा यस्येति तथा. आद्य. अनादिरित्यर्थः गदी गतध्राः असिं खङ्ग वहति मोक्ष ददाति.

भाः ॥९८॥ लक्ष्मीवन्कृतकूरसू रणदहिन्दूधक्क्षमः पापडीलाइूढोऽकलघी वडांछन वडी खाजाम्बुदालीरुचिः। मड्डाशाकरखण्डनो विविभुना क्षीरा वसातुल्य मां सासुं हालितडिन्निभाङ्गवसनोऽव्याः सेवकं सारवान् ॥९९॥ खाटीच्छाशिपलेहपापडवडीर्प्यारोडभाजी गणो यद्भक्तोऽनिमिषीव वाकुलचणा ध्यायन्ति यां योगिनः। कालाभीलकरालभूखलमहादैत्येन्द्रमाथार्थिनी सा सासूयरसा तवाघतटये स्तात्कर्ममोटी चिरम् ॥१००॥ सूदारा उलपाडिमेखलतटी कच्छोटजा

१ लक्ष्मीवन् त्वं मा सेवकं अव्याः रक्ष कथभूतस्त्वम् कृतकू कृत कोः पृथिव्याः ऊः अवन रक्षणं येनासौ पु०क० असू सूयते उत्पद्यते असौ सू. न सूः असूः. अज इत्यर्थः पु०क० रण सग्राम ददति ते रणदा शत्रवस्तान्हिनस्ति असौ रणदहिन्.शत्रुहा इत्यर्थः पु०क० दूधक् दुव दु खं दहति इति दूधक् पु०क० क्षम., क्षमास्यास्तीति स. पु०क० पापडी डलयोरभेदात् पापली पाप लुनातीति सः पु०क०. इलाट् इलाया पृथिव्यां अटतीति इलाट् पुरा वामनादिरूपेण वले सकाश प्राप्त उक्त च "बहवो मा न जानन्ति ममताया विमोहिता । सदा द्विजरूपेणाह विचरामि महीतले" इति भारतवचनात् पु० क० विविभुना ऊढः. वीनां पक्षिणा विभुर्गरुडस्तेन ऊढ वाह्यमान इत्यर्थ.. पु०क० अकलघी अक दु.ख लङ्घयतीति अकलघी पु०क०. अवलाञ्छन अवगतं लाञ्छनं यस्य सः अवलाञ्छनस्तस्य सबुद्धौ हे अवलाञ्छन अवाप्योरुपसर्गयोरकारलोपः पु०क० वडी. ववयो. डलयोश्च सावर्ण्यात् वली बलमस्यास्तीति स पु० क०. खाजाम्बुदालीरुचि खे आकाशे अजन्ति गच्छन्ति ते खाजा गगनचरा ते च ते अम्बुदाश्च तेषामालि. पङ्क्तिस्तस्या रुचिरिव रुचिर्यस्यासौ घनश्याम इत्यर्थ पु० क० मड्डाशाकरखण्डन मल्लाश्चाणुरादयस्तेषामाशा वाञ्छा तस्या आकर समूहः त खण्डयतीति स . मल्लेच्छासमूहनाशन इत्यर्थः. पु० क० क्षीरावसः क्षीरे क्षीरसमुद्रे आसमन्ताद्भावेन वसतीति तस्य सबुद्धौ हे क्षीरावस हे अतुल्य नास्ति तुल्यो यस्य स तस्य सबोधने कीदृश माम् सासुम् असव प्राणास्तैः सहवर्तमानम् पु० क० अलितडिन्निभाङ्गवसनः अङ्ग च वसन च अङ्गवसने अलिश्च तडिच्च अलितडितौ तयोर्निभैव निभा ययोस्ते अलितडितनिभे अङ्गवसने यस्यासौ अलितडिन्निभाङ्गवसनः पु० क० सारवान् सारो बलमस्यास्तीति स. पालनसमर्थ इत्यर्थ २ सा कर्णमोटी चामुण्डा तवाघतटये अघहरणाय स्तात् अस्तु कथभूता सा. सासूयरसा असूया कोपस्तस्य रसः तेन सहवर्तमाना. कथभूता सा. काला कृष्णवर्णा भीला. भीषणाः तेभ्योऽपि कराला अतिरौद्रा इत्यर्थः. भुवि खला भूखला दुर्जना ते च ते महादैत्याश्च तेषा माथो मथनं तमर्थयतीति एवविधा तथा वाकुलचणा. कुलख्याता योगिन. ध्यायन्ति तथा यद्भक्तो गणः यस्याः सेवको गणः यत्प्रसादेनानिमिषीव देवराज इव वर्तते इति वाक्यशेष तामेव विशिनष्टि. खे वियत्यटतीति खाटी इच्छया अश्नातीति इच्छाशी पले आमिषे ईहा स्पृहा यस्येति पलेह. तथा डलयोरैक्यत्वात् पाप लुनातीति पापडी ववयोस्तथैक्यत्वात् वलमस्यास्तीति वली तथा ईर्ष्यया रोल लोल भजते इति स चासौ स च इति कर्मधारय ३ उलपानि हरिततृणानि तेषामालिः पङ्क्ति सैव मेखला काञ्ची यस्यास्तद्विधा तटी भूगुर्यस्याः सा तथा कच्छे जलप्राये देशे उटजानि पर्णकुटी बिभ्रती बिभ्राणा. तथा पूता पावना तथा रेभ शब्द त राति अगीकरोति इति रेभरासशब्दा मुखरा इत्यर्थ तथा लीनाना एकान्तगताना नीरजाना पत्रिरथाना हसचक्रवाककलहसादीना इत्यर्थ सभा परिषत् सभा यस्या सा. तथा खाध अम्बरादध. नागीव पातालगा भोगवती इत्यर्थ तथाजो ब्रह्मा कालियारि हरिणव्याधो रुद्र तैः सम सर्वत गुणयदित्यर्थ पीडितावगाहितेत्यर्थः तथा मा मीयते इति मा तद्विरुद्धा. इयता शून्या इत्यर्थ अमोघा नेतृणा मोक्षप्रद ओघरवो स्रोतोध्वनिर्यस्याः सा तथा एवगुणविशिष्टा मन्दाकिनी सूदारा सुतरा उदारा वो युष्मान् इति शेष अघवारणपद अघवारणस्य पद अवस्थिति क्रियात् करोतु यद्वा वो युष्मान् अघवारणपद अघवारणसमर्थानित्यर्थः.

विभ्रती पूता रेभरडीननीलजसभा नागीव पातालगा । खाधोऽसावजकालियारिहरिणव्याधैः समं पीडिता मामोघोघरवोऽघवारणपदं मन्दाकिनी वः क्रियात् ॥१०१॥ जायन्ते नव सौ तथामि च नव भ्याम्भिरभ्यसां संगमे षड्ङ्ख्यानि षडेव सुप्यथ शसि त्रीण्येव तद्वज्जसि । चत्वार्यन्यवचःसु यस्य विबुधा शब्दस्य रूपाणि तज्जानन्ते यदि शक्तिरस्तु गदितुं षाण्मासिकोऽत्रावधिः ॥ १०२ ॥ मुद्गीदालिसुशालितूअरतणीगावं सुदुग्धं घृतं नीकादूहपलेहपापडवडी कोरीवधारीवडा । मूलाकोठकुठीवडा चकर्प्पटाटिदुराचीभडा आदासूरणरायताह्यदिवडा कुर्वन्तु वो मङ्गलम् ॥ १०३ ॥ वैाश्वारेड्ढ्वजघग्घृतोड्वधिपतिः कुभ्रेङ्ज्जा निर्गणेद्गोराडारुड्डुरःसरेड्डुरुतरग्रैवेयकभ्राडरम् । उड्विड्डुन्नरकास्थिधृक्रिद्दगिभेडाद्र्राजिनेच्छश्च यः स स्तादम्बुमदम्बुदालिगलरुग्देवो मुदे वो मृडः ॥१०४॥ ब्रैंभ्रोड्वीड्ढव्यवाड्ढश्वसनभुगधिराड्भूकुभृद्राड्भ्राड्व्द्वाभृत्सुटात्विड्ज्लधिभवट्टथुक्ष्वेडभृक्ष्माभ्रचापः । भूभूज्जाभृज्जगत्सृड्क्मटभिदिभराड्सक्पटभ्राठ्स्मरद्विट् स्वर्गोड्विण्मुड्भराड्भृड्वगुरुभिषक्पातु वः पञ्चवक्रः ॥ १०५ ॥

---

## क्रियागुप्तादयः ।

**क्रियागुप्तम्** ॥ आगतः पाण्डवाः सर्वे दुर्योधनसमीहया । तस्मै गां च सुवर्णं च रत्नानि विविधानि च ॥१॥ निरुद्यमानवद्याङ्ग्याचकान्दुःखसंचयान् । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥२॥ प्रातः प्रातः समुत्थाय द्वौ मुनी च कमण्डलू । अत्र क्रियापदं वक्तुमवधिर्ब्रह्मणो वयः ॥ ३ ॥ ललाटतिलकोपेतः कृष्णः कमललोचनः । गोकुलेऽत्र क्रियां वक्तुं मर्यादा दशवार्षिकी ॥ ४ ॥ पम्पासरसि रामेण सस्नेहं सविलासया । सीतया किं कृतं सार्धमत्रैवोत्तरमीक्ष्यताम् ॥ ५ ॥ राजन्नवघनःश्याम निस्त्रिंशाकर्ष दुर्जय । आकल्पं वसुधामेतां विद्विषोऽद्य रणे बहून् ॥ ६ ॥ कान्तया कान्तसंयोगे किमकारि नवोढया । अत्रापि चोत्तरं वक्तुमवधिर्ब्रह्मणो वयः ॥ ७ ॥ दामोदराय पुण्यात्मन्पुष्पमूलफलान्यपि । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ८ ॥ विराटनगरे राजन्कीचकादुपकीचकम् । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ ९ ॥ कान्तं विना नदीतीरं मदमा-

---

(१) य धनसमीहया आगतस्तस्मै सर्वे पाण्डवाः गां च सुवर्णं च विविधानि रत्नानि च 'अदु' ददति स्म (२)[१] (३) 'प्रात.' इति क्रिया. प्रा पूरणे लट् प्रथमपुरुषद्विवचनम् (४) 'ललाट' इति. लट् बाल्ये. लिट् (५) 'सस्ने' इति ष्णा शौचे कर्मणि लिट् (६) 'अव' इति अव रक्षणे 'द्य' इति च. दोऽवखण्डने (७) 'अत्रापि' इति त्रपूष् लज्जायाम् कर्मणि लुङ् (८) हे दामोदर पुष्पमूलफलानि 'आय' आनय 'इटकिटकटि' इत्यत्र प्रश्लिष्टस्य ईधातोराङ्पूर्वस्य लोटो रूपमिदम् उपसर्गसमभिव्याहारेण आनयनार्थकत्वम् (९) वि पक्षी कीचकाद्वेणो. कीचकान्तर 'आट' बभ्राम

---

१. गवाक्शब्दस्येत्यर्थ.. २, ३, ४ ?.

लोक्य केकिनी। अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः॥ १०॥ अम्लानपङ्कजा माला कण्ठे रामस्य सीतया। मुधा बुधा भ्रमन्त्यत्र प्रत्यक्षेऽपि क्रियापदे॥ ११॥ नारसिंहाकृतिं वीक्ष्य वने मत्तमतंगजः। अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः॥१२॥ संध्यावन्दनवेलायां तडागान्ते द्विजोत्तमैः। अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः॥ १३॥ पुंस्कोकिलकुलस्यैते नितान्तमधुरारवैः। सहकारद्रुमा रम्या वसन्ते कामपि श्रियम्॥ १४॥ बिम्बाकारं सुधाधारं कान्तावदनपङ्कजम्। अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी॥ १५॥ राघवस्य शरैर्घोरैर्घोररावणमाहवे। अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी॥ १६॥ पामारागाभिभूतस्य श्लेष्मव्याधिनिपीडित। यदि ते जीवितस्येच्छा तदा भो शीतलं जलम्॥ १७॥ **कर्तृगुप्तम्**॥ गौरीनखरसादृश्यश्रद्धया शशिनं दधौ। इहैव गोप्यते कर्ता वर्षेणापि न लभ्यते॥ १८॥ अन्नवस्त्रसुवर्णानि रत्नानि विविधानि च। ब्राह्मणेभ्यो नदीतीरे ददाति व्रज सत्वरम्॥ १९॥ राक्षसेभ्यः सुतां हृत्वा जनकस्य पुरीं ययौ। अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी॥ २०॥ श्यामौ तव स्तनावेतौ पिबन्ति सततं मुदा। अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी॥ २१॥ व्ययवासाः पञ्चशिराः यरिर्वीनारिभूषणः। असिरोमा क्रियादुर्वः शङ्कालायनवीक्षणः॥ २२॥ व्यामोहं तव भिन्दन्तु छिन्दन्तु दुरितानि च। कर्तृगुप्तमिमं श्लोकं ये जानन्ति विचक्षणाः॥ २३॥ न करोति नाम रोपं न वदति परुषं न हन्त्ययं शत्रून्। रञ्जयति महीमखिलां तथापि धीरस्य वीरस्य॥ २४॥ शरदिन्दुकुन्दधवलं नगपतिनिलयं मनोहरं देवम्। यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति॥ २५॥ **कर्मगुप्तम्**॥ शीकरासारसंवाहिसरोजवनमारुतः। प्रक्षोभयति पान्थस्त्रीनिःश्वासैरिव मांसलः॥ २६॥ सुभग तवाननपङ्कजदर्शनसंजातनिर्भरप्रीतेः। शमयति कुर्वन्दिवसः पुण्यवतः कस्य

(१०) केकिनी मयूरी इर मद मेघज्योति विद्युतमिति यावत्. आलोक्य 'विनानदीति' विशेषेण पुन पुनर्वा शब्द करोतीत्यर्थ (११) 'प्रत्यक्षेपि' क्षिप्ता (१२) गजः सिंहस्याकृतिं वीक्ष्य 'नार' न जगाम ऋ गतौ कर्तरि लिट् (१३) हे द्विजोत्तम 'ऐ' आगच्छ (१४) 'अधु' दधति स्म (१५) पूर्वोक्त कान्तावदन 'दश' चुम्बस्वेति. (१६) हे राघव त्व रावण आहवे शरैः कृत्वा 'स्य' मारय इति (१७) भो श्लेष्मव्याधिनिपीडित यदि जीवितस्येच्छा तर्हि शीतल जल 'मा पाः' मा पिबेति. (१८) इ कामस्त हन्तीति 'इहा' ईश्वर इति (१९) हे ब्राह्मण 'इभ्य' समृद्ध (२०) राक्षसानां 'इभ्य.' स्वामी रावणः जनकस्य सुता सीतां हृत्वा पुरीं लङ्कां ययौ. (२१) 'श्यामौतव' कृष्णमार्जाराः (२२) 'उ.' महादेव (२३) उ शिव. इ' ब्रह्मा अ' विष्णु इत्यनेन व्य. इति जातम् तस्य बहुवचने 'व्या' हरविधिहरय तव मोह भिन्दन्तु दुरितानि छिन्दन्तु ये कर्तृज्ञास्ते विचक्षणा. (२४) अय पुरुषो रोप न करोति परुष कठोर न वदति. शत्रून हन्ति नामेति प्रसिद्धम्. तथापि अस्य वीरस्य 'धी.' अखिला महीं रञ्जयति (२५) यैरनिश सुकृत कृत तेषामेव 'मन.' शरदिन्दुकुन्दधवल नगपतिनिलय देव हर प्रसादयति. (२६) पान्थस्त्रीनि श्वासैर्मांसलः पुष्ट इवेत्युत्प्रेक्षा. शीकरासारसंवाहि जवनमारुतो वेगवान्वायुः 'सरः' प्रक्षोभयति.

## तडागान्योक्तयः।

आगतानामपूर्णानां पूर्णानामप्यगच्छताम्। यदध्वनि न संघट्टा घटानां तत्सरोवरम् ॥१॥ अयमवसरः सरस्ते सलिलैरुपकर्तुमर्थिनामनिशम्। इदमतिसुलभमम्भो भवति पुरा जलधराभ्युदये ॥ २ ॥ कस्य तृषं न क्षपयसि पिबति न कस्तव पयः प्रविश्यान्तः। यदि सन्मार्गसरोवर नक्रो न क्रोडमधिवसति ॥ ३ ॥ तानि तानि कमलानि तज्जलं तानि षट्पदकुलानि ते खगाः। सर्वमेकसमये तु विच्युतं पङ्कशेषमचिरादभूत्सरः ॥ ४ ॥ अमरैर्गतं मधुकरैश्चलितं प्रकरैः प्रयातमपि पद्मदृशाम्। विभवे गते सकलमेव गतं ध्रुवमेकमञ्चति यशः सरसः ॥ ५ ॥ आपेदिरेऽम्बरपथं परितः पतङ्गा भृङ्गा रसालमुकुलानि समाश्रयन्ति। संकोचमञ्चति सरस्त्वयि दीनदीनो मीनो नु हन्त कतमां गतिमभ्युपैतु ॥ ६ ॥ इयत्यां संपत्तावपि च सलिलानां त्वमधुना न तृष्णामार्तानां हरसि यदि कासार सहसा। निदाघे चण्डांशौ किरति परितोऽङ्गारनिकरं कृशीभूतः केषामहह परिहर्तासि खलु ताम् ॥ ७ ॥ विपन्नं पद्मिन्या द्रुतमनिमिषैर्यातमलिभिः खगैरप्युड्डीनं रथचरणहंसप्रभृतिभिः। दशा दीना लेभे सरसि विषमैर्ग्रीष्मदिवसैः कुलीनत्वादास्ते तटरुहतरुः कोऽपि तदपि ॥ ८ ॥ क्रौञ्चः क्रीडतु कूर्दतां च कुररः कङ्कः परिष्वज्यतां मद्गुर्माद्यतु सारसश्च रसतु प्रोड्डीयतां टिट्टिभः। भेकाः सन्तु वका वसन्तु चरतु स्वच्छन्दमाटिस्तटे हंहो पद्मसरः कुतः कतिपयैर्हंसैर्विना श्रीस्तव ॥ ९ ॥ एतस्मिन्मरुमण्डले परिचलत्कल्लोलकोलाहलक्रीडत्कङ्कमपङ्कमङ्कविलसन्निःशङ्कमत्स्यव्रजम्। केनेदं विकसत्कुशेशयकुटीकोणक्वणत्षट्पदं स्त्रैणप्रीणितपान्थमुज्ज्वलजलं चक्रे विशाल सरः ॥ १० ॥ स्तोकाम्भःपरिवर्तिताङ्गशफरीग्रासार्थिनः सर्वतो लप्स्यन्ते वकटिट्टिभप्रभृतयस्तल्पेषु साधु स्थितम्। सद्यः शोषमुपागतेऽद्य सरसि श्रीपद्मपद्माकरे तस्मिन्पङ्कजिनीविलासरुचयो हंसाः क्व धास्यन्त्यमी ॥ ११ ॥ माद्यद्दिग्गजदानलिप्तकरटप्रक्षालनक्षोभिता व्योम्नः सीम्नि विचेरुरप्रतिहता यस्योर्मयो निर्मलाः। कष्टं भाग्यविपर्ययेण सरसः कल्पान्तरस्थायिनस्तस्याप्येकवकप्रचारकलुषं कालेन जातं जलम् ॥ १२ ॥ रे पद्माकर यावदस्ति भवतो मध्ये पयः पूरितं तावच्चक्रचकोरकङ्ककुररश्रेणीं समुल्लासय। पश्चात्त्वं समटङ्ककोटचटुलत्रोटीपुटव्याहतित्रुट्यत्कर्कटकर्परव्यतिकरैर्निन्दास्पदं यास्यसि ॥ १३ ॥ याते मय्यचिरान्निदाघमिहिरज्वालाशतैः शुष्कतां गन्ता कं प्रति पान्थसंततिरसौ संतापमालाकुला। एवं यस्य निरन्तराविर्पटलैर्नित्यं वपुः क्षीयते धन्यं जीवनमस्य मार्गसरसो धिग्वारिधीनां जनुः ॥ १४ ॥ सोपानानि तिरोहितानि पदवी च्छन्ना तृणैर्नूतनैः कालुष्यं पयसां विलोक्य शनकैरुड्डीय हंसा गताः। माधुर्यं न मधुव्रतोच्चतगिरां पद्मानि

१. आगतामागम् २. प्रामुवति सति ३. हे सर.. ४ ग्रीष्मे. ५ सूर्ये ६. शब्द करोतु ७ जलकाकः. ८. मूर्खः. ९. गमिष्यति १०. मनोव्ययापरपराभि.. ११. मार्गे यत्सरस्तस्य

मग्नानि के भेकानामिह गर्जितं परमहो दृष्ट्चैव नष्टं सरः ॥ १५ ॥ आपूर्येत पुनः स्फुरच्छफरिकासारोर्मिभिर्वारिभिर्भूयोऽपि प्रविजृम्भमाणनलिनं पश्येम तोयाशयम् । इत्याशाशततन्तुबद्धहृदयो नक्तंदिवं दीनधीः शुष्यत्यातपशोषितस्य सरसस्तीरे जरत्सारसः ॥ १६ ॥ हंसैर्लब्धप्रशंसैस्तरलितकमलस्त्रस्तरङ्गैस्तरंगैर्नीरैरन्तर्गभीरैश्चपलबककुलत्रासलीनैश्च मीनैः । पालीरूढद्रुमालीतलसुखशयितस्त्रीप्रणीतैश्च गीतैर्भ्रान्तिप्रक्रीडदातुः स्ववसलिलचलच्चक्रवाकस्तडागः ॥ १७ ॥

## कूपान्योक्तयः ।

हे कूप त्वं चिरं जीव स्वल्पतोये बहुव्ययः । गुणवद्रिक्तपात्राणि प्राप्नुवन्ति हि पूर्णताम् ॥ १ ॥ रे कूप जीवनागार यदि दातृत्वमिच्छसि । तदा त्वं गुणवत्पात्रमेकं वा संनिधौ कुरु ॥ २ ॥ अमुना मरुकूपेन के के नाम न वञ्चिताः । रुदत्पथिकनेत्राम्बुपिच्छिलप्रान्तभूमिना ॥ ३ ॥ सगुणैः सेवितोपान्तो विनतैः प्राप्तदर्शनः । नीचोऽपि कूपः सत्पात्रैर्जीवनार्थं समाश्रितः ॥ ४ ॥ न यत्र गुणवत्पात्रमेकमप्यस्ति संनिधौ । कस्तत्र भवतः पान्थ कूपेऽम्बुग्रहणादरः ॥ ५ ॥ यद्यपि बहुगुणगम्यं जीवनमेतस्य कूपमुख्यस्य । जयति तथापि विवेको दानं पात्रानुमानेन ॥ ६ ॥ नितरां नीचोऽस्मीति त्वं खेदं कूप मा कदापि कृथाः । अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीतासि ॥ ७ ॥ चित्रं न तद्यदयमम्बुधिरम्बुदौघसिन्धुप्रवाहपरिपूरणया महीयान् । त्वं त्वर्थिनामुपकरोषि यदल्पकूप निष्पीड्य कुक्षियुगलं हि महत्त्वमेतत् ॥ ८ ॥ दिनमवसितं विश्रान्ताः स्म त्वया मरुकूप हे परमुपकृतं शेषं वक्तुं वयं न पुनः क्षमाः । भवति सुकृतैरध्वन्यानामशेषजलो भवानियमपि घनच्छाया भूयात्तवोपतटं शमी ॥ ९ ॥ भीमश्याममतनुवदन क्रूरपातालकुक्षिक्रोडप्रान्तोपहितविभवस्याथ किं ते ब्रवीमि । येन त्वत्तः समभिलषितं वाञ्छितं क्षुद्र कूप क्षाम्यन्मूर्तेर्भवति सहसा कस्य नाधोमुखत्वम् ॥ १० ॥

## मरुस्थलान्योक्तयः ।

मरौ नास्त्येव सलिलं कृच्छ्राद्यदपि लभ्यते । तत्कटु स्तोकमुष्णं च न करोति वितृष्णताम् ॥ १ ॥ सत्पादपान्विपुलपल्लवपुष्पपुञ्जसंपत्परीतवपुषः फलभारनम्रान् । यो मार्गसिञ्जितशकुन्तसमाश्रितोरुशाखान्मरौ मृगयते न ततोऽस्ति मुग्धः ॥ २ ॥ पायं पायं पिब पिब पयः सिञ्च सिञ्चाङ्गमङ्गं भूयो भूयः कुरु कुरु सखे मज्जनोन्मज्जनानि । एषोऽशेषश्रमशमपटुर्दुःखिताध्वन्यबन्धुः सिन्धुर्दूरीभवतु भवतो मारवः पान्थ पन्थाः ॥ ३ ॥ कल्याणं नः

१. रज्जुसहितैः २ उदकार्थम् ३ अत्यन्तम्. ४. निम्न.. ५ रसयुक्त हृदय यस्य ६ भीम भयकर श्याम अन्धकारयुक्तत्वात् प्रतनु सकुचित मुख यस्य

किमधिकमितो जीवनार्थं यतस्त्वं छित्त्वा वृक्षानहह दहसि भ्रातरङ्गारकार । नन्वेतस्मिन्नश-निपिशुनैरातपैराकुलानामध्वन्यानामशरण मरुप्रान्त रे कोऽभ्युपायः ॥ ४ ॥ किमसि विमनाः किं चोन्मादी क्षणादपि लक्ष्यसे पुनरपि पयः प्रेक्ष्यापूर्वा न काश्चन ताः क्रियाः । स्वयमजलदां जानानोऽपि प्रविश्य मरुस्थलीं शिशिरमधुरं वारि प्राप्तुं यदध्वग वाञ्छसि ॥ ५ ॥ भो भोः किं किमकाण्ड एव पतितस्त्वं पान्थ कान्या गतिस्तत्तादृक्तृषितस्य मे खलमतिः सोऽयं जलं गूहते । अस्थानोपगतामकालसुलभां तृष्णां प्रति क्रुध्महे त्रैलोक्यप्रथितप्रभावमहिमा मार्गोऽप्यसौ मारवः ॥ ६ ॥

---

## दावानलान्योक्तयः ।

हे दावानल शैलाग्रवासिनः साधुशाखिनः । मुग्ध व्यर्थं त्वया दग्धाः प्रेरितेन प्रभञ्जनैः[1] ॥ १ ॥ यस्यां महत्त्वभाजो भवन्ति गुणिनोऽमिता[2] धनुर्दण्डाः । दहतस्तां वंशालि[3] को वनवह्ने विवेकस्ते ॥ २ ॥ अभ्युन्नतेऽपि जलदे जगदेकसार साधारणप्रणयहारण हा यदेते । उल्लास्यलास्यललितं तरवो न यान्ति हे दावपावक स तावक एव दोषः ॥ ३ ॥ छायाफलानि मुकुलानि च यस्य विश्वमाह्लादयन्ति सहकारमहीरुहस्य । आमृष्य तस्य शिखया नवपल्लवानि मथ्नासि रे दवहुताश हताश कष्टम् ॥ ४ ॥ दुर्दैवप्रभवप्रभञ्जनभयादुद्भूतभूमीरुहानेतान्सत्त्वगुणाश्रयानकरुणः शुष्यान्किमुन्माद्यसि । ब्रूमस्त्वां वनहव्यवाह यदमी दग्धार्धदग्धा अपि द्रष्टव्यास्तव तत्क्षणाद्विलयिनो नामापि न ज्ञायते ॥ ५ ॥ विध्वस्ता मृगपक्षिणो विधुरतां नीताः स्थलीदेवता धूमैरन्तरिताः स्वभावमलिनैराशा मही तापिता । भस्मीकृत्य सपुष्पपल्लवफलैर्नम्रान्महापादपानुद्वृत्तेन दवानलेन विपिनं वल्मीकशेषं कृतम् ॥ ६ ॥ **वाडवानलः** ॥ तेजांसि यस्य प्रशमं प्रयान्ति वारां प्रवाहेण स वह्निरन्यः । अयं पुनर्वाडवनामधेयः समुद्रमापीय बिभर्ति तेजः ॥ ७ ॥

---

## व्योमचरान्योक्तयः ।

**गरुडः** ॥ दामोदरमुदराहितभुवनं[4] यो वहति लीलया गरुडः । कस्य तरोरुपरिष्टात्खिन्नोऽसौ[5] श्रान्तिमपनयतु ॥ १ ॥ अहिरहिरिति संभ्रमपदमितरजनः किमपि कातरो भवतु । विहगपतेराहारे[6] स तु सरलमृणालदलरुचिरः ॥ २ ॥ **हंसः** ॥ कंसारिचरणोद्भूतसिन्धुकल्लोललालितम् । मन्ये हंस मनो नीरे कुल्यानां[7] रमते न ते ॥ ३ ॥ अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम् । रमते न मरालस्य मानसं मानसं[8] विना ॥ ४ ॥ एकेन राजहंसेन या

१. वायुभिः. २ असङ्ख्या ३. वेणुपङ्क्तिम्. ४ उदरे आहित स्थापित भुवन ब्रह्माण्ड येन. ५. श्रान्तः. ६. गरुडस्य. ७ कृत्रिमसरिताम् ८ मानससरोवरम्

शोभा सरसो भवेत्। न सा बकसहस्रेण परितस्तीरवासिना ॥ ५ ॥ हंसः श्वेतो बकः श्वेतो को भेदो बकहंसयोः। नीरक्षीरविभागेन हंसो हंसो बको बकः ॥ ६ ॥ अपसरणमेव शरणं मौनं वा तत्र राजहंसस्य। कटु रटति निकटवर्ती वाचालष्टिट्टिभो यत्र ॥ ७ ॥ यदि नाम दैवगत्या जगदसरोजं कदाचिदपि जातम्। अवकररनिकरं विकिरति तत्किं कृकवाकुरिव हंसः ॥ ८ ॥ नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत्। विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ॥ ९ ॥ सैव सैव सरसी रमणीया यत्र यत्र वलते तव रागः। राजहंस रसिक स्मरणीया श्रीमता तदपि मानसकेलिः ॥ १० ॥ गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः। राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते ॥ ११ ॥ कंचिदेव समयं समागता त्वां न विस्मरति शश्वदम्बुजम्। मानसे विहर हंस मानसे मा विमुञ्च पुनरस्य सौहृदम् ॥ १२ ॥ अम्भोजिनीवनविलासनमेव हन्त हंसस्य हन्तु नितरां कुपितो विधाता। न त्वस्य दुग्धजलभेदविधिप्रसिद्धां वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ १३ ॥ भृङ्गाङ्गनाजनमनोहरहारिगीतराजीवरेणुकणकीर्णपिशङ्गतोयम्। रम्यां हिमाचलनदीं प्रविहाय हंस देहे हताश वद कां दिशमुत्सुकोऽसि ॥ १४ ॥ स्थित्वा क्षणं विततपक्षतिनान्तरिक्षे मातङ्गसङ्गकलुषां नलिनीं विलोक्य। उत्पन्नमन्युपरिघर्घरनिःस्वनेन हंसेन साश्रु परिवृत्त्य गतं नलीनम् ॥ १५ ॥ रे राजहंस किमिति त्वमिहागतोऽसि योऽसौ बकः स इह हंस इति प्रतीतः। तद्गम्यतामनुपदेन पुनः स्वभूमौ यावद्वदन्ति न बकं खलु मूढलोकाः ॥ १६ ॥ ये वर्धिताः कनकपङ्कजरेणुमध्ये मन्दाकिनीविमलनीरतरंगभङ्गैः[1]। ते सांप्रतं विधिवशात्खलु राजहंसाः शैवालजालजटिलं जलमाश्रयन्ति ॥ १७ ॥ हा हन्त मानससरःसलिलावतंस रे राजहंस पयसोः प्रविवेचनाय। चेच्छक्तिमान्खलु भवान्न तदा किमु स्यात्किवा कपोत उत वा कलविंकपोतः ॥ १८ ॥ नेदं सरः सरसवारि न वारिजं वा नैतन्मधूनि मधुपाः सहवासिनो वा। हेमारविन्दवनवासविलासभाजो रे हंस मानसजुषस्तव मानसेऽपि ॥ १९ ॥ हंसः प्रयाति शनकैर्यदि यातु तस्य नैसर्गिकी गतिरियं नहि तत्र चित्रम्। गत्या तया जिगमिषुर्बक एव मूढश्वेतो दुनोति सकलस्य जनस्य नूनम् ॥२०॥ भुक्ता मृणालपटली भवता निपीतान्यम्बूनि यत्र नलिनानि निषेवितानि। रे राजहंस वद तस्य सरोवरस्य कृत्येन केन भवितासि कृतोपकारः ॥ २१ ॥ तरौ तीरोद्भूते क्वचिदपि दलाच्छादिततनुः पतद्धारासारां गमय विषमां प्रावृषमिमाम्। निवृत्तायां तस्यां सरसि सरसोत्फुल्लनलिने स एव त्वं हंसः पुनरपि विलासास्त इह ते ॥ २२ ॥ गतं तद्गाम्भीर्यं तटमपि चितं जालिकशतैः सखे हंसोत्तिष्ठ त्वरितममुतो गच्छ सरसः। न यावत्पङ्कान्तःकलुषिततनुर्भूरि विलसद्बकोऽसौ वाचालश्चरणयुगलं मूर्ध्नि कुरुते ॥ २३ ॥ पुरा सरसि मानसे

१ सकरसचयम् २. ताम्रचूड ३ चातुर्यम्.

विकचसारसालिस्खलत्परागसुरभीकृते पयसि यस्य यातं वयः। स पल्वलजलेऽधुना मिलदनेकभेकाकुले मरालकुलनायकः कथय रे कथं वर्तताम् ॥ २४ ॥ वातान्दोलितपङ्कजस्थितरजःपुञ्जाङ्गरागोज्ज्वलो यः शृण्वन्कलकूजितं मधुलिहां संजातहर्षः पुरा। कान्ताचञ्चुपुटापवर्जितविसग्राहग्रहेऽप्यक्षमः सोऽयं संप्रति हंसको मरुगतः कौपं पयो याचते ॥ २५ ॥ यो दिव्याम्बुजलोलमत्तमधुपप्रोद्गीतरम्यं सरस्त्यक्त्वा मानसमल्पवारिणि रतिं बध्नाति कैदारिके। तस्यालीकसुखाशया परिभवक्रोडीकृतस्याधुना हंसस्योपरि टिट्टिभो यदि पदं धत्तेऽत्र को विस्मयः ॥ २६ ॥ अन्या सा सरसीमरालमुनिभिर्यत्तीरसोपानिकाविन्यस्तांस्तिलतण्डुलान्कवलयन्दृष्टोऽसि हृष्टैर्मुखैः। एषा पक्कणवापिका कमलिनीखण्डेन गुप्तात्मभिर्व्याधैस्त्वद्विधमुग्धबन्धनविधौ को नाम नो सूच्यते ॥ २७ ॥ कस्त्वं रोहितलोचनास्यचरणो हंसः कुतो मानसात्कि तत्रास्ति सुवर्णपङ्कजवनान्यम्भः सुधासंनिभम्। रत्नानां निचयाः प्रवालमणयो वैडूर्यरोहः क्वचिच्छम्बूका न वसन्ति नेति च बकैराकर्ण्य हीहीकृतम् ॥२८॥ यः संतापमपाकरोति जगतां यश्चोपकारक्षमः सर्वेषाममृतात्मकेन वपुषा प्रीणाति नेत्राणि यः। तस्याप्युन्नतिमम्बुदस्य सहसे यन्न त्वमेतावता वर्णेनैव परं मराल धवलः कृष्णश्चरित्रैरसि ॥ २९ ॥ आकारः कमनीयता कुलगृहं लीलालसा सा गतिः संपर्कः कमलालयैः कलतया लोकोत्तरं कूजितम्। यस्येयं गुणसंपदस्ति महती तस्यातिभव्यस्य ते संरब्धत्वमसद्गुमद्गुकलहेनाहं सहे हंस हे ॥ ३० ॥ नद्यो नीचगता दुरापपयसः कूपाः पयोराशयः क्षारा दुष्टबकोटसंकटतटोद्देशास्तडागादयः। इत्थं भूतलमाकलय्य सकलानम्भोनिवेशानिति त्वां भो मानस संस्मरन्पुनरसौ हंसः समभ्यागतः ॥ ३१ ॥ हंसी वेत्ति परागपिञ्जरतनुः कुत्रापि पद्माकरे प्रेयान्मे विसकन्दलीकिसलयं भुङ्क्ते ह्ययं निर्वृतः। नो जानाति तपस्विनी यदनिशं जम्बालमालोडयञ्शैवालाङ्कुरमप्यसौ न लभते हंसो विशीर्णच्छदः ॥३२॥ प्रम्लाना नलिनी जलानि किरणैः सूर्यस्य शोषं ययुर्नाशं प्राप विहंगमावलिरियं तृष्णाविशीर्णेक्षणा। एते तीरमहीरुहा अपि पतत्पत्राश्रियोऽद्यापि रे कोऽयं राजमरालशुष्कसरसीतीरे रतिप्रक्रमः ॥ ३३ ॥ एषा पुष्करिणी मरालमलिनैश्छन्ना कुवीथीजलैर्यस्यामज्ञतया विधेरकृपया चेद्वस्तु मां काङ्क्षसे। विश्रम्भो बकमण्डलेषु विनयो भेकेषु संबन्धिता रात्र्यन्धेषु विधीयतां कृपणता कोयष्टिकश्रेणिषु ॥ ३४ ॥ पीतं येन पुरा पुरंदरपुरे रम्भोरुकेलिस्खलन्मन्दाराङ्कुरकर्णपूरसुरभि स्वर्गापगाया पयः। सोऽयं मारववारिपामरवधूपादार्पणप्रोच्छलत्पङ्कातङ्कितभेकभिन्नमवृणो हंसः समासंसते ॥ ३५ ॥ भो हंसास्तावदम्भोरुहकुहररजोरञ्जिताङ्गाः सहेल हंसीभिः पद्मखण्डे मधुरमधुकरारावरम्ये रमध्वम्। यावन्नायं दुरन्तो हरगलगरलव्यालजालालिनीलप्रोन्मीलन्मेघमालामलिनसकलदिङ्मण्डलो-

१. अल्पजलाशयजले २. दर्दुरव्याप्ते ३. रक्तम्. ४ जलशुक्तयः. ५ हस.

ऽभ्येति कालः ॥ ३६ ॥ **मधुकरः** ॥ सरजस्कां[1] पाण्डुवर्णां कण्टकप्रकरै[2]राङ्कितताम् । केतकीं सेवसे हन्त कथं रोलम्ब[3] निस्त्रप[4] ॥ ३७ ॥ फलानां च दलानां च सन्तु ते ते विवेकिनः । मकरन्दविशेषज्ञो मिलिन्दमपहाय कः ॥३८॥ पलाशकुसुमभ्रान्त्या शुकतुण्डे पतत्यलिः । सोऽपि जम्बूफलभ्रान्त्या तमलिं धर्तुमिच्छति ॥ ३९ ॥ मधुकर तव करनिकरैः किं किं क्रान्तं वनं न कुसुमानाम् । तद्वद सरसिजकमले लब्धं किंचिद्यदन्यतस्तत्किम् ॥ ४० ॥ [5]गौरी चम्पककलिकामपहाय भ्रान्तदुर्बुद्धे । शाल्मलिकुसुमदलेषु स्वैरं गुञ्जन्न लज्जसे मधुप ॥ ४१ ॥ [6]मदनमवलोक्य निष्फलमनित्यतां बन्धुजीवकुसुमानाम् । वनमुपगम्य भ्रमरः संप्रति जातो जपासक्तः ॥ ४२ ॥ [7]अपसर मधुकर दूरं परिमलबहुलेऽपि केतकीकुसुमे । इह न हि मधुलवलाभो भवति परं धूलिधूसरं वदनम् ॥ ४३ ॥ कृत्वापि कोशपानं भ्रमरयुवा पुरत एव कमलिन्याः । अभिलषति बकुलकलिकां मधुलिहि मलिने कुतः सत्यम् ॥ ४४ ॥ येनामन्द[8]मरन्दे दलद[9]रविन्दे दिनान्यनै[10]षत । कुटजे खलु तेनेहा[11] तेने[12] हा मधुकरेण कथम् ॥ ४५ ॥ अमर[13]तरुकुसुमसौरभ[14]सेवनसंपूर्णकामस्य । पुष्पान्तरसेवेयं भ्रमरस्य विडम्बना महती ॥ ४६ ॥ इह रूपमात्रसारे चित्रगते कनककह्लारे । न रसो नापि च गन्धो मधुकर बन्धो मुधा भ्रमसि ॥ ४७ ॥ अपनीतपरिमलान्तरकथे पदं न्यस्य देवतरुकुसुमे । पुष्पान्तरेऽपि गन्तुं वाञ्छसि चेद्भ्रमर धन्योऽसि ॥ ४८ ॥ मलिनेऽपि रागपूर्णां विकसितवदनामनल्पजल्पेऽपि । त्वयि चपलेऽपि च सरसां भ्रमर कथं वा सरोजिनीं त्यजसि ॥४९॥ नन्दनजन्मा मधुपः सुरतरुकुसुमेषु पीतमकरन्दः । दैवादवनिमुपेतः कुटजे कुटजे समीहते वृत्तिम् ॥ ५० ॥ दूरतया स्थूलतया नीलतया दानलोलुपैर्मधुपैः । भ्रामितमिभराजधिया हन्तासीदन्ततो महिषः ॥ ५१ ॥ यस्तोषं न गतः कमलेषु बकुलदले चम्पककुसुमेषु । तस्यालेर्यदि निम्बे वासः कथय कथं न भवत्युपहासः ॥ ५२ ॥ आलिङ्गसे चारुलतां लवङ्गीमाचुम्बसे चाम्बुजिनीं क्रमेण । तां चूतवल्लीं मधुप प्रकामं संताडयस्येव पदैः किमेतत् ॥ ५३ ॥ वेत्रत्वचा तुल्यरुचां वधूनां कर्णाग्रतो गण्डतलागतानि । भृङ्गाः सहेलं यदि नापतिष्यन्को वेदयिष्यन्नवचम्पकानि ॥ ५४ ॥ भ्रमर भ्रमता दिगन्तराणि क्वचिदासादितमीक्षितं श्रुतं वा । वद सत्यमपास्य पक्षपातं यदि जातीकुसुमानुकारि पुष्पम् ॥ ५५ ॥ अभिनवनलिनीविनोदलुब्धो मुकुलितकैरविणीवियोगभीरुः । भ्रमति मधुकरोऽयमन्तराले श्रयति न पङ्कजिनीं कुमुद्वतीं वा ॥ ५६ ॥ अलिरयं नलिनीदलमध्यगः कमलिनीमकरन्दमदालसः । विधिवशात्परदेशमुपागतः कुटजपुष्परसं बहु मन्यते ॥ ५७ ॥ अपि दलन्मुकुले बकुले

१. रजोयुक्ताम्. २. समूह ३. भ्रमर ४. निर्लज्ज ५. पीतवर्णाम् ६ मदनबाणाख्य पुष्पम्. ७. दूर गच्छ. ८ प्रचुरपुष्परसे ९. विकसितकमले. १० नीतानि ११ इच्छा १२ विस्तारिता. कृतेति यावत् १३. कल्पवृक्ष.. १४ सौगन्ध्य.

यया पदमधायि कदापि न हेलया । अहह सा सहसा विधुरे विधौ मधुकरी बदरीमनुसेवते ॥ ५८ ॥ आनम्राः स्तबकभरेण पल्लविन्यः शोभन्ते कति न लताः परागपूर्णाः । आमोदे मधुनि च मार्दवे च तासां यो भेदः स खलु मधुव्रतैकवेद्यः ॥ ५९ ॥ रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः । इत्थं विचिन्तयति कोशगते द्विरेफे हा मूलतः कमलिनीं गज उज्जहार ॥ ६० ॥ अन्यासु तावदुपमर्दसहासु[1] भृङ्ग लोलं[2] विनोदय मनः सुमनोलतासु । मुग्धामजातरजसं[3] कलिकामकाले[4] बालां कदर्थयसि[5] किं नवमल्लिकायाः ॥ ६१ ॥ फुल्लेषु यः कमलिनीकमलोदरेषु चूतेषु यो विलसितः कलिकान्तरस्थः । पश्याद्य तस्य मधुपस्य शरद्व्यपाये कृच्छ्रेण वेणुविवरे दिवसाः प्रयान्ति ॥६२॥ ये वर्धिताः करिकपोलमदेन भृङ्गाः प्रोत्फुल्लपङ्कजरजःसुरभीकृताङ्गाः । ते सांप्रतं प्रतिदिनं क्षपयन्ति कालं निम्बेषु चार्ककुसुमेषु च दैवयोगात् ॥६३॥ एणीदृशः श्रवणसीम्नि यदा नयन्ति तेनैव तस्य महिमा नवचम्पकस्य । त्वं तत्र नो विहरसे यदि भृङ्ग तेन नैतस्य किंचिदपि तत्तु तवैव हानिः ॥ ६४ ॥ सानन्दमेष मकरन्दमिहारविन्दे विन्देत षट्पदयुवेति जनैरटङ्कि । दैवादकाण्डपरिमुद्रितपुण्डरीककोषादभूदहह निःसरणं पुमर्थः ॥ ६५ ॥ आजन्मकल्पतरुकाननकामचारी यत्कौतुकादुपगतः कुटजं मिलिन्दः । तत्कर्मणः सुसदृशं फलमेतदेव यत्प्राप साम्यमधुना मधुमक्षिकाभिः ॥ ६६ ॥ मा गा विषादमलिपोतक केतकीनामन्तर्निगूढमनवाप्य मधुप्रकर्षम् । लाभः स एव परमो ननु कण्टकानां श्रेणीभिरक्षतशरीरतया प्रयासि ॥ ६७ ॥ इह सरसि सहर्षं मञ्जु[6] गुञ्जाभिरामं[7] मधुकर कुरु केलिं सार्धमम्भोजिनीभिः । अनुपममकरन्दामोददत्तप्रमोदा त्यजति बत न निद्रां मालती यावदेषा ॥६८॥ भ्रमर मरणभीतिं मुञ्च चाम्पेयपुष्पे विहर हर तदीयं सौरभं सौहृदेन । मधुकर सुकरं चेद्वस्तु हस्तेन लब्धुं भवतु तदुपभोगेऽनिष्टमिष्टं फलं वा ॥ ६९ ॥ गन्धैराढ्या जगति विदिता केतकी स्वर्णवर्णा पुष्पभ्रान्त्या क्षुधितमधुपः पुष्पमध्ये पपात । अन्धीभूतस्तदनु रजसा कण्टकैश्छिन्नपक्षः स्थातुं गन्तुं क्षणमपि सखे नैव शक्तो द्विरेफः ॥ ७० ॥ दृष्ट्वा स्फीतोऽभवदलिरसौ लेख्यपद्मं विशालं चित्रं चित्रं किमिति किमिति व्याहरन्निष्पपात । नास्मिन्गन्धो न च मधुकणा नास्ति तत्सौकुमार्यं घूर्णन्मूर्धा बत नतशिरा व्रीडया निर्जगाम ॥ ७१ ॥ सदम्भोजाम्भोजं परिहपति संभोगरहितो गतोऽमन्दे कुन्दे वहति मकरन्दं न हि मनः । ततो मन्येऽरण्ये क्वचिदधिकपुण्येऽपि ललितां लवङ्गीमासङ्गी भजति नवभृङ्गीपरिवृढः ॥ ७२ ॥ निरानन्दो कौन्दे मधुनि विधुरो बालबकुले रसाले सालम्बो लवमपि लवङ्गेन रमते । प्रियङ्गौ नासङ्गं रचयति न चूतेऽपि रमते स्मरंल्लक्ष्मीलीलाकमलमधुपानं मधु-

---

१ उपमर्दं सहन्ते ताः २. सतृष्णम् लुब्धमिति यावत्. ३. अनुत्पन्नपरागाम्. ४. अयोग्ये काले. ५. दूषयसि. ६. मधुरम् ७. रव कुरु.

करः ॥ ७३ ॥ श्रियो वासाम्भोजे त्रिदिवसरिदम्भोजकुहरे हरेर्नाभ्ये पद्मे मधु मधुकरो यः किल पपौ । स दैवादुन्मीलत्तपनकरतापव्यतिकरव्यथाकम्पः संप्रत्यतरुमरुभूमौ विचरति ॥ ७४ ॥ लतास्तास्तास्तादृङ्मधुरसवतीः पङ्कजवनीः समालिङ्ग्य चुम्बन्नयमगमयद्भूरि समयम् । इदानीं चेन्नीचे विचरति रुचेरेष लकुचे कुचेष्टेयं धातुर्भवति नहि वाच्यो मधुकरः ॥ ७५ ॥ नापो नापगतस्तृषा न च कृशा धूता न धूली तनोर्न स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा । दूरान्मुक्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी प्रारब्धं मधुपैरकारणमहो झङ्कारकोलाहलः ॥ ७६ ॥ नो मल्लीमयमीहते[1] न भजते मत्तेभकुम्भस्थली वासन्ती[2] सहते न चन्दनवनीमालम्बते न क्वचित् । जातीमेव हृदीश्वरीमिव महानन्दैककन्दाङ्कुरां ध्यायन्निर्वृतिमेति षट्पदयुवा योगीव वीतभ्रमः[3] ॥७७॥ किं क्वापि प्रलयानलैर्विटपिनो निर्दह्य भस्मीकृताः किंस्विद्देवगजेन पङ्कजवनं निष्कन्दमुन्मूलितम् । किंवा हन्त कृतान्तकेसरिभयात्त्यक्तो[4] मदः कुञ्जरैर्येनास्मिन्विरसे करीरकुसुमे हा भृङ्ग विश्राम्यसि ॥ ७८ ॥ यस्याः संगमवाञ्छया न गणिता वाप्यो विनिद्रोत्पला यामालिङ्ग्य समुत्सुकेन मनसा यातः परां निर्वृतिम् । भग्नां तामवलोक्य चन्दनलतां भृङ्गेण यज्जीव्यते धैर्यं नाम तदस्तु तस्य न पुनः स्नेहानुरूपं कृतम् ॥ ७९ ॥ दग्धा सा वकुलावलीकवलितास्ते ते रसालद्रुमाः लुष्टास्तेऽपि विनिद्रपुष्पपटलीपीतातपाः पादपाः । भ्रातर्भृङ्ग दवाग्निना वनमिदं वल्मीकशेषं कृतं किं त्वं सम्प्रति काननान्तरपरिस्पन्दाय मन्दायसे ॥ ८० ॥ दूरादुज्झति चम्पकं न च भजत्यम्भोजराजीरजो नो जिघ्रत्यपि पाटलापरिमलं धत्ते न चूते रतिम् । मन्दारे यदनादरोऽपि च किलोपान्ते न संतृप्यते तन्मन्ये क्वचिदङ्गभृङ्गतरुणेनास्वादिता मालती ॥ ८१ ॥ येनामोदिनि केसरस्य मुकुले पीतं मधु स्वेच्छया नीता येन निशा शशाङ्कधवला पद्मोदरे शारदी[5] । भ्रान्तं येन मदप्रवाहमलिने गण्डस्थले दन्तिनां सोऽयं भृङ्गयुवा करीरविटपे बध्नाति तुष्टिं कुतः ॥ ८२ ॥ भ्रातर्भ्राम्य लवङ्गवल्लिषु पिब स्वैरं नवाम्भोरुहं माध्वीमाघविकामधूनि मधुराण्याकण्ठमास्वादय । कस्मादापतितोऽसि केतकमिदं यस्मिन्न दीर्घं रजो दृष्टिं लुम्पति सूचयः प्रविचिताः कृन्तन्ति मर्माण्यपि ॥ ८३ ॥ आस्वाद्यात्र मधूनि षट्पद मदं मा गाः कषायाङ्कुरैर्माकन्दस्य पिकान्प्रतारितवतो मूर्धानमध्यासितः । प्रत्यासन्नतमे पिकेऽपि भवते येनार्पिता तादृशी माध्वी तस्य विवेकविच्युतिरियं षाड्गुण्यमेतन्न ते ॥ ८४ ॥ नीतं जन्म नवीननीरजवने पीतं मधु स्वेच्छया मालत्याः कुसुमेषु येन सततं केली कृता हेलया । तेनेयं मधुगन्धलुब्धमनसा गुञ्जालता सेव्यते हा धिग्दैवकृतं स एव मधुपः कां कां दशां नागतः ॥ ८५ ॥ प्रारम्भे कुसुमाकरस्य परितो यस्योल्लसन्मञ्जरीपुञ्जे मञ्जुलगुञ्जि-

---

१ इच्छां करोति. २ माधवीलताम्. ३. गतभ्रम ४. कृतान्त काल. स एव केसरी सिंहः. ५ शरत्संबन्धिनी.

तानि रचयंस्तानातनोरुत्सवान् । तस्मिन्नद्य रसालशाखिनि दशां दैवात्कृशामञ्चति त्वं चेन्मुञ्चसि चञ्चरीक विनयं नीचस्त्वदन्योऽस्ति कः ॥ ८६ ॥ सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं दृष्टिः सा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा । सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसौ अन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥८७॥

कोकिलः ॥ समुद्गिरसि किं वाचः पुंस्कोकिल सुकोमलाः । श्वभ्रेऽस्मिञ्जडपाषाणगुरुनिर्घोषभैरवे ॥ ८८ ॥ तवैतद्वाचि माधुर्यं जाने कोकिल कृत्रिमम् । प्रपोषितो यैस्तानेव जातपक्षो जहासि यत् ॥ ८९ ॥ रसालशिखरासीनाः शतं सन्तु पतत्रिणः । तन्मञ्जरीरसामोदबिन्दुरेव कुहूमुखः ॥ ९० ॥ भद्रं भद्रं कृतं मौनं कोकिलैर्जलदागमे । वक्तारो दर्दुरा यत्र तत्र मौनं समाचरेत् ॥ ९१ ॥ शृगालशशशार्दूलदूषितं दण्डकावनम् । पञ्चमं गायतानेन कोकिलेन प्रतिष्ठितम् ॥ ९२ ॥ काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः । वसन्तसमये प्राप्ते काकः काकः पिकः पिकः ॥ ९३ ॥ तावन्मौनेन नीयन्ते कोकिलैश्चैव वासराः । यावत्सर्वजनानन्ददायिनी वाक्प्रवर्तते ॥ ९४ ॥ कोकिलोऽहं भवान्काकः समानः कालिमावयोः । अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः ॥९५॥ सहकारे चिरं स्थित्वा सलीलं बालकोकिल । तं हित्वाद्यान्यवृक्षेषु विचरन्न विलज्जसे ॥ ९६ ॥ कलकण्ठ यथा शोभा सहकारे भवद्गिरः । खदिरे वा पलाशे वा किं तथा स्याद्विचारय ॥९७॥ कोकिल कलमालापैरलमलमालोकसे रसालं किम् । शरनिकरभरितशरधिः शबरः सरतीह परिसरे स धनुः ॥ ९८ ॥ तत्किं स्मरसि न भुक्तं यत्पिक रे काकमन्दिरे पूर्वम् । सहकारकुसुमकाले हठेन कुरुषेऽधुना रावम् ॥ ९९ ॥ तावत्कोकिल विरसान्यापय दिवसान्वनान्तरे निवसन् । यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ॥ १०० ॥ एकस्त्वं गहनेऽस्मिन्कोकिल न कलं कदाचिदपि कुर्याः । साजात्यशङ्कयामी न त्वां निघ्नन्तु निर्दयाः काकाः ॥ १०१ ॥ रे रे कोकिल मा भज मौनं किंचिदुदञ्चय पञ्चमरागम् । नो चेत्त्वामिह को जानीते काककदम्बकपिहिते चूते ॥ १०२ ॥ अस्यां सखे बधिरलोकनिवासभूमौ किं कूजितेन खलु कोकिल कोमलेन । एते हि दैवहतकास्तदभिन्नवर्णं त्वां काकमेव कलयन्ति कलानभिज्ञाः ॥ १०३ ॥ रे बालकोकिल करीरमरुस्थलीषु किं दुर्विदग्धमधुरध्वनिमातनोषि । अन्यः स कोऽपि सहकारतरुप्रदेशो राजन्ति यत्र तव विभ्रमभाषितानि ॥ १०४ ॥ किं कोमलैः कलरवैः पिक तिष्ठ तूष्णीमेते तु पामरनराः स्वरमाकलय्य । को वा रटत्ययमये निकटे कटूनि रे बध्यतामिति वदन्ति गृहीतदण्डाः ॥ १०५ ॥ तावच्चकोरचरणायुधचक्रवाकपारावतादिविहगाः कलमालपन्तु । यावद्वसन्तरजनीवटिकावसा-

१ त्यजसि २ वर्षाकाले ३ भेकाः. ४. सञ्चरति ५. आसमन्ताद्भागे. ६. कोकिल. ७ नय. ८ काकसमावृते ९ आम्र.

नमासाद्य कोकिलयुवा न कुहू करोति ॥ १०६ ॥ क्वचिज्झिल्लीनादः क्वचिदतुलकाकोलकलहः क्वचित्कङ्कारावः क्वचिदपि कपीनां कलकलः । क्वचिद्घोरः फेरुध्वनिरयमहो दैवघटनात्कथंकारं तारं रसति चकितः कोकिलयुवा ॥ १०७ ॥ मूकीभूय तमेव कोकिलमधुं वन्धुं प्रतीक्षस्व हे हेलोल्लासितमल्लिकापरिमलामोदानुकूलानिलम् । यत्रैतास्तव सूक्तयः सफलतामायान्त्यमी तूच्छसत्पांशूत्तंसभृतो निदाघदिवसाः संतापसंदायिनः ॥ १०८ ॥ येनानन्दमये वसन्तसमये सौरभ्यहेलामिलद्भृङ्गालीमुखरे रसालशिखरे नीताः पुरा वासराः । आः कालस्य वशेन कोकिलयुवा सोऽप्यद्य सर्वा दिशः खेलद्वायसचञ्चुघातविदलन्मूर्धा मुहुर्धावति ॥ १०९ ॥ दात्यूहाः सरसं रसन्तु सुभगं गायन्तु केकीभृतः कादम्बाः कलमालपन्तु मधुरं कूजन्तु कोयष्टयः । दैवाद्यावदसौ रसालविटपिच्छायामनासादयन्निर्विण्णः कुटजेषु कोकिलयुवा संजातमौनव्रतः ॥ ११० ॥ भ्रातः कोकिल कूजितेन किमलं नाद्याप्यनर्घ्यो गुणस्तूष्णीं तिष्ठ विशीर्णपर्णपटलच्छन्नः क्वचित्कोटरे । प्रोद्दामद्रुमसंकटे कटुरटत्काकावलीसंकुलाः काकोऽयं शिशिरस्य संप्रति सखे नायं वसन्तोत्सवः ॥ १११ ॥ अम्भोजप्रकरोऽथ केतककुलं कुन्दोत्करः कैरवव्रातो मल्लिगणोऽथ चम्पकचयो जातीसमूहोऽथवा । नो चेदादरमातनोति पिक ते खेदं वृथा मा कृथा यस्मात्क्वापि कदापि कोऽपि भविता यस्त्वद्गुणाञ्ज्ञास्यति ॥ ११२ ॥ चातकः ॥ एक एव खगो मानी चिरं जीवतु चातकः । म्रियते वा पिपासायां याचते वा पुरंदरम् ॥ ११३ ॥ पिपासाक्षामकण्ठेन याचितं चाम्बु पक्षिणा । नवमेघोज्झिता चास्य धारा निपतिता मुखे ॥ ११४ ॥ चातक धूमसमूहं दृष्ट्वा मा धाव वारिधरबुद्ध्या । इह हि भविष्यति भवतो नयनयुगादेव वारिणां पूरः ॥ ११५ ॥ यद्यपि चातकपक्षी क्षपयति जलधरमकालवेलायाम् । तदपि न कुप्यति जलदो गतिरिह नान्या यतस्तस्य ॥ ११६ ॥ दीनोन्नतचलपक्षतया बह्वपि लब्धमवस्तु । चातक सत्संभावनया किमपि यदस्ति तदस्तु ॥ ११७ ॥ विश्वोपजीव्येन पिबत्यथोऽयं पद्माकरे यद्यपि चातकश्चेत् । स्वार्थक्षतिस्तस्य तृषातुरस्य लघुत्वमेवास्ति न किंचिदस्य ॥ ११८ ॥ ऊर्ध्वीकृतग्रीवमहो मुधैव किं याचसे चातकपोत मेघम् । अत्यूर्जितं गर्जितमात्रमस्मिन्नम्भोधरे बिन्दुलवस्तु दूरे ॥ ११९ ॥ वृथा कथं नृत्यसि चातक त्वं न नीलमेघोऽथ गजो मदान्धः । स त्वादृशेभ्यो न ददाति नूनं मातङ्गदानं मधुपेभ्य एव ॥ १२० ॥ आत्मानमम्भोनिधिरेतु शोषं ब्रह्माण्डमासिञ्चतु वा तरंगैः । नास्ति क्षतिर्नोपचितिः कदापि पयोदवृत्तेः खलु चातकस्य ॥ १२१ ॥ रक्ताब्जपुञ्जरजसारुणितान्विमुच्य स्वच्छान्सुधासमरसानपि वारिराशीन् । यच्चातकः पिबति वारिधरोदबिन्दून्मन्ये तदा नतिभयाच्छिरसोऽभिमानी ॥ १२२ ॥ अन्येऽपि सन्ति बत

१ द्रोणकाकः. २ जम्बुकध्वनि.. ३ अत्युच्च यथा तथा ४. कूजति. ५ कालकण्ठकः. जलकाक इति प्रसिद्ध.. ६. मयूरा . ७. कलहसा . ८ अव्यक्तमधुरम् ९. टिटिभा.. १०. नमनभयात्

तामरसावतंसा हंसावलीवलयिनो जलसंनिवेशाः । कोऽप्याग्रहो गुरुरयं बत चातकस्य पौरंदरीं यदभिवाञ्छति वारिधाराम् ॥ १२३ ॥ धिग्वारिदं परिहृतान्यजलाशयस्य यच्चातकस्य कुरुते न तृषाप्रशान्तिम् । धिक्चातकं तमपि योऽर्थितयास्तलज्जस्तं तादृशं च यदुपैति पिपासितोऽपि ॥ १२४ ॥ बीजैरङ्कुरितं लताभिरुदितं वल्लीभिरुज्जृम्भितं कन्दैः कन्दलितं जनैः प्रमुदितं धाराधरे वर्षति । भ्रातश्चातक पातक किमपि ते सम्यङ्न जानीमहे येनास्मिन्न पतन्ति चञ्चुपुटके द्वित्राः पयोबिन्दवः ॥ १२५ ॥ अन्ये ते जलदायिनो जलधरास्तृष्णां विनिघ्नन्ति ये भ्रातश्चातक किं वृथा विरुदितैः खिन्नोऽसि विश्राम्यताम् । मेघः शारद एव काशधवलः पानीयरिक्तोदरो गर्जत्येव हि केवलं भृशतरं नो बिन्दुमप्युज्झति ॥ १२६ ॥ यः कृष्णं कुरुते मुखं जनयति त्रासं तडिद्भिस्तु यो यश्च प्रार्थयते परं दलयति श्रोत्रं निजैर्गर्जितैः । सत्यं चातक ते तथाविधमपि भ्रातस्त्वया याचता जीमूतं कृतमेव तुल्यमनयोरर्थित्वतिर्यक्त्वयोः ॥ १२७ ॥ रे रे चातक सावधानमनसा मित्र क्षणं श्रूयतामम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः । केचिद्वृष्टिभिरार्द्रयन्ति धरणीं गर्जन्ति केचिद्वृथा यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥ १२८ ॥ वापी स्वल्पजलाशयो विषमयो नीचापगाहो ह्रदः क्षुद्रात्क्षुद्रतरो महाजलनिधिर्गण्डूषमेकं मुनेः । गङ्गाद्याः सरितः पयोनिधिगताः संत्यज्य तस्मादिमान्संमानी खलु चातको जलमुचामुच्चैः पयो वाञ्छति ॥ १२९ ॥ **मयूरः** ॥ अहमस्मि नीलकण्ठस्तव खलु तुष्यामि शब्दमात्रेण । नाहं जलधर भवतश्चातक इव जीवनं याचे ॥ १३० ॥ यत्नादपि कः पश्यति शिखिनामाहारनिर्गमस्थानम् । यदि जलदनिनदमुदितास्त एव मूढा न नृत्येयुः ॥ १३१ ॥ वेगज्वलद्विटपिपुञ्जमहारयोऽयं गर्जन्न तीव्रतरहेतिरियं न शंपाः । दावाग्निधूमनिवहोऽयमये न मेघः किं नृत्यसि द्रुतमितो व्रज तत्कलापिन् ॥ १३२ ॥ अस्मान्विचित्रवपुषस्तव पृष्ठलग्नान्कस्माद्विमुञ्चति भवान्यदि वा विमुञ्च । रे नीलकण्ठ पुरुहानिरियं तवैव मौलौ पुनः क्षितिभृतो भविता स्थितिर्नः ॥ १३३ ॥ अये नीलग्रीव क्व नु खलु सखे तेष्वनुनयः परं तोषं येषां तव रवविलासो वितनुते । अमी दूरात्क्रूराः क्वणितमिदमाकर्ण्य सहसा त्वरन्ते हन्तुं त्वामहह शबराः पुङ्खितशराः ॥ १३४ ॥ समन्तादाक्रान्ता दवदहनसंघैः शिखरिणः किरातैराकीर्णाः करकलितकाण्डैर्वनभुवः । बिडालैरालीढाः सपदि सरसीनां परिसराः शिखण्डी पाण्डित्यं निजमहह कुत्र प्रकटतु ॥ १३५ ॥ एतस्मिन्मलयाचले बहुविधैः किं तैरकिंचित्करैः काकोलूककपोतकोकिलकुलैरेकोऽपि पार्श्वस्थितः । केकी कूजति चेत्तदा विघटितव्यालावली-

---

१ ऐन्द्रीम् मेघोत्पन्नामित्यर्थः २ परिहृतास्त्यक्ता अन्ये जलाशया समुद्रादयो येन. ३. गतलज्जः. निर्लज्ज इत्यर्थः ४ काशपुष्पवत्पाण्डुर ५. गुदस्थानम् ६. मेघनादेन सजातानन्दा . ७. मयूर.. ८. विघटित व्यालावलीनां बन्धन यस्य

वन्धनः सेव्यः स्यादिह सर्वलोकमनसामानन्दनश्चन्दनः ॥ १३६ ॥ हारीताः सरसं रसन्तु मधुरं कूजन्तु पुंस्कोकिलाः सानन्दं गिरमुद्गिरन्तु च शुकाः किं तैः शिरस्थैरपि । एकेनापि तलस्थितेन वदनाच्छ्रीखण्डनिस्तर्जनाद्व्यालानां च शिखण्डिना न तु महत्पाण्डित्यमुद्दण्डितम् ॥ १३७ ॥ किं दूरेण पयोधरा उपरि किं नान्यैरटन्तः श्रुता निर्व्यापारतया च पक्षिषु गताः किं वानपेक्षा वृथा । रम्यं वा गगनेन किं विहरणं किं तूग्रकाकावलीपर्यायप्रतिपत्तिलाघवभयाद्भूमौ स्थिता बर्हिणः ॥ १३८ ॥ केकी कर्णामृतं ते सकुसुमकबरीकान्तिहाराः कलापाः कण्ठच्छाया पुरारेर्गलरुचिरुचिरा सौहृदं मेघसंघैः । विश्वद्वेषी द्विजिह्वः स्फुरदुरुपिशितैर्नित्यमाहारवृत्तिः कैः पुण्यैः प्राप्तमेतत्सकलमपि सखे चित्रवृत्तं मयूर ॥ १३९ ॥ **चक्रवाकः** ॥ त्यज चक्रवाकि शोकं वधान धैर्यं सहस्व समयममुम् । अयमेव वासरमणिर्हरिष्यते शापमूर्छां ते ॥ १४० ॥ अस्तं गतोऽयमरविन्दवनैकवन्धुर्भास्वान्न लङ्घयति कोऽपि विधिप्रणीतम् । हे चक्र धैर्यमवलम्ब्य विमुञ्च शोकं धीरास्तरन्ति विपदं न तु दीनचित्ताः ॥ १४१ ॥ **शुकः** ॥ अखिलेषु विहगेषु हन्त स्वच्छन्दचारिषु । शुक पञ्जरबन्धस्ते मधुराणां गिरां फलम् ॥ १४२ ॥ किंशुके शुक मा तिष्ठ चिरं भाविफलेच्छया । बाह्यरङ्गप्रसङ्गेन के के नानेन वञ्चिताः ॥ १४३ ॥ काकाः किं किं न कुर्वन्ति क्रोङ्कारं यत्र यत्र वा । शुक एव परं वक्ति नृपहस्तोपलालितः ॥ १४४ ॥ शुक तव पठनं व्यसनं नैव गुणः किंतु सद्गुणाभासः । समजनि येनामरण शरणं ते पञ्जरे वासः ॥१४५॥ कीर नीरसकरीरपादपे किं स्थितोऽसि कथयामि धीरतः । मामकीनसहकारपादपा दुःसमीरलहरीभिराहताः ॥ १४६ ॥ सुभाषितस्याध्ययनानुसक्तं शुकं वराकाः प्रहसन्ति काकाः । तमेव संसत्सु गिरं किरन्तं दृष्ट्वा भवन्ति त्रपयानतास्याः ॥ १४७ ॥ द्राक्षां प्रदेहि मधु वा वदने निधेहि देहे विधेहि किमु वा करलालनानि । जातिस्वभावचपलः पुनरेष कीरस्तत्रैव यास्यति कृशोदरि मुक्तबन्धः ॥ १४८ ॥ हे कीर कैरवमुगीरिति संकलय्य मामात्र संरससि सज्जनरञ्जनाय । बालोऽपि यत्र कलकण्ठसुकण्ठपीठः संलेढि कोमलकुहूकृतपूर्णकर्णः ॥ १४९ ॥ इदमपटु कपाटं जर्जरः पञ्जरोऽयं विरमति न गृहेऽस्मिन्क्रूरमार्जारयात्रा। शुक मुकुलितजिह्वः स्थीयतां कि वचोभिस्तव वचनविनोदैर्नादरः पामराणाम् ॥ १५० ॥ अमुष्मिन्नुद्याने विहगखल एष प्रतिकलं विलोलः कौकोलः क्वणति खलु यावत्कटुतरम् । सखे तावत्कीर द्रढय हृदि वाच च सकलां न मौनेन न्यूनो भवति गुणभाजां गुणगणः ॥ १५१ ॥ इय पल्लीभिल्लैरनुचितसमारम्भरसिकैः समन्तादाक्रान्ता विषविषमत्राणप्रणयिभिः । तरोरस्य स्कन्धे गमय समय कीर निभृतं न वाणी कल्याणी तादिह मुखमुद्रैव शरणम् ॥ १५२ ॥ अमुष्मिन्नारामे तरुभिरभिरामे विटपिनः स्फुटं नृत्यद्भृङ्गीविविधनर्वसंगी-

---

१ दोष. २. मरणपर्यन्तम् ३ द्रोणकाक.

तकलनात्। परानन्दैः पूर्णाः क इव तव वर्णावलिपदक्रमश्रोता वेत्ता द्विजवर शुक आम्यसि कुतः ॥ १५३ ॥ अये कीर श्रेणीपरिवृढ वृथा वासरशतं किमर्थं त्वं व्यर्थं क्षपयसि पलाशे रभसतः। यदा पुष्पारम्भे मुखमलिनिमा किंशुकतरोस्तदैवेदं ज्ञातं फलपरिचयो दुर्लभतरः ॥ १५४ ॥ अपारः पाथोधिः पुलिनपदवी योजनशतं निरालम्बो मार्गो वियति किल शून्या दश दिशः। इतीवायं कीरः कतिपयपदान्येव गगने मुहुर्भ्राम्यन्भ्राम्यन्पतति गुणवृक्षे पुनरपि ॥ १५५ ॥ वासः काञ्चनपिञ्जरे नृपकराम्भोजैस्तनूमार्जनं भक्ष्यं स्वादुरसालदाडिमफलं पेयं सुधाभं पयः। पाठः संसदि रामनाम सततं धीरस्य कीरस्य मे हाहा हन्त तथापि जन्मविटपिक्रोडं मनो धावति ॥ १५६ ॥ सत्सांगत्यमवाप्य यः पुरवने नानारसास्वादवत्कीरः शास्त्रविचारचारुवचनैरानन्दकारी जने। दैवेनास्फुटवाक्प्रपञ्चपिहितं श्रोत्रस्य तस्याटवीं प्राप्तस्यात्मसभाप्रगल्भकपिषु स्यान्मौनमेवोचितम् ॥१५७॥ भ्रातः कीर कठोरचञ्चुकषणक्रोधायितैः कूजितैः किं माधुर्यनिषिक्तसूक्तिविशदः कण्ठावटुः शोष्यते। सेयं दैववशाद्दशा परिणता राजन्यपात्रस्य ते भिद्धैश्छिद्रितभित्तिमुद्रितघटः प्राप्तो यतः पञ्जरः ॥१५८॥ माणिक्यद्रवलिप्तमौक्तिकतुलां विभ्रन्ति नो दाडिमीबीजान्येष निरीक्षते न रमते हैमेऽप्यहो पञ्जरे। तत्तादृग्वनवाससंमदमहामोदैकमेदस्विनी वृत्तिर्मे गलितानया हतगिरेत्येवं शुकः शोचति ॥ १५९ ॥ याते यातमधःस्थिते स्थितमुपर्यालोकिते लोकितं यद्युद्यानशुकोऽयमाकलयते शुद्धान्तहस्तस्थितः। तत्सर्वं मणिभित्तिमेत्य भवतां छाया शुकाङ्गीकृतं तस्मिन्कर्णसुधां वितन्वति गिरं तूष्णीं किमु स्थीयते ॥ १६० ॥ स्वस्वव्यापृतिमग्नमानसतया मत्तो निवृत्ते जने चञ्चूकोटिविघट्टितारपुटो यास्याम्यहं पञ्जरात्। इत्थं कीरवरे मनोरथमयं पीयूषमास्वादयत्यन्तः संप्रविवेश वारणकराकारः फणिग्रामणीः ॥ १६१ ॥ दृष्ट्वा शाखावकीर्णं फलभरनमितं भूमिभागावनद्धं त्यक्त्वा शालप्रकाण्डं पनससमुपगतश्रिन्तयित्वेति कीरः। हत्वा चञ्चुं प्रहर्षाद्विगलितपयसा संभृताशेषपक्षो भिन्नश्चोड्डीय गन्तुं गगनपरिचिता या गतिः सापि नष्टा ॥ १६२ ॥ **काकः** ॥ वयं काका वयं काका जल्पन्तीति प्रगे[1] द्विकाः[2]। तिमिरारिस्तमो हन्यादिति शङ्कितमानसाः ॥ १६३ ॥ तुल्यवर्णच्छदः कृष्णः कोकिलैः सह संगतः। केन विज्ञायते काकः स्वयं यदि न भाषते ॥ १६४ ॥ अहो मोहो वराकस्य काकस्य यदसौ पुरः। सरीसर्ति नरीनर्ति यदयं शिखिहंसयोः ॥ १६५ ॥ आमरणादपि विरुतं कुर्वाणाः स्पर्धया सह मयूरैः। किं जानन्ति वराकाः काकाः केकारवं कर्तुम् ॥ १६६ ॥ तत्काक त्वयि युक्ताः कटुवाग्वैवर्ण्यधूर्तताशुचिताः। यदि विष्ठाकृमिपुष्टे तत्र न दोषा हि तच्चित्रम् ॥ १६७ ॥ विधिरेव विशेषगर्हणीयः[3] करट[4] त्वं रट[5] कस्तवापराधः। सहकारतरौ चकार यस्ते सह वासं सरलेन कोकिलेन ॥ १६८ ॥ काकस्य गात्रं यदि

१ प्रात.काले २. द्वौ ककारौ नाम्नि विद्येते येषां ते. ३ निन्द्य ४ काक ५. शब्द कुरु

काञ्चनस्य माणिक्यरत्नं यदि चञ्चुदेशे। एकैकपक्षे ग्रथितं मणीनां तथापि काको न तु राजहंसः॥ १६९॥ त्रोटीपुटं करट कुड्मलयाद्य तात यावत्प्रतिव्रजति नाकमयं मरालः। नो चेदमङ्गलकठोररवा विहंगाः सर्वे भुवीति निजसंसदि शंसिता नः॥ १७०॥ प्रत्यङ्गणं प्रतितरु प्रतिवारितीरं काकाश्चरन्ति चलचञ्चुपुटा रटन्तः। नो यान्ति तृप्तिमथ मण्डितपुण्डरीकखण्डे वसन्नहह तृप्यति राजहंसः॥ १७१॥ कृष्णं वपुर्वहतु चुम्बतु सत्फलानि रम्येषु संवसतु चूतवनान्तरेषु। पुंस्कोकिलस्य चरितानि करोतु कामं काकः कलध्वनिविधौ स तु काक एव॥ १७२॥ पथि निपतितां शून्ये दृष्ट्वा निरावरणाननां दधिभृतघटीगर्वोन्नद्धः समुद्धृतकन्धरः। निजसमुचितास्तास्ताश्चेष्टा विकारशताकुला यदि न कुरुते क्काणं काकः कदा नु मरिष्यति॥ १७३॥ गात्रं ते मलिनं तथा श्रवणयोरुद्वेगकृत्केङ्कृतं भक्ष्यं सर्वमपि स्वभावचपलं दुश्चेष्टितं ते सदा। एतैर्वायससंगतोऽस्य विनयैर्दोषैरमीभिः परं यत्सर्वत्र कुटुम्बवत्सलमतिस्तेनैव धन्यो भवान्॥ १७४॥ रूक्षस्यामधुरस्य चातिमलिनच्छायस्य धृष्टस्य च क्षुद्रस्य क्षतकारिणोऽतिचपलस्याह्लादविच्छेदिनः। येयं निम्बफलेषु काक भवतस्तिक्तेषु नैसर्गिकी प्रीतिस्तत्सदृशं विधेर्विलसितं निष्पन्नमेतच्चिरात्॥ १७५॥ कर्णारुंतुदमन्तरेण रणितं गाहस्व काक स्वयं माकन्दं मकरन्दशालिनमिह त्वां मन्महे कोकिलम्। धन्यानि स्थलवैभवेन कतिचिद्वस्तूनि कस्तूरिकां नेपालक्षितिपालफालपतिते पङ्केन शङ्केत कः॥ १७६॥ काक त्वं फलनम्रमाम्रविपिनं दैवात्समासादयन्किं कर्णौ बधिरीकरोषि परुषकेङ्कारकोलाहलैः। मौनं चेदवलम्बसे रतभरप्रक्कान्तपुंस्कोकिलभ्रान्त्यापि त्वयि संचरन्ति न कथं मुग्धाः कटाक्षच्छटाः॥ १७७॥ नो चारू चरणौ न चापि चतुरा चञ्चूर्न वाच्यं वचो नो लीलाचतुरा गतिर्न च शुचिः पक्षग्रहोऽयं तव। क्रूरक्रेङ्कृतिनिर्भरां गिरमिह स्थाने वृथैवोद्गिरन्मूर्ख ध्वाङ्क्ष न लज्जसेऽप्यसदृशं पाण्डित्यमुन्नाटयन्॥ १७८॥ यस्याकर्ण्य वचः सुधाकवलितं वाचंयमानामपि व्यग्राणि व्यथयन्ति मन्मथकथाश्चेतांसि चैत्रोत्सवे। रे रे काकवराक साकममुना पुंस्कोकिलेनाधुना स्पर्धाबन्धमुपेयुषस्तव तु किं लज्जापि नो जागरा॥ १७९॥ आलापं कलकण्ठिका न कुरुते कीरा न धीरध्वनिं व्याहारं कलयन्ति कोमलगिरः कूजन्ति नो बर्हिणः। नीराडम्बरदुर्दिनाम्बरतले दूरे द्विरेफध्वनिः काकाः केवलमेव केङ्कृतरवैः कुर्वन्ति कर्णज्वरम्॥ १८०॥ बन्धं लब्धवतः परस्य वदनं भिक्षाशया पश्यतः स्वावासच्युतिवेदनां विदधतः कान्तां विना सीदतः। भ्राम्यन्तः सह भार्यया प्रतिदिशं प्रत्यापगं प्रत्यगं कीरस्याध्ययनं हसन्ति विविधक्रीडालसा वायसाः॥ १८१॥ किं केकीव शिखण्डमण्डिततनुः किं कीरवत्पाठकः किं वा हंस इवाङ्गनागतिगुरुः सारीव किं सुस्वरः। किं वा हन्त शकुन्तबालपिकवत्कर्णामृतं स्यन्दते काकः केन गुणेन काञ्चन-

१ मथनम्. २. मौनिनाम्. ३. सह. ४ पक्षिविशेषः.

मये व्यापारितः पञ्जरे ॥ १८२ ॥ अत्रस्थः सखि लक्षयोजनगतस्यापि प्रियस्यागमं वेत्त्याख्याति च धिक्शुकादय इमे सर्वे पठन्तः स्थिताः । मत्कान्तस्य वियोगतापदहनज्वालावलीवारिदः काकस्तेन गुणेन काञ्चनमये व्यापारितः पञ्जरे ॥ १८३ ॥ अस्मिन्नम्भोदवृन्दध्वनिजनितरुषि प्रेक्षमाणेऽन्तरिक्षं मा काक व्याकुलो भूस्तरुशिखरशवक्रव्यलेशानशान । धत्ते मत्तेभकुम्भव्यतिकरकरजग्रामव्यग्राग्रजाग्रद्ग्रासव्यासक्तमुक्ताधवलितकवलो न स्पृहामत्र सिंहः ॥ १८४ ॥ बकः ॥ अम्भसि लीनान्दीनान्मीनान्कीनाशवन्नयसि । धिग्धिक्चलतां तव तां कुटिलद्विजलं बकोट बककोट ॥ १८५ ॥ एष बकः सहसैव विपन्नः श्लाघ्यमहो क्व नु तद्व्रतमस्य । साधु कृतान्त न कश्चिदपि त्वां वञ्चयितुं सुशवोऽपि समर्थः ॥१८६॥ न कोकिलानामिव मञ्जु गुञ्जितं न लब्धलास्यानि गतानि हंसवत् । न बर्हिणानामिव चित्रपक्षिताागुणस्तथाप्यस्ति बके बकव्रतम् ॥ १८७ ॥ बकोट ब्रूमस्त्वां लघुनि सरसि क्वापि शफरैस्तव न्याय्या वृत्तिर्न पुनरवगाढं समुचितः । इतश्चेतश्चाभ्रंलिहलहरिहेलातरलितक्षितिभ्रग्रासैकग्रहलमिति पोतः पतिरपाम् ॥ १८८ ॥ नैर्मल्यं वपुषस्तवास्ति वसतिः पद्माकरे जायते मन्दं याहि मनोरमां वद गिरं मौनं च संपादय । धन्यस्त्वं बक राजहंसपदवीं प्राप्तोऽसि किं तैर्गुणैर्नीरक्षीरविभागकर्मनिपुणा शक्तिः कथं लभ्यते ॥ १८९ ॥ जातिस्तस्य[1] न मानसेन शुचिभिर्वृत्तिर्मृणालाङ्कुरैर्न ब्रह्मोद्वहनेन निर्मलयशः प्राप्ता न वाचः कलाः । जीवत्सत्वधनेन बाह्यधवलो भ्राम्यन्सगर्वं पुनर्मिथ्यैवोन्नतकन्धरः शठबको हंसैः सह स्पर्धते ॥ १९० ॥ रे रे शिष्टबकोट नाकतटिनीतीरे तपस्विन्नतं ध्यानेनानिमिषोपभोगमनसा युक्तं करोषीदृशम् । एवं यत्किल मानसस्य पदवीं काङ्क्षस्ययुक्तं हि तन्नीरक्षीरविवेकनिर्मलधियो हंसस्य नान्यस्य वा ॥ १९१ ॥ न भ्रूणां स्फुरणं न चञ्चुचलनं नो चूलिकाकम्पनं न ग्रीवाचलनं मनागपि न यत्पक्षद्वयोत्क्षेपणम् । नासाग्रे क्षणमेकपाददमनं कष्टैकनिष्ठं परं यावत्तिष्ठति हीनमीनवदनस्तावद्बकस्तापसः ॥ १९२ ॥ खद्योतः ॥ जर्जरतृणाग्रमदहन्सर्षपकणवत्प्रकाशयन्नूनम् । कीटत्वमात्मतत्त्वात्खद्योत ख्यापयस्यवनिम् ॥ १९३ ॥ घनसन्तमसमलीमस दशदिशि निशि यद्विराजसि तदन्यत् । कीटमणे दिनमधुना तरणिकरान्तरितसितकिरणम् ॥ १९४ ॥ इन्दुः प्रयास्यति विनश्यति तारकश्रीः स्थास्यन्ति लीढतिमिरा न मणिप्रदीपाः । अन्धं समग्रमपि कीटमणे भविष्यत्युन्मेषमेष्यति भवानपि दूरमेतत् ॥१९५॥ अदृष्टव्यापारं गतवति दिनानामधिपतौ यशःशेषीभूते शशिनि गतधाम्नि ग्रहगणे । तथा ध्वान्तं जातं जगदुपगते मेघसमये यथामी गण्यन्ते तमसि पटवः कीटमणयः ॥ १९६ ॥

---

१ जन्म २. शुभ्रे ३ जीवनम् ४. ब्रह्मण उद्वहनेन वाहनतया पृष्ठे धारणेन ५ जीवन्तो ये सत्वा मत्स्यादयस्तद्रूपेण धनेन हेतुना. ६ दर्शनव्यापाररहितं यथा स्यात्तथा. ७. यशोमात्रावशिष्टे ८ गततेजसि.

## स्थलचरान्योक्तयः ।

सिंहः ॥ एकोऽहमसहायोऽहं कृशोऽहमपरिच्छदः । स्वप्नेऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥ १ ॥ मृगेन्द्रं वा मृगारिं वा सुखं व्याहरतां जनः । तस्योभयमपि श्लाघ्यं क्रीडादलितदन्तिनः ॥ २ ॥ मृगेभ्यो रक्ष्यते क्षेत्रं नरैस्तृणमयैरपि । सिंहाक्रान्तं पुनर्मूढ न हयैर्न च दन्तिभिः ॥ ३ ॥ मृगैर्नष्टं शशैर्लीनं वराहैश्चलितं स्थलात् । हयानां हेषितं श्रुत्वा सिंहैः पूर्ववदासितम् ॥ ४ ॥ खनन्नाखुबिलं सिंहः पाषाणशकलाकुलम् । प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥ ५ ॥ जीर्णोऽपि क्रमहीनोऽपि कृशोऽपि यदि केसरी । तथापि यूथनाथस्य शङ्कातङ्काय कल्पते ॥ ६ ॥ नाभिषेको न संस्कारः सिंहस्य क्रियते वने । विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ ७ ॥ वेतण्डगण्डकण्डूतिपाण्डित्यपरिपन्थिना । हरिणा हरिणालीषु कथ्यतां कः पराक्रमः ॥ ८ ॥ उत्तुङ्गमत्तमातङ्गमस्तकन्यस्तलोचनः । आसन्नेऽपि च सारंगे न वाञ्छां कुरुते हरिः ॥ ९ ॥ जातः स्तन्यं न जग्राह कण्ठीरवकिशोरकः । चक्षुर्व्यापारयामास कुञ्जे कुञ्जरशालिनि ॥ १० ॥ वरमुन्नतलाङ्गूलात्सदाधूननभीषणात् । सिंहात्पादप्रहारोऽपि न शृगालाधिरोहणम् ॥ ११ ॥ यस्मिञ्जीवति सिंहे वनमिदमासीद्दुरासदं द्विरदैः । घटयन्ते कटिसूत्रं तस्य स्वराभिः शबरशिशवः ॥ १२ ॥ एकाकिनि वनवासिन्यराजलक्ष्मण्यनीतिशास्त्रज्ञे । सत्त्वोच्छ्रिते मृगपतौ राजेति गिरः परिणमन्ति ॥ १३ ॥ अनिशं मतंगजानां बृंहितमाकर्ण्यते यथा विपिने । मन्ये तथा न जीवति गजेन्द्रपलकवलनः सिंहः ॥ १४ ॥ यद्यपि च दैवयोगात्सिंहः पतितोऽतिदुस्तरे कूपे । तदपि च वाञ्छति सततं करिकुम्भविदारणं मनसि ॥ १५ ॥ यद्यपि रटति सरोषं मृगपतिपुरतोऽपि मत्तगोमायुः । तदपि न कुप्यति सिंहोऽप्यसदृशपुरुषेषु कः कोपः ॥ १६ ॥ जठरज्वलनज्वलताप्यपगतशङ्कं समागतापि पुरः । करिणामरिणा हरिणा हरिणाली हन्यतां नु कथम् ॥ १७ ॥ हेलाविदलितकरिकुल कण्ठीरव कीदृशः प्रकोपोऽयम् । लोले बालशृगाले केवलकोलाहलाधारे ॥ १८ ॥ गर्जितमाकर्ण्य मनागङ्के मातुर्निशार्धजातोऽपि । हरिशिशुरुत्पतितुं द्रागङ्गान्याकुञ्च्य लीयते निभृतम् ॥ १९ ॥ वयोऽभिमानादपमानता चेद्विधीयते फेरुजरत्तरेण । हेलाहतानेककरीन्द्रयूनोर्हरीन्द्रसूनोरपि कापि हानिः ॥ २० ॥ भिनत्ति भीमं करिराजकुम्भं बिभर्ति वेगं पवनादतीव । करोति वासं गिरिगह्वरेषु तथापि सिंहः पशुरेव नान्यः ॥ २१ ॥ गम्यते यदि मृगेन्द्रमन्दिरे लभ्यते करिकपोलमौक्तिकम् । जम्बुकालयगतेन लभ्यते वत्सपुच्छखुरचर्मखण्डनम् ॥ २२ ॥ येन भिन्नकरिकुम्भविस्खलन्मौक्तिकावलिभिरञ्चिता मही । अद्य तेन हरिणान्तिके कथं कथ्यतां न हरिणा परा-

१. परिवारहीन. २ पराक्रमरहित. ३ मत्तगजानाम्. ४ वैरिणा. ५ मृगपङ्क्तिषु ६ मृगे. ७. सिंहः. ८. पुच्छम् ९. कम्पनम्. १०. राजचिह्नरहिते. ११. बलोन्नते. १२. गर्जितम्. १३. हस्तिमांसग्राहक.

क्रमः ॥ २३ ॥ हरिरलसविलोचनः सहेलं बकमवलोक्य पुनर्जगाम निद्राम् । अधिगतपतिविक्रमास्तभीतिर्न तु वनितास्य विलोकयांचकार ॥ २४ ॥ उत्तुङ्गशैलशिखरस्थितपादपस्य काकोऽपि पक्वफलमालभते सपक्षः । सिंहो बली गजविदारणदारुणोऽपि सीदत्यहो तरुतले खलु हीनपक्षः ॥ २५ ॥ अन्तर्बलान्यहममुष्य मृगाधिपस्य वाचा निवेद्य कथमद्य लघूकरोमि । जानन्ति किं तु करजक्षतकुम्भिकुम्भनिर्मुक्तमौक्तिकमयानि वनान्तराणि ॥२६॥ आबद्धकृत्रिमसटाजटिलांसभित्तिरारोपितो मृगपतेः पदवीं यदि श्वा । मत्तेभकुम्भतटपाटनलम्पटस्य नादं करिष्यति कथं हरिणाधिपस्य ॥ २७ ॥ भिन्ना महागिरिशिलाः करजाग्रजाग्रदुद्दामशौर्यनिकरैः करटिभ्रमेण । दैवे पराचि करिणामरिणा तथापि कुत्रापि नापि खलु हा पिशितस्य लेशः ॥ २८ ॥ पारीन्द्रशावक न तावकरीतिरेषा वेषान्तरैर्विहरासि श्वशृगालशावैः । कुम्भीन्द्रकुम्भदलनोत्पतनाक्रमेच्छां वंशोचितं न खलु रीतिमुरीकरोषि ॥ २९ ॥ दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः । इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥३०॥ न यत्र स्थेमानं दधुरतिभयभ्रान्तनयनागलद्दानोद्रेकभ्रमदलिकदम्बा करटिनः । लुठन्मुक्ताहारे भवति परलोकं गतवतो हरेरद्य द्वारे शिव शिव शिवानां कलकलः ॥ ३१ ॥ कुरंगीणां यूथं निभृतमिदमङ्गीकृतभयं निरातङ्को यन्निर्दयहृदयभावोऽर्दयतु तत् । निवेद्यो वा कस्मिन्नयमविनयः केसरियुवा हठान्मत्तेभानां युवतिषु विधत्ते नखपदम् ॥ ३२ ॥ स्थिति नो रे दध्याः क्षणमपि मदान्धेक्षण सखे गजश्रेणीनाथ त्वमिह जटिलायां वनभुवि । असौ कुम्भिभ्रान्त्या खरनखरविद्रावितमहागुरुग्रावग्रामः स्वपिति गिरिगर्भे हरिपतिः ॥ ३३ ॥ पिब स्तन्यं पोत त्वमिह मददन्तावलधिया दृगन्तानाधत्से किमिति हरिदन्तेषु परुषान् । त्रयाणां लोकानामपि हृदयतापं परिहरन्नयं धीरं धीरं ध्वनति नवनीलो जलधरः ॥ ३४ ॥ क्षुद्राः सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्धतास्तस्यैकस्य पुरस्तवी महिमहः सिंहस्य विश्वोत्तरम् । केलिः कोलकुलैर्मदो मदकलैः कोलाहलो नाहलैः संहर्षो महिषैश्च यस्य मुमुचे साहंकृते हुंकृते ॥ ३५ ॥ कोलः केलिमलंकरोतु करिणः क्रीडन्तु कान्तासखाः कासारे वनकेसराः सरभसं मज्जन्त्विह स्वेच्छया । अभ्यस्यन्त्विभयोषिताश्च हरिणा भूयोऽपि रूपां गतिं कान्तारान्तरसंचरिष्णुरधुना पञ्चाननो वर्तते ॥ ३६ ॥ नास्योच्छ्रायवती तनुर्न दशनौ नो दीर्घदीर्घैः करः सत्यं वारण नैष केसरिशिशुस्त्वाडम्बरैः स्पर्धते । तेजोबीजमजेयमस्य हृदये न्यस्तं पुनर्वेधसा तादृक्तादृशमेव येन सुतरां भोज्यं पशुं मन्यते ॥३७॥ क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशामापन्नोऽपि विपन्नदीधितिरपि प्राणेषु गच्छत्स्वपि । मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः किं जीर्णं तृणमत्ति मानमहता-

१. गजा.. २. स्थितिम्. ३ सिंहस्य. ४. क्रोष्ट्रीनाम्. ५. नीचाः ६. शुण्डादण्ड.. ७. क्षुधया कृश.. ८. क्षीणतेजा..

मग्रेसरः केसरी ॥ ३८ ॥ येनानर्गलकालकेलिकलितप्रत्यग्रकादम्बिनी धाराधोरणिधौतधातुषु पुरा शैलेषु लीलायितम्। सोऽयं शृङ्गनिपातभग्नचरणः स्फारस्फुरत्फेरवीफूत्कारैः कुपितोऽद्य खादति मुहुः पाणी मृगग्रामणीः ॥ ३९ ॥ ग्रामाणामुपशल्यसीमानि मदोद्रेकस्फुरत्सौष्ठवाः फेत्कारध्वनिमुद्गिरन्ति बहवः संभूय गोमायवः। सोऽन्यः कोऽपि घनाघनध्वनिघनः पारीन्द्रगुञ्जारवः शुष्यद्गण्डमलोलशुण्डमचलत्कर्णं गतैर्यैः श्रुतः ॥ ४० ॥ एणः क्रीडति शूकरश्च खनति द्वीपी च गर्वायते क्रोष्टा क्रन्दति वल्गते च शशको वेगाद्रुरुर्धावति। निःशङ्कः करिपोतकस्तरुलतामुन्मोटते लीलया हंहो सिंह विना त्वयाद्य विपिने कीदृग्दशा वर्तते ॥ ४१ ॥ हे मातङ्ग मदाम्बुडम्बरतया रोलम्बरोलम्बवद्वन्यानामवलम्बनं वनमिदं भुक्तं यदुत्कण्ठसे। दृष्टस्तात्किमहो महोन्नतधराधौरेयधात्रीधरप्रस्थप्रस्थितमेघयूथमथ नोत्कण्ठेन कण्ठीरवः ॥ ४२ ॥ यस्याविन्ध्यरुषः प्रतापवसतेर्नादेन धैर्यद्रुहः शुष्यन्ति स्म मदप्रवाहसरितः सद्योऽपि दिग्दन्तिनाम्। दैवात्कष्टदशावशंगतवतः सिंहस्य तस्याधुना कर्षन्त्येव करेण केसरसटाभारं जरत्कुञ्जराः ॥ ४३ ॥ यः शौर्यावधिरेव यस्य सहसा दिग्दन्तिनोऽप्यन्तिकं नायाताः किल येन विन्ध्यवसुधा गम्या न कस्याप्यभूत्। तस्मिन्कौतुकिना त्वया करिपतौ लुप्ते कपोलस्थली भृङ्गः केसरिवीर संप्रति पुनः कुत्रैष विश्राम्यतु ॥ ४४ ॥ यूना येन विभिन्नवारणघटाकुम्भोच्छलन्मौक्तिकश्रेणीभिः परिपूरितास्तटभुवो भूमीभृतां कोटिशः। तस्यैवाद्य निवाससीम्नि कलभाः क्रीडन्ति निःसाध्वसं पारीन्द्रस्य जरातुरस्य तदहो जीर्णो जिगीषारसः ॥ ४५ ॥ कः कः कुत्र न घुर्घुरायितघुरीघोरो घुरेच्छूकरः कः कः कं कमलाकरं विमलकं कर्तुं करी नोद्यतः। के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥ ४६ ॥ मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः सारङ्गा महिषा मदं व्रजत किं शून्येषु शूरा न के। कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुरः सिन्धुध्वानिनि हुंकृते स्फुरति यत्तद्गर्जितं गर्जितम् ॥ ४७ ॥ निष्कन्दामरविन्दिनीस्थपुटितोद्देशाङ्कसेतुस्थलीं जम्बालाविलमम्बु कर्तुमितरा सूते वराही सुतान्। दंष्ट्रायां चतुरर्णवोर्मिपटलैराप्लावितायामियं यस्या एव शिशोः स्थिता वसुमती सा पौत्रिणी पुत्रिणी ॥ ४८ ॥ काकः पक्षबलेन भूपतिगृहे ग्रासं यदि प्राप्तवान्किवा तस्य महत्त्वमस्य लघुता पञ्चाननस्यागता। येनाक्रम्य करीन्द्रगण्डयुगलं निर्भिद्य हेलालवाल्लब्ध्वा ग्रासवरं वराटकधिया मुक्तागणस्त्यज्यते ॥ ४९ ॥ निद्रामीलितलोचनो मृगपतिर्यावद्गुहां सेवते तावत्स्वैरममी चरन्तु हरिणाः स्वच्छन्दसंचारिणः। उन्निद्रस्य विधूतकेसरसटाभारस्य निर्गच्छतो नादे श्रोत्रपथं गते गतधियः सन्त्वेव दीर्घायुषः ॥ ५० ॥ **गजः** ॥

गजस्य पङ्कमग्नस्य त्रपाकरमिदं महत्। पारमुद्धृत्य यद्गच्छन्हरिणोऽपि हसत्यसौ ॥ ५१ ॥

---

१ नूतनमेघमाला. २. जम्बुकी ३ सफलकोपस्य ४. वृद्धगजा ५ सिंहस्य ६. कपर्दकबुद्ध्या.

मलोत्सर्गं गजेन्द्रस्य मूर्ध्नि काकः करोति चेत् । कुलानुरूपं तत्तस्य यो गजो गज एव सः ॥ ५२ ॥ ग्रासाद्गलितसिक्थस्य किं गतं करिणा भवेत् । पिपीलिकस्तु तेनैव सकुटुम्बोऽपि जीवति ॥ ५३ ॥ बन्धनस्थो हि मातङ्गः सहस्रभरणक्षमः । अपि स्वच्छन्दचारी श्वा स्वोदरेणापि दुःखितः ॥ ५४ ॥ अन्तर्वसति मार्जारी शुनी वा राजवेश्मनि । बहिर्बद्धोऽपि मातङ्गस्ततः किं लघुतां गतः ॥ ५५ ॥ कूपे पयसि लघीयसि तापेन करः प्रसारितः करिणा । सोऽपि न पयसा लिप्तो लाघवमात्मा परं नीतः ॥ ५६ ॥ यदि मत्तोऽसि मतंगज किममीभिरसारसरलतरुदलनैः । हरिमनुसर खरनखरं व्यपनेष्यति ते स करटकण्डूतिम् ॥ ५७ ॥ कलभ तवान्तिकमागतमलिमेनं मा कदाप्यवज्ञासीः । अपि दानसुन्दराणां द्विपधुर्याणामयं शिरोधार्यः ॥ ५८ ॥ लीलामुकुलितनयनं कि सुखशयनं समातनुषे । परिणामविषमहरिणा करिनायक वर्धते वैरम् ॥ ५९ ॥ आपातालगभीरे मज्जति नीरे निदाघसंतप्तः । न स्पृशति पल्वलाम्भः पञ्जरशेषोऽपि कुञ्जरः क्वापि ॥ ६० ॥ गिरिगह्वरेषु गुरुगर्वगुम्फितो गजराजपोत न कदापि संचर । यदि बुद्ध्यते हरिशिशुः स्तनंधयो भविता करेणुपरिशेषिता मही ॥ ६१ ॥ केलिं[1] कुरुष्व परिभुङ्क्ष्व सरोरुहाणि गाहस्व शैलतटनिर्झरिणीपयांसि । भावानुरक्तकरिणीकरलालिताङ्ग मातङ्ग मुञ्च मृगराजरणाभिलाषम् ॥ ६२ ॥ भो भोः करीन्द्र दिवसानि कियन्ति तावदस्मिन्मरौ[3] समतिर्वाहय[4] कुत्रचित्त्वम् । रेवाजलैर्निजकरेणुकरप्रयुक्तैर्भूयः शमं गमयितासि निदाघदाहम् ॥६३॥ दानार्थिनो[5] मधुकरा यदि कर्णतालैर्दूरीकृताः करिवरेण मदान्धबुद्ध्या । तस्यैव गण्डयुगमण्डनहानिरेषा भृङ्गाः पुनर्विकचपद्मवने[6] चरन्ति ॥ ६४ ॥ लाङ्गूलचालनमधश्चरणावपातं[7] भूमौ निपत्य वदनोदरदर्शनं च । श्वा पिण्डदस्य कुरुते गजपुंगवस्तु[8] धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ६५ ॥ न गृह्णाति ग्रासं न च कमलकिञ्जल्किनि जले न पङ्कैर्वाह्लादं विशति विसभङ्गार्धशबलैः । ललन्तीं प्रेमार्द्रामपि विषहते नान्यकरिणीं स्मरन्दावभ्रष्टां हृदयदयितां वारणपतिः ॥६६॥ गले पाशस्तीव्रश्चरणयुगले गाढनिगडो दृढं स्कन्धे बद्धः शिरसि सृणिपातः[9] खरतरः । नरः स्कन्धारूढो बत रमणयोग्येऽपि विषये न जानीमोऽत्यर्थं द्विरद वद कस्मात्तव मदः ॥ ६७ ॥ निषेवन्तामेते वृषमाहिषमेषाश्च हरिणा गृहाणि क्षुद्राणां कतिपयतृणैरेव सुखिनः । गजानामास्थानं मदसलिलजम्बालितभुवां तदेकं विन्ध्याद्रेर्विपिनमथवा भूपसदनम् ॥ ६८ ॥ जहीहि गुरुगर्जितं विजहि शुण्डया सीत्कृतं परिभ्रमशतैर्वन किमु गजेन्द्र गर्वायसे । यथा न किल केसरी गिरिदरीषु निद्रां त्यजन्विमूर्च्छयति जृम्भया सुभग तावकीनं मनः ॥६९॥ रे चाञ्चल्यजुषो मृगा श्रितनगाः कल्लोलमालाकुलामेतामम्बुधिगामिनीं व्यवसिताः संगा-

---

१ क्रीडाम् २. मज्जनं कुरु ३. मरुदेशे ४. यापय. ५ दानोदकार्थिन . ६. प्रफुल्लकमलवने. ७. पुच्छविक्षेपणम्. ८. गजश्रेष्ठ . ९ अङ्कुशपात.

हितुं वा कथम् । अत्रैवोच्छलदम्बुनिर्भरमहावर्त्तैः समावर्तितो यद्वाविव रसातलं पुनरसौ यातो गजग्रामणीः ॥ ७० ॥ नीवारप्रसवाग्रमुष्टिकवलैर्यो वर्धितः शैशवे पीतं येन सरोजपत्रपुटके होमावशेषं पयः । तं पश्चान्मदमन्थरालिवलयव्यालुप्तगण्डं गजं सानन्दं सभयं च पश्यति मुहुर्दूरे स्थितस्तापसः ॥ ७१ ॥ कर्णे चामरचारुचञ्चुकलिकाः कण्ठे मणीनां गणाः सिन्दूरप्रकरः शिरःपरिसरे पार्श्वान्तिके किङ्किणी । लब्धश्चेन्नृपवाहनेन करिणा बद्धेन भूषाविधिस्तत्किं भूधरधूलिधूसरतनुर्मान्यो न वन्यः करी ॥ ७२ ॥ पीतं यत्र हिमं पयः कवलिता यस्मिन्मृणालाङ्कुरास्तापार्तेन निमज्ज्य यत्र सरसो मध्ये विमुक्तश्रमः । धिक्तस्यैव जलानि पङ्किलयतः पाथोजिनीं मथ्नतो मूलान्युत्खनत. करीन्द्र भवतो लज्जापि नो जायते ॥ ७३ ॥ तापो नापगतस्तृषा न च कृशा धौता न धूली तनोर्न स्वच्छन्दमकारि कन्दकवलः का नाम केलीकथा । दूरोत्क्षिप्तकरेण हन्त करिणा स्पृष्टा न वा पद्मिनी प्रारब्धो मधुपैरकारणमहो झाङ्कारकोलाहलः ॥ ७४ ॥ नाभूवन्भुवि यस्य कुत्रचिदपि स्पर्धाकराः कुञ्जराः सिंहेनापि न लङ्घिता किमपरं यस्योद्धता पद्धतिः । कष्टं सोऽपि कदर्थ्यते करिवरः स्फाररवैः फेरवैरापातालगभीरपङ्कपटलीमग्नोऽद्य भग्नोद्यमः ॥ ७५ ॥ पादाघातविघूर्णिता वसुमती त्रासाकुलाः पक्षिणः पङ्काङ्कानि सरांसि गण्डकषणक्षोदक्षताः शाखिनः । प्राप्येदं करिपोतकैर्विधिवशाच्छार्दूलशून्यं वनं तत्तन्नाम कृतं विशृङ्खलतया वक्तुं न यत्पार्यते ॥७६॥ आरामोऽयमनर्गलेन बलिना भग्नः समग्रो मयेत्यन्तः संभृतहर्षवर्धितमदोदग्रः किमुन्माद्यसि । मातङ्ग प्रतिवर्षमेव भवतो भावी निदाघज्वरस्तत्रापि प्रतिकारमर्हसि सखे सम्यक्समालोचितुम्॥७७॥कौपं वारि विलोक्य वारणपते किं विस्मितेनास्यते प्रायो भोजनमस्य संप्रति भवांस्तत्पीयतामादरात् । उन्मज्जच्छफरीपुलिन्दललनापीनस्तनास्फालनस्फारीभूतमहोर्मिनिर्मलजला दूरेऽधुना नर्मदा ॥ ७८ ॥ नो मन्ये दृढबन्धनात्क्षतमिदं नैवाङ्कुशाघातनं स्कन्धारोहणताडनात्परिभवं नैवान्यदेशागमम् । चिन्तां मे जनयन्ति चेतसि यथा स्मृत्वा स्वयूथ्या वने सिंहत्रासितभीतभीरुकलभा यास्यन्ति कस्याश्रयम् ॥ ७९ ॥ पत्युर्यत्पातितावशेषकवलग्रासेन वृत्तिः कृता पीतं यच्च करावगाहकलुषं तत्पीतशेषं पयः । प्राणान्पूर्वतरं विहाय तदिदं प्राप्तं करिण्या फलं यद्बन्धव्रणकातरस्य करिणः क्लिष्टं न दृष्टं मुखम् ॥८०॥ क्रीडाकारि तडागवारिणि गतातङ्कं न पङ्केरुहैर्वल्ली काचन शल्लकी तरुगतानाकर्पिता हर्षतः । नाश्लिष्टा करिणी करेण करिणा कामातुरेणामुना दंष्ट्राभिर्विकटानन' शिव शिव व्यालोकि पञ्चाननः ॥८१॥ सान्द्रामोदवतीः स्वकीयवसतीः पङ्केरुहाणां ततीस्त्यक्त्वायं भ्रमर करीन्द्र भवतामभ्याशमभ्यागतः । एतच्चेतसि संप्रधार्य जगतीविख्यातदानैस्तथा युष्माभिः क्रियतां यथोपरमते हास्याय नास्यागमः ॥ ८२ ॥ ऊर्णा नैष दधाति नापि विषयो वाहस्य दो-

१ तृणधान्यानि. २. धिक्क्रियते. ३ हतप्रयत्न ४. पात्रम् ५. शबरस्त्री ६. करिशावका..

हस्य वा तृप्तिर्नास्य महोदरस्य बहुशो घासैः पैलालैरपि । हा कष्टं चिरमस्य पृष्ठशिखरे गोणीसमारोपणे को गृह्णाति कपर्दकैरयमिति ग्राम्यैर्गजो हस्यते ॥ ८३ ॥ घासग्रासं गृहाण त्यज करिकलभप्रीतिबन्धं करिण्याः पाशग्रन्थिव्रणानामविरलमधुना देहि पङ्कानुलेपम् । दूरीभूतास्तवैते शबरवरवधूविभ्रमोद्भ्रान्तदृश्या रेवातीरोपकण्ठच्युतकुसुमरजोधूसरा विन्ध्यपादाः ॥ ८४ ॥ यूथान्यग्रेगतानि प्रबलबलभृतो बद्धवैरा मृगेन्द्रा मूलादाकृष्यमाणाः सपदि तटरुहो भूरुहा निष्पतन्ति । दृष्ट्वा हृष्यन्ति हन्त प्रतिदिनमखिला भिल्लपल्ल्या अधीशा हस्तालम्बाय केषां कलयतु वदनं पङ्कमग्नः करीन्द्रः ॥ ८५ ॥ **मृगः** ॥ इह किं कुरंगशावक केदारे कलममञ्जरीं त्यजसि । तृणधन्वा तृणबाणस्तृणघटितः कपटपुरुषोऽयम् ॥ ८६ ॥ तृणमुखमपि न खलु त्वां त्यजन्ति हे हरिण वैरिणः शबराः । यशसैव जीवितमिदं त्यज योजितशृङ्गसंग्रामः ॥ ८७ ॥ कति कति न मदोद्धताश्चरन्ति प्रतिशिखरं प्रतिकाननं कुरंगाः । क्वचिदपि पुनरुत्तमा मृगास्ते मदयति यन्मद एव मेदिनीशान् ॥ ८८ ॥ अयि कुरंगि तपोवनविभ्रमादुपगतासि किरातपुरीमिमाम् । इह न पश्यसि दारय मारय ग्रस पिबेति शुकानपि जल्पतः ॥ ८९ ॥ सेयं स्थली वनतृणाङ्कुरजालमेतत्सेयं मृगीति हृदि जातमुदः कुरंगः । नैवं तु वेत्ति यदिहान्तरितो लताभिरायाति सज्जितकठोरशरः किरातः ॥ ९० ॥ रोमन्थमारचय मन्थरमेत्य निद्रां मुञ्च श्रमं तदनु संचर रे यथेच्छम् । दूरे स पामरजनो मुनयः किलैते निष्कारणं हरिणपोत बिभेषि कस्मात् ॥ ९१ ॥ एणीगणेषु गुरुगर्वनिमीलिताक्षः किं कृष्णसार खलु खेलसि काननेऽस्मिन् । सीमामिमां कलय भिन्नकरीन्द्रकुम्भमुक्तामयीं हरिविहारवसुंधरायाः ॥ ९२ ॥ द्रुततरमितो गच्छ प्राणैः कुरंग वियुज्यसे किमिति वलितग्रीवं स्थित्वा मुहुर्मुहुरीक्षसे । विदधति हतव्याधानां ते मनागपि नार्द्रतां कठिनमनसामेषामेते विलोकितविभ्रमाः ॥ ९३ ॥ स्थलीनां दग्धानामुपरि मृगतृष्णामुपसरंस्तृषार्तः सारङ्गो विरमति न खिन्नेऽपि मनसि । अजानानस्तत्त्वं न स मृगपतेऽन्यत्र सरसीमभूमौ प्रत्याशा न च फलति विघ्नं च कुरुते ॥ ९४ ॥ अग्रे व्याधः करधृतशरः पार्श्वतो जालमाला पृष्ठे वह्निर्दहति नितरां संनिधौ सारमेयाः । एणी गर्भादलसगमना बालकै रुद्धपादा चिन्ताविष्टा वदति हि मृगं किं करोमि क्व यामि ॥ ९५ ॥ सौरभ्येण त्रिभुवनमनोहारिणा काननेऽस्मिन्सत्कस्तूरीहरिण भवता वासितो दिग्विभागः । तस्यैतत्ते फलमुपगतं पत्रिभिर्लुब्धकानां विद्धः प्राणांस्त्यजसि न गुणः श्रेयसे निर्गुणेषु ॥ ९६ ॥ अल्पायासवलेन यत्र पतनं कृच्छ्रेण यत्रोन्नतिर्द्वारे वेत्रलतावितानगहने कष्टप्रवेशक्रमः । हे सारंग मनोरमा वनभुवस्त्यक्त्वा विशेषार्थिना किं भूभृत्कटकास्थितव्यसानिना व्यर्थं खुराः शातिताः ॥ ९७ ॥ सारंगो न लतागृहेषु रमते नो पांशुले भूतले नो रम्यासु वनोपकण्ठहरितच्छायासु शीता-

१ धान्यत्वग्भिः २ तपोवनभ्रान्त्या. ३. हरिणीसंघेषु ४. जानीहि ५ सिंहविहारस्थानस्य. ६ श्वानः.

स्वपि। तामेवायतलोचनामनुदिनं ध्यायन्मुहुः प्रेयसीं शैलेन्द्रोदरकन्दरासु गतधीः शृङ्गावशेषः स्थितः ॥ ९८ ॥ आः कष्टं वनवाससाम्यकृतया सिद्धाश्रमश्रद्धया पद्धीं बालकुरंग संप्रति कुतः प्राप्तोऽसि मृत्योर्मुखम्। यत्रानेककुरंगकोटिकदनक्रीडोल्लसल्लोहितस्रोतोभिः परिपूरयन्ति परिखामुड्डामराः पामराः ॥ ९९ ॥ स्वच्छन्दं हरिणेन या विरहिता दैवात्समासादिता भङ्गप्रस्नुतदुग्धबिन्दुमधुरा शालेर्नवा मञ्जरी। निःश्वासानलदग्धकोमलतृणप्रख्यापितान्तर्व्यथस्तामेव प्रतिवासरं मुनिरिव ध्यायन्वने शुष्यति ॥ १०० ॥ त्यक्तं जन्मवनं तृणाङ्कुरवती मातेव मुक्ता स्थली विश्रान्तिस्थितिहेतवो न गणिता बन्धूपमाः पादपाः। बालापत्यवियोगकातरमुखी त्यक्तार्धमार्गे मृगी मृग्यन्तः पदवीं तथाप्यकरुणा व्याधा न मुञ्चन्ति माम् ॥ १०१ ॥ यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूपे न चाटून्मृषा नैषां गर्वगिरः शृणोषि न च तान्प्रत्याशया धावसि। काले बालतृणानि खादसि परं निद्रासि निद्रागमे तन्मे ब्रूहि कुरंग कुत्र भवता किं नाम तप्तं तपः ॥ १०२ ॥ नात्र व्याधशराः पतन्ति परितो नैवात्र दावानलो नाप्युच्चावचभीतिरस्ति कुहचिन्नो वागुरा भङ्गुराः। पर्यालोच्य कुरंगकेन विहितो नक्षत्रनाथाश्रयो नो जानाति यदत्र दास्यति विधिः स्वर्भानुदन्तव्रणम् ॥ १०३ ॥ व्योमार्धे ज्वलितो रविः कवलितं दावानलैः काननं धूम्याभिर्निदिशः स्फुरन्ति परितः पन्था शिलादन्तुरः। इत्थं लोहितसिक्तसृक्कणि यथा प्राणं मृगे धावति व्याधेनापि शरासने करुणया नारोपिताः पत्रिणः ॥ १०४ ॥ शृङ्गं कन्दाशनानां नयनमृगदृशां कर्णयुग्मं च गीते व्याधे जीवोऽर्पिता त्वग्वसनमिव मुनेर्जिह्वलौल्ये हि मांसम्। चन्द्रे दत्तः कलङ्कस्त्वरितपदगतिः कातराणां हि दत्ता सारंगैर्नैव तुल्या बलिसगरनलाः कर्णजीमूतकाद्याः ॥ १०५ ॥

करभः ॥ वपुर्विषमसंस्थानं कर्णज्वरकरो रवः। करभस्याशुगत्यैव छादिता दोषसंहतिः ॥ १०६ ॥ दासेरको रसत्येष युक्तं भारेऽधिरोहति। उत्तार्यमाणोऽपि पुनर्यत्तत्र किमु कुर्महे ॥ १०७ ॥ दुःप्रापमम्बु पवनः परुषोऽतितापी छायाभृतो न तरवः फलभारनम्राः। इत्थं सखे करभ वच्मि भवन्तमुच्चैः का संगतिः खलु मरौ रमणीयतायाः ॥ १०८ ॥ अस्मानवस्य भवतः खलु कोटिरेषा कण्टारिका यदि भवेदविशीर्णपर्णा। योग्याः कथं करभ कल्पतरोर्लतायास्ते पल्लवा विमलविद्रुमभङ्गभाजः ॥ १०९ ॥ रूक्षं वपुर्न च विलोचनहारि रूपं न श्रोत्रयोः सुखदमारटितं कदापि। इत्थं न साधु तव किंचिदिदं च साधु तुच्छे रतिः करभ कण्टकिनि द्रुमे यत् ॥ ११० ॥ कुमुदशबलैः फुल्लाम्भोजैः सरोभिरलंकृतां मरकतमणिश्यामां शष्पैर्विहाय वनस्थलीम्। स्मरति करभो यद्वृक्षाणां चरन्मरुधन्वनां परिचयरतिः सा दुर्वारा न सा गुणवैरिता ॥ १११ ॥ करभदयिते योऽसौ पीलुस्त्वया मधुलुब्धया व्यपगतघनच्छायस्त्यक्तो न सादरमीक्षितः। चलकिसलयः सोऽपीदानीं प्ररूढन-

---

१ उष्ट्रस्य. २. शीघ्रगमनेन. ३. बालतृणै. ४. पीलुवृक्षः. ५. पल्लव.

वाङ्कुरः करभदयिताव्रन्दैरन्यैः सुखं परिभुज्यते ॥ ११२ ॥ करभदयिते यत्तत्पीतं सुदुर्लभमेकदा मधुवनगतं तस्यालाभे विरौषि किमुत्सुका । कुरु परिचितैः पीलोः पत्रैर्धृतिं मरुगोचरैर्जगति सकले कस्यावाप्तिः सुखस्य निरन्तरम् ॥ ११३ ॥ यस्मिन्नुच्चैर्विषमगहनान्तर्गता स्वादुवल्ली स्वेच्छं मुक्तासरलितगले नात्मचेतोऽनुलग्ना । तत्तारुण्यं करभ गलितं कुत्र ते प्राग्विलासा यत्स्वाधीनं तदपि सुलभं तेन तुष्टिं विधेहि ॥ ११४ ॥ चिन्तां मुञ्च गृहाण पल्लवमिदं श्लक्ष्णस्य शालस्य वा गाङ्गस्यास्य जलस्य चन्द्रवपुषो गण्डूषमेकं पिव । जीवन्द्रक्ष्यसि ताः पुनः करभ हे दासेरकीया भुवो रम्याः पीलुशमीकरीरवदरीकूजत्कपोताकुलाः ॥ ११५ ॥ यस्यासीन्नवपीलुपत्रवदरग्रासोऽपि संतुष्टये दीर्घाध्वन्यनुगम्यते न पदवी यस्यास्य यूथैरपि । सोऽयं संप्रति याति बालकरभः क्षीणोद्यमः क्षामतां मन्ये नूनमनेन दैवहतकेनास्वादितं तन्मधु ॥ ११६ ॥ पीलूनां फलवत्कषायमधुरं रोमन्थयित्वा मरौ शाखाग्रं यदखादि चारुकरभो वक्त्रार्पितं प्रेमतः । तत्स्मृत्वा करभेण खेदविधुरं दीर्घं तथा फूत्कृतं प्राणानामभवत्तदेव सहसा प्रस्थानतूर्यं यथा ॥ ११७ ॥ **रासभः** ॥ रे रे रासभ वस्त्रभारवहनात्कुग्रासमश्नासि किं राजाश्वावसथं प्रयाहि चणकाभ्यूषान्सुखं भक्षय । सर्वान्पुच्छवतो हया इति वदन्त्यत्राधिकारे स्थिता राजा तैरुपदिष्टमेव मनुते सत्यं तटस्थाः परे ॥ ११८ ॥ **वृषभः** ॥ नास्य भारग्रहे शक्तिर्न च वाहगुणः क्वचित् । देवागारे बलीवर्दस्तथाप्यश्नाति भोजनम् ॥ ११९ ॥ अनसि सीदति सैकतवर्त्मनि प्रचुरभारभरक्षपितोदके । गुरुभरोद्धरणोद्धुरकन्धरं स्मरति सारथिरेष धुरंधरम् ॥ १२० ॥ एतानि बालधवल प्रविहाय कामं गोष्ठाङ्गणे तरलतर्णकचेष्टितानि । स्कन्धं निधेहि धुरि पूर्वधुरीणमुक्ते नेतव्यतामुपगतोऽस्ति तवैव भारः ॥ १२१ ॥ गुरुर्नायं भारः क्वचिदपि न पन्थाः स्थपुटितो न ते कुण्ठा शक्तिर्वहनमपि तेऽङ्गेन विकलम् । इह त्वङ्गे नान्यस्तव गुणसमानस्तदधुना धुनानेन स्कन्धं धवल किमु मुक्तः पथि भरः ॥ १२२ ॥ मार्गे कर्दमदुर्गमे जलभृते गर्ताशतैराकुले खिन्ने शाकटिके भरेऽतिविषमे दूरं गते रोधसि । शब्देनैतदहं ब्रवीमि महता कृत्वोच्छ्रितां तर्जनीमीदृक्षे विषमे विहाय धवलं वोढुं क्षमः को धुरम् ॥ १२३ ॥ दत्ताः सप्तवलं विषाणयुगलं मुग्धाश्वलः कर्बुरः कुक्षिश्चन्द्राङ्कितो वपुः कुसुमितं संघूर्णितं चेष्टितम् । अस्मिन्दुष्टवृषे मृषा मितगुणग्रामानभिज्ञात्मनो ग्रामीणस्य तथापि चेतसि चिरं धुर्यभ्रमः स्फूर्जति ॥ १२४ ॥ केषांचिद्धवलाश्चिर निवसिताश्चित्ते परेषां पुनर्नीलो वा कपिलोऽथवा वरवृषो रक्तोऽथवा मेचकः । ग्रामीणैरवधीरितोऽपि शिथिलस्कन्धोऽप्यनुच्चैःश्रवाः स्वान्ते मे परतन्त्रतुन्दिलतनुर्जागर्त्ययं कर्बुरः ॥ १२५ ॥ न ध्वानं कुरुषे न यासि विकटं नोच्चैर्वहस्या-

१. गर्दभ २ अश्वशालाम्. ३. अपक्वचणकान् ४. उदासीना.. ५. शकटे. ६. वालुकामयमार्गे. ७. श्वभ्रम् ८. शकटस्वामिनि.

ननं दर्पान्नोल्लिखसि क्षितिं खुरपुटैर्नावज्ञया वीक्ष्यसे। किंतु त्वं वसुधातलैकधवलः स्कन्धाधिरूढे भरे तीराण्युच्चतटीविटङ्कविषमान्युल्लङ्घयन्क्षीयसे ॥ १२६ ॥ यस्यादौ व्रजमण्डनस्य वहतो गुर्वीं धुरं धैर्यतो धौरेयैः प्रगुणीकृतस्य युगपत्स्कन्धैः समस्तैरपि। तस्यैवं श्लथकम्बलस्य धवलस्योत्थापने सांप्रतं द्रागत्रैव जरावसादिततनोर्गोपुण्यमुद्घोष्यते ॥ १२७ ॥ **कपिः** ॥ हारं वक्षसि केनापि दत्तमज्ञेन मर्कटः। लेढि जिघ्रति संक्षिप्य करोत्युन्नतमाननम् ॥ १२८ ॥ वृक्षान्दोलनमद्य ते क नु गतं घर्मस्य यूथस्य वा मूकान्वेषणरोषसौख्यबहुलाश्रेष्टामुखोत्थाः कुतः। क्वारण्ये फलपूर्णगह्लकुहरस्थानेपुताभीषिका भीतः संप्रति कौशिकोद्गलचलद्व्यालः कपे नृत्यसि ॥ १२९ ॥ **वराहः** ॥ सर्वलोकपरितोषकारिणि स्वर्धुनीविमलवारिणि स्थिते। पूतिगन्धवति पल्वलोदके सूकरः सुखमतीव मन्यते ॥ १३० ॥ आकर्ण्य गर्जितरवं घनगर्जतुल्यं सिंहस्य यान्ति वनमन्यदिभा भयार्ताः। तत्रैव पौरुषनिधिः स्वकुलेन सार्धं दर्पोद्धुरो वसति वीतभयो वराहः ॥ १३१॥ (आदिवराहः) ॥ निःकन्दामरविन्दिनी स्थपुटितोद्देशां कसेरुस्थलीं जम्बालाविलमम्बु कर्तुमितरा सूते वराही सुतान्। दंष्ट्रायां प्रलयार्णवोर्मिसलिलैराङ्काविताया मियं यस्या एव शिशोः स्थिता विपदि भूः सा पुत्रिणी पोत्रिणी ॥ १३२ ॥ **श्वा** ॥ पिब पयःप्रसरः क्षितिपान्तिकं कलय कांचन काश्चनशृङ्खलाम्। इदमवद्यतमं हि यदीहसे भपक संप्रति केसरिणस्तुलाम् ॥ १३३ ॥ **वृश्चिकः** ॥ विषभारसहस्रेण गर्वं नायाति वासुकिः। वृश्चिको बिन्दुमात्रेण ऊर्ध्वं वहति कण्टकम् ॥ १३४ ॥ **भेकः** ॥ दिव्यं चूतरसं पीत्वा गर्वं नो याति कोकिलः। पीत्वा कर्दमपानीयं भेको रटरटायते ॥ १३५ ॥ गङ्गादीनां सकलसरितां प्राप्य तोयं समुद्रः किंचिद्गर्वी न भवति वपुर्दिव्यरत्नाकरोऽपि। एको भेकः परममुदितः प्राप्य गोष्पादनीरं को मे को मे रटति बहुधा स्पर्धया विश्वमुच्चैः ॥ १३६ ॥ **जम्बुकः** ॥ उदस्योच्चैः पुच्छं शिरसि निहितं जीर्णजटिल यदृच्छाव्यापन्नद्विपपिशितलेशाः कवलिताः। गुहागर्ते शून्ये सुचिरमुषितं जम्बुक सखे किमेतस्मिन्कुर्मो यदसि न गतः सिंहसमताम् ॥ १३७ ॥ **सर्पः** ॥ तावद्गर्जन्ति मण्डूकाः कूपमाश्रित्य निर्भयाः। यावत्करिकराकारः कृष्णसर्पो न विद्यते ॥१३८॥ यस्मै ददाति विवरं भूमिः फूत्कारमात्रभीतेव। आशीविषः स दैवाड्डौम्बकरण्डे स्थितिं सहते ॥१३९॥मौलौ सन्मणयो गृहं गिरिगुहा त्यागः किलौत्मत्वचो निर्यत्नोपनतैश्च वृत्तिरनिलैरेकत्रचर्ये वशी। अन्यत्रानृजुवर्त्मता द्विरसना वक्त्रे विषं वीक्षणं सर्वामङ्गलसूचकं कथय भो भोगिन्सखे किं त्विदम् ॥ १४० ॥ **( शेषः )** ॥ अनेके फणिनः सन्ति भेकभक्षणतत्पराः। एक एव हि शेषोऽयं धरणीधरणक्षमः ॥ १४१ ॥ युक्तोऽसि भुवनभारे मा वक्रां वितनु

१. सर्प. २. गारुडिकरण्डे. ३. आत्मभोगकञ्चुकस्य. ४. वर्तनम्. ५ वक्रमार्गता. ६. द्विरावृत्ता रसना. रसनाद्वयमित्यर्थः.

कन्धरां शेष । त्वय्येकस्मिन्दुःखिनि सुखितानि भवन्ति भुवनानि ॥ १४२ ॥ सर्पाः सन्तु परे शतं प्रतिदिनं वल्मीकरन्ध्रं गताः श्रेणीभूतपिपीलिकाजलधरा हारा धरामण्डले । ते सर्वे निजभोगशायिमुरजिन्नाभीसरोजोद्गतं निःश्वासामृतपारणीपरिणमद्द्वेषो हि शेषोरगः ॥ १४३ ॥

## जलचरान्योक्तयः ।

**राघवमत्स्यः** ॥ यस्मिन्वेल्लति सर्वतः परिचलत्कल्लोलकोलाहलैर्मन्थाद्रिभ्रमणभ्रमं हृदि हरिद्दन्तावलाः पेदिरे । सोऽयं तुङ्गतिमिंगिलाङ्गकवलीकारक्रियाकोविदः क्रोडे क्रीडतु कस्य केलिकलहत्यक्तार्णवो राघवः ॥ १ ॥ **कूर्मः** ॥ भ्रमति गिरिराट्पृष्ठे गर्जत्युपर्यतिसागरे दहति विततज्वालाजालो जगन्ति विषानलः । स तु विनिहितग्रीवाकाण्डः कटाहकठोदरे स्वपिति भगवान्कूर्मो निद्राभरालसलोचनः ॥ २ ॥ पुत्रिण्यः कति नात्र सन्ति भुवनेऽभूवन्कियन्तोऽथवा सौभाग्यैकमठी तथादिकमठी स्त्रीषु प्रशंसास्पदम् । भग्ने भोगिनि मङ्गुरेषु करिषु भ्रष्टोत्सवे दंष्ट्रिणि क्षोणीं साहसिकाग्रणीस्तुलयितुं जागर्ति यस्याः सुतः॥३॥

## वृक्षान्योक्तयः ।

अहो एषां वरं जन्म सर्व प्राण्युपजीवनम् । धन्या महीरुहा येभ्यो निराशा यान्ति नार्थिनः ॥ १ ॥ पत्रपुष्पफलच्छायामूलवल्कलदारुभिः । गन्धनिर्यासभस्मास्थितोक्मैः कामान्वितन्वते॥२॥ मर्त्यंग्रैः पत्रनिचयैस्तरुर्यैरेव शोभितः । जहाति जीर्णास्तानेव किंवा चित्रं कुजन्मनः ॥३॥ छायामन्यस्य कुर्वन्ति तिष्ठन्ति स्वयमातपे । फलान्यपि परार्थाय वृक्षाः सत्पुरुषा इव ॥ ४ ॥ परोपसर्पणानन्ताचिन्तानलशिखाशतैः । अचुम्बितान्तःकरणाः साधु जीवन्ति पादपाः ॥ ५ ॥ मुखेन गरलं मुञ्चन्मूले वसति चेत्फणी । फलसंदोहगुरुणा तरुणा किं प्रयोजनम् ॥ ६ ॥ शाखाशतचितवियतः सन्ति कियन्तो न कानने तरवः । परिमलभरमिलदलिकुलदलितदलाः शाखिनो विरलाः ॥ ७ ॥ तीव्रो निदाघसमयो बहुपथिकजनश्च मौरवः पन्थाः । मार्गस्थिततरुरेकः कियतां संतापमपहरति ॥ ८ ॥ हिमसमयो वनवह्निर्जवनः पवनस्तडिल्लताविभवः । हन्त सहन्ते यावत्तावद्द्रुम कुरु परोपकृतिम् ॥ ९ ॥ कलमाः पाकविनम्रा मूलतलाघ्राणसुरभिकल्हाराः । पवनाकम्पितशिरसः प्रायः कुर्वन्ति परिमलश्लाघाम् ॥ १० ॥ कश्चिन्नवं पल्लवमादधाति कश्चित्प्रसूनानि फलानि कश्चित् । परं करालेऽस्य निदाघकाले मूलेन दाता सलिलस्य कश्चित् ॥ ११ ॥ व्यागुञ्जन्मधुकरपुञ्जमञ्जुगीतान्याकर्ण्य श्रुतिमदजाड्ययातिरेकात् । आभूमीतलनतकन्धराणि मन्येऽरण्येऽस्मिन्न-

१ नूतने. २ कु पृथ्वी तस्या जन्म यस्य; ( पक्षे ) कुत्सित जन्म यस्य. ३. मरुदेशसंबन्धी.

वनिरुहां कुटुम्बकानि ॥१२॥ भुक्तानि यैस्तव फलानि पचेलिमानि[1] क्रोडस्थितैरहह वीतभयैः प्रसुप्तम्। ते पक्षिणो जलरयेण विकृष्यमाणं पश्यन्ति पादप भवन्तममी तटस्थाः ॥ १३ ॥ धत्ते भरं कुसुमपत्रफलावलीनां घर्मव्यथां वहति शीतभवां रुजं च। यो देहमर्पयति चान्यसुखस्य हेतोस्तस्मै वदान्यगुरवे[2] तरवे नमस्ते ॥ १४ ॥ इहोद्याने संप्रत्यहह परिशिष्टाः क्रमवशादमी वल्मीकास्ते भुजगकुललीलावसतयः। गतास्ते विस्तीर्णस्तबकभरसौरभ्यलहरीपरीत[3]व्योमानः प्रकृतिगुरवः[4] केऽपि तरवः ॥१५॥ विपन्नं पद्मिन्या मृतमनिमिषैर्यातमलिभिः खगैरप्युड्डीनं रथचरणहंसप्रभृतिभिः। दशां दीनां नीते सरसि विषमग्रीष्मदिवसैः कुलीनत्वादास्ते तटरुहतरुः कोऽपि तदपि ॥१६॥ इयं बाला वल्ली मृदुकिसलयं तापविलयं घनच्छायं शालं नवमतिविशालं परिगता। परं त्वस्याभ्यन्तर्गरललवभस्मीकृतवनं भुजंगं प्रोत्तुङ्गं कथमिव वराकी कलयतु ॥१७॥ किं जातोऽसि चतुष्पथे घनतरं छन्नोऽसि किं छायया छन्नश्चेत्फलितोऽसि किं फलभरैराढ्योऽसि किं संनतः। हे सद्वृक्ष सहस्व संप्रति सखे शाखाशिखाकर्षणक्षोभामोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥ १८ ॥ छायासुप्तमृगः शकुन्तनिवहैर्विष्ठावलिप्तच्छदः कीटैरावृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः। विश्रब्धं मधुपैर्निपीतकुसुमः श्लाघ्यः स एकस्तरुर्यत्राङ्गीकृतसत्त्वसंप्लवभरे भग्नापदोऽन्ये द्रुमाः ॥१९॥ भुक्त्वा स्वादुफलं कृतं च शयनं शाखाग्रजैः पल्लवैस्त्वच्छायापरिशीतलं सुसलिलं पीतं व्यपेतश्रमैः। विश्रान्ताः सुचिरं परं सुमनसः प्रीतिः किमत्रोच्यते त्वं सन्मार्गतरुर्वयं च पथिका यामः पुनर्दर्शनम् ॥ २० ॥ पान्थाधार इति द्विजाश्रय इति श्लाघ्यस्तरूणामिति स्निग्धच्छाय इति प्रियो दृश इति स्थानं गुणानामिति। पर्यालोच्य महातरो तव घनच्छायां वयं संश्रितास्तत्त्वत्कोटरवासिनो द्विरसना[5] दूरीकरिष्यन्ति नः ॥ २१ ॥ मूलं स्थूलमतीव बन्धनदृढं शाखाः शतं मांसला वासो दुर्गमहीधरे तरुपते कुत्रास्ति भीतिस्तव। एकः किंतु मनागयं जनयति स्वान्ते ममाधिज्वर ज्वालाली वलयीभवन्नकरुणो दावानलो वस्मरः ॥ २२ ॥ ये पूर्वं परिपालिताः फलभरच्छायादिभिः प्राणिनो विश्रामद्रुम कथ्यतां तव विपत्काले क्व ते सांप्रतम्। एताः संगतिमात्रकल्पितपुरस्कारास्तु धन्यास्त्वचो यासां छेदनमन्तरेण पतितो नाय कुठारस्त्वयि ॥ २३ ॥ वृद्धिर्यस्य तरोर्मनोरथशतैराशावता प्रार्थिता जातोऽसौ सरसप्रकामफलदः सर्वाश्रितोपाश्रयः। नानादेशसमागतैरविदितैराक्रान्तमन्यैः खगैस्तं लब्धावसरेऽपि वृद्धशकुनिर्दूरे स्थितो वीक्ष्यते ॥ २४ ॥ छायाभिः प्रथमं ततस्तु कुसुमैः पश्चात्फलैः स्वादुभिः प्रीणात्येव तरुः पथीति पथिकैः श्रान्तैः सुखं स्थीयते। को जानाति यदत्र कोटरगतः प्रत्युग्रहालाहलज्वालाजालकरालकाष्ठकुहरः कृष्णः फणी वर्तते

१. पक्वानि. २ दानशौण्डाना गुरवे ३. व्याप्तम् ४ स्वभावतो महान्त.. ५. सर्पा., (पक्षे) पिशुनाः. ६. पुष्टाः

॥ २५ ॥ आमोदैर्मरुतो मृगाः किसलयोल्लासैस्त्वचा तापसाः पुष्पैः पट्चरणाः फलैः शकुनयो घर्मार्दितश्छायया। स्कन्धैर्गन्धगजास्त्वयैव विहिताः सर्वे कृतार्थास्ततस्त्वं विश्वोपकृतिक्षमोऽसि भवता भग्नापदोऽन्ये द्रुमाः ॥ २६ ॥ कल्पद्रुमः ॥ कल्पद्रुमोऽपि कालेन भवेद्यदि फलप्रदः। को विशेषस्तदा तस्य वन्यैरन्यैर्महीरुहैः ॥ २७ ॥ न मया रचितं तवालवालं पयसा वा विहितस्तवाभिषेकः। अयि कल्पतरो परोपकारे भवतो विश्वविलक्षणः प्रकारः ॥ २८ ॥ स्वर्णैः स्कन्धपरिग्रहो मरकतैरुल्लासिताः पल्लवा मुक्ताभिः स्तवकश्रियो मधुलिहां वृन्दानि नीलोत्पलैः। संकल्पानुविधायि यस्य फलितं कस्तस्य धत्ते तुलां धिग्जातु द्रुमसंकथासु यदयं कल्पद्रुमोऽपि द्रुमः ॥ २९ ॥ औदार्यं भुवनत्रयेऽपि विदितं [1]संभूतिरम्भोनिधेर्[2]वासो [3]नन्दनकानने [4]परिमलो गीर्वाणचेतोहरः। एवं दातृगुणोत्करः सुरतरोः सर्वोऽपि लोकोत्तरः स्यादर्थिप्रवरार्थितार्पणविधावेको विवेको यदि ॥ ३० ॥ पारिजातः ॥ परिमलसुरभितनभसो बहवः कनकाद्रिपरिसरे तरवः। तदपि सुराणां चेतसि निवसितमिव पारिजातेन ॥ ३१ ॥ चन्दनः ॥ सन्त्येव मिलिताकाशा महीयांसो महीरुहः। तथापि [5]जनताचित्तानन्दनश्चन्दनद्रुमः ॥ ३२ ॥ यद्यपि चन्दनविटपी विधिना फलकुसुमवर्जितो विहितः। निजवपुषैव परेषां तथापि संतापमपहरति ॥ ३३ ॥ अयि मलयज महिमायं कस्य गिरामस्तु विषयस्ते। उद्गिरतो यद्गरलं फणिनः पुष्णासि परिमलोद्गारैः ॥ ३४ ॥ [6]पाटीर तव [7]पटीयान्कः [8]परिपाटीमिमाम[9]ुरीकर्तुम्। यत्[10]पिंषतामपि नृणां पिष्टोऽपि तनोषि परिमलैः पुष्टिम् ॥ ३५ ॥ यैस्त्वं गुणगणवानपि सतां [11]द्विजिह्वैरसेव्यतां नीतः। तानपि वहसि पटीरज किं कथयामस्त्वदीयमौन्नत्यम् ॥ ३६ ॥ जनकः सानुविशेषो जातिः काष्ठं भुजंगमैः सङ्गः। स्वगुणैरेव पटीरज यातोऽसि तथापि महिमानम् ॥ ३७ ॥ मूलं भुजगैः शिखरं [12]प्लवङ्गैः शाखा विहंगैः कुसुमानि भृङ्गैः। नास्त्येव तच्चन्दनपादपस्य यन्नाश्रितं सत्त्वभरैः समन्तात् ॥ ३८ ॥ धिक्चेष्टितानि परशोपरि शोचनीयबालप्रवालमलयाद्रिरुहद्रुहस्ते। निर्भिद्यमानहृदयोऽपि महानुभावः स त्वन्मुखं पुनरभिः सुरभीकरोति ॥ ३९ ॥ कालागरौ सुरभितातिशयेऽपि सङ्गादारभ्यते सुरभितापरपादपेऽपि। पाटीर पाटवमिदं तव सङ्गिवातैस्तादात्म्यमेति कतरो न तरोः समूहः ॥ ४० ॥ उपानीतं दूरात्परिमलमुपाघ्राय मरुता समायासीदस्मिन्मधुरमधुलोभान्मधुकरः। परो दूरे लाभः कुपितफणिनश्चन्दनतरोः पुनर्जीवन्यायाद्यदि तदिह लाभोऽयमतुलः ॥ ४१ ॥ कान्ताकेलिं कलयतु तरुः कोऽपि कश्चित्प्रभूणामत्यानन्दं जनयतु फलैः कोऽपि लोकान्धिनोतु[13]। धन्यं मन्ये मलयजमहो यः

---

१ प्रभव २ वसति. ३ इन्द्रवने ४. आमोद. ५ जनसमूह ६. चन्दन. ७ अतिशयेन पटु समर्थ.. ८. रीतिम् ९ अङ्गीकर्तुम् १०. पेषण कुर्वताम्. ११. सर्पैः. १२. वानरैः. १३ प्रीणयतु

प्रभूतोपतापं संसारस्य द्रुतमपनयत्यात्मदेहव्ययेन ॥ ४२ ॥ आमोदैस्ते दिशि दिशि गतैर्दूरमाकृष्यमाणाः साक्षाल्लक्ष्मी तव मलयज द्रष्टुमभ्यागताः स्मः । किं पश्यामः सुभग भवतः क्रीडति क्रोड एव व्यालस्तुभ्यं भवतु कुशलं मुञ्च नः साधु यामः ॥ ४३ ॥ केचिल्लोचनहारिणः कतिपये सौरभ्यसंभारिणः केऽप्यन्ये फलधारिणः प्रतिदिनं ते सन्तु हन्त द्रुमाः । धन्योऽयं हरिचन्दनः परिसरे यस्य स्थितैः शाखिभिः शाखोटादिभिरप्यहो मृगदृशामङ्गेषु लीलायितम् ॥ ४४ ॥ भ्रातश्चन्दन किं ब्रवीमि विटपस्फूर्जत्फणाभीषणा गन्धस्यापि महाविषाः फणभृतो गुप्त्यै पदे ते कृताः । दैवात्पुष्पफलान्वितो यदि भवानत्राभविष्यत्तदा नो जाने किमकल्पयिष्यदधिकं रक्षार्थमस्यात्मनः ॥ ४५ ॥ एतैर्दक्षिणगन्धवाहचलनैः श्रीखण्ड किं सौरभं ब्रूमस्ते परितो मधुव्रतयुवा येनायमानीयते । माकन्दादपहृत्य पङ्कजवनादुद्धूय कन्दोदराद्भ्राम्यद्द्विपगण्डमण्डलदलादाकृष्य हृष्यन्मनाः ॥ ४६ ॥ वासः शैलशिलान्तरेषु सहजः सङ्गो भुजगैः सह प्रेङ्खत्क्षारपयोधिवीचिभिरमूद्भूतसेकक्रिया । जानीमो न वयं प्रसीदतु भवाञ्श्रीखण्ड तत्कथ्यतां कस्मात्ते परतापखण्डनमहो पाण्डित्यमभ्यागतम् ॥ ४७॥ लोकानन्दन चन्दनद्रुम सखे नास्मिन्वने स्थीयतां दुर्वंशैः परुषैरसारहृदयैराक्रान्तमेतद्वनम् । ते ह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुला न स्वान्येव कुलानि केवलमिदं सर्वं दहेयुर्वनम् ॥ ४८ ॥ सौरभ्यं भुवनत्रयेऽपि विदितं शैत्यं नु लोकोत्तरं कीर्तिः किं च दिगङ्गनाङ्गनगता किं त्वेतदेकं शृणु । सर्वानेव गुणानियं निगिरति श्रीखण्ड ते सुन्दरानुज्झन्ती खलु कोटरेषु गरलज्वालां द्विजिह्वावली ॥ ४९ ॥ श्रीमच्चन्दनवृक्ष सन्ति बहवस्ते शाखिनः कानने येषां सौरभमात्रकं निवसति प्रायेण पुष्पश्रिया । प्रत्यङ्गं सुकृतेन तेन शुचिना ख्यातः प्रसिद्धात्मना योऽसौ गन्धगुणस्त्वया प्रकटितः क्वासाविह प्रेक्ष्यते ॥ ५० ॥ **अगुरुः ॥** अगुरुरिति वदतु लोको गौरवमत्रैव पुनरहं मन्ये । दर्शितगुणैव वृत्तिर्यस्य जने जनितदाहेऽपि ॥ ५१ ॥ एणाद्याः पशवः किरातपरिषन्नैषा गुणग्राहिणी संचारोऽस्ति न नागरस्य विषयोच्छिन्नं मुनीनां मनः । धूमेनातिसुगन्धिनात्र विपिने दिक्चक्रमामोदयन्नामूलं परिदह्यतेऽगुरुतरुः कस्मै किमाचक्ष्महे ॥५२॥ **चम्पकः ॥** साधारणतरुबुद्ध्या न मया बद्धस्तवालवालोऽपि । लज्जयसि मामिदानीं चम्पक भुवनाधिवासिभिः कुसुमैः ॥५३॥ यद्यपि खदिरारण्ये गुप्तो वस्ते हि चम्पको वृक्षः । तदपि च परिमलमतुलं दिशि दिशि कथयेत्समीरणस्तस्य ॥५४॥ केनात्र चम्पकतरो बत रोपितोऽसि कुग्राममपामरजनान्तिकवाटिकायाम् । यत्र प्रवृद्धवनशाकविवृद्धिलोभाद्गो भग्नवाटघटनोचितपल्लवोऽसि ॥५५॥ उद्यानपालकलशाम्बुनिषेचनानामेतस्य चम्पकतरोरयमेव कालः । अस्मिन्निदाघनिहते घनवारिणा वा संवर्धितस्तव वृथोभयथोपयोगः ॥ ५६ ॥ कोपं चम्पक मुञ्च याचकजनैरायासि नस्त्वं सखे मा म्लासीः

---

१ ससारे स्थितस्य जनस्य. २. दुष्टवेणुभि.. ३ यूथानि. ४. नाम्ना; ( पक्षे ) लघु

परितो विलोकय तरुः कस्तेऽधिरूढस्तुलाम् । कोपश्चेन्नियतस्तवास्ति हृदये धात्रे तथा कुप्यतां येन त्वं हि सुवर्णवर्णकुसुमामोदो द्वितीयः कृतः ॥ ५७ ॥ **बकुलः** ॥ निसर्गादारामे-तरुकुलसमारोपसुकृती कृती मालाकारो बकुलमपि कुत्रापि निदधे । इदं को जानीते यदयमिह कोणान्तरगतो जगज्जालं कर्ता कुसुमभरसौरभ्यभरितम् ॥ ५८ ॥ दधानः प्रेमाणं तरुषु समभावेन विपुलं न मालाकारोऽसावकृत करुणां बालबकुले । अयं द्रागुद्यत्कुसुमनिकराणां परिमलैर्दिगन्तानातेने मधुपकुलझङ्कारभरितान् ॥ ५९ ॥ **अशोकः** ॥ गर्वायसे विकचकोरकमञ्जुगुञ्जदुद्वृत्तषट्पदघटाविभवेन किं नु । वामभ्रुवां चरणताडनदोहदानि किं नाम न स्मरसि तावदशोक तानि ॥ ६० ॥ उन्मीलयन्ति कुसुमानि मनोरमाणि के नाम नात्र तरवः समयोचितानि । कस्येदृशं कथय दोहदमस्ति तस्य यादृग्विनिर्मितमशोकमहीरुहस्य ॥ ६१ ॥ मृदूनां स्वादूनां लघुरपि फलानां न विभवस्तवाशोक स्तोकैः[2] स्तबकमहिमा सोऽप्यसुरभिः[3] । यदेतन्नो तन्वीकरचरणलावण्यसुभगं प्रवालं बालं स्यात्तरुषु स कलङ्कः किमपरः ॥ ६२ ॥ किं ते नम्रतया किमुन्नततया किं वा घनच्छायया किं वा पल्लवलीलया किमनया वाशोक पुष्पश्रिया । यत्त्वन्मूलनिषण्णखिन्नपथिकस्तोमैः[4] स्तुवन्नन्वहं न स्वादूनि मृदूनि खादति फलान्याकण्ठमुत्कण्ठितः ॥ ६३ ॥ **मालती** ॥ कुसुमस्तबकानम्राः सन्त्येव परितो लताः । तथापि भ्रमरश्रान्तिं हरत्येकैव मालती ॥ ६४ ॥ मालतीकुसुमे भाति गुञ्जन्मत्तमधुव्रतः । प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥ ६५ ॥ गुञ्जति मञ्जु मिलिन्दे मालति मा मौनमुपयासीः । शिरसा वदान्यगुरवः सादरमेनं वहन्ति सुरतरवः ॥ ६६ ॥ मा मालति म्लायसि[5] यद्यविद्यश्चुचुम्ब तुम्बीकुसुमं[7] षडङ्घ्रिः[8] । पदैश्चतुर्भिर्हि युतः पशुश्चेत्स षड्भिरप्यर्धपशुः कथं नो ॥ ६७ ॥ किं मालतीकुसुम ताम्यसि[9] निष्ठुरेण केनापि यत्किल विलूनमितो[10] लताग्रात् । लोकोत्तरेण विलसद्गुणगौरवेण को नामुना शिरसि नाम करिष्यति त्वाम् ॥ ६८ ॥ म्रदीयस्त्वाधिक्यान्न[11] भवति विमर्दक्षममिदं न चान्येभ्यो रूपं भवति कुसुमेभ्योऽधिकतरम् । प्रसूनं मालत्यास्तदपि हृदयाह्लादकरणं प्रवीणैरामोदैर्भवति जगतो मौलिनिलयम् ॥ ६९ ॥ अस्मिन्केलिवने सुगन्धपवने क्रीडत्पुरंध्रीजने गुञ्जद्भृङ्गकुले विशालबकुले कूजत्पिकीसंकुले । उन्मीलन्नवपाटलापरिमले मल्लीप्रसूनाकुले यद्येकापि न मालती विकसिता तत्किं न रम्यो मधुः ॥ ७० ॥ **मल्लिका** ॥ न च गन्धवहेन[12] चुम्बिता न च पीता मधुपेन मल्लिका । [13]पिहितैव कठोरशाखया परिणामस्य[14] जगाम गोचरम् ॥ ७१ ॥ **केतकी** ॥ पत्राणि कण्टकशतैः परिवेष्टितानि वार्तापि नास्ति मधुनो रजसान्ध-

१ कुशल २. अल्प. ३ सुगन्धरहित ४. समूह ५ खिद्यसि. ६ मूढ. ७. इक्ष्वाकुकुसुमम् ८. षट्पद ९. सताप कुरुषे. १०. छिन्नम् ११. मार्दवाधिक्यात्. १२. वायुना. १३ छादिता. १४ परिणतिं प्राप्तेत्यर्थः.

कारः । आमोदमात्ररसिकेन मधुव्रतेन नालोकितानि तव केतकि दूषणानि ॥ ७२ ॥ एतासु केतकिलतासु विकासिनीषु सौभाग्यमद्भुततरं भवती बिभर्ति । यत्कण्टकैर्व्यथितमात्मवपुर्न जानंस्त्वामेव सेवितुमुपक्रमते द्विरेफः ॥ ७३ ॥ रोलम्बस्य चिराय केतकपरिष्वङ्गेष्वभङ्गो रसः सुज्ञातं बत केतकस्य च मनोभृङ्गप्रसङ्गोत्सुकम् । जानात्येव मिथोऽनुरागमनयोः सर्वोऽपि नैसर्गिकं प्रत्यूहाय दलेषु धिक्सम भवन्मर्माभिधः कण्टकः ॥ ७४ ॥ **पाटला ॥** पाटलया वनमध्ये कुसुमितया मोहितस्तथा भ्रमरः । सैवेयमिति यथाभूत्प्रतीतिरस्यान्यपुष्पेऽपि ॥ ७५ ॥ **सहकारः ॥** यद्यपि दिशि दिशि तरवः परिमलबहुलाश्च पारिजाताद्याः । तदपि रसालोऽप्येकः कोकिलहृदये सदा वसति ॥ ७६ ॥ वेत्ता कोकिल एव ज्ञाता च रसाल एव नियतमिदम् । यः पञ्चममुद्गायति यस्यास्थिषु पुलकमुकुलानि ॥ ७७ ॥ लोडितमखिलं गहनं परितो दृष्टाश्च विटपिनः सर्वे । सहकार न प्रपेदे मधुपेन तवोपमा जगति ॥ ७८ ॥ भूरिशोऽपि च वसन्ति कानने शाखिनो फलविशेषशालिनः । कोकिलस्य तदपीह मानस नो रसालमपहाय तुष्यति ॥ ७९ ॥ आम्र यद्यपि गता दिवसास्ते पुष्पसौरभफलप्रचुरा ये । हन्त संप्रति तथापि जनानां छाययैव दलयस्यतितापम् ॥ ८० ॥ फलितस्य रसाल शाखिनः फलदानव्यसनैकशालिनः । विनिपत्य ददातु कः फलं श्रमसुप्ताध्वगपाणिपल्लवे ॥ ८१ ॥ कति पल्लविता न पुष्पिता वा तरवः सन्ति समन्ततो वसन्ते । जगतीविजये तु पुष्पकेतोः सहकारी सहकार एक एव ॥८२॥ दिङ्मण्डलं परिमलैः सुरभीकरोषि सौन्दर्यमावहासि लोचनलोभनीयम् । हंहो रसाल फलवर्य तथापि दूये यद्ग्रन्थितं च कठिनं हृदयं बिभर्षि ॥ ८३ ॥ उत्तंस[1]कौतुकरसेन विलासिनीभिर्लूनानि यस्य न नखैरपि पल्लवानि । उद्यानमण्डनतरो सहकार स त्वमङ्गारकारकरगोचरतां गतोऽसि ॥ ८४ ॥ यावत्फलोदयमुखः सहकार जातः प्रागेव कण्टकचयेन वृतोऽसि तावत् । छायापि ते न सुलभा फलमस्तु दूरे तन्निष्फलोऽपि हि वरं सुखसेवनीयः ॥ ८५ ॥ उत्फुल्लरम्य सहकार रसाल बन्धो-कूजत्पिकावलिनिवास तथा विधेहि । गुञ्जद्भ्रमद्भ्रमरकस्त्वयि बद्धतृष्णो नान्यान्प्रयाति पिचुमन्दकरीरवृक्षान् ॥ ८६ ॥ शश्वन्निसर्गमलिनाः सहकार कामं लुण्ठन्ति तान्यपि मधूनि तव द्विरेफाः । युक्तं न तत्तव कषायरसप्ररोहैरेतान्प्रतारयसि किं कलकण्ठयूनः ॥ ८७ ॥ रे रे रसाल तरुसार वचो विधेहि वासन्तिकीं स्वफलपल्लवपुष्पलक्ष्मीः । तावद्विकस्वरपिकद्विजसात्कुरु द्राङ्न व्याश्रितोऽसि कलभैः शलभैश्च यावत् ॥ ८८ ॥ यद्यध्वनीनचिरमध्वनि घर्मखिन्नः कासारतीररुहमाश्रयनम्रमाम्रम् । छायां न केवलमितः श्रमिता लभन्ते कामं पचेलिमफलं विमलं जलं च ॥ ८९ ॥ सौरभ्यगर्भमकरन्दकराम्बितानि पङ्केरुहाण्यपि विहाय समागतस्त्वाम् । संसारसार सहकार तथा विधेहि येनो-

---

१. कर्णभूषणम्

पहासविषयो न भवेद्द्विरेफः ॥ ९० ॥ कति कति न वसन्ते वल्लयः शाखिनो वा किसलयसुमनोभिः शोभमाना बभूवुः । तदपि युवजनानां प्रीतये केवलोऽभूदभिनवकलिकालीभारशाली रसालः ॥ ९१ ॥ यदेकस्मिन्वर्षे न फलति रसालस्तरुरयं पिकं किं काकेष्टं फलतिमपि निम्बं व्रजति किम् । व्रजन्म्लानि ग्लानि न वदति च कस्यापि पुरतः स्मरन्वारंवारं पुनरपि रसाल मृगयते ॥ ९२ ॥ अधिश्रीरुद्याने त्वमसि भवतः पल्लवचयो धुरीणः कल्याणे तव जगति शाखा श्रमहरा । मुदे पुष्पोल्लेखः फलमपि च तुष्ट्यै तनुभृतां रसाल त्वां तस्माच्छ्रयति शतशः कोकिलकुलम् ॥ ९३ ॥ न तादृक्कर्पूरे न च मलयजे नो मृगमदे फले वा पुष्पे वा तव मिलति यादृक्परिमलः । परं त्वेको दोषस्त्वयि खलु रसाले यदधिकः पिके वा काके वा लघुगुरुविशेषं न मनुषे ॥९४॥ चिरश्रान्तो दूरादहमुपगतो हन्त मलयात्तदेकं त्वद्गेहे तरुणि परिणेष्यामि दिवसम् । समीरेणोक्तैव नवकुसुमिता चूतलतिका धुनाना मूर्धानं नहि नहि नहीत्येव वदति ॥९५॥ येऽभिज्ञाः कुसुमोद्गमादनुदिनं त्वामाश्रिताः षट्पदास्ते भ्राम्यन्ति फलाद्बहिर्बहिरहो दृष्ट्वा न संभाषसे । ये कीटास्तव दृक्पथं न च गतास्ते त्वत्फलाभ्यन्तरे धिक्त्वां चूततरो परापरपरिज्ञानानभिज्ञो भवान् ॥ ९६ ॥ किं जातोऽसि चतुष्पथे घनतरच्छन्नोऽसि किं छायया छन्नश्चेत्पालितोऽसि किं फलभरैरानम्रशाखोऽसि किम् । हे चूताध्वग लोष्ठपातविधुतः खिन्नोऽसि मा खिद्यतां पार्श्वस्थां जनवर्जितां बहुफलां पश्याधमां शाल्मलीम् ॥ ९७ ॥ आकर्ण्याम्रफलस्तुतिं जलमभूत्तन्नारिकेलान्तरं प्रायः कण्टकितं तथैव पनसं जातं द्विधोर्वारुकम् । आस्तेऽधोमुखमेव कादलमलं द्राक्षाफलं क्षुद्रतां श्यामत्वं बत जाम्बवं गतमहो मात्सर्यदोषादिह ॥ ९८ ॥ यो दृष्टः स्फुरदस्थिसंपुटवशात्तिर्यक्प्रवालाङ्कुरो दैवात्स द्विदलादिकक्रमवशादारूढशाखाशतः । स्निग्धं पल्लवितो घनं मुकुलितः स्फारच्छदं पुष्पितः सोत्कर्षं फलितो भृशं च विततः कोऽप्येष चूतद्रुमः ॥९९॥ एतस्मिन्वनमार्गभूपरिसरे सौन्दर्यमुद्राङ्कितः प्रोद्यद्भिः फलपुष्पपत्रनिचयैश्चूतः स एकः परम् । यं वीक्ष्य स्मितवक्त्रमुद्रितमहासतोषमुल्लासितस्फारोत्कण्ठमकुण्ठितक्रमममी धावन्ति पान्थव्रजाः ॥ १०० ॥ कूष्माण्डीफलवत्फलं न यदपि न्यग्रोधवन्नोच्चता रम्भापत्रनिभं दलं न कुसुमं नो केतकीपुष्पवत् । सौरभ्यं कुसुमे फले तदपि तत्किंचित्समुज्जृम्भते लोको येन रसाल शालनिकरांस्त्यक्त्वा गुणान्स्तौति ते ॥ १०१ ॥ गर्वं मा कुरु शर्करे तव गुणाञ्जानन्ति राज्ञां गृहे ये दीना धनवर्जिताश्च कृपणाः स्वप्नेऽपि पश्यन्ति नो । आम्रोऽहं मधुकूपकैर्मम फलैस्तृप्ता हि सर्वे जना हे रण्डे तव किं गुणा मम फलैस्तुल्यं न किंचित्फलम् ॥ १०२ ॥ उन्मीलद्रसबिन्दुगन्धकुसुमावल्ल्यो वसन्तोदये कान्ताः कोमलपल्लवाः कति कति क्रोडा वने सन्ति न । सौभाग्यैकनिधे रसाल तदपि श्रीमञ्जरीशालिनस्त्वत्तोऽन्यत्र च कुत्रचिन्मधुकरश्रेणी न विश्रा-

१ चन्दने २ कस्तूरिकायाम्.

स्यति ॥ १०३ ॥ स्निग्धाग्रा¹ फलिनो वृताः परिमलैः पौष्पैर्मधुस्यन्दिनो नानन्दाय भवन्ति किं वनभुवां भूमीरुहो भूरिशः। माधुर्यं मधुनस्तवैव परमं माकन्द मन्यामहे माध्वीमर्मभिदो दृढं मधुलिहः स्यूता यतो मर्मणि ॥ १०४ ॥ **पनसः** ॥ गरीयः सौरभ्यं रसपरिचये नार्हति सुधा सिता मृद्वीकापि प्रथिमानि निमग्नः² फलभरः। परार्थे कोशश्रीरिति पुलकिते कण्टकमिषादहो ते चारित्रं पनस मनसः कस्य न मुदे ॥ १०५ ॥ **कदली** ॥ तालीतरोरनुपकारि फलं फलित्वा लज्जावशादुचित एव विनाशयोगः। एतत्तु चित्रमुपकृत्य फलैः परेभ्यः प्राणान्निजाञ्झटिति यत्कदली जहाति ॥ १०६ ॥ **द्राक्षा** ॥ दोसेरकस्य दासीयं वदरी यदि रोचते। एतावतैव किं द्राक्षा न साक्षादमृतप्रदा ॥ १०७ ॥ यद्यपि न भवति हानिः परकीयां चरति रासभे द्राक्षाम्। असमञ्जसमिति मत्वा तथापि खलु खिद्यते चेतः ॥ १०८ ॥ **दाडिमः** ॥ मयि जीवति वीजाढ्ये किमन्ये वीजपूरकाः। इति संचिन्त्य मनसा विदद्रे दाडिमीफलम् ॥ ॥ १०९ ॥ आ पुष्पप्रसवान्मनोहरतया³ विश्वास्य विश्वं जनं हंहो दाडिम तावदेव सहसे वृद्धिं स्वकीयामिह। यावन्नैति परोपभोगसहतामेषां ततस्तां तथा ज्ञात्वा ते हृदयं द्विधा दलति यत्तेनातिवन्द्यो भवान् ॥ ११० ॥ **नालिकेरः** ॥ उच्चैरेप तरुः फलं च विपुलं दृष्ट्वैव दृष्टचा शुकः पक्वं शालिवनं विहाय जडधिस्तं नालिकेरीं गतः। तत्रारुह्य बुभुक्षितेन मनसा यत्नः कृतो भेदने आशा तस्य न केवलं विगलिता चञ्चूर्गता चूर्णताम् ॥ १११ ॥ **तालः** ॥ अये ताल व्रीडां व्रज गुरुतया भाति न भवान्फले न छाया नो कठिणपरिवारो हि भवतः। इयं धन्याधन्या सरलकदली सुन्दरदला परात्मानं मन्ये सुखयति फलेनामृतवता ॥ ११२ ॥ अध्वन्यध्वनि भूरुहः फलभृतो नम्रानुपेक्ष्यादराद्दूरादुन्नतिसंश्रयव्यसनिनः पान्थस्य मूढात्मनः। यन्मूलं समुपागतस्य मधुरच्छायाफलैः का कथा शीर्णेनापि हि नोपयोगमगमत्पर्णेन तालद्रुमः ॥ ११३ ॥ **भूर्जः** ॥ दौर्जन्यमात्मनि⁴ परं प्रथितं विधात्रा भूर्जद्रुमस्य विफलत्वसमर्थनेन। किं चर्मभिर्निशितशस्त्रशतावकृत्तैराशां न पूरयति सोऽर्थिपरंपराणाम् ॥ ११४ ॥ कुर्वन्तु नाम जनतोपकृति प्रसूनच्छायाफलैरविकलैः सुलभैर्द्रुमास्ते। सोढास्तु कर्तनरुजः पररक्षणार्थमेकेन भूर्जतरुणा करुणापरेण ॥ ११५ ॥ **अश्वत्थः** ॥ वर्धितैः सेवितैः किं तैः सत्यश्वत्थेऽन्यपादपैः। वर्धितो नरकाद्रक्षेत्स्पृष्टोऽरिष्टानि हन्ति यः ॥ ११६ ॥ **न्यग्रोधः** ॥ महातरुर्वा भवति समूलो वा विनश्यति। नान्तरप्रत्ययानेति न्यग्रोधकलिकाङ्कुरः ॥ ११७ ॥ विस्तीर्णो दीर्घशाखाश्रितशकुनिशतः शाखिनामग्रणीस्त्व⁵ न्यग्रोध क्रोधमन्तः प्रकटयसि न चेद्वच्मि किंचित्तदल्पम्। जल्पोऽप्येष त्रपाकृत्प्रलघुपरिकरा⁶ कापि कूष्माण्डवल्ली पल्लीदृष्टप्रतिष्ठा हसति हि फलने त्वत्फलानां किमन्यत् ॥ ११८ ॥ **मधूकः** ॥ तत्तेजस्तरणेर्निदाघसमये तद्वारि मेघागमे

---

१. स्थूलत्वे. २. ब्रक्कस्य. ३. पुष्पोदयादारभ्य ४ दुर्जनत्वम्. ५. श्रेष्ठ.. ६ लज्जाकृत्

तज्जाड्यं शिशिरे यदेकशरणैः सोढुं पुरा यैर्दलैः । आयातोऽप्यधुना फलस्य समयः कोऽपं विना तैरिति स्मृत्वा तानि शुचेव रोदिति गलत्पुष्पैर्मधूकद्रुमः ॥ ११९ ॥ मूलादेव यदस्य विस्तृतिभरच्छायाण्यनन्यादृशी ते यस्य प्रसवाः सुमञ्जुलरसैरानन्दयन्तः प्रजाः । स्नेहं च प्रकटीकरोति परमं भूयः फलानां 'गुणैर्हित्वैकैकगुणांस्तरूनभज सखे तस्मान्मधूकद्रुमम् ॥ १२० ॥ **शाल्मलिः** ॥ विशालं शाल्मल्या नयनसुभगं वीक्ष्य कुसुमं शुकस्यासीद्बुद्धिः फलमपि भवेत्तादृशमिति । चिरं तत्र स्थित्वा फलमपि च काले परिणतं विपाके तूलोऽन्तः सपदि मरुता सोऽप्यपहृतः ॥ १२१ ॥ दूरे मार्गान्निवससि पुनः कण्टकैरावृतोऽसि छायाशून्यः फलमपि च ते वानरैरप्यभक्ष्यम् । निर्गन्धस्त्वं मधुपरहितः शाल्मले सारशून्यः सेवास्माकं भवति विफला तिष्ठ निःश्वस्य यामः ॥ १२२ ॥ हंसाः पद्मवनाशया मधुलिहः सौरभ्यलाभाशया पान्थाः स्वादुफलाशया बलिभुजो गृध्राश्च मांसाशया । दूरादुत्तमपुष्परागनिकरैर्निःसारमिथ्योन्नते रे रे शाल्मलिपादप प्रतिदिन के न त्वया वञ्चिताः ॥ १२३ ॥ कायः कण्टकभूषितो न च घनच्छायीकृताः पल्लवाः पुष्पाणि च्युतसौरभाणि न दलश्रेणी मनोहारिणी । किं ब्रूमः फलपाकमस्य यदुपन्यासेऽपि लज्जामहे तद्ब्रो' केन गुणेन शाल्मलितरो जातोऽसि सीमद्रुमः ॥ १२४ ॥ **निम्बः** ॥ निम्ब किं बहुनोक्तेन निःफलानि फलानि ते । यानि संजातपाकानि काका निःशेषयन्त्यमी ॥१२५॥ यैश्च निम्बं परशुना यश्चैनं मधुसर्पिषा । यश्चैनं गन्धमाल्याद्यैः सर्वस्य कटुरेव सः ॥१२६॥ शर्करामधुसंयुक्तैर्निम्बबीजप्रतिष्ठितम् । पयोघटसहस्राणि निम्बं किं मधुरायते ॥ १२७ ॥ चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं जातो दैवादुचितघटनासंविधाता विधाता । यन्निम्बानां परिणतफलस्फीतिरास्वादनीया यच्चैतस्याः कवलनकलाकोविदः काकलोकः॥१२८॥ यस्मादर्थिजनो मनोऽभिलषितं लब्ध्वा मुदा मेदुरः सार्धं बन्धुजनैश्चकार विविधान्भोगान्विलासोद्धुरः । तं दैवेन विवेकशून्यमनसा निर्मूल्यः चूतद्रुमं स्थाने तस्य तु काकलोकवसतिर्निम्बः समारोपितः ॥ १२९ ॥ **बब्बुलः** ॥ पत्रफलपुष्पलक्ष्म्या कदाप्यदृष्टं वृतं च खलु शूकैः । उपसर्पेम भवन्तं बर्बुर वद कस्य लोभेन ॥ १३० ॥ गात्रं कण्टकसंकटं प्रविरलच्छाया न चायासहृन्निर्गन्धः कुसुमोत्करस्तव फलं न क्षुद्विनाशक्षमम् । बब्बूलद्रुममूलमेति न जनस्तत्तावदास्तामहो ह्यन्येषामपि शाखिनां फलवतां गुप्त्यै वृतिर्जायसे ॥ १३१ ॥ आमूलाग्रनिबद्धकण्टकतनुर्निर्गन्धपुष्पोद्गमच्छाया न श्रमहारिणी न च फलं क्षुत्क्षामसंतोषकृत् । रे रे बब्बुल साधुसङ्गरहितस्तत्तावदास्तामहो ह्यन्येषामपि शाखिनां फलवतां गुप्त्यै वृत्तिर्जायसे ॥ १३२ ॥ **खदिरः** ॥ चन्दने विषधरान्सहामहे वस्तु सुन्दरमगुप्तिमत्कुतः ।

---

१ शोकेन. २ काका ३ अत्र वृश्चति सिञ्चति अर्चति इत्यध्याहारेण वाक्यानि पूरणीयानि. ४. पुष्पप्रकर· ५ प्राचीरम् ६ सर्पान् ७ रक्षारहितम्.

रक्षितुं वद किमात्मसौष्ठवं संचिताः खदिर कण्टकास्त्वया ॥ १३३ ॥ परं तदिह नास्ति यत्र खदिरैः खरैरावृतं न तेऽपि खदिरा न ये कुटिलकण्टकैरावृताः । न ते कुटिलकण्टकाः किमपि ये न मर्मच्छिदः समुज्झितत्वथास्थितिर्व्रत सहध्वमध्वश्रमम् ॥ १३४ ॥ **किंशुकः ॥** किंशुक किं शुकमुखवत्कुसुमानि विकासयस्यनिशम् । यस्यां जनोऽनुरागी सा गीरेतैः कदापि नोच्चार्या ॥ १३५ ॥ त्यज किंशुक पुष्पिताभिमानं निजशिरसि भ्रमरोपसेवनेन । विकसन्नवमल्लिकावियोगात्कुरुते वह्निधिया त्वयि प्रवेशम् ॥ १३६ ॥ **शाखोटः ॥** शाखोट शाल्मलिपलाशकरीरकाद्याः शृण्वन्तु पुण्यनिलयो यदसौ वसन्तः । युष्मभ्यमर्पयति पल्लवपुष्पलक्ष्मी सौरभ्यसंभवविधिस्तु विधेरधीनः ॥ १३७ ॥ कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं वैराग्यादिव वक्षि साधुविदितं कस्मादिदं कथ्यते । वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते न च्छायापि परोपकारकृतये मार्गस्थितस्यापि मे ॥ १३८ ॥ **पीलुः ॥** धन्याः सूक्ष्मफला अपि प्रियतमास्ते पीलुवृक्षाः क्षितौ क्षुत्क्षीणेन जनेन हि प्रतिदिनं येषां फलं भुज्यते । किं तैस्तत्र महाफलैरपि पुनः कल्पद्रुमाद्यैर्द्रुमैर्येषां नाम मनागपि श्रमनुदे छायापि न प्राप्यते ॥ १३९ ॥ **करीरः ॥** फलं दूरतरेऽप्यास्तां पुष्णासि कुसुमैर्जनान् । इतरे तरवो मन्ये करीर तव किंकराः ॥ १४० ॥ किं पुष्पैः किं फलैस्तस्य करीरस्य दुरात्मनः । येन वृद्धिं समासाद्य न कृतः पत्रसंग्रहः ॥ १४१ ॥ **बिल्वः ॥** आमोदीनि सुमेदुराणि च मृदु स्वादूनि च क्ष्मारुहामुद्यानेषु वनेषु लब्धजनुषां सन्तीतरेषामपि । किं तु श्रीफलता तवैव जयिनी मालूर दिङ्मण्डले यस्यैतानि फलानि यौवनवतीवक्षोजलक्ष्मीगृहाः ॥ १४२ ॥ **शालः ॥** शाखासंततिसंनिरुद्धनभसो भूयांस एवावनौ विद्यन्ते तरवः फलैरविकलैरार्तिच्छिदः प्राणिनाम् । किंतु द्वित्रिदलैरलंकृततनोः शालेद्रुमस्तुङ्गतां दत्वा येन निजं शिरः सुकृतिना को नाम न प्रीणितः ॥१४३॥ **कुटजः ॥** समुपागतवति दैवादवलेहां कुटज मधुकरे मा गाः । मकरन्दतुन्दिलानामरविन्दानामयं महामान्यः ॥ १४४ ॥ **पलाशः ॥** उपनदिपुलिने महापलाशः पवनसमुच्छलदेकपत्रपाणि[1] । दवदहनविनष्टजीवितानां सलिलमिवैष ददाति पादपानाम् ॥ १४५ ॥ **इक्षुः ॥** कान्तोऽसि नित्यमधुरोऽसि रसाकुलोऽसि किंचासि पञ्चशरकार्मुकमद्वितीयम् । इक्षो तवास्ति सकलं परमेकमूनं यत्सेवितो भजसि नीरसतां क्रमेण ॥ १४६ ॥ परार्थे य. पीडामनुभवति भङ्गेऽपि मधुरो यदीयः सर्वेषामिह खलु विकारोऽप्यभिमतः । न सम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः किमिक्षोर्दोषोऽसौ न पुनरगुणा या मरुभुवः ॥ १४७ ॥ मुखे[3] यद्वैरस्यं वपुरपि पुनर्ग्रन्थिनिचितं न सततः कोऽपि क्षणमपि भजेन्मूलमभितः । फलं चैवाप्राप्यं वितै[5]-

१ पलाशवृक्ष. २ गुडशर्करादि ३ अग्रे ४. पर्वव्यासम्. ५ वितथा दलनातिरिक्तसाधनाभावेन निष्फला रसस्य लिप्सा लब्धुमिच्छा यस्मिंस्तत्

थरसलिप्सस्य भवतस्तदिक्षोर्नायुक्तं विहितमितरैर्यत्तु दलनम् ॥ १४८ ॥ **लवङ्गः** ॥ लूनं मत्तमतंगजैः कियदपि छिन्नं तुषारार्दितैः शिष्टं ग्रीष्मजतीक्ष्णभानुकिरणैर्भस्मीकृतं काननम् । एषा कोणगता मुहुः परिमलैरामोदयन्ती दिशो हा कष्टं ललिता लवङ्गलतिका दावाग्निना दह्यते ॥ १४९ ॥ **कार्पासः** ॥ [1]नीरसान्यपि रोचन्ते कार्पासस्य फलानि मे । येषां [2]गुणमयं जन्म परेषां गुह्यगुप्तये ॥ १५० ॥ श्लाघ्यं कार्पासफलं यस्य गुणै रन्ध्रवन्ति पिहितानि । मुक्ताफलानि तरुणीकुचकलशतटेषु विलसन्ति ॥ १५१ ॥ निष्पेषोऽस्थिचयस्य दुःसहतरः प्राप्तस्तुलारोहणं ग्राम्यस्त्रीनखचुम्बनव्यतिकरस्तन्त्रीप्रहारव्यथा । [3]मातङ्गोक्षितमण्डवारिकणिकापानं च कूर्चाहतिः कार्पासेन परार्थसाधनविधौ किं किं न चाङ्गीकृतम् ॥ १५२ ॥ **शणः** ॥ भूर्जः परोपकृतये निजकवचविकर्तनं सहते । परबन्धनाय तु शणः प्रेक्षध्वमिहान्तरं कीदृक् ॥ १५३ ॥ **कण्टकारिका** ॥ उचितं नाम नारिङ्गयां केतक्यामपि कण्टकाः । रसगन्धोज्झिते किं ते कण्टकाः कण्टकारिके ॥ १५४ ॥ **धत्तूरः** ॥ [4]माधुर्यसाराधरितामृतस्य तत्कण्टकित्वं पनसस्य सह्यम् । [5]उन्मादिनो मातुलपुत्रकस्य कथं सहामो बत कण्टकित्वम् ॥ १५५ ॥ धत्तूर धूर्त तरुणेन्दुनिवासयोग्ये स्थाने [6]पिशाचपतिना विनिवेशितोऽसि । किं कैरवाणि विकसन्ति तमः प्रयाति [7]चन्द्रोपलो द्रवति वार्धिरुपैति वृद्धिम् ॥१५६॥ धत्तूरकण्टक फलप्रतिरोधबुद्ध्या वैरं वृथैव कुरुषे पनसेन सार्धम् । सन्तो हसन्ति न भजन्ति च चेतसा त्वां भ्रान्ता भवन्ति पुरुषास्तव सेवनेन ॥ १५७॥ महेशस्त्वां धत्ते शिरसि [8]रसराजस्य जयिनी विशुद्धिस्त्वत्सङ्गात्कनकमयमेतत्त्रिभुवनम् । तनोति त्वत्सेवां ननु कनकवृक्ष त्वदपरः परः को नु स्यात्तद्यदि न सुलभीभावमभजः ॥१५८॥ **पलाण्डुः**॥ कर्पूरधूलीरचितालवालः कस्तूरिकाकुङ्कुमलिप्तदेहः । सुवर्णकुम्भैः परिषिच्यमानो निजं गुणं मुञ्चति किं [9]पलाण्डुः ॥ १५९ ॥ **तृणानि** ॥ रूढस्य सिन्धुतटमनु तस्य तृणस्यापि जन्म कल्याणम् । यत्सलिलमज्जदाकुलजनस्य हस्तावलम्बनं भवति ॥ १६० ॥ उत्तुङ्गैस्तरुभिः किमेभिरखिलैराकाशसंस्पर्शिभिर्धन्योऽसौ नितरामुलूपविटपी नद्यास्तटेऽवस्थितः । एव यः कृतबुद्धिरुज्झितजलव्यालोलवीचीवशान्मज्जन्तं जनमुद्धरामि सहसा तेनैव मज्जामि वा ॥ १६१ ॥ **कलमाः** ॥ कलमाः पाकविनम्रा मूलतलाघ्रातसुरभिकह्लाराः । पवनाकम्पितशिरसः प्रायः कुर्वन्ति परिमलश्लाघाम् ॥ १६२ ॥ अस्मानवेहि [11]कलमानलमाहतानां [12]येषां प्रचण्डमुसलैरवदाततैव [13]। [14]स्नेहं विमुच्य सहसा [15]खलतां प्रयान्ति ये स्वल्पपीडनवशान्न वयं

१ शुष्काणि २ सूत्रमयम् ३ मातङ्गेनान्त्यजेनोक्षित सिक्त यन्मण्डवारि असिक्थद्रवोदक तत्कणिकाया. पानम् अतीवाशुचीति भाव ४ माधुर्यसारेण तुच्छीकृतममृत येन ५ धत्तूरफलस्य ६ शंकरेण. ७ चन्द्रकान्त ८ जयिनी उत्कर्षवती रसराजस्य पारदस्य विशुद्धि एतत्त्रिभुवनं कनकमयं सुवर्णमय तनोतीत्यन्वय ९ जातेति शेष. १० कदर्प ११ शालिविशेषान् १२ कण्डितानाम् १३ शुभ्रत्वम्. १४. तैलम्, ( पक्षे ) प्रीतिम् १५ दुर्जनत्वम्; ( पक्षे ) खलरूपत्वम्.

तिलास्ते ॥ १६३ ॥ **ताम्बूलम् ॥** किं वीरुधो भुवि न सन्ति सहस्रशोऽन्या यासां दलानि न परोपकृतिं भजन्ते । एकैव वल्लिषु विराजति नागवल्ली या नागरीवदनचन्द्रमलंकरोति ॥ १६४ ॥ वल्लीनां कति न स्फुरन्ति परितः पत्राणि किं तैरिह स्निग्धैरप्यतिकोमलैरपि निजामेवाश्रयद्भिः श्रियम् । तानेव स्तुमहे महाजनमुखं श्रीकारिजन्मव्रतान्यान्सूते नवनागरीप्रियतमांस्ताम्बूलवल्लीदलान् ॥ १६५ ॥ **तुम्बी ॥** सर्वास्तुम्ब्यः समकटुरसास्तुम्बिवल्लीप्रसूतास्ताः संबद्धा अपि कतिपया दुस्तरं तारयन्ति । शब्दायन्ते सरसमपराः शुष्ककाष्ठे निषण्णास्तन्मध्येऽन्या ज्वलितहृदयाः शोणितं संपिबन्ति ॥ १६६ ॥ **वंशः ॥** छिन्नः सुनिशितैः शस्त्रैर्विद्धश्च नव सप्तधा । तथापि हि सुवंशेन विरसं नापजल्पितम् ॥ १६७ ॥ **कुन्दम् ॥** एष षट्पदयुवा मदायतः कुन्द यापयति यामिनीस्त्वयि । दुर्वहा तदपि नोपचीयते पद्मिनीहृदयवेदना यदि ॥ १६८ ॥ संदर्शयस्व मधुवैभवमस्ति यत्ते रे कुन्द किं दुरभिमानमुरीकरोषि । एतन्न चेतसि करोषि सरोजबन्धुः पुष्पंधयोऽपि मम सौरभमातनोति ॥ १६९ ॥ **कमलानि ॥** वरमश्रीकता लोके नासमानसमानता । इतीव कुमुदोद्भेदे कमलैर्मुकुलायितम् ॥ १७० ॥ प्रसारितकरे मित्रे जगदुद्द्योतकारिणि । किं न कैरव लज्जा ते कुर्वतः कोशसंवृतिम् ॥ १७१ ॥ लक्ष्मीसंपर्कजातोऽयं दोषः पद्मस्य निश्चितम् । यदेष गुणसंदोहधाम्नि चन्द्रे पराङ्मुखः ॥ १७२ ॥ अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः । कथं कमलनालस्य नाभूवन्भङ्गुरा गुणाः ॥१७३॥ पङ्कज जलेषु वासः प्रीतिर्मधुपेषु कण्टकैः सङ्गः । यद्यपि तदपि तवैतच्चित्रं मित्रोदये हर्षः ॥ १७४ ॥ कुसुमं कोशातक्या विकसति रात्रौ दिवा च कूष्माण्ड्याः । अलिकुलनिचयै रुचिरं किं नु यशः कुमुदकमलयोरेव ॥ १७५ ॥ उदितवति द्विजराजे कस्य न हृदये मुदः पदं दधति । संकुचसि कमल यदयं हर हर वामो विधिर्भवतः ॥ १७६ ॥ एते हि गुणाः पङ्कज सन्तोऽपि न ते प्रकाशमायान्ति । यल्लक्ष्मीवसतेस्तव मधुपैरुपजीव्यते कोशः ॥ १७७ ॥ पद्मिनि किमिति क्रीडसि मधुपैर्लज्जालवोऽपि न हि किं ते । हर हर विस्मृत्योक्तं क्व नु लज्जा सवितृरक्तायाः ॥ १७८ ॥ किं कुप्यासि कस्मैचन सौरभसाराय कुप्य निजमधुने । यस्य कृते शतपत्र प्रतिपत्र तेऽद्य मृग्यते भ्रमरैः ॥ १७९ ॥ अयि मकरन्दस्यन्दिनि पद्मिनि मन्ये तवैव सुभगत्वम् । पुष्पवतीमपि भवतीं त्यजति न वृद्धः शुचिर्हंसः ॥ १८० ॥ मधुप इव मारुतेऽस्मिन्मा सौरभलोभमम्बुजिनि मंस्थाः । लोकानामेव मुदे महितोऽप्यात्मामुनार्थितां नीतः

१ लता २ कोशसंवरणम् ३ उदकेषु, (पक्षे डलयोः सावर्ण्यात्) जडेषु मूर्खेषु ४ भ्रमरेषु, (पक्षे) मद्यपेषु ५ साङ्करुहे, (पक्षे) दुष्टे ६ सूर्ये, (पक्षे) स्निग्धे ७ सूर्यानुरक्तायाः; (पक्षे) सविता पिता तस्मिन्रक्तायाः पितृगामिन्या इत्यभिप्राय ८ पुष्पयुक्ताम्; (पक्षे) रजस्वलाम् ९ श्वेत, (पक्षे) पवित्र १०. राजहंस, (पक्षे) परमहंस

॥ १८१ ॥ रे पद्मिनीपत्र भवच्चरित्रं चित्रं प्रतीमो वयमत्र किंचित् । त्वं पङ्कजन्मापि यदृच्छभावादपि स्पृशस्यम्बु न पङ्कसङ्गि ॥ १८२ ॥ जनिः सरोऽङ्कादतिपङ्किनो यद्यच्छो-लुपैर्वा मधुपैर्विहारः । कलङ्क एवैष कुमुद्वतीनां कलङ्किनः किं तु कलावतीनाम् ॥ १८३ ॥ अपि त्वया कैरविणि व्यधायि मुधा सुधाबन्धुनिधामभावः । जनापवादः परितः प्रयातः समागतो हन्त न जातु जातः ॥१८४॥ कमलिनि मलिनीकरोषि[1] चेतः किमिति बकैरवहेलितानभिज्ञैः[2][3] । परिणतमकरन्दमार्मिकास्ते[4] जगति भवन्तु चिरायुषो मिलिन्दाः[5] ॥ १८५ ॥ स्वच्छन्दं दलदरविन्द ते मरन्दं विन्दन्तो विदधतु गुञ्जितं मिलिन्दाः । आमोदानथ हरिदन्तराणि[6] नेतुं नैवान्यो जगति समीरणात्[7]प्रवीणः ॥ १८६ ॥ यावत्त्वां न खलु हसन्ति कैरविण्यो यावत्त्वां तरणिकराः परामृशन्ति । यावत्ते मधुविभवो नवोऽस्ति तावन्माध्वीकं वितर सरोज षट्पदेभ्यः ॥ १८७ ॥ रे पद्मिनीदल तवात्र मया चरित्रं दृष्टं विचित्रमिव यद्विदितं ध्रुवं तत् । यैरेव शुद्धसलिलैः परिपालितस्त्वं तेभ्यः पृथग्भवति पङ्कभवोऽसि[8] यस्मात् ॥ १८८ ॥ कामं भवन्तु मधुलम्पटषट्पदौघसंघट्टघर्घरघनध्वनयोऽब्जखण्डाः । गायन्नपि श्रुतिसुखं विधिरेव यत्र भृङ्गः स कोऽपि धरणीधरनाभिपद्मः ॥ १८९ ॥ विश्रम्य काननमसौ दिवसावसाने त्वय्येव षट्पदयुवा हृदय बबन्ध । राजीव चेन्मलिनिमानमुरीकरोषि कः स्यादहो मधुलिहामधुनावलम्बः ॥ १९० ॥ स्वामोदवासितसमग्रदिगन्तराला रक्ता मनोहरशिखा सुकुमारमूर्तिः । सेव्या सरोजकलिका तु यदैव जाता नीतस्तदैव विधिना मधुपोऽन्यदेशम् ॥ १९१ ॥ अयि दलदरविन्द स्यन्दमानं मरन्दं तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गाः । दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्परिमलमयमन्यो बान्धवो गन्धवाहः ॥ १९२ ॥ समुत्पत्तिः स्वच्छे सरसि हरिहस्ते निवसनं निवासः पद्मायाः[9] सुरहृदयहारी परिमलः । गुणैरेतैरन्यैरपि च ललितस्याम्बुज तव[10] द्विजोत्तंसे हंसे यदि रतिरतीवोन्नतिरियम् ॥ १९३ ॥ नालस्य प्रसरो जलेष्वपि कृतावासस्य कोशे रुचिर्दण्डे कर्कशता मुखेऽतिमृदुता मित्रे महान्प्रश्रयः । आमूलं गुणसंग्रहव्यसनिता द्वेषश्च दोषाकरे[11] यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥ १९४ ॥ नीरान्निर्मलतो जनिर्मधुरता वामामुखस्पर्धिनी वासो यस्य हरेः करे परिमलो[12] गीर्वाणचेतोहरः । सर्वस्वं तदहो महाकविगिरां कामस्य चाम्भोरुह त्वं चेत्प्रीतिमुरीकरोषि[13] मधुपे किं त्वां प्रति ब्रूमहे ॥ १९५ ॥ एकस्मिन्ननिरावयोः समजनि स्वच्छे सरोवारिणि भ्रातः काचिदिहैव कानिचिदहान्यत्र व्यतीतानि नौ । लब्ध तामरस त्वया मृगदृशां लीलावतंसास्पदं शैवालं विलुठामि पामरवधूपादा-

१ कलुषीकरोषि २ अवहेला नीता तिरस्कृतेति यावत् ३ अपण्डितै ४ मर्मज्ञा ५ भ्रमरा. ६ दिगन्तराणि ७ वायो ८ कर्दमोत्पन्न ९ लक्ष्म्या १०. पक्षिश्रेष्ठे ११. दोषाणामाकरे, (पक्षे) चन्द्रे १२ देवमनोहर १३ अङ्गीकरोषि

हते पाथसि ॥ १९६ ॥ वैमुख्यं मृगलाञ्छनस्य मनसो निर्मांति मे न व्यथां नो दूये चिरलालिता मधुलिहः सर्पन्ति यन्नान्तिकम्। जल्पन्तीव दुरक्षराणि मधुपश्रेणीरवच्छद्मना यत्कादम्त्र कुमुद्वती हसति मां तन्मे मनस्ताम्यति ॥ १९७ ॥ संभूतिस्तव मानसे सरसिज त्वत्सौरभैर्वासिताः सर्वास्ताः ककुभस्तवास्ति परमो बन्धुर्विवस्वानिति। त्वं चेदद्य गुणानवद्य शिशिरे शीतानिलैः शीर्यसि प्रायः प्राप्तमिदं तदत्र परमं दिष्टेऽब्ददष्टं बलम् ॥ १९८ ॥ खद्योतास्तरला भवन्ति भगवानस्तंगतो भानुमान्कोकः शोकमुपैति मत्तमनसः केङ्कुर्वते कौशिकाः। इत्थं चेत्सदसद्विवेकविधुरो धाता तदेतादृशं न द्रष्टव्यमितीव मुद्रितवती पद्मेक्षणं पद्मिनी ॥ १९९ ॥ पौलोमीपतिकानने विलसतां गीर्वाणभूमीरुहां येन घ्रातसमुज्झितानि कुसुमान्याजघ्रिरे निर्जरैः। तस्मिन्नद्य मधुव्रते विधिवशान्माध्वीकमाकाङ्क्षति त्वं चेदश्चसि लोभमम्बुज तदा किं त्वां प्रति ब्रूमहे ॥ २०० ॥

---

## संकीर्णान्योक्तयः।

शिवः ॥ भस्मनि स्मररिपोरनुरागो हीयते न घनसारपरागः। भूषणं यदि फणी न मणीनां काचिदप्यपचितिर्न च हेम्नः ॥ १ ॥ बिभ्राणे त्वयि भस्म कः समभवन्मन्दादरश्चन्दने कः क्षौमं कलयांचकार न कृती कृत्ति वसाने त्वयि। धत्तूरस्पृहयालुतां त्वयि गते तत्याज कः केतकीं स्वातन्त्र्याज्जहिहि त्वमीश्वर गुणांल्लोकोऽस्ति तद्ग्राहकः ॥ २ ॥ त्वं चेत्संचरसे वृषेण लघुता का नाम दिग्दन्तिनां व्यालैः काञ्चनकुण्डलानि कुरुषे हानिर्न हेम्नः पुनः। मूर्ध्ना चेद्वहसे जडांशुमयशः किं नाम लोकत्रये दीपस्याम्बुजबान्धवस्य जगतामीशोऽसि किं ब्रूमहे ॥ ३ ॥ छेत्सि ब्रह्मशिरो यदि प्रथयसि प्रेतेषु सख्यं यदि क्षैीवः क्रीडसि मातृभिर्यदि रतिं धत्से श्मशाने यदि। सृष्ट्वा संहरसि प्रजां यदि तथाप्याधाय भक्त्या मनः क सेवे करवाणि किं त्रिजगती शून्या त्वमेवेश्वरः ॥ ४ ॥ परशुरामः ॥ गोत्राचारविचारपारगतया वृद्धानिरादिष्टया मात्रा वस्तुषु तेषु तेषु पुरतः प्रस्तारितेषु क्रमात्। अन्नप्राशनवासरे सरभसं वक्षोभरोत्सर्पिणा येनात्त धनुरीक्षिताश्च सपदि क्षत्रावतंसा दिशः ॥ ५ ॥ रामचन्द्रः ॥ सग्रामाङ्गणमागते दशमुखे सौमित्रिणा विस्मितं सुग्रीवेण विवर्तितं हनुमता व्यालोलमालोकितम्। श्रीरामेण परंतु पीनपुलकस्फूर्जत्कपोलश्रिया सान्द्रानन्दरसालसानि दधिरे बाणासने दृष्टयः ॥ ६ ॥ सीता ॥ वनान्ते खेलन्ती शशकशिशुमालोक्य चकिता भुजप्रान्तं भर्तुर्भजति भयहर्तुः सपदि या। अहो सेयं सीता दशवदननीता हलरदैः परीता रक्षोभिः श्रयति विवशा कामपि दशाम् ॥ ७ ॥ इन्द्रः ॥ जम्भारिरेव जानाति रम्भासंयोगविभ्रमम्। घटीचेटीविटः किंस्विज्जानात्यमरकामिनीम् ॥ ८ ॥ स्मरः ॥ पुरो गीर्वाणानां

---

१. नन्दिना. २ दिग्गजानाम् ३ चन्द्रम्. ४ ख्यापयसि ५. मत्त ६. ब्राह्म्यादिभि ७ इन्द्र ८. घटवाहिका दासी तस्या जार. ९. देवाङ्गनानाम्

निजभुजबलाहोपुरुषिकामहो कारं कारं पुरभिदि शरं संमुखयतः । स्मरस्य स्वर्बालानयनशुभमालार्चनपदं वपुः सद्यो भालानलभसितजालास्पदमभूत् ॥ ९ ॥ **आकाशम्** ॥ यः पीयूषसहोदरैः स्नपयति ज्योत्स्नाजलैः सर्वतो यश्च त्वामधिकाधिकं ज्वलयति प्रोद्दामतापैः करैः । भ्रातर्व्योम तयोरपि स्थितिमिह व्यातन्वतो विक्रियानिर्मुक्तस्य महत्त्वमेतदसमं दूरेऽधिरूढं तव ॥ १० ॥ **पृथ्वी** ॥ विश्वास्य मधुरवचनैः साधून्ये वञ्चयन्ति नम्रतमाः । तानपि दधासि मातः काश्यपि यातस्तवापि च विवेकः ॥ ११ ॥ **जलम्** ॥ शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता किं ब्रूमः शुचितां भजन्त्यशुचयः स्पर्शेन यस्यापरे । किंवातःपरमुच्यते स्तुतिपदं यज्जीवनं देहिनां त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥ १२ ॥ अब्जं त्वब्जमथाब्जभूस्तत इदं ब्रह्माण्डमण्डात्पुनर्विश्वं स्थावरजंगमं तादितरं त्वन्मूलमित्थं पयः । धिक्त्वां चोर इव प्रयासि निभृतं निर्गत्य जालान्तरैर्बध्यन्ते विवशास्त्वदेकशरणास्त्वामाश्रिता जन्तवः ॥ १३ ॥ **मृगतृष्णिका** ॥ जलभ्रमोत्पत्तिकृतो गुणौघान्प्रकाशयन्त्यां मृगतृष्णिकायाम् । जलाशयभ्रान्तिरभून्ममैषा प्रभूतसंतापकरी पिपासा ॥ १४ ॥ **सुवर्णम्** ॥ न वै ताडनात्तापनाद्वह्निमध्ये न वै विक्रियात्क्लिश्यमानोऽहमस्मि । सुवर्णस्य मे मुख्यदुःखं तदेकं यतो मां जना गुञ्जया तोलयन्ति ॥ १५ ॥ **मौक्तिकम्** ॥ अत्यच्छेनाविरुद्धेन सुवृत्तेनातिचारुणा । अन्तर्भिन्नेन संप्राप्तं मौक्तिकेन निबन्धनम् ॥ १६ ॥ हृदये कुरु संचयं गुणानां यदि रे वाञ्छसि नासिके निवासम् । इति मौक्तिक ते वदामि नूनं गुणहीनो नहि नासिके विभाति ॥ १७ ॥ **सुवर्णकार** ॥ हे हेमकार परदुःखविचारमूढ किं मां मुहुः क्षिपसि वारशतानि वह्नौ । संदीप्यते मयि सुवर्णगुणातिरेको लाभः परं तव मुखे खलु भस्मपातः ॥ १८ ॥ **हारः** ॥ गुणवतस्तव हार न युज्यते परकलत्रकुचेषु विलुण्ठनम् । स्पृशति शीतकरो जघनस्थलीमुचितमस्ति तदेव कलङ्किनः ॥ १९ ॥ सद्वृत्तसद्गुणविचित्रमहार्हकान्ते कान्ताघनस्तनतटाञ्चितचारुमूर्ते । आः पामरीकठिनकण्ठविलग्नभग्न हा हार हारितमहो भवता गुणित्वम् ॥ २० ॥ **कुण्डलम्** ॥ यत्पूर्वं पवनाग्निशस्त्रसलिलैश्चीर्णं तपो दुष्करं तस्यैतत्फलमीदृशं परिणतं यज्ज्योतिरूपं वपुः । मुग्धापाण्डुकपोलचुम्बनसुखं सङ्गश्च रत्नोत्तमैः प्राप्तं कुण्डल वाञ्छसे किमपरं यन्मूढ दोलायसे ॥ २१ ॥ **नासाभूषणम्** ॥ हारस्यातिदुरापमस्त्रिभुवने हे नासिकाभूषण त्वत्सौभाग्यमिति प्रतीहि वनितावक्त्रेन्दुकान्तिप्रदा । यत्कान्तातनुसंगमाय सहते सोऽन्तर्विभेदव्यथा सा नासापुटभेदनादपि भवत्सङ्गं मनो वाञ्छति ॥ २२ ॥ **वीणादण्डः** ॥ यदेतत्कामिन्याः सुरतविरतौ पल्लवरुचा करेणानीतस्त्वं वसति सह हारेण गुणिना । मुहुः कुर्वन्गीतं कुचकलशपीठोपरि लुठन्नये वीणादण्ड प्रकटय फलं कस्य तपसः ॥ २३ ॥ **कुविन्दः** ॥ भ्रातर्ग्राम्य कुविन्द कन्दलयता वस्त्राण्यमूनि

१ भुमे २ गत ३. भार्चाग्नितम ४ सुवर्णरूपम् ५ गुणयुक्तेन

त्वया गोणीविभ्रमभाजनानि सुबहून्यात्मा किमायास्यते । किं त्वेकं रुचिरं चिरादभिनवं वासस्तदा सूग्यतां यन्नोज्झन्ति कुचस्थलात्क्षणमपि क्षोणीभुजां वल्लभाः ॥ २४ ॥ **कस्तूरिका** ॥ अयि त्यक्तासि कस्तूरि पामरैः पङ्कशङ्कया । अलं खेदेन भूपालाः किं न सन्ति महीतले ॥ २५ ॥ यद्यपि दैवाल्लब्धा कस्तूरीभूमिरत्र भूरितरम् । नेया किमसौ तदपि हि शौचार्थे जानता पुंसा ॥ २६ ॥ दुर्शीलपल्लीपतिपुत्रहस्ते कस्तूरि कस्ते वद दुर्विपाकः । आरभ्य सौरभ्यकथासु मौनं मालिन्यमात्रे वचसोऽवकाशः ॥ २७ ॥ अयि बत गुरुगर्वं मा स्म कस्तूरि यासीरखिलपरिमलानां मौलिना सौरभेण । गिरिगहनगुहायां लीनमत्यन्तदीनं स्वजनकममुनैव प्राणहीनं करोषि ॥ २८ ॥ जन्मस्थानं न खलु विमलं वर्णनीयो न वंशो दूरे पुंसां वपुषि रचना पङ्कशङ्कां करोति । यद्यप्येवं सकलसुरभिद्रव्यगर्वापहारी को जानीते परिमलगुणः कोऽपि कस्तूरिकायाः ॥ २९ ॥ **दीपः** ॥ रक्षपात्रगतं स्नेहं प्रदीपश्रीविवर्धनम् । प्रयास्यन्ति विना तेन भस्मत्वं ये भवद्गुणाः ॥ ३० ॥ यां कान्ति वहसि परां प्रदीप भद्र स्वीयासाविति हृदि मा स्म मन्यथास्त्वम् । सस्नेहे त्वयि निशि भानुनाहितासौ नैवं चेदहनि सति क्व वा गता सा ॥ ३१ ॥ प्रदीप किमु कुप्यसि प्रलयमारुतप्रज्वलत्प्रभापटलपाटलप्रकटपावकव्यक्तये । त्वमङ्ग किमु कामिनीकुचतटीपटीपल्लवप्रकम्पनपरिस्फुरत्पवनलेशपारं गतः ॥ ३२ ॥ रे रे दीप तिरस्कृताखिलतमःस्तोमारिवर्गस्य ते रात्रौ गूढनिजाङ्गपातिशलभाघातेन किं पौरुषम् । तत्कर्माचर येन तावकयशो भूयात्प्रभाते पुनर्न स्नेहो न च सा दशा नहि परं ज्योतिः परं स्थास्यति ॥ ३३ ॥ **तुला** ॥ गुरुषु मिलितेषु शिरसा प्रणमसि लघुषून्नता समेषु तुला । उचितज्ञासि तुले किं तुलयसि गुञ्जाफलैः कनकम् ॥ ३४ ॥ प्राप्य प्रमाणपदवी को नामास्ते तुलेऽवलेपस्ते । नयसि गरिष्ठमधस्तात्तदितरमुच्चैस्तरां कुरुषे ॥ ३५ ॥ **कुम्भः** ॥ दृढतरगलकनिबन्धः कूपनिपातोऽपि कलश ते धन्यः । यज्जीवनदानैस्त्व तर्षामर्षं नृणां हरसि ॥ ३६ ॥ श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रचण्डातप[1] क्लेशः श्लाघ्यतरः सुपङ्कनिचयैः श्लाघ्योऽतिदाहानलः । यत्कान्ताकुचपार्श्वबाहुलतिकाहिल्लोललीलासुखं लब्धं कुम्भवर त्वया नहि सुखं दुःखैर्विना लभ्यते ॥ ३७ ॥ **कलशः** ॥ भ्रातः काञ्चनलेपै[2]गोपितबहिस्ताम्राकृतिः सर्वतो मा भैषी. कलश स्थिरो भव चिरं देवालयस्योपरि । ताम्रत्व गतमेव काञ्चनमयी कीर्तिः स्थिरा तेऽधुना नान्तस्तत्त्वविचारणप्रणयिनो लोका बहिर्बुद्धयः ॥ ३८ ॥ **मुरली** ॥ माधवस्य मुरली मुखलग्ना रागमावहतु किंतु वयस्ये । वंशजाहमिति मास्तु सगर्वा या बिभर्ति बहुशो विवराणि ॥ ३९ ॥ परिपीड्य करद्वयेन गाढं परपुंसा परिचुम्बिताननापि । मुरली महनीयवंशजा मुहुराक्रन्दममन्दमातनोतु ॥ ४० ॥ **लाङ्गलिकः** ॥ रे

१. हस्तपादादिक्षालनार्थम् २ काञ्चनलेपेन गोपिता बाह्या ताम्रा आकृतिर्यस्य.

लाङ्गलिक विषद्याः क्रोडं लोहं पुरा यदद्राक्षीः । स्पर्श स्पर्शविशेषात्तदखिलमजनिष्ट हेम नृपयोग्यम् ॥ ४१ ॥ **कर्णधारः** ॥ दुर्गा नदी शिथिलबन्धविडम्बिनी नौरभ्युन्नता जलमुचो विषमः समीरः । आरूढवान्निजकुटुम्बयुतोऽध्वनीनस्तत्कर्णधार कुरु यत्सदृशं कुलस्य ॥४२॥ **शैलूषः** ॥ वंशः प्रांशुरसौ घुणव्रणमयो जीर्णा वरत्रा इमाः कीलाः कुण्ठतया विशन्ति न महीमाहन्यमाना अपि । आरोहव्यवसायसाहसमिदं शैलूष संत्यज्यतां दूरे श्रीर्निकटे कृतान्तमहिषग्रैवेयघण्टारवः ॥४३॥ **कुशीलवाः** ॥ मौलिः स्वर्णकिरीटकान्तिरुचिरः केयूरभव्यौ भुजौ त्वद्भृत्याः किल कञ्चुकिप्रभृतयो देवेति विज्ञाप्यसे । इत्थं कल्पनया कुशीलवनृपाहंकारदार्ढ्यं वृथा नृत्यान्ते भवतो भविष्यति मसीमात्रावशेषं वपुः॥४४॥**तैलिकः** ॥ अमी तिलास्तैलिक नूनमेतां स्नेहादवस्थां भवतोपनीताः । द्वेष्योऽभविष्यद्यदमीषु नूनं तदा न जाने किमिवाकरिष्यः[1] ॥४५॥ **बाला** ॥ स्रग्दाम मूर्धनि निधेहि गवेधुकानां गुञ्जामयीमुरसि धारय हारयष्टिम् । बाले कलावति चिरं पतितासि पल्लौ तल्लौहमन्यदपि भूषणमेषणीयम् ॥४६॥ **पान्थः** ॥ न यत्र गुणवत्पात्रमेकमप्यस्ति संनिधौ । कस्तत्र भवतः पान्थ कूपाम्बुग्रहणाग्रहः ॥४७॥ **दुग्धम्** ॥ को हि तुलामधिरोहति शुचिना दुग्धेन सहज मधुरेण । तप्तं विकृतं मथितं तथापि यत्स्नेहमुद्गिरति ॥४८ ॥ **बडिशदण्डाः** ॥ यत्सद्गुणोऽपि सरलोऽपि तटस्थितोऽपि वंशोद्भवोऽपि विदधासि नृशंसकर्म । वक्रात्मनो बडिशदण्ड तदेव तस्य जानामि संगतिफलं तव कण्टकस्य ॥ ४९ ॥ **पञ्जरलावकः** ॥ भ्रातः पञ्जरलावक मा कुरु संतोषमन्यनिधनेन । प्रातस्तवैव धातुः स्वामित्वं किं न जानासि ॥ ५० ॥ **व्याधः** ॥ एको विश्वसतां हराम्यपघृणः प्राणानहं प्राणिनामित्येवं परिचिन्त्य मा स्वमनसि व्याधानुतापं कृथाः । भूपानां भवनेषु किंच विमलक्षेत्रेषु गूढाशयाः साधूनामरयो वसन्ति कति नो त्वत्तुल्यकक्षाः खलाः ॥ ५१ ॥ सर्वोद्वेगकरं मृगादनममुं संत्यज्य हा धिक्त्वया लोकस्यानपकारिणं गिरिनदीतीराटवीनिर्वृतम् । अश्नन्तं तृणमेणशावमदयं व्याध घ्नतामु वृथा देवो दुर्बलघातकोऽयमिति सा गाथा यथार्थीकृता ॥ ५२ ॥ **शरः** ॥ कोटिद्वयस्य लाभेऽपि नतं सद्वंशजं धनुः । असद्वंश्यः शरः स्तब्धो लक्षलाभाभिकाङ्क्षया ॥५३॥ **लम्पाकः** ॥ प्रागल्भ्यं प्रथयन्यशो विशदयन्धाटी मुखे योजयन्भूपानां कलयन्कथां विरचयन्हस्ताङ्गुलीः स्फोटयन् । दानं पल्लवयन्गुण द्विगुणयन्नेत्राञ्चलं घूर्णयंल्लम्पाकः सविधं समेत्य सुदृशां किं नाम नो भाषते ॥ ५४ ॥ **विषमन्त्री** ॥ भेकेन क्वणता सरोषपरुष यत्कृष्णसर्पानने दातुं कर्णचपेटमुज्झितभिया हस्तः समुल्लासितः । यच्चाधोमुखमक्षिणी विदधता नागेन तूष्णीं स्थित तत्सर्वं विषमन्त्रिणो भगवतः कस्यापि लीलायितम् ॥ ५५ ॥**कण्टकः** ॥ सुमुखोऽपि सुवृत्तोऽपि सन्मार्गपतितोऽपि सन् । सतां वै पादलग्नोऽपि व्यथयत्येव कण्टकः

---

१. निर्भयेन

॥ ५६ ॥ **कालकूटम्** ॥ नन्वाश्रयस्थितिरियं[1] तव कालकूट केनोत्तरोत्तरविशिष्टपदोपदिष्टा । प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥५७॥ **जिह्वा** ॥ द्वात्रिंशद्दशनद्वेषीमध्ये भ्रमसि नित्यशः । तदिदं शिक्षितं केन जिह्वे संचारकौशलम् ॥ ५८ ॥ **मालाकारः** ॥ तोयैरल्पैरपि करुणया भीमभानौ निदाघे मालाकार व्यरचि भवता या तरोरस्य पुष्टिः । सा किं शक्या जनयितुमिह प्रावृषेण्येन वारां धारासारानपि विकिरता विश्वतो वारिदेन ॥ ५९ ॥ **नन्दनवनम्** ॥ स्वर्लोकस्य शिखामणिः सुरतरुग्रामस्य धामाद्भुतं पौलोमीपुरुहूतयोः परिणतिः पुण्यावलीनामसि । सत्यं नन्दन किंत्विदं सहृदयैर्नित्यं विधिः प्रार्थ्यते त्वत्तः खाण्डवरङ्गताण्डवनटो दूरेऽस्तु वैश्वानरः ॥६०॥ **वसन्तः** ॥ धूमायिता दशदिशो दलितारविन्दा देहं दहन्ति दहना इव गन्धवाहाः । त्वामन्तरेण मृदुताम्रदलाम्रमञ्जुगुञ्जन्मधुव्रतमयो किल कोकिलस्य ॥ ६१ ॥ **खलः** ॥ किमहं वदामि खलदिव्यमत गुणपक्षपातमभितो भवतः । गुणशालिनो निखिलसाधुजनान्यदहर्निशं न खलु विस्मरसि ॥ ६२ ॥ **मुसलः** ॥ जगति विदितमेतत्काष्ठमेवासि नूनं तदपि च किल सत्यं कानने वर्धितोऽसि । नवकुवलयनेत्रीपाणिसङ्गोत्सवेऽस्मिन्मुसल किसलयं ते तत्क्षणाद्यन्न जातम् ॥ ६३ ॥ **संकीर्णाः** ॥ गतास्ते दिवसा यत्र अवज्ञा कल्पशाखिनाम् । औदुम्बरफलेभ्योऽपि स्पृहयामोऽद्य जीवितम् ॥ ६४ ॥ नौकां वै भजते तावद्यावत्पारं न गच्छति । उत्तीर्णे तु नदीपारे नौकाया किं प्रयोजनम् ॥ ६५ ॥ कौस्तुभमुरसि मुरारेः शिरसि शशी द्योतते पुरंजयिनः । ननु जन्मना न जलधेर्जग्मतुरियतीं गतिं पश्य ॥ ६६ ॥ शतपदी शतपादतलेक्षणा यदि न गोपदमप्यतिवर्तितुम् । किमियतां द्विपदस्य हनूमतो जलपदे क्रमणे विदिदामहे ॥ ६७ ॥ यः कुन्तपाणिरिह भूप इति प्रसिद्धो भूखण्डमात्रविभव परसेवकश्च । तस्यात्मजः सततमिच्छति राजशब्दं व्रीडे जगज्जननि हन्त निराश्रयासि ॥ ६८ ॥ इयत्येतस्मिन्वा निरवधिचमत्कृत्यतिशये वराहो वा राहुः प्रभवति चमत्कारविषयः । महीमेको मग्नां यदयमवहद्दन्तसलिलैः[2] शिरःशेषः शत्रुर्निगिलति परं सत्यजति च ॥ ६९ ॥ श्रुत्वा कुम्भसमुद्भवेन मुनिना किंचित्तदात्यायिकं सिन्धावन्धकुटुम्बदर्दुरकुलं हर्षादिदं ध्यायति । गाम्भीर्याद्यदि तेन विभ्यति न वा त्रस्यन्ति भेकीशिशोरत्रागत्य सुखं वसन्तु तिमयो जातानुकम्पा वयम् ॥ ७० ॥ वक्रां नैष तनूविवर्तनगतिं गृह्णाति साचि स्मितं रमेरैर्दृग्वलनैरमुष्य नयनाच्चेतः परावर्तते । हस्ते त्वं मुनिदारकस्य पतिता कल्याणि तन्नीयता वेदीमार्जनबर्हिरर्पणवपट्कर्तव्यपाकैर्वयः ॥ ७१ ॥ सन्त्यन्येऽपि बृहस्पतिप्रभृतयः संभाविताः पञ्चषास्तान्प्रत्येष विशेषविक्रमरुची गहुर्न[3] वैरायते । द्वावेव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भासुरौ भ्रातः पर्वणि पश्य दानवपतिः शीर्षावशेषीकृतः ॥७२॥

१ आश्रयो निवासस्तत्र स्थितिः. २. सद्यागित्रस्य ३ दन्ता.

वीणाप्येकगुणो न राजरमणीनीरन्ध्रपीनस्तनद्वन्द्वे खेलति शुष्कदारुनिचया निःसारतुम्बीफला । चञ्चत्पार्विकशर्वरीपरिवृढप्रौढप्रथाभासुरं मुक्ताजातमपीह निर्गुणतया योग्यं न संभाव्यते ॥ ७३ ॥ तृष्णालोलविलोचने कलयति प्राचीं चकोरीगणे मौनं मुञ्चति किं च कैरवकुले कामे धनुर्धुन्वति । माने मानवतीजनस्य सपदि प्रस्थातुकामेऽधुना धातः किं नु विधौ विधातुमुचितो धाराधराडम्बरः ॥ ७४ ॥ कस्मै हन्त फलाय सज्जनगुणग्रामार्जने सज्जसि स्वात्मोपस्करणाय चेन्मम वचः पथ्यं समाकर्णय । ये भावा हृदयं हरन्ति नितरां शोभाभरैः संभृतास्तैरेवास्य कलेः कलेवरपुषो दैनंदिनं वर्धनम् ॥ ७५ ॥

**इति श्रीसुभाषितरत्नभाण्डागारे पञ्चमं प्रकरणं समाप्तम् ।**

---

# प्रकरणम् ६।

## मनसिजप्रशंसा।

अनङ्गेनाबलासङ्गाज्जिता येन जगत्त्रयी। स चित्रचरितः कामः सर्वकामप्रदोऽस्तु वः ॥ १ ॥ एक वस्तु द्विधा कर्तुं बहवः सन्ति धन्विनः। धन्वी स मार एवैको द्वयोरैक्यं करोति यः ॥ २ ॥ न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः। तथापि जितमेवासीदमुना भुवनत्रयम् ॥ ३ ॥ स एकस्त्रीणि जयति जगन्ति कुसुमायुधः। हरतापि तनुं यस्य शंभुना न हृतं बलम् ॥ ४ ॥ कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने। नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥ ५ ॥ बाणेष्वारोप्य गुणान्विधाय चापं वियोगिनीनयने। स्वयमतनुर्जगदेतज्जयति सुमास्त्रो विचित्रधानुष्कः ॥ ६ ॥ सपदमतरललभ्यामनन्यसामान्यबहलदर्पनिधेः। पुष्णातु चित्तयोनेरघटितघटनापटीयसी विभुता ॥ ७ ॥ जयति मनसिजः सुखैकहेतुर्मिथुनकुलस्य वियोगिनां कठोरः। वपुषि यदिषुपातवारणार्थं वहति वधूं शशिखण्डमण्डनोऽपि ॥ ८ ॥ चेतोभुवश्चापवति प्रसङ्गे का वा कथा मानुषलोकभाजाम्। भर्तुः पुरामप्यलिकेक्षणस्य तथाविधं पौरुषमर्धमासीत् ॥ ९॥ शिव शिव हि शिवेन पुष्पधन्वा प्रलयनटेन किमित्यकारि भस्म। स हि पुनरुदितश्छलाय लोके स तु मणिमन्त्रमहौषधैरसाध्यः ॥ १० ॥ शंभुस्वयंभुहरयो हरिणेक्षणानां येनाक्रियन्त सततं गृहकर्मदासाः। वाचामगोचरचरित्रविचित्रिताय तस्मै नमो भगवते कुसुमायुधाय ॥ ११ ॥ वक्षस्थलीवदनवामशरीरभोगैः पुष्यन्ति यस्य विभुतां पुरुषास्त्रयोऽपि। सोऽयं जगत्रितयजित्वरचापधारो मारः परान्प्रहरतीति न विस्मयाय ॥ १२ ॥ स्तोकास्त्रसाधनवता भवता मनोज स्वैरं जगज्जितमनङ्गतयापि सर्वम्। स्याच्चेद्भवान्बहुशरः प्रतिलब्धगात्रः कुर्यास्ततो यदपि कर्म कियन्न जाने ॥ १३ ॥ कुलगुरुरबलानां केलिदीक्षाप्रदाने परमसुहृदनङ्गो रोहिणीवल्लभस्य। अपि कुसुमपृषत्कैर्देवदेवस्य जेता जयति सुरतलीलानाटिकासूत्रधारः ॥ १४ ॥ हृदयतृणकुटीरे दीप्यमाने स्मराग्नावुचितमनुचितं वा वेत्ति नो पण्डितोऽपि। किमु कुवलयनेत्राः सन्ति नो नाकनार्यस्त्रिदशपतिरहल्यां तापसी यः सिषेवे ॥ १५ ॥ न गम्यो मन्त्राणां न च भवति भैषज्यविषयो न चापि प्रध्वंसं व्रजति विविधैः शान्तिकशतैः। भ्रमावेशादङ्गे किमपि विदधद्भङ्ग्यमसमं स्मरापस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥ १६ ॥ कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युल्लसत्पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति। दृष्ट्वा माद्यति मोदतेऽभिरमते प्रस्तौति विद्वानपि प्रत्यक्षाशुचिपुत्रिकां स्त्रियमहो कामस्य दुश्चेष्टितम् ॥ १७ ॥ चन्द्रे शीतलयत्यलीकनयनं शंभोः सुधाशीकरैर्विष्वग्व्याकुलयत्सु संयमधनान्का-

न्ताद्दगन्तेषु च । लीलायै परमैक्षवं धनुरिषून्बिभ्रत्प्रसूनात्मनः स्वच्छन्दं रतिवल्लभो विजयते त्रैलोक्यवीरः स्मरः ॥ १८ ॥ इक्षुर्धन्वशराः प्रसूनविततिर्भृङ्गावलीसिञ्जिनी यस्याज्ञावशवर्तिनः प्रमनसो निर्विष्टराष्ट्रादयः । यद्बाणा विहता विरञ्चिमुरजिन्मृत्युंजयेन्द्रादयो व्याप्ताशेषमुखा इव त्रिभुवनं पायादजेयः स्मरः ॥ १९ ॥

## स्त्रीप्रशंसा ।

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः । विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ १ ॥ न हयैर्न च मातङ्गैर्न रथैर्न च पत्तिभिः । स्त्रीणामपाङ्गदृष्ट्यैव जीयते जगतां त्रयम् ॥ २ ॥ सोमः शौचं ददौ तासां गन्धर्वाश्च शुभां गिरम् । अग्निः सर्वाङ्गकान्तित्वं तस्मादिष्टसमाः स्त्रियः ॥ ३ ॥ स्त्रियः पवित्रमतुलं नैता दुष्यन्ति कर्हिचित् । मासि मासि रजो यासां दुष्कृतान्यपहन्ति च ॥ ४ ॥ अमृतस्येव कुण्डानि रत्नानामिव राशयः । रतेरिव निधानानि निर्मिताः केन योषितः ॥ ५ ॥ प्राणानां च धिया याश्च मूढाः सादृश्यकारिणः । प्रियाकण्ठगता रत्यै प्राणा मरणहेतवः ॥ ६ ॥ आकृतिप्रेमसरसा विलासालसगामिनीः । असारे दग्धसंसारे सारं सारङ्गलोचनाः ॥ ७ ॥ हरिणप्रेक्षणा यत्र गृहिणी न विलोक्यते । सेवितं सर्व संपद्भिरपि तद्भवनं वनम् ॥ ८ ॥ यासामञ्चलवातेन दीपो निर्वाणतां गतः । तासामालिङ्गने पुंसां नरके पतन कुतः ॥ ९ ॥ नामृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम् । यस्याः सङ्गेन जीव्येत म्रियेत च वियोगतः ॥ १० ॥ यासां नाम्नापि कामः स्यात्संगमं दर्शनं विना । तासां दृक्संगमं प्राप्य यन्न द्रवति कौतुकम् ॥ ११ ॥ यावद्दृष्टिर्मृगाक्षीणां नो नरीनर्ति भङ्गुरा । तावज्ज्ञानवतां चित्ते विवेकः कुरुते पदम् ॥ १२ ॥ समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि । दष्टाश्च दंशनैः कान्तं दासीकुर्वन्ति योषितः ॥ १३ ॥ ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् । प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ १४ ॥ प्रभवति मनसि विवेको विदुषामपि शास्त्रसंभवस्तावत् । निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम् ॥ १५ ॥ सन्तु विलोकनभाषणविलासपरिहासकेलिपरिरम्भाः । स्मरणमपि कामिनीनामलमिह मनसो विकाराय ॥१६॥ ह्लादनतापनशक्ती सहजे स्तः सुभ्रुवां कटाक्षेषु । तत्राद्या प्रबला स्यान्नेदीयस्त्वे परा दवीयस्त्वे ॥१७॥अवलोकनमपि सुखयति कुवलयदलचारुचपलनयनायाः । किं पुनरमृतसमानं सरभसमालिङ्गनं तस्याः॥१८॥व्रीडावेलारुद्धं सागरतोयमिव योषितां हृदयम् । रागेन्दुरुदयमानो भूयो भूयस्तरङ्गयति ॥१९॥ अकृशं कुचयोः कृशं वलग्ने विततं चक्षुषि विस्तृतं नितम्बे । अरुणाधरमाविरस्तु चित्ते करुणाशालिकपालिभागधेयम् ॥ २० ॥ अधरे नववीटिकानुरागो नयने कज्जलमुज्ज्वलं दुकूलम् । इदमाभरणं नितम्बिनीनामितरद्दूषणमङ्गदूषणाय ॥ २१ ॥

रत्नानि विभूषयन्ति योषा भूष्यन्ते वनिता न रत्नकान्त्या । चेतो वनिता हरन्त्यरत्ना रत्नानि विनाङ्गनाङ्गसङ्गात् ॥ २२ ॥ तावदेव विदुषां विवेकिनी बुद्धिरस्ति भवबन्धछेदिनी । यावदिन्दुवदना न कामिनी वीक्षिता रहसि हंसगामिनी ॥ २३ ॥ तरुणिमाकृतावलोकना ललितविलासविलब्धविग्रहा । स्मरशरविसराचितान्तरा मृगनयना हरति मुनेर्मनः ॥ २४ ॥ जये धरित्र्याः पुरमेव सारं पुरे गृहं सद्मनि चैकदेशः । तत्रापि शय्या शयने वरा स्त्री रत्नोज्ज्वला राज्यसुखस्य सारः ॥ २५ ॥ आस्यं सहास्यं नयनं सलास्यं सिन्दूरबिन्दूदयशोभि भालम् । नवा च वेणी हरिणीदृशश्चेदन्यैरगण्यैरपि भूषणैः किम् ॥ २६ ॥ मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु । सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥ २७ ॥ स्मितेन भावेन च लज्जया भिया पराङ्मुखैरर्धकटाक्षवीक्षणैः । वचोभिरीर्ष्याकलहेन लीलया समस्तभावैः खलु बन्धनं स्त्रियः ॥२८॥ उडुराजमुखी मृगराजकटिर्गजराजविराजितमन्दगतिः । यदि सा वनिता हृदये निहिता क्व जपः क्व तपः क्व समाधिरतिः ॥ २९ ॥ तदाखण्डलाशां महीमण्डलाशां तथा भोगिभोगानुरागं त्यजामः । मनःक्षोभदक्षान्कृपातः कटाक्षान्कुरंगेक्षणाश्चेत्क्षणं पातयन्ति ॥ ३० ॥ भ्रूचातुर्याकुञ्चिताक्षाः कटाक्षाः स्निग्धा वाचो लज्जिताश्चैव हासाः । लीलामन्दं प्रस्थितं च स्थितं च स्त्रीणामेतद्भूषणं चायुधं च ॥ ३१ ॥ नूनं हि ते कविवरा विपरीतबोधा ये नित्यमाहुरबला इति कामिनीस्ताः । याभिर्विलोलतरतारकदृष्टिपातैः शक्रादयोऽपि विजितास्त्वबलाः कथं ताः॥३२॥नान्दीपदानि रतिनाटकविभ्रमाणामाज्ञाक्षराणि परमाण्यथवा स्मरस्य दष्टेऽधरे प्रणयिना विधुताग्रपाणेः सीत्कारशुष्करुदितानि जयन्ति नार्यः॥३३॥ हृतं यस्यालोकाद्विरहिजनशोकापनयनं यदङ्के सानन्दं नयनमरविन्दं विहरति । न यस्यापैति श्रीः कचनिचयराहोरपि पुनः स मे खेदं रामावदनहितधामा शमयतु ॥३४॥ श्रुतं दृष्टं स्पृष्टं स्मृतमपि नृणां ह्लादजननं न रत्नं स्त्रीभ्योऽन्यत्क्वचिदपि कृतं लोकपतिना । तदर्थं धर्मार्थौ विभववरसौख्यानि च ततो गृहे लक्ष्म्या मान्याः सततमबला मानविभवैः ॥ ३५ ॥ ललाटे कस्तूरीतिलकमबलाः कज्जलरुचिं दृशोः कर्णद्वन्द्वे विमलमणिताटङ्कयुगलम् । गले मुक्तामालां शुचि वसनमङ्गे च सततं वशीकर्तुं विश्वं दधति खलु बाह्योपकरणम् ॥ ३६ ॥ विमुञ्चति बुधो जनः सुकृतचिन्तनं दूरतो जहाति च मुनिस्तपस्त्यजति धीरतां शंकरः । विधिर्भवति चञ्चलस्त्रिजगतीपतिः क्षुभ्यति क्षणं कुटिलदृष्टयो यदि पतन्ति वामभ्रुवः ॥ ३७ ॥ अलमतिचपलत्वात्स्वप्नमायोपमत्वात्परिणतिविरसत्वात्संगमेनाङ्गनायाः । इति यदि शतकृत्वस्तत्त्वमालोचयामस्तदपि न हरिणाक्षी विस्मरत्यन्तरात्मा ॥ ३८ ॥ यासां सत्यपि सद्गुणानुसरणे दोषानुरागो भृशं याः प्राणान्प्रति तर्पयन्ति न पुनः सपूर्णदृष्टिप्रिये । अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मकस्तत्तत्केलिषु दक्षिणा अपि सदा

वामा जयन्त्येव ताः ॥ ३९ ॥ स्त्रीमुद्रां कुसुमायुधस्य परमां सर्वार्थसंपत्करीं ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः । ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ४० ॥ द्रष्टव्येषु किमुत्तमं मृगदृशः प्रेमप्रसन्नं मुखं घ्रातव्येष्वपि किं तदास्यपवनः श्राव्येषु किं तद्वचः । किं स्वाद्येषु तदोष्ठपल्लवरसः स्पृश्येषु किं तद्वपुर्ध्येयं किं नवयौवनं सुहृदयैः सर्वत्र तद्विभ्रमः ॥ ४१ ॥ यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः । तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥ ४२ ॥ सद्रत्नस्फारहारा भयवरदकरा स्रस्तधम्मिल्लभारा मूलाधाराधिकारा निगमनिधिधरा काव्यकोटिप्रचारा । संसारानल्पकारा सदनमयहरा चिद्घनैकावतारा तारा शृङ्गारधारा मनसि वसतु ते सर्वदा सर्वसारा ॥ ४३ ॥ संसारेऽस्मिन्नसारे परिणतितरले द्वे गती पण्डितानां तत्त्वज्ञानामृताम्भःपुलकितमनसां यान्तु कालः कदाचित् । नो चेन्मुग्धाङ्गनानां स्तनजघनभराभोगसंभोगिनीनां स्थूलोपस्थस्थलीषु स्थगितकरतलस्पर्शलोलोद्यतानाम् ॥ ४४ ॥

---

## बालावर्णनम् ।

अभ्यासः कर्मणां सम्यगुत्पादयति कौशलम् । विधिना तावदभ्यस्तं यावत्सृष्टा मृगेक्षणा ॥ १ ॥ न देवकन्यका नापि गन्धर्वकुलसंभवा । तथाप्येषा तपोभङ्गं विधातुं वेधसोऽप्यलम् ॥ २ ॥ इयं व्याधायते बाला भ्रूरस्याः कार्मुकायते । कटाक्षाश्च शरायन्ते मनो मे हरिणायते ॥ ३ ॥ मनोऽपि शङ्कमानाभिर्बालाभिरुपजीव्यते । अपडक्षीणपाड्गुण्यमन्त्री मकरकेतनः ॥ ४ ॥ अतन्द्रचन्द्राभरणा समुद्दीपितमन्मथा । तारकातरला श्यामा सानन्दं न करोति कम् ॥ ५ ॥ दग्धो विधिर्विधत्ते न सर्वगुणसुन्दरं जन कमपि । इत्यपवादभयादिव मुग्धाक्षी निर्मिता विधिना ॥ ६ ॥ मीनवती नयनाभ्यां चरणाभ्यामपि प्रफुल्लकमलवती । शैवालिकी च केशैः सुरसेयं सुन्दरी सरसी ॥ ७ ॥ कुङ्कुमपङ्केनाङ्कितदेहा गौरपयोधरकम्पितहारा । नूपुरहंसरणत्पदपद्मा कं न वशीकुरुते भुवि रामा ॥ ८ ॥ मन्दमन्दगमना करिणी किं वा विशालनयना हरिणी किम् । पूर्णचन्द्रवदना रजनी किं पश्य गच्छति सखे तरुणी किम् ॥ ९ ॥ उत्तुङ्गस्तनभरतान्ततान्तमध्य विश्लिष्यद्घनकचवान्तवान्तसूनम् । वक्राब्जभ्रमदलिभीतभीतनेत्रं मुग्धाक्षी मम धुरि मन्दमन्दमेति ॥ १० ॥ एकान्तसुन्दरविधानजडः क्व वेधाः सर्वाङ्गकान्तिचतुरं क्व च रूपमस्याः । मन्ये महेश्वरभयान्मकरध्वजेन प्राणार्थिना युवतिरूपमिदं गृहीतम् ॥ ११ ॥ किं कौमुदीः शशिकलाः सकला विचूर्ण्य संयोज्य चामृतरसेन पुनः प्रयत्नात् । कामस्य घोरहरहुंकृतिदग्धमूर्तेः संजीवनौषधिरियं विहिता विधात्रा

॥ १२ ॥ लीलास्मितेन शुचिना मृदुनोदितेन व्यालोकितेन लघुना गुरुणा गतेन ।,व्याजृम्भितेन जघनेन च दर्शितेन सा हन्ति तेन गलितं मम जीवितेन ॥ १३ ॥ नेदं मुखं मृगवियुक्तशशाङ्कबिम्बं नेमौ स्तनावमृतपूरितहेमकुम्भौ । नैवालकावलिरियं मदनास्त्रशाला नैवेदमक्षियुगलं निगडं हि यूनाम् ॥ १४ ॥ चित्ते निवेश्य परिकल्पितसत्त्वयोगान्रूपोच्चयेन विधिना विहिता कृशाङ्गी । स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः ॥ १५ ॥ चन्द्रो जडः कदलिकाण्डमकाण्डशीतमिन्दीवराणि च विमुद्रितविभ्रमाणि । येनाक्रियन्त सुतनोः स कथं विधाता किं चन्द्रिकां क्वचिदशीतरुचिः प्रसूते ॥१६॥ निर्मुक्तशैशवदशा शिशिरा नवीनसंप्राप्तयौवनवसन्तमनोरमश्रीः । उन्मीलितस्तननवस्तवका निकाममेणीदृशस्तनुलता तनुते मुदं नः ॥ १७ ॥ नीलोत्पलोल्लसितखञ्जनमञ्जुनेत्रा संपूर्णशारदसुधाकरकान्तवक्त्रा । बाला जगत्त्रितयमोहनदिव्यमूर्तिर्मन्ये विभाति जगति स्मरवीरकीर्तिः ॥ १८ ॥ एताः स्खलद्वलयसंहतिमेखलोत्थझङ्कारनूपुररवाहृतराजहंसाः । कुर्वन्ति कस्य न मनो विवशं तरुण्यो विश्वस्तमुग्धहरिणीसदृशैः कटाक्षैः ॥ १९ ॥ अपाङ्गतरले दृशौ तरलवक्रवर्णा गिरो विलासभरमन्थरा गतिरतीव कान्तं मुखम् । इति स्फुरितमङ्गके मृगदृशां स्वतो लीलया तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ २० ॥ दृशः पृथुतरीकृता जितनिजाब्जपत्रत्विषश्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम् । शिरांसि चलितानि विस्मयवशाद्ध्रुवं वेधसो विधाय ललनां जगत्त्रयललामभूतामिमाम् ॥ २१ ॥ क्वचित्सुभ्रूभङ्गैः क्वचिदपि च लज्जापरिणतैः क्वचिद्भीतित्रस्तैः क्वचिदपि च लीलाविलसितैः । नवोढानामेभिर्वदनकमलैर्नेत्रचलितैः स्फुरल्लीलालीनाप्रकरपरिपूर्णा इव दृशः ॥ २२ ॥ अमुष्या लावण्यं मृदुलमृदुलानण्ववयवान्मनोलौल्यं धातुः करकठिनतां मे विमृशति । पदं चित्ते धत्ते मतिरिति पुरा पङ्कजभुवा ध्रुवं कल्याणीयं कलितसुकृतैरेव रचिता ॥ २३ ॥ समीचीना चीनांशुकपरिवृताङ्गी प्रविलसत्कुचापीना हीना जघनघनभागेऽञ्जवदना । न दीना दीनान्तःकलितमदना सेयमधुना नवीना मीनाक्षी व्यथयति मुनीनामपि मनः ॥२४॥ स्फुरन्नानारत्नारुणितवसना वृत्तमसृणस्तनापीना मत्ता तरसजघना हंसगमना । स्मराधीनासीना कविहृदि जिताशेषललना नवीना मीनाक्षी व्यथयति मुनीनामपि मन. ॥ २५ ॥ उदासीना लीनामपि वचसि लीनातनुलसत्त्रपाधीना दीना लपनपदवीनायकधृता । कवीनामासीना हृदि कुमुदिनीनाथवदना नवीना मीनाक्षी व्यथयति मुनीनामपि मनः ॥ २६ ॥ निलीना वेश्मान्तः कथमपि सखीनामभिहितैः कृताधीना हीनाकृतिरपि मतीनामविषया । कवीनामज्ञत्वं ज्ञपयति विपीना तनुतया नवीना मीनाक्षी व्यथयति मुनीनामपि मन· ॥२७॥ कुचाभ्यां भास्वन्ती विजितलकुचाभ्यां युवमनो हरन्ती बिब्बोकैः सरसि विहरन्ती मधुरगी·। तारुण्यं लावण्यं किमपि विदधानार्भकविधौ नवीना मीनाक्षी व्यथयति मुनीनामपि मन.॥२८॥

अमलमृणालकाण्डकमनीयकपोलरुचस्मेरलसद्वलनोत्पलनिभप्रतिकृद्दृशः । तिलकमदशोकशोणकरकान्तिभृतः सुतनोर्गलल्ललितानि हन्त ललितानि हरन्ति मनः ॥ २९ ॥ लावण्यामृतदीर्घिका कुलगृहं सौन्दर्यसौभाग्ययोस्त्रैलोक्याकमलकन्दलिर्गिरं सौख्यात्महर्म्यं मया । रूपालोकनकौतुकेन चटुना शिल्पश्रमेणाद्भुतं मन्ये यां विनिर्माय विहितं सृष्टेर्ध्वजारोपणम् ॥ ३० ॥ अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः । वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ ३१ ॥ वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानां चयः । वक्षोजाविभकुम्भविभ्रमहरौ गुर्वी नितम्बस्थली वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मण्डनम् ॥ ३२ ॥ अस्याश्चेद्गतिसौकुमार्यमधुना हंसस्य गर्वैरलं संलापो यदि धार्यतां परभृतैर्वाचंयमत्वव्रतम् । अङ्गानामकठोरता यदि दृषत्प्रायैव सा मालती कान्तिश्चेत्कमला किमत्र बहुना काषायमालम्ब्यताम् ॥ ३३ ॥ निर्मातुं युवतीमजो निरमिते वक्त्रं शशिभ्रान्तितः कोशीभूतनिजाम्बुजासनमधिष्ठातुं न शक्तो विधिः । मध्यं निम्नमवाप्य कुचौ न कठिनौ पीनौ नितम्बौ कचान्त्रक्रान्तिर्मितवान्मतिः स्फुरति हि स्वस्थेव नृणां चेतसि ॥ ३४ ॥ सौन्दर्यस्य तरंगिणी तरुणिमोत्कर्षस्य हर्षोद्गमः कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः । विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥ ३५ ॥ दृष्टिः सालसतां बिभर्ति न शिशुक्रीडासु बद्धादरा श्रोत्रे प्रेषयति प्रवर्तितसखीसंभोगवार्तास्वपि । पुंसामङ्कमपेतशङ्कमधुना नारोहति प्राग्यथा बाला नूतनयौवनव्यतिकरावष्टभ्यमाना शनैः ॥ ३६ ॥ आयाति श्रियमक्षमा नयनयोरम्भोरुहस्येर्ष्यया सन्नाहः स्तनयोरयं कथयते संभोगयोग्यां दशाम् । वैदग्ध्येन सहासिकां वितनुते वाचामियं प्रक्रियां मुग्धायाः पुनरैन्दवीं न सहते मुख्यामभिख्यां मुखम् ॥ ३७ ॥

---

## वयःसंधिवर्णनम् ।

यथा यथा विशत्यस्या हृदये हृदयेश्वरः । तथा तथा बहिर्यातौ मन्ये संकोचतः कुचौ ॥१॥ अन्तरङ्गमनङ्गस्य शृङ्गारकुलदैवतम् । अङ्गीकरोति तन्वङ्गी सा विलासमयं वयः ॥२॥ दृश्य दृशां सहस्रैर्मनसामयुतैर्विभावनीयं च । सुकृतशतकोटिभोग्यं किमपि वयः सुभ्रुवो जयति ॥ ३ ॥ न्यञ्चति वयसि प्रथमे समुदञ्चति तरुणिमनि सुदृशः । दधति स्म मधुरिमाणं वाचो गतयश्च विभ्रमाश्च भृशम् ॥ ४ ॥ यदवधि विलासभवनं यौवनमुदियाय चन्द्रवदनायाः । दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते ॥ ५ ॥ अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू । कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥६॥ मृदुलवलि-

कलितमध्यं पृथुलकुचं चारु विपुलभूजघनम् । पुन्नागस्पृहणीयं स्फुरति वनं यौवनं च नारं
णाम् ॥७॥ संभिन्नयोरमुष्या वयसोः पयसोरिवाङ्गेषु । अनयोरसद्भिभेदं मानसजन्मा परं वे
॥ ८ ॥ स्तनतटमिदमुत्तुङ्गं निम्नो मध्यः समुन्नतं जघनम् । विषमे मृगशावाक्ष्या वपुषि न
क इव न स्खलति ॥९॥ अयमङ्कुरभाव एव तावत्कुचयोः कर्षति लोकलोचनानि । इतरेत
पीडनीमवस्थां गतयोः श्रीरनयोः कथं भवित्री ॥ १० ॥ परिहरति यथा यथा वयोऽस्य
स्फुरदुरुकन्दलशालिवालभावम् । दृढयति धनुषस्तथा तथा ज्यां स्पृशति शरानपि सज्ज
यन्मनोभूः ॥११॥ यथा यथास्याः कुचयोः समुन्नतिस्तथा तथा लोचनमेति वक्रताम् । अ
सहन्ते बत नो परोदय निसर्गतोऽन्तर्मलिना ह्यसाधवः ॥१२॥ समं विलासोऽङ्कुरितः स्तनाभ्य
त्रपा विलासेन सहावतीर्णा। अवर्ततान्यस्त्रपयैव साकं कान्तः प्रकारो वचसां कृशाङ्ग्याः॥१३
उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् । बभूव तस्याश्चतुरश्रशोभि वपुर्विभ
नवयौवनेन ॥ १४ ॥ आवृणोति यदि सा मृगीदृशी स्वाञ्चलेन कुचकाञ्चनाचलम् । भू
एव वहिरेति गौरवादुन्नतो न सहते तिरस्क्रियाम् ॥१५॥ अत्युन्नतस्तनमुरो नयने सुदीर्घे व
भ्रुवावतितरां वचनं ततोऽपि। मध्योऽधिकं तनुरनूनगुरुर्नितम्बो मन्दा गतिः किमपि चाद्भुतलोच
नायाः ॥१६॥भ्रूपल्लवो धनुरपाङ्गतरङ्गितानि वाणा गुणाः श्रवणपालिरिति स्मरेण । तस्य
मनङ्गजयजंगमदेवतायामस्त्राणि निर्जितजगन्ति किमर्पितानि॥१७॥दृशोः सीमावादः श्रव
णयुगलेन प्रतिकलं स्तनाभ्यां संरुद्धे हृदि मनसिजस्तिष्ठति वलात् । नितम्बः साक्रन्दं क्षि
पति रशनादाम परतः प्रवेशस्तन्वङ्ग्या वपुषि तरुणिम्नो विजयते ॥ १८ ॥ अनाघ्रातं पुष्
किसलयमलूनं कररुहैरनाविद्धं रत्नं मधु नवमनास्वादितरसम् । अखण्डं पुण्यानां फलमि
च तद्रूपमनघं न जाने भोक्तारं कमिह समुपस्थास्यति विधिः ॥ १९ ॥ भ्रुवौ काचिल्लील
परिणतिरपूर्वा नयनयोः स्तनाभोगो व्यक्तस्तरुणिमसमारम्भसमये । इदानीं वालायाः किम
मृतमयः किं विषमयः किमानन्दः साक्षाद्ध्वनितमधुरः पञ्चमरवः ॥ २० ॥ अनाकूतैरेव प्रि
यसहचरीणां शिशुतया वचोभिः पाञ्चालीमिथुनमधुना सगमयितुम् । उपादत्ते नो वा विर
मति न वा केवलमियं कपोलौ कल्याणी पुलकमुकुलैर्दन्तुरयति ॥ २१ ॥ प्रगल्भा
नामन्तः प्रविशति शृणोति प्रियकथां स्वयं तत्तच्चेष्टाशतमभिनयैर्वञ्चयति च । स्पृहामन्त
कान्ते वहति न समभ्येति निकटं यथैवेयं वाला हरति हि तथा चित्तमधिकम् ॥ २२ ॥
स्मितं किंचिद्वक्त्रे सरलतरलो दृष्टिविभवः परिस्यन्दो वाचामभिनवविलासोक्तिसरसः ।
गतीनामारम्भः किसलयितलीलापरिकरः स्पृशन्त्यास्तारुण्यं किमिह न हि रम्यं मृगदृश
॥ २३ ॥ इमे तारुण्यश्रीनवपरिमलाः प्रौढसुरतप्रतापप्रारम्भाः स्मरविजयदानप्रतिभुवः ।
चिरं चेतश्चौरा अभिनवविकारैकरुचयो विलासव्यापाराः किमपि विजयन्ते मृगदृशः ॥२४
अपक्रान्ते बाल्ये तरुणिमनि चागन्तुमनसि प्रयाते मुग्धत्वे चतुरिमणि चाश्लेषरसिके ।

केनापि स्पृष्टं यदिह वयसा मर्म परमं यदेतत्पश्येषोर्जयति वपुरिन्दीवरदृशः ॥ २५ ॥ तदात्वप्रोन्मीलन्मृदिमरमणीया कठिनतां विचित्य प्रत्यङ्गादिव तरुणभावेन घटितौ । स्तनौ सविभ्राणाः क्षणविनयवैपात्यमसृणस्मरोन्मेषाः केषामुपरि न रसानां युवतयः ॥ २६ ॥ मुखं विकसितं स्मितं वशितवक्रिमप्रेक्षितं समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः । उरोमुकुलितौ स्तनौ जघनमंसबन्धोद्धुरं बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥ २७ ॥ न दन्तुरमुरःस्थलं वचसि नाश्रिता चातुरी विकारि न विलोकितं भ्रुवि न वक्रिमोपक्रमः । तथापि हरिणीदृशो वपुषि कापि कान्तिच्छटापटावृतमहामणिद्युतिरिवात्र संलक्ष्यते ॥ २८ ॥ इदं परमसुन्दरं तनुपुरं कुरङ्गीदृशां निवार्य खलु शैशवं स्वयमनेन नीतं बलात् । तदागमनशङ्कया मकरकेतुना किं कृतं पयोधरधराधरौ त्रिवलिवाहिनीदुस्तरौ ॥ २९ ॥ स्थिरत्वमचिरद्युतौ तमसि कोऽपि बन्धग्रहो विधौ किमपि सौरभं मधुनि कापि वर्णात्मता । शिरीषनवदामनि स्फुरति कोऽपि शैलोदयो वयोऽभिनववेधसस्तदिह मन्महे कौशलम् ॥ ३० ॥ क्षणं सरलवीक्षणं क्षणमपाङ्गसंवीक्षणं क्षणं रजसि खेलनं क्षणमतीव भूषादरः । क्षणं द्रुततरा गतिः क्षणमतीव मन्दा गतिः क्षणक्षणविलक्षणं जयति चेष्टितं सुभ्रुवः ॥ ३१ ॥ पङ्क्त्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्यां श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यदेशः । धत्ते वक्षः कुचसचिवतामद्वितीयत्वमास्यं त्वद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ ३२ ॥ क्षोभं धत्ते यदतिवहलः स्निग्धलावण्यपूरः प्रत्यङ्गं यत्तटमनुसरन्त्यूर्मयो विभ्रमाणाम् । उन्मग्नं यत्स्फुरति च मनाक्कुम्भयोर्द्वन्द्वमेतत्तन्मन्येऽस्याः स्मरगजयुवा गाहते हृत्तडागम् ॥ ३३ ॥ मन्दं मन्दं श्रवणपुटकोपान्तगन्ता दृगन्तः किंचित्किंचिद्विरमति मनो धूलिकेलीरसेभ्यः । आविर्भावः स्तनमुकुलयोः कापि कान्तिः समन्तादद्य श्वो वा कुसुमधनुषो यौवराज्याभिषेकः ॥ ३४ ॥ संनद्धोऽयं नवतरुणिमा काममास्कन्दुकामो नैनां मुञ्चत्यहह सहसा कौतुकी बालभावः । तद्वैराज्यं वरतरतनुस्वर्णभूमौ प्रवृत्तं प्रायस्त्वस्मादनुदिनमयं क्षीयते मध्यदेशः ॥ ३५ ॥ दोलायां जघनस्थलेन चलता लोलेक्षणा लज्जते साशङ्कं तनुकण्टकक्षतभिया क्रीडावने क्रीडति । धत्ते दिक्षु निरीक्षणं स्मितमुखी पारावतानां रुतैः सज्जं मौग्ध्यविसर्जनाय सुतनोः शृङ्गारमिश्रं वयः ॥ ३६ ॥ वक्षस्यावरणादनस्तनयुगोद्भेदं विनाप्यङ्गुलीमुद्रासूचितहास्यमास्यमधिकं नो पुत्रिकादौ रसः । तिर्यग्लोचनवीक्षितानि वचसां छेकोक्तिसंक्रान्तयस्तस्याः सीदति शैशवे समभवत्कोऽप्येष नव्यः क्रमः ॥ ३७ ॥ लावण्यामृतनिर्झरेण सुदृशः सिक्ताखिलाङ्गस्थली जातस्तत्र नवीनयौवनकलालीलालतामण्डपः । तस्मिन्वेषविशेषशीतलतरच्छायासु सुप्तोत्थितः कंदर्पस्त्रिजगज्जयोऽयमपरोऽप्यद्यापि निद्रालसः ॥ ३८ ॥ बाल्ये गेहपतौ निमीलति वयःसंधिं विधाय स्मरश्चौरश्चारुतरं विवेश निभृतं बालाशरीरालयम् । चाञ्चल्यं चरणे पृथक्त्वमुदरे निर्लज्जतां चेतसि क्षामत्व हृदये दृशोः सरलतां

सर्वस्वमस्या हरन् ॥ ३९ ॥ एतस्यां रतिवल्लभक्षितिपतेः क्रीडासरस्यां शनैः संशोषं नयतीव शैशवजलं तारुण्यतिग्मद्युतिः । अन्तस्था च यथा यथा विकसति प्रायः कुचोच्चस्थलीस्थौल्यं हन्त तथा तथा वितनुते दृक्पीनमीनावली ॥ ४० ॥ रेखा काचन कज्जलस्य नयनाम्भोजे मिथः कौशलात्पुष्ठीभिः सरलीकृतापि कुटिलीभावं समालम्बते । लक्ष्या वक्षसि पाणिपद्मविषमस्पर्शोदयादुन्नतिर्जानीमो वयमेणशावनयने बाल्यं न पाल्यं तव ॥ ४१ ॥ मध्यस्य प्रथिमानमेति जघनं वक्षोजयोर्मन्दतां दूरं यात्युदरं च रोमलतिका नेत्रार्जवं धावति । कंदर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणादङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः ॥ ४२॥ दृष्टिः शैशवमण्डना प्रतिकलं लावण्यमभ्यस्यते पूर्वाकारमुरस्तथापि कुचयोः शोभां नवामीहते । संप्राप्ता गुरुतां तथाप्युपचिता भोगा नितम्बस्थली तन्व्याः स्वीकृतमन्मथं विजयते तत्रैकपेयं वयः ॥ ४३ ॥ तत्तस्याः कमनीयकान्ति विजितत्रैलोक्यनारीवपुः शृङ्गाररस्य निकेतनं समभवत्संसारसारं वयः । यस्मिन्विस्मृतपक्ष्मपालि चलनाः कामालसा दृष्टयो नो यूनां पुनरुत्पतन्ति पतिताः पत्रे शकुन्ता इव ॥ ४४ ॥ केलीकौतुकमादराच्छृणवयोरालीभिराश्राव्यते बालाभिस्तु पुरः पुरेव रजसि क्रीडार्थमाहूयते । चेतो याति न वा ततस्तदुभयोरेणीदृशः सांप्रतं मध्ये चुम्बकयोरयःशकलवन्निःपक्षपातं मनः ॥ ४५ ॥ उत्तालालकभञ्जनानि कवरीपाशेषु शिक्षारसो दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः । तिर्यग्लोचनचेष्टितानि वचसां छेकोक्तिसंक्रान्तयः स्त्रीणां म्लायति शैशवे प्रतिकलं कोऽप्येष केलिक्रमः ॥४६॥ मात्रानर्तनपण्डितभ्रु वदनं किंचित्प्रगल्भे दृशौ स्तोकोद्भेदनिवेशितस्तनमुरो मध्यं दरिद्राति च । अस्या यज्जघनं घनं च कलया प्रत्यङ्गमेणीदृशः सत्यंकारमिव स्मरैकसुहृदा तद्यौवनेनार्पितम् ॥ ४७ ॥ लावण्यामृतमाहितं वरतनोरङ्गे स्थितं यत्पुरा तत्तारुण्यघनोदयेन बहुधा संवर्धितं पद्मभूः । वीक्ष्य स्यन्दनशङ्कितः कुचयुगव्याजान्नितम्बस्थलाच्चक्रे सेतुयुगं न चेदिह कुतस्तादृग्रसस्थास्नुता ॥ ४८ ॥ विस्तारी स्तनभार एष गमितो न स्वोचितामुन्नतिं रेखोद्भासिकृतं वलित्रयमिदं न स्पष्टनिम्नोन्नतम् । मध्येऽस्या ऋजुरायतार्धकपिशा रोमावली निर्मिता रम्यं यौवनशैशवव्यतिकरोन्मिश्रं वयो वर्तते ॥ ४९ ॥ आलापान्भ्रूविलासो विरलयति लसद्बाहुविक्षिप्ति यातं नीविग्रन्थिं प्रथिम्ना प्रतनयति मनाङ्मध्यनिम्नो नितम्बः । उत्पुष्यत्पार्श्वमूर्च्छत्कुचशिखरमुरो नूनमन्तः स्मरेण स्पृष्टा कोदण्डकोट्या हरिणशिशुदृशो दृश्यते यौवनश्रीः ॥ ५० ॥

---

## तरुणीपृथगवयववर्णनम् ।

केशपाशः ॥ अस्या मनोहराकारकवरीभारनिर्जिताः । लज्जयेव वने वासं चक्रुश्चमरबर्हिणः ॥ १ ॥ भाति विन्यस्तकह्लारं सुकेश्याः केशसंचयम् । शोणितार्द्रैः शरैस्तूर्णं तूणी-

रमिव मान्मथम् ॥ २ ॥ स्तनाभोगे पतन्भाति कपोलात्कुटिलोऽलकः। शशाङ्कबिम्बतो मेरौ लम्बमान इवोरगः ॥ ३ ॥ चलत्कामिमनोमीनमादातुं चित्तजन्मनः। गलयष्टिरिवाभाति बालवेणी गुणोज्ज्वला ॥ ४ ॥ एणीदृशो विजयते वेणी पृष्ठावलम्बिनी। कशेव पञ्चबाणस्य युवतर्जनहेतवे ॥ ५ ॥ तमस्तोम भृशं सोममण्डलोपरि राजसे। धूमपानेन किं नाम धाम गम्स्यमतःपरम् ॥ ६ ॥ वेणी श्यामा भुजंगीयं नितम्बान्मस्तकं गता। वक्त्रचन्द्रसुधां लेढुं सान्द्रसिन्दूरजिह्वया ॥ ७ ॥ तस्याः कचभरव्याजात्तनयस्नेहलालितः। आरूढा पार्वतीबुद्ध्या गुहबर्हीव मूर्धनि ॥ ८ ॥ श्यामा मिलिन्दमाला बालाया वदनपद्ममकरन्दम्। आस्वादितुमिव मिलिता ललिता वेणीमिषादेषा ॥ ९ ॥ मलिना अपि संयमनात्कुटिला अपि सुमनसां समागमतः। बाला अपि मुक्तानामनुषङ्गान्निर्जरत्वमुपयान्ति ॥ १० ॥ स्नानार्द्रमुक्तेष्वनुधूपवासं विन्यस्तसायंतनमल्लिकेषु। कामो वसन्तात्ययमन्दवीर्यः केशेषु लेभे बलमङ्गनानाम् ॥ ११ ॥ एणीदृशः पाणिपुटे निरुद्धा वेणी विराजे शयनोत्थितायाः। सरोजकोशादिव निष्पतन्ती श्रेणी घनीभूय मधुव्रतानाम् ॥ १२ ॥ इयं मुखाम्भोरुहसन्निधाने विलम्बिधम्मिल्लततीच्छलेन। समागतां सादरमेव बाला द्विरेफमालामुत वा दधाति ॥ १३ ॥ अस्याः सपक्षैकविधोः कचौघः स्थाने मुखस्योपरि वासमाप। पक्षस्थतावद्बहुचन्द्रकोऽपि कलापिनां येन जितः कलापः ॥ १४ ॥ अस्या यदास्येन पुरस्तिरश्च तिरस्कृतं शीतरुचान्धकारम्। स्फुटं स्फुरद्भृङ्गकचच्छलेन तदेव पश्चादिदमस्ति बद्धम् ॥ १५ ॥ अस्याः कचानां शिखिनश्च किं नु विधिं कलापौ विमतेरगाताम्। तेनायमेभिः किमपूजि पुष्पैरभर्त्सि दत्त्वा स किमर्धचन्द्रम् ॥१६॥ केशान्धकारादथ दृश्यभालस्थलार्धचन्द्रा स्फुटमष्टमीयम्। एतां यदासाद्य जगज्जयाय मनोभुवा सिद्धिरसाधि साधु ॥ १७ ॥ चिकुरप्रकरा जयन्ति ते विदुषी मूर्धनि यान्बिभर्ति सा। पशुनाप्यपुरस्कृतेन तत्तुलनामिच्छति चामरेण कः ॥ १८ ॥ लसन्मौक्तिकश्रेणिगङ्गातरंगा स्वयं नन्दिनीभास्वतो नीलवर्णा। ससीमन्तसिन्दूरसारस्वताभा त्रिवेणीयमेणीदृशो मौलिवेणी ॥ १९ ॥ उत्थितो निशि कलानिधिर्भवेदेतदीयमुखतुल्यताप्तये। प्रापितो मलिनभावमेतया लज्जया रभसि यात्यदृश्यताम् ॥ २० ॥ एतां नवाम्बुधरकान्तिमुदीक्ष्य वेणीमेणीदृशो यदि वदन्ति वदन्तु नाम। ब्रूमो वयं मुखसुधांशुसुधाभिलाषादस्यागतां भुजगिनीं मणिमुद्वहन्तीम् ॥ २१ ॥ स्वर्भानुराकलयितुं स समुद्यतोऽभूद्राकां विनाननसुधांशुमहो यदस्याः। मन्ये तदस्य न च तिष्ठति पूर्णिमायां भावो हि किंतु परिपूर्णकले सुधांशौ ॥२२॥ विकचकचकलापः किंचिदाकुञ्चितोऽयं कुचकलशनिवेशी शोभते श्यामलाक्ष्याः। मधुरसपरितोषात्किंचिदुत्फुल्लकोशे कमल इव विलीनः पेटकः षट्पदानाम् ॥ २३ ॥ उन्मीलद्वदनेन्दुकान्तिविसरैर्दूरे समुत्सारितं भग्नं पीनकुचस्थलस्य च रुचा हस्तप्रभाभिर्हतम्। एतस्याः

कलविङ्ककण्ठकदलीकल्पं मिलत्कौतुकादप्राप्ताङ्गसुखं रुषेव सहसा केशेषु लग्नं तमः ॥२४॥ ( **अभ्यङ्गारम्भः** ) ॥ अस्याः पीठोपविष्टाया अभ्यङ्गं वितनोत्यसौ । ललच्छ्रोणि चलद्दोर्णि नटद्गुरुपयोधरम् ॥ २५ ॥ आवर्त्य कण्ठं सिचयेन सम्यगावद्धय वक्षोरुहकुम्भयुग्मम् । क्वासौ करालम्बिततैलपात्रा मन्दं समासीदति सुन्दरी ताम् ॥ २६ ॥ वक्षोजौ निविडं निरुद्धय सिचयेनाकुञ्च्य मध्यं शनैः कृत्वा चम्पकतैलसेकमवला संपीड्य मन्दं शिरः । पाणिभ्यां चलकङ्कणोद्यतझणत्कारोत्तराभ्यां करोत्यभ्यङ्गं परिपश्यतः सकुतुकं दोरन्तरं प्रेयसः ॥ २७ ॥ जानुभ्यामुपविश्य पार्ष्णिनिहितश्रोणीभरा प्रोन्नमद्दोर्वल्ली नमदुन्नमत्कुचतटी दीव्यन्नखाङ्कावलिः । पाणिभ्यामवधूय कङ्कणझणत्कारावतारोत्तरं बाला नह्यति किं निजालकभरं किंवा मदीयं मनः ॥ २८ ॥ आश्रान्तं दृढयन्त्रणेन कुचयोरत्यन्तकाठिन्ययोरावद्धस्फुटमण्डलोन्नतिमितश्रोलं विमुच्यो रसः । नीवीविच्छुरितं विधाय तममुं वामस्तनालम्बिनीं वेणीं पाणिनखाञ्चलैः शिथिलयत्याक्रम्य पीठं पदा ॥ २९ ॥ ( **सीमन्तरचनम्** ) ॥ स्नेहसंवर्धितान्वालान्दृढं वध्नाति सुन्दरी । करुणा हरिणाक्षीणां कुतः कठिनचेतसाम् ॥ ३० ॥ सम्प्राप्तचिकुरभावः कचानिचयो वा युवा करे लग्नः । स्त्रीभिर्दृढं निबद्धयो नो चेत्परकलत्रमनुसरति ॥ ३१ ॥ यथा यथायं वलते भुजोऽस्या उदञ्चितः संयमने कचानाम् । तथा तथा वल्गति काममेकः स एव वक्षोरुह उत्पलाक्ष्याः ॥ ३२ ॥ आभुग्नाङ्गुलिपल्लवौ कचभरे व्यापारयन्ती करौ वन्धोत्कर्षनिवध्यमानसतया शून्यां दधाना दृशम् । वाहूत्क्षेपसमुन्नते कुचतटे पर्यस्तचोलांशुका ह्रीसंकोचितवाहुमूलसुभगं वध्नाति जूटीं वधूः ॥ ३३ ॥ जानुस्थापितदर्पणं परिणमद्ग्रीवं समुद्यद्भुजं न्यञ्चत्कूर्परमुन्नमद्भुजलसत्कक्षान्तरोहत्कुचम् । पाणिभ्यां प्रविभज्य केशनिचयं सीमन्तकर्मोद्यता चेतः कस्य वशीकरोति न वलाद्बाला विलोलेक्षणा ॥ ३४ ॥ केशान्वामकरावलम्बितशिखान्भूयो रणत्कङ्कणं व्याधूयाथ कनिष्ठिकानखमुखेनाकुञ्चितान्याङ्गुलि । सीमन्तं विरचय्य तस्य करमेणोन्मृज्य पार्श्वद्वयं तान्पश्चाद्युगपत्प्रणीय करयोर्युग्मेन वध्नात्यसौ ॥ ३५ ॥ ( **तिलकः** ) ॥ वाले ललामलेखेयं भाले भल्लीव राजते । भ्रूलताचापमाकृष्य न विद्मः कं हनिष्यति ॥३६॥ कस्तूरीतिलकं वाले भाले मा कुरु मा कुरु । अद्य साम्यं भजामीति जृम्भते शशलाञ्छनः ॥३७॥ श्यामलेनाङ्कितं भाले वाले केनापि लक्ष्मणा । मुखं तवान्तरासुप्तभृङ्गफुल्लाम्बु जायते ॥३८॥ नासावंशविनिर्मुक्तमुक्ताफलसनाभिना । भाति भालतलस्थेन वालचन्दनविन्दुना ॥ ३९ ॥ लोचनफुल्लाम्भोजद्वयलोभान्दोलितैकमनाः । कस्तूरीतिलकमिषादयमलिकेऽलिः समुल्लसति ॥ ४० ॥ अस्या ललाटे रचिता सखीभिर्विभाव्यते चन्दनपत्रलेखा । आपाण्डुरक्षामकपोलभित्तावनङ्गवाणव्रणपट्टिकेव ॥ ४१ ॥ विराजतेऽस्यास्तिलकोऽयमाञ्चितो विकुञ्चितभ्रूलतिकाद्वयान्तरे । विजित्य लोकत्रितयं दिवं प्रति स्मरेण वाणो धनुषीव योजितः ॥४२॥ अ-

स्याः सुगन्धिनवकुङ्कुमपङ्कदत्तो मुग्धश्चकास्ति तिलको मदिरेक्षणायाः। आविष्टरागमभिराममुखारविन्दनिष्यन्दलग्नमिव मे हृदयं द्वितीयम्॥ ४३॥ लोके कलङ्कमपहातुमयं मृगाङ्को जातो मुखं तव पुनस्तिलकच्छलेन। तत्रापि कल्पयसि तन्वि कलङ्करेखां नार्यः समाश्रितजनं हि कलङ्कयन्ति ॥ ४४॥ **भ्रुवौ**॥ भ्रूरेखायुगलं भाति तस्याश्चटुलचक्षुषः। पत्रद्वयीव हरिता नासावंशविनिर्मिता ॥ ४५॥ असितात्मा समुन्नद्धः समाविष्कृतचापलः। भुजंगकुटिलस्तस्या भ्रूविक्षेपः खलायते ॥ ४६ ॥ स्मरकल्पद्रुमो बाले तव भाले द्विपत्रकः। पत्रयोरनयोश्छाया भ्रुवोर्व्याजादुदञ्चति ॥ ४७ ॥ किंचित्सविभ्रमोदञ्चिभ्रूलता भाति भामिनी। बालक्रीडाप्रतिद्वन्द्वि तर्जयन्तीव यौवनम् ॥ ४८ ॥ कामकार्मुकतया कथयन्ति भ्रूलतां मम पुनर्मतमन्यत्। लोचनाम्बुरुहयोरुपरिस्थं भृङ्गशावकततीद्वयमेतत् ॥ ४९ ॥ तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरायतलेखयोर्या। तां वीक्ष्य लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ॥ ५० ॥ भ्रूभ्यां प्रियाया भवता मनोभूचापेन चापे घनसारभावः। निजां यदाछोपदशामपेक्ष्य संप्रत्यनेनाधिकवीर्यतार्जि ॥ ५१ ॥ स्मारं धनुर्यद्विधुनोज्झितास्यामास्येन भूतेन च लक्ष्मलेखा। एतद्भ्रुवौ जन्म तदाप युग्मं लीलाचलत्वोचितबालभावम् ॥ ५२ ॥ **नेत्रे** ॥ नूनमाज्ञाकरस्तस्या सुभ्रुवो मकरध्वजः। यतस्तन्नेत्रसंचारसूचितेषु प्रवर्तते ॥ ५३ ॥ निःसीमशोभासौभाग्यं नताङ्ग्या नयनद्वयम्। अन्योन्यालोकनानन्दविरहादिव चञ्चलम् ॥ ५४ ॥ आसां व्रतमतीवाक्ष्णोर्यत्पुरः परिसर्पणम्। सह यातं मनस्तत्र त्यक्त्वा भूयो निवर्तनम् ॥ ५५ ॥ अर्जुनः कृष्णसंयुक्तः कर्णं यत्रानुधावति। तन्नेत्रं तु कुरुक्षेत्रमिति मुग्धे मृशामहे ॥ ५६ ॥ एकमेवाक्षि वामाक्षि रञ्जयाञ्जनलेखया। जायतामैन्दवे बिम्बे खञ्जनाम्बुजसंगम. ॥ ५७ ॥ अमुष्य मुषिता लक्ष्मीश्चक्षुषेति न नूतनम्। न वेद्मि कथयत्यस्याः कर्णे लग्नं किमुत्पलम् ॥ ५८ ॥ मृगसबन्धिनी दृष्टिरसौ यदि न सुभ्रुवः। धावति श्रवणोत्तसलीलादूर्वाङ्कुरे कुतः ॥ ५९ ॥ तस्याः श्रवणमार्गेण चलिते यदि लोचने। कुतः प्रकामधवले धत्तः कृष्णानुरक्तताम् ॥ ६० ॥ श्रूयतां कौतुकं सोऽपि स्मरः शृङ्गारिणां गुरुः। अमुष्याः शिष्यतामेति श्रवणोन्मुखयोर्दृशोः ॥ ६१ ॥ भास्वत्कुण्डलमाणिक्यप्रभाप्रतिहतेरिव। नताङ्ग्याः श्रवणोत्सङ्गमारूढा नयनद्वयी ॥ ६२ ॥ श्रमयति शरीरमधिकं भ्रमयति चेतः करोति संतापम्। मोहं मुहुश्च कुरुते विषविषमं वीक्षणं तस्याः ॥ ६३ ॥ अतिपूजिततारेयं दृष्टिः श्रुतिलङ्घनक्षमा सुतनु। जितसिद्धान्तस्थितिरिव सवासनाकं न मोहयति ॥ ६४ ॥ नयनच्छलेन सुतनोर्वदनजिते शशिनि कुलपतौ क्रोधात्। नासानालनिबद्धं स्फुटितमिवेन्दीवरं द्वेधा ॥ ६५॥ आयामिनोस्तदक्ष्णोरञ्जनरेखाविधिं वितन्वन्त्याः। पाणिः प्रसाधिकायाः प्रापदपाङ्गं चिरेण विश्रम्य ॥ ६६ ॥ प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या। तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥ ६७ ॥ मुखारविन्दोपरिभागसंस्थं नेत्रद्वयं खञ्जन-

मामनन्ति । प्रफुल्लवक्त्राम्बुजपार्श्ववर्तिदलद्वयं भृङ्गयुतं मतं मे ॥ ६८ ॥ इन्दीवरं लोचनयोस्तुलायै निर्माय यत्नेन विधिः कदाचित् । अतुल्यतां वीक्ष्य ततो रजांसि निक्षिप्य चिक्षेप स पङ्कमध्ये ॥ ६९ ॥ इषुत्रयेणैव जगत्त्रयस्य विनिर्जयात्पुष्पमयाशुगेन । शेषा द्विबाणी सफलीकृतेयं प्रियादृगम्भोजपदेऽभिषिच्य ॥ ७० ॥ सेयं मृदुः कौसुमचापयष्टिः स्मरस्य मुष्टिग्रहणार्हमध्या । तनोति नः श्रीमदपाङ्गमुक्तां मोहाय या दृष्टिशरौघवृष्टिम् ॥ ७१ ॥ आघूर्णितं पक्ष्मलमक्षिपद्मं प्रान्तद्युतिश्वेत्यजितामृतांशु । अस्या इवास्याश्चलदिन्द्रनीलगोलामलश्यामलतारतारम् ॥ ७२ ॥ कर्णोत्पलेनापि मुखं सनाथं लभेत नेत्रद्युतिनिर्जितेन । यद्येतदीयेन तदा कृतार्थो स्वचक्षुषी किं कुरुते कुरङ्गी ॥ ७३ ॥ त्वचः समुत्तार्य दलानि रीत्या मोचात्वचः पक्ष्मपपाटनानाम् । सारैर्गृहीतैर्विधिरुत्पलौघादस्यामभूदीक्षणरूपशिल्पी ॥ ७४ ॥ चकोरनेत्रैणदृगुत्पलानां निमेषयन्त्रेण किमेष कृष्टः । सारः सुधोद्गारमयः प्रयत्नैर्विधातुमेतन्नयने विधातुः ॥ ७५ ॥ ऋणीकृता किं हरिणीभिरासीदस्याः सकाशान्नयनद्वयश्रीः । भूयोगुणेयं सकला बलाद्यत्ताभ्योऽनयालभ्यत विभ्यतीभ्यः ॥ ७६ ॥ दृशौ किमस्याश्चपलस्वभावे न दूरमाक्रम्य मिथो मिलेताम् । न चेत्कृतः स्यादनयोः प्रयाणे विघ्नः श्रवःकूपनिपातभीत्या ॥ ७७ ॥ केदारभाजा शिशिरप्रवेशात्पुण्याय मन्ये मृतमुत्पलिन्या । जाता यतस्तत्कुसुमेक्षणेयं यतश्च तत्कोरकदृक्चकोरः ॥ ७८ ॥ नलिनं मलिनं विवृण्वती स्पृशतीमस्पृशतीं तदीक्षणे । अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम् ॥ ७९ ॥ श्रुतिलङ्घनमीहमानयोर्मलिनाभ्यन्तरयोरधीरयोः । स्मृतितापकरत्वमेतयोरुचितं लोचनयोर्मृगीदृशः ॥ ८० ॥ लोचने हरिणगर्वमोचने मा विदूषय नताङ्गि कज्जलैः । सायकः सपदि जीवहारकः किं पुनर्हि गरलेन लेपितः ॥ ८१ ॥ कामिनीनयनकज्जलपङ्काद्रुत्थितो मदनमत्तवराहः । कामिमानसवनान्तरचारी मूलमुत्खनति मानलतायाः ॥ ८२ ॥ उत्तरङ्गय कुरङ्गलोचने लोचने हरिणगर्वमोचने । अस्तु सुन्दरि कलिन्दनन्दिनीवीचिडम्बरगभीरमम्बरम् ॥ ८३ ॥ रामाविलोलनयने किमु मीनबाणौ नीलोत्पले किमथवा किमु खञ्जरीटौ । किं वा जगत्त्रयजयाय कृतिर्न जाने कंदर्पभूपरचिता नवकार्मणस्य ॥ ८४ ॥ मुखविधुपरिवृत्तोत्तानताटङ्कपाशावधिचकितचकोरीकान्तिचौरं तदक्षि । त्रिभुवनयुवचेतोबन्धसंकेतहेतोः सहचरमिव कर्तुं पाशमाशङ्क्य याति ॥ ८५ ॥ ( कटाक्षः ) ॥ यान्ती गुरुजनैः सार्धं स्मयमानमुखाम्बुजा । तिर्यग्ग्रीवं यदद्राक्षीत्तन्निष्पत्राकरोज्जगत् ॥ ८६ ॥ क्वचित्कृष्णार्जुनगुणा क्वचित्कर्णान्तगामिनी । अपाङ्गश्रीस्तवाभाति सुभ्रूर्भारतगीरिव ॥ ८७ ॥ विशालाक्षीकटाक्षस्य साक्षी त्र्यक्षो महेश्वरः । नाद्यापि प्रकृतिं याति येन विद्धो दिगम्बरः ॥ ८८ ॥ यासां कटाक्षविशिखैः स्मरचौरेण ताडिताः । हृतचैतन्यसर्वस्वा मोह्यन्ते मुग्धकामुकाः ॥ ८९ ॥ रे रे घरट्ट मा रोदीः कं कं न भ्रामयन्त्यमूः । कटाक्षवीक्षणादेव कराकृष्टस्य का कथा ॥ ९० ॥

प्रभवति मनसि विवेको विदुषामपि शास्त्रसंभवस्तावत् । निपतन्ति नेत्रविशिखा यावन्नेन्दीवराक्षीणाम् ॥ ९१ ॥ हत्वा लोचनविशिखैर्गत्वा कतिचित्पदानि पद्माक्षी । जीवति युवा न वा किं भूयो भूयो विलोकयति ॥ ९२ ॥ यत्र यत्र वलते शनैः शनैः सुभ्रुवो नयनकोणविभ्रमः । तत्र तत्र शतपत्रधोरणी तोरणी भवति पुष्पधन्वनः ॥ ९३ ॥ तावदेव कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः । यावदेव न कुरङ्गचक्षुषां ताड्यते चपललोचनाञ्चलैः ॥ ९४ ॥ यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृन्तशतपत्रनिभं वहन्त्या । दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥ ९५ ॥ भवनभुवि सृजन्तस्तारहारावतारान्दिशि दिशि विकिरन्तः केतकानां कुटुम्बम् । वियति च रचयन्तश्चन्द्रिकां दुग्धमुग्धां प्रतिनयननिपाताः सुभ्रुवो विभ्रमन्ति ॥ ९६ ॥ प्रणालीदीर्घस्य प्रतिपदमपाङ्गस्य सुहृदः कटाक्षव्याक्षेपाः शिशुशफरफालप्रतिभुवः । सुवानाः सर्वस्वं कुसुमधनुषोऽस्मान्प्रति सखे नवं नेत्राद्वैतं कुवलयदृशः संनिदधति ॥ ९७ ॥ दिनान्ते स्नातीनां कनककलशाकारकुचयोरुपर्यस्यन्तीनां कमलकलिकाकोमलकरौ । समुद्यत्कालिन्दीतरलतरकल्लोलकुटिलः कटाक्षः कान्तानां कमिह कमितारं न कुरुते ॥ ९८ ॥ शिलासम्यग्धौतोज्ज्वलधवलधारापरिसरानिमानन्तःश्यामानिव विषमबाणस्य विशिखान् । दृढप्रज्ञावर्माण्यपि हृदयमर्माणि रुजतः कटाक्षानेतस्या मुनिरपि न सोढुं प्रभवति ॥ ९९ ॥ सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव । भ्रूचापाकृष्टमुक्ताः श्रवणपथजुषो नीलपक्ष्माण एते यावल्लीलावतीनां हृदि न धृतिमुषो दृष्टिबाणाः पतन्ति ॥ १०० ॥ **नासा** ॥ पुराणबाणत्यागाय नूतनास्त्रकुतूहलात् । तन्नासा भाति कामेन तूणीवाधोमुखीकृता ॥ १०१ ॥ दन्तालिदाडिमीबीजभक्षणोत्कण्ठचेतसः । मन्ये मारशुकस्येयं नासा चञ्चू विराजते ॥ १०२ ॥ नासादसीया तिलपुष्पतूणं जगत्त्रयन्यस्तशरत्रयस्य । श्वासानिलामोदभरानुमेयां दधद्द्विबाणीं कुसुमायुधस्य ॥ १०३ ॥ केचित्तिलस्य कुसुमं शुकचञ्चुमन्ये नासां वदन्ति कथयाम्यहमन्यदेव । संरक्षितो निजशरासनसन्निधाने कामेन केतकदलैकमयो निषङ्गः ॥ १०४ ॥ ( **नासाभूषणम्** ) ॥ नासामौक्तिकमबले किमधरबिम्बेन विद्रुमं कुरुषे । दृष्ट्या गुञ्जाबीजं शिव शिव भूयस्तदेव हसितेन ॥ १०५ ॥ श्लेष्मागारे वसतिर्जातास्माकं तदत्र मा यात । आन्दोलनच्छलादिह निवारयन्तीव मौक्तिकानि विरान् ॥ १०६ ॥ सुधामयोऽपि क्षयरोगशान्त्यै नासाग्रमुक्ताफलकच्छलेन । अनङ्गसंजीवनदृष्टिशक्तिर्मुखामृतं ते पिबतीव चन्द्रः ॥ १०७ ॥ आकाशात्पतितं पुनर्जलनिधौ मध्ये चिरं संस्थितं पश्चाद्दुःसहदेहरन्ध्रजनितक्लेशान्विर्तं मौक्तिकम् । बाले बालकुरंगलोचनयुगे घोरं तपः संचरन्नासाभूषणतामुपैति सखि ते बिम्बाधरापेक्षया ॥ १०८ ॥ **कर्णौ** ॥ सौन्दर्यपात्रे वक्त्रेन्दौ कुरङ्गासङ्गभीतया । सूचितौ श्रोत्र-

पाशाभ्यां पाशाविव मृगीदृशा ॥ १०९ ॥ कमनीयतानिवासः कर्णस्तस्या विचित्रमणिभूषः । सविधप्रसूनरत्नं शङ्खनिधिं दूरतरमकरोत् ॥ ११० ॥ तालीदलं काञ्चनकर्णपाशौ प्रसारयन्ती सुतनुः कराभ्याम् । रराज कर्णान्तनिषण्णदृष्टिः शाणे दधानेव कटाक्षबाणान् ॥ १११ ॥ वियोगबाष्पाञ्चितनेत्रपद्मच्छद्मान्वितोत्सर्गपयःप्रसूनौ । कर्णौ किमस्या रतितत्पतिभ्यां निवेद्यपूपौ विधिशिल्पमीदृक् ॥ ११२ ॥ इहाविशद्येन पथातिवक्रः शास्त्रौघनिष्पन्दरसप्रवाहः । सोऽस्याः श्रवःपत्रयुगे प्रणालीरेखेव धावत्यभिकर्णकूपम् ॥ ११३ ॥ अस्या यदष्टादश संविभज्य विद्याः श्रुती दध्रतुरर्धमर्धम् । कर्णान्तरुत्कीर्णगभीररेखः किं तस्य संख्यैव न वा नवाङ्कः ॥ ११४ ॥ मन्येऽमुना कर्णलतामयेन पाशद्वयेन च्छिदुरेतरेण । एकाकिपाशं वरुणं विजिग्येऽनङ्गीकृतायासतती रतीशः ॥ ११५ ॥ आत्मैव तातस्य चतुर्भुजस्य जातश्चतुर्दोरुचितः स्मरोऽपि । तच्चापयोः कर्णलते भ्रुवोर्ज्ये वंशत्वगंशौ चिपिटे किमस्याः ॥ ११६ ॥ ( **कर्णभूषणम्** ) ॥ मुक्तताटङ्कयुगं प्रतिमुक्तं कर्णपार्श्वयोरस्याः । मुखकमलमिव निषेवितुमागतममृतांशुबिम्बयुगम् ॥ ११७ ॥ ताटङ्कमस्यास्तरलेक्षणाया मुक्ताफलैश्चारुरुचिं विधत्ते । मुखश्रिया चन्द्रमिवाभिभूय वन्दीकृतं तारकचक्रवालम् ॥ ११८ ॥ **कपोलौ** ॥ कपोलपालीं तव तन्वि मन्ये लावण्यधन्ये दिशमुत्तराख्याम् । विभाति यस्यां ललितालकायां मनोहरा वैश्रवणस्य लक्ष्मीः ॥ ११९ ॥ आबध्नन्परिवेषमण्डलममलं वक्त्रेन्दुबिम्बाद्बहिः कुर्वन्पङ्कजजृम्भमाणकलिकाकर्णावतंसक्रियाम् । तन्वङ्ग्याः परिनृत्यतीव हसतीवोत्सर्पतीवोल्वणं लावण्यं ललतीव काञ्चनशिलाकान्ते कपोलस्थले ॥१२०॥ **अधरः** ॥ तवैष विद्रुमच्छायो मरुमार्ग इवाधरः । करोति कस्य नो मुग्धे पिपासाकुलितं मनः ॥ १२१ ॥ अल्पेनापि सुरक्तेन साधनेन प्रयोजनम् । ओष्ठद्वयसहायेन कान्तास्येन जगज्जितम् ॥ १२२ ॥ सर्वस्यैव हि रत्नस्य व्रणेऽर्घः परिहीयते । दयिताधररत्नं तु व्रणितं यात्यनर्घताम् ॥ १२३ ॥ अधरोऽयमधीराक्ष्या बन्धुजीवप्रभाहरः । अन्यजीवप्रभां हन्त हरतीति किमद्भुतम् ॥ १२४ ॥ मुखारविन्ददत्तश्रीः सुतनोररुणोऽधरः । कुरुते हारमाणिक्यप्रदीपान्पाण्डुरत्विषः ॥ १२५ ॥ संततोदयसंध्येव वदनेन्दोरनिन्दिता । तदोष्ठमुद्रा लावण्यसमुद्रस्येव विद्रुमः ॥ १२६ ॥ अधरोऽसौ कुरङ्गाक्ष्याः शोभते नासिकातले । सुवर्णनलिकामध्यान्माणिक्यमिव विच्युतम् ॥ १२७ ॥ अधरं खलु बिम्बनामकं फलमाभ्यामिति भव्यमन्वयम् । लभतेऽधरबिम्ब इत्यदः पदमस्या रदनच्छदे वदत् ॥ १२८ ॥ अपि मृगाक्षि तवाधरपल्लवे दयितदन्तपदं न भवत्यदः । भुवनमोहनमन्त्रपदाङ्कितं किमुत यन्त्रमिदं स्मरयान्त्रिणः ॥ १२९ ॥ अभिलपन्ति तवाधरमाधुरीं तदिह किं हरिणाक्षि मुधा बुधाः । सुरसुधामधरीकुरुते यतस्त्वदधरोऽधरतामगमत्ततः ॥ १३० ॥ पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् । ततोऽनुकुर्याद्विशदस्य तस्या-

स्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥ १३१ ॥ वन्धूकवन्धूभवदेतदस्या मुखेन्दुनानेन सहोज्जिहानम् । रागश्रिया शैशवयौवनीयां स्वमाह संध्यामधरोष्ठलेखा ॥ १३२ ॥ अस्या मुखेन्दोरधरः सुधाभूर्विम्बस्य युक्तः प्रतिविम्ब एषः । तस्याथवा श्रीर्द्रुमभाजि देशे संभाव्यमानास्य तु विद्रुमेऽसौ ॥ १३३ ॥ जानेऽतिरागादिदमेव विंम्बं विम्बस्य च व्यक्तमितोऽधरत्वम् । द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम् ॥ १३४ ॥ प्रियामुखीभूय सुखी सुधांशुर्वसत्यसौ राहुभयव्ययेन । इमां दधाराधरविम्वलीलां तस्यैव बालं करचक्रवालम् ॥ १३५ ॥ अधरममृतं कः संदेहो मधून्यपि नान्यथा मधुरमधिकं द्राक्षायाश्च प्रसन्नरसं फलम् । सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्जनो वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥ १३६ ॥ त्वं पीयूष दिवोऽपि भूषणमसि द्राक्षे परीक्षेत को माधुर्यं तव विश्वतोऽपि विदितं माध्वीक माध्वीकता । एतत्किं तु मनागरुंतुदमिव ब्रूमो न चेत्कुप्यसि यः कान्ताधरपल्लवे मधुरिमा नान्यत्र कुत्रापि सः ॥ १३७ ॥ **दन्ताः** ॥ द्विधा विधाय शीतांशुं कपोलौ कृतवान्विधिः । तन्व्यास्तद्रसनिष्पत्तिविन्दवो रदनावलिः ॥ १३८ ॥ चन्द्राधिकैतन्मुखचन्द्रिकाणां दरायतं तत्किरणाङ्कनानाम् । पुरःपरिस्रस्तदष्टपङ्क्तीयं रदावलिद्वन्द्वति विन्दुवृन्दम् ॥ १३९ ॥ राजौ द्विजानामिह राजदन्ताः संविभ्रति श्रोत्रियविभ्रमं यत् । उद्वेगरागादिमृजावदाताश्चत्वार एते तदवैमि मुक्ताः ॥ १४० ॥ यावद्यावत्कुवलयदृशा मृज्यते दन्तपालिस्तावत्तावद्द्विगुणमधरच्छायया शोणशोचिः । काचित्त्वस्याः परिमलकलाहूतमात्रालिकान्त्या वक्त्राश्वासे प्रसरति मुहुः श्यामिकाप्याविरासीत् ॥ १४१ ॥ **चिबुकः** ॥ विलोकितास्या मुखमुन्नमय्य किं वेधसेयं सुषमासमाप्तौ । धृत्युद्भवा यच्चिबुके चकास्ति निम्ने मनागङ्गुलियन्त्रणेव ॥ १४२ ॥ **मुखम्** ॥ जितेन्दुपद्मलावण्य कः कान्तावदनं जयेत् । मुक्त्वा तदेव सुरतश्रमजिह्मितलोचनम् ॥ १४३ ॥ चलद्भृङ्गमिवाम्भोजमधीरनयनं मुखम् । तदीयं यदि दृश्येत कामः क्रुद्धोऽस्तु किं ततः ॥ १४४ ॥ विलसत्याननं तस्या नासाग्रस्थितमौक्तिकम् । आलक्षितबुधाश्लेषं राकेन्दोरिव मण्डलम् ॥ १४५ ॥ मुखं वहति वन्धूकवन्धुरेणाधरेण सा । पूर्णेन्दुमिव सौंदर्यादङ्कलालितकौस्तुभम् ॥ १४६ ॥ विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम् । धाता निजासनाम्भोजविनिमीलनदुःस्थितः ॥ १४७ ॥ शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम् । करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥१४८॥ राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः । तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥१४९॥ ननु नीलाञ्चलसंवृतमाननमाभाति हरिणनयनायाः । प्रतिविम्बित इव यमुनागभीरनीरान्तरेणाङ्कः ॥१५०॥ अम्बुजमम्बुनि मग्नं त्रासादाकाशमाश्रितश्चन्द्रः । संप्रति कः परिपन्थी यं प्रति कोपारुणं वदनम् ॥ १५१ ॥ आसायं सलिलभरे सवितारमुपास्य सादरं तपसा । अधुनाब्जेन मनाक्तव मानिनि तुलना मुखस्यासा ॥ १५२ ॥ सुविरलमौक्तिकतारे धवलांशुकचन्द्रिकाचमत्कारे ।

वदनपरिपूर्णचन्द्रे सुन्दरि राकास्ति नात्र संदेहः॥ १५३॥ पुंसां दर्शय सुन्दरि मुखेन्दुमीपत्रपामपाकृत्य । जायाजित इति रूढा जनश्रुतिर्मे यशो भवतु ॥ १५४ ॥ उचितं गोपनमनयोः स्तनयोः कनकाद्रिकान्तितस्करयोः । अवधीरितविधुमण्डलमुखमण्डलगोपनं किमिति ॥ १५५ ॥ अवले सलिले तपस्यता मुखभावो गमितो न पङ्कजेन । कथमादिमवर्णतान्त्यजस्य द्विजराजेन कृतोरुनिग्रहस्य ॥ १५६ ॥ सुषुमाविषये परीक्षणे निखिलं पद्ममभाजि तन्मुखात् । अधुनापि न भङ्गलक्षणं सलिलोन्मज्जनमुज्झति स्फुटम् ॥ १५७ ॥ यः ससर्ज कमलं रमागृहं विश्वलोचनमहोत्सवं विधिः । एष तादृगसृजन्मृगीदृशो मीनकेतननिकेतनं मुखम् ॥१५८॥ तस्या मुखस्यातिमनोहरस्य कर्तुं न शक्तः सदृशं प्रियायाः । अद्यापि शीतद्युतिरात्मबिम्बं निर्माय निर्माय पुनर्भिनत्ति ॥ १५९ ॥ अनेन रम्भोरु तवाननेन पीयूषभानोस्तुलया धृतस्य । ऊनस्य नूनं परिपूरणाय ताराः स्फुरन्ति प्रतिमानखण्डाः ॥ १६० ॥ अस्या मुखस्यास्तु न पूर्णिमास्यं पूर्णस्य जित्वा महिमा हिमांशुम् । भ्रूलक्ष्मखण्डं दधदर्धमिन्दुर्भालस्तृतीयः खलु यस्य भागः ॥ १६१॥ व्यधत्त धाता मुखपद्ममस्याः सम्राजमम्भोजकुलेऽखिलेऽपि । सरोजराजौ सृजतोऽदसीयां नेत्राभिधेयावतएव सेवाम् ॥ १६२ ॥ दिवारजन्यो रविसोमभीते चन्द्राम्बुजे निक्षिपतः स्वलक्ष्मीम् । अस्या यदास्येन तदा तयोः श्रीरेकश्रियेदं तु कदा न कान्तम् ॥ १६३ ॥ अस्या मुखश्रीप्रतिबिम्बमेव जलाच्च तातान्मुकुराच्च मित्रात् । अभ्यर्थ्य धत्तः खलु पद्मचन्द्रौ विभूषणं याचितकं कदाचित् ॥१६४॥ अस्या मुखेनैव विजित्य नित्यस्पर्धी मिलत्कुङ्कुमरोषभासा । प्रसह्य चन्द्रः खलु नह्यमानः स्यादेव तिष्ठन्परिवेशपाशः ॥ १६५ ॥ विधोर्विधिर्बिम्बशतानि लोपं लोपं कुहूरात्रिषु मासि मासि । अभङ्गुरश्रीकममुं किमस्या मुखेन्दुमस्थापयदेकशेषम् ॥ १६६ ॥ कपोलपत्रान्मकरात्सकेतुर्भ्रूभ्यां जिगीषुर्धनुषा जगन्ति । इहावलम्ब्यास्ति रतिं मनोभू रज्यद्द्वयस्यो मधुनाधरेण ॥ १६७ ॥ धिक्तस्य मन्दमनसः कुकवेः कवित्वं यः स्त्रीमुखं तुहिनबिम्बसमं करोति । भ्रूभङ्गविभ्रमकटाक्षनिरीक्षितानि कोपप्रसादहसितानि कुतः शशाङ्के ॥ १६८ ॥ चन्द्रं कलङ्करहितं शफरद्वयं च निस्तोयमन्धतमसं च सुगन्धि तन्व्याः । वक्त्रच्छलेन भुवि सृष्टवतो विधातुर्वर्ण्येत केन करकौशलमद्भुतं तत् ॥ १६९ ॥ प्रविश झटिति गेहं मा बहिस्तिष्ठ कान्ते ग्रहणसमयवेला वर्तते शीतरश्मेः । तव मुखमकलङ्कं वीक्ष्य नूनं स राहुर्ग्रसति तव मुखेन्दुं पूर्णचन्द्रं विहाय ॥१७०॥ यदमरशतैः सिन्धोरन्तः कथंचिदुपार्जितं सकलमपि तद्धात्रा कान्तामुखे विनिवेशितम् । सुरसुमनसः श्वासामोदे शशी च कपोलयोरमृतमधरे तिर्यग्भूते विषं च विलोचने ॥ १७१ ॥ असावन्तश्चञ्चद्विकचनवलीलाब्जयुगलस्तलस्फूर्जत्कम्बुर्विलसदलिसंघात उपरि । विना दोषासङ्गं सततपरिपूर्णाखिलकलः कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि ते ॥ १७२ ॥ जगन्नेत्रानन्दं वदनमतुलं पक्ष्मलदृशः कथकारं पङ्के-

रुहमनुविधातुं प्रभवति । अयं चेदाकाङ्क्षी सह मदनकोदण्डलतया वराको राकेन्दुः कुवलययुगं किं न वहति ॥ १७३ ॥ अनाकाशे चन्द्रः सरसिजदलद्वन्द्वसहितो गृहीतः पश्चार्धे कुटिलकुटिलैः सोऽपि तिमिरैः । सुधां मुञ्चत्युच्चैरशनिमथ संमोहजननी किमुत्पालालीयं वदत जगतः कर्तुरुदिता ॥१७४ ॥ सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां किरञ्ज्योत्स्नामच्छां नवलवलिपाकप्रणयिनीम् । उपप्राकाराग्रं प्रहिणु नयने तर्कय मनागनाकाशे कोऽयं गलितहरिणः शीतकिरणः ॥ १७५ ॥ विना सायं कोऽयं समुदयति सौरभ्यसुभगः किरञ्ज्योत्स्नाधारामधिधरणितारापरिवृढः । धनुर्धत्ते स्मारं तिरयति विहारं न तमसां निरातङ्कः पङ्केरुहयुगलमङ्के नटयति ॥१७६॥ स्मितज्योत्स्नागङ्गातपनतनया श्यामलरुचिः सरस्वत्योष्ठामारुणकिरणसौन्दर्यजयिनी । इमास्तिस्रस्तीर्थाधिप इव मुखे सुभ्रु मिलितास्तवेदं सेवन्को न लभत इहानन्दलहरीम् ॥ १७७ ॥ कोशस्यातितरः स्थितानि परितः पात्राणि दुर्गं जलं मन्त्रैर्मण्डलमुज्ज्वलं चिरमधो नीतास्तथा कण्टकाः । इत्याकृष्य शिलीमुखेन रचनां कृत्वा तदत्यद्भुतं यत्पद्मेन जिगीषुणापि न जितं मुग्धे त्वदीयं मुखम् ॥ १७८ ॥ आरब्धे दयितामुखप्रतिसमे निर्मातुमस्मिन्नपि व्यक्तं जन्मसमानमेव मिलितामंशुच्छटां वर्षति । आत्मद्रोहिणि रोहिणीपरिवृढे पर्यङ्कपङ्केरुहः संकोचादथ दुःस्थितस्य न विधेस्तच्छीलमुन्मीलितम् ॥१७९॥ तानि प्राश्विदिनानि यत्र रजनी सेहे तमिस्रापदं सा सृष्टिर्विरराम यत्र भवति ज्योत्स्नामयो नातपः । अद्यान्यः समयस्तथाहि तिथयोऽप्यस्या मुखस्योदये हस्ताहस्तिकया हरन्ति परितो राकावराकीयशः ॥ १८० ॥ अज्ञातेन्दुपराभवं परिलसद्व्यालोलनेत्राञ्जनं भ्रान्तभ्रूलतमैणनाभितिलकं श्रीखण्डपत्रालकम् । बन्धूकाधरसुन्दरं सुरमुनिव्यामोहि वाक्यामृतं त्रैलोक्याद्भुतपङ्कजं वरतनोरास्यं न कस्य प्रियम् ॥ १८१ ॥ ( स्मितम् ) ॥ कामबाणप्रहारेण मूर्च्छितानि पदे पदे । जीवन्ति युवचेतांसि युवतीनां स्मितामृतैः ॥ १८२ ॥ स्मयमानमायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखम् । असमग्रलक्ष्यकेसरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ १८३ ॥ पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं च स्फुटविद्रुमस्थम् । ततोऽनुकुर्याद्विशदस्य तस्य ताम्रौष्ठपर्यस्तरुचिस्मितस्य॥१८४॥ यदि प्रसादीकुरुते सुधांशोरेखा सहस्रांशमपि स्मितस्य । तत्कौमुदीनां कुरुते तमेव निमित्य देवः सफलं स्वजन्म ॥ १८५ ॥ कण्ठः ॥ कण्ठस्य विदधे कान्ति मुक्ताभरणता तथा । नास्याः स्वभावरम्यस्य मुक्ताभरणता तथा ॥ १८६ ॥ असावुद्वेललावण्यरत्नाकरसमुद्भवः । जगद्विजयमङ्गल्यशङ्खः कुसुमधन्वनः ॥ १८७ ॥ श्रोत्रपीयूषगण्डूषैः काकलीकलगीतिभिः । कण्ठः कुण्ठितचातुर्यो विपञ्ची पञ्चमध्वनेः ॥ १८८ ॥ अथ त्रयाणां ग्रामाणां निधानं मधुरध्वनिः । रेखात्रयमितीवास्याः सूत्रितं कण्ठकन्दले ॥ १८९ ॥ कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य । अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥ १९० ॥

कवित्वगानप्रियवादसत्यान्यस्या विधाता न्यधिताधिकण्ठम् । रेखात्रयन्यासमिषादमीषां वासाय सोऽयं विबभाज सीमाः ॥ १९१ ॥ ( वाणी ) ॥ अमृतद्रवमाधुरीधुरीणां गिरमाकर्ण्य कुरङ्गलोचनायाः । मुहुरभ्यसनं कषायकण्ठी कलकण्ठी कुरुते कुहूरुतेन ॥ १९२ ॥ स्वरेण तस्याममृतस्नुतेव प्रजल्पितायामभिजातवाचि । अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥ १९३ ॥ शिरीषकोषादपि कोमलाया वेधा विधायाङ्गमशेषमस्याः । प्राप्तप्रकर्षः सुकुमारसर्गे समापयद्वाचि मृदुत्वमुद्राम् ॥ १९४ ॥ प्रसूनत्राणाद्वयवादिनी सा कापि द्विजेनोपनिपत्पिकेन । अस्याः किमास्यद्विजराजतो वा नाधीयते भैक्षभुजा तरुभ्यः ॥ १९५ ॥ पङ्काङ्कसद्मानमवेक्ष्य लक्ष्मीमेकस्य विष्णोः श्रयणात्सपत्नीम् । आस्येन्दुमस्या भजते जिताब्जं सरस्वती तद्विजिगीषया किम् ॥ १९६ ॥ कण्ठे वसन्ती चतुरा यदस्याः सरस्वती वादयते विपञ्चीम् । तदेव वाग्भूय मुखे मृगाक्ष्याः श्रोतुः श्रुतौ याति सुधारसत्वम् ॥ १९७ ॥ बाहू ॥ दयिताबाहुपाशस्य कुतोऽयमपरो विधिः । जीवयत्यर्पितः कण्ठे मारयत्यपवर्जितः ॥ १९८ ॥ शब्दवद्भिरलंकारैरुपेतमतिकोमलम् । सुवृत्तं काव्यवद्रेजे तद्बाहुलतिकाद्वयम् ॥ १९९ ॥ सरले एव दोर्लेखे यदि चञ्चलचक्षुषः । अमुग्धाभ्यो मृणालीभ्यः कथमाजह्रतुः श्रियम् ॥ २०० ॥ बाहू तस्याः कुचाभोगनिरुद्धान्योन्यदर्शनौ । मन्त्रितं कथमेताभ्यां मृणालीकीर्तिलुण्ठनम् ॥ २०१ ॥ बाहू प्रियाया जयतां मृणालं द्वन्द्वे जयो नाम न विस्मयोऽस्मिन् । उच्चैस्तु तच्चित्रममुष्य भग्नस्यालोक्यते निर्व्यथनं यदन्तः ॥ २०२ ॥ अजीयतावर्तशुभंयुनाभ्यां दोर्भ्यां मृणालं किमु कोमलाभ्याम् । निःसूत्रमास्ते घनपङ्कमृत्सु मूर्तासु नाकीर्तिषु तन्निमग्नम् ॥ २०३ ॥ करौ ॥ कुसुमायुधकोदण्डे हस्तौ विस्तीर्णचक्षुषः । अशोकपल्लवास्त्राणां प्रतिहस्तत्वमागतौ ॥ २०४ ॥ नाहं धार्यमधीराक्षि मुखेन्दोः संमुखं त्वया । इतीव लीलापद्मेन करेऽस्याः कान्तिरर्पिता ॥ २०५ ॥ अस्याः करस्पर्शनगर्धिऋद्धिर्बालत्वमापत्खलु पल्लवो यः । भूयोऽपि नामाधरसाम्यगर्वं कुर्वन्कथं वास्तु न स प्रवालः ॥ २०६ ॥ अस्यैव सर्गाय भवत्करस्य सरोजसृष्टिर्मम हस्तलेखः । इत्याह धाता हरिणेक्षणायां किं हस्तलेखीकृतया तयास्याम् ॥ २०७ ॥ मुग्धे प्रतारयसि किं कुसुमानि हर्तुमेतान्यशोकविटपस्य कुतूहलेन । अस्यैव तन्वि नवपल्लवडम्बरेषु त्वं हारयिष्यसि न तु स्वयमेव पाणी ॥ २०८ ॥ ( कङ्कणम् ) ॥ गौराङ्ग्या भुजलावण्यमीलितं हेमकङ्कणम् । कण्ठाश्लेषे वयस्याभिः काठिन्यादन्वमीयत ॥ २०९ ॥ प्रकोष्ठबन्धे बिम्बोष्ठ्यास्तस्याः काञ्चनकङ्कणम् । नालं वलयितं हस्ते हेमाब्जस्येव राजते ॥ २१० ॥ सौवर्णकङ्कणश्रेण्या भाति तद्बाहुकन्दली । तूणचम्पकमौर्व्येव पुष्पचापेन वेष्टिता ॥ २११ ॥ सहेमकटकं धत्ते सा करं पद्मतस्करम् । पद्मिनीवल्लभस्येव मूले वेष्टितमंशुना ॥ २१२ ॥ हस्ते चकास्ति बालायास्तस्याः कङ्कणमालिका । मनः कुरङ्गबन्धाय पाशालीव मनोभुवः ॥ २१३ ॥ कृशाङ्ग्याः कुच-

भारेण दूरमुत्सारितौ भुजौ । वहतः कलहायेव वाचालां वलयावलिम् ॥ २१४ ॥ न्यस्तानि दन्तवलयानि करे कदाचित्तानीन्दुखण्डघटितानिति मे वितर्कः । अस्या निसर्गमृदुपाणिसरोजमेषामामोचने झटिति यन्मुकुलीवभूव ॥ २१५ ॥ (हस्तरेखा)॥ आयूरेखां चकारास्याः करे द्राघीयसीं विधिः । शौण्डीर्यगर्वनिर्वाहप्रत्याशां च मनोभुवः ॥ २१६ ॥ अङ्गुल्यः ॥ सुदीर्घा रागशालिन्यो बहुपर्वमनोहराः । तस्या विरेजुरङ्गुल्यः कामिनां संकथा इव ॥ २१७ ॥ रज्यन्नखस्याङ्गुलिपञ्चकस्य मिषादसौ हैङ्गुलपद्मतूणे । हैमैकपुङ्खास्ति विशुद्धपर्वा प्रियाकरे पञ्चशरी स्मरस्य ॥ २१८ ॥ (मुद्रिका)॥ अङ्गुलीषु कुरङ्गाक्ष्याः शोभते मुद्रिकावलिः । प्रोतेव बाणैः पुष्पेषोः सूक्ष्मलक्ष्यपरंपरा ॥ २१९ ॥ **स्तनौ** ॥ मृद्वङ्गि कठिनौ तन्वि पीनौ सुमुखि दुर्मुखौ । अत एव बहिर्यातौ हृदयात्ते पयोधरौ॥२२०॥ तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम् । हाराय गुणितं स्थानं न दत्तमिति लज्जया ॥ २२१ ॥ यन्न भाति तदङ्गेषु लावण्यमिति संभृतम् । पिण्डीकृतमुरोदेशे तत्पयोधरतां गतम् ॥ २२२ ॥ स्वयभूः शंभुरम्भोजलोचने त्वत्पयोधरः । नखेन कस्य धन्यस्य चन्द्रचूडो भविष्यति ॥ २२३ ॥ अविवेकि कुचद्वन्द्वं हन्तु नाम जगत्त्रयम् । श्रुतिप्रणयिनोरक्ष्णोरयुक्तं जनमारणम् ॥ २२४ ॥ प्रायश्चित्तं न गृह्णीतस्तन्वङ्ग्याः पतितौ स्तनौ । अत एव तयोः स्पर्शे लोकोऽयं शिथिलादरः ॥ २२५ ॥ पयोधरघनीभावस्तावदम्बरमध्यगः । आश्लेषोपगमस्तत्र यावन्नैव प्रवर्तते ॥ २२६ ॥ भाति निर्विवरे तस्याश्चित्रं कुचयुगान्तरे । क्रीडाकुण्डलितोच्चण्डकोदण्डः कुसुमायुधः ॥ २२७ ॥ कुचद्वये चकोराक्षी चिबुकप्रान्तचुम्बिनि । नर्मोक्तिषु न शक्नोति स्थातुं लज्जानतानना ॥ २२८ ॥ शङ्के तच्चित्तमक्लेशसाध्यं कुसुमधन्वनः । काठिन्यं बहिरेवास्याः स्तनाभ्यां येन धारितम् ॥ २२९ ॥ सा स्तनाञ्जलिबन्धेन मन्मथं प्रथमागतम् । करोतीवोन्मुखं बाला बान्धवं यौवनश्रियः ॥ २३० ॥ अस्त्यप्रतिसमाधेयं स्तनद्वन्द्वस्य दूषणम् । स्फुटतां कञ्चुकानां यन्नायात्यावरणीयताम् ॥ २३१ ॥ कुम्भौ सदम्भौ करिणां कलशौ मन्दकौशलौ । चक्रवाकौ वराकौ च तदीयकुचयोः पुरः ॥ २३२ ॥ मुखेन्दुचन्द्रिकापूरछाल्यमानौ पुनः पुनः । शीतभीताविनान्योन्यं तस्याः पीडयतः स्तनौ ॥ २३३ ॥ तत्कुचौ चरतः किंचिन्नूनं मनसिजव्रतम् । नित्योन्मुखौ यदासाते मौलिरत्नस्य भास्वतः ॥ २३४ ॥ सा धारयत्यधीराक्षी दुर्वहं स्तनमण्डलम् । गर्वपर्वतमारूढश्चित्रं कुसुमकार्मुकः ॥ २३५ ॥ तस्यास्तुङ्गस्तनच्छाया चकास्ति त्रिवलीतटे । लीना तिमिरलेखेव वदनेन्दोरगोचरे ॥ २३६ ॥ स्वकीयं हृदयं भित्त्वा निर्गतौ यौ पयोधरौ । हृदयस्यान्यदीयस्य भेदने का कृपा तयोः ॥ २३७ ॥ अल्पं निर्मितमाकाशमनालोच्यैव वेधसा । इदमेवंविधं भावि भवत्याः स्तनमण्डलम् ॥ २३८ ॥ उच्छ्वसन्मण्डलप्रान्तरेखमाबद्धकुड्मलम् । अपर्याप्तमुरोवृद्धेः शंसत्यस्याः स्तनद्वयम् ॥ २३९ ॥ पटविघटितमपि

कुचतटमकपटमनसः कुरङ्गनयनायाः । मणिभवमयूखपटली पटलीनतया न सम्यगालोचि ॥ २४० ॥ प्रतिपक्षो यदि वक्षोरुहपरिणाहः कुरङ्गनयनायाः । आकाशवासतपसः श्रीफलविफलस्तवायासः ॥ २४१ ॥ चञ्चत्काञ्चनशैलावस्या वक्षोरुहौ तन्व्याः । नो चेत्तावधिरूढा कथमनिमिषतां भजेत मे दृष्टिः ॥ २४२ ॥ करतलयुगपरिणद्धे कुचकलशे कुङ्कुमारुणे तस्याः । सिन्दूरिते करिपतेः कुम्भे नक्षत्रमालेव ॥ २४३ ॥ काठिण्यमङ्गैरखिलैर्निरस्तं कुचौ युवत्याः शरणं जगाम । अधः पतिष्याव इतीव भीत्या न शक्नुवस्तावपि हातुमेतत् ॥ २४४ ॥ दिवानिशं वारिणि कण्ठदघ्ने दिवाकराराधनमाचरन्ती । वक्षोजताम्यै किमु पक्ष्मलाक्ष्यास्तपश्चरत्यम्बुजपङ्क्तिरेषा ॥ २४५ ॥ अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु तथा प्रवृद्धम् । मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम् ॥ २४६ ॥ किं नर्मदाया मम सेयमस्या दृश्यामितो बाहुलतामृणाली । कुचौ किमुत्तस्थतुरन्तरीपे स्मरोष्मशुष्यत्तरवाल्यवारः ॥ २४७ ॥ तालं प्रभु स्यादनुकर्तुमेतावुत्थानसुस्थौ पतितं न तावत् । परं च नाश्रित्य तरुं महान्तं कुचौ कृशाङ्ग्याः स्वत एव तुङ्गौ ॥ २४८ ॥ एतत्कुचस्पर्धितया घटस्य ख्यातस्य शास्त्रेषु निदर्शनत्वम् । तस्माच्च शिल्पान्मणिकादिकारी प्रसिद्धनामाजनि कुम्भकारः ॥ २४९ ॥ निःशङ्कसंकोचितपङ्कजोऽयमस्यामुदीतो मुखमिन्दुबिम्बः । चित्रं तथापि स्तनकोकयुग्मं न स्तोकमप्यञ्चति विप्रयोगम् ॥ २५० ॥ आभ्यां कुचाभ्यामिभकुम्भयोः श्रीरादीयतेऽसावनयोः क्व ताभ्याम् । भयेन गोपायितमौक्तिकौ तौ प्रव्यक्तमुक्ताभरणाविमौ यत् ॥ २५१ ॥ कराग्रजाग्रच्छतकोटिरर्थी ययोरिमौ तौ तुलयेत्कुचौ चेत् । सर्वं तदा श्रीफलमुन्मदिष्णु जातं वटीमप्यधुना न लब्धुम् ॥ २५२ ॥ मध्यं तनूकृत्य यदीदमीयं वेधा न दध्यात्कमनीयमंशम् । केन स्तनौ संप्रति यौवनेऽस्याः सृजेदनन्यप्रतिमाङ्गदीप्तेः ॥ २५३ ॥ नयननीरज किं भवता कृतं मुखशशीवदयं वपुराश्रितः । इति वचो वितरीतुमिवोन्मुखं वरतनोः स्तनचक्रयुगं बभौ ॥ २५४ ॥ बदरामलकाम्रदाडिमानामपहृत्य श्रियमुन्नतौ क्रमेण । अधुना हरणे कुचौ यतेते दयिते ते करिशावकुम्भलक्ष्म्याः ॥ २५५ ॥ जम्बीरश्रियमतिलङ्घ्य लीलयैव व्यानम्रीकृतकमनीयहेमकुम्भौ । नीलाम्भोरुहनयनेऽधुना कुचौ ते स्पर्धेते किल कनकाचलेन सार्धम् ॥ २५६ ॥ शुकीचञ्चूत्खातच्छवि फलयुगं यौवनतरोरयःशङ्कुक्षुण्णं मदनकरिणः कुम्भयुगलम् । समुद्राम्भोगोर्यामृतकलशयुग्मं सुकृतिनः कुचद्वन्द्वं तन्व्या नवनखपदाङ्कं विजयते ॥ २५७ ॥ कुचावस्याः कामद्विपकलभकुम्भाविति परे वदन्त्यन्ये वक्षः सदसि कमले काञ्चनघटौ । ममायं सिद्धान्तः स्फुरति मदनेन त्रिजगतीं विनिर्जित्यन्युब्जीकृतमिव निजं दुन्दुभियुगम् ॥ २५८ ॥ जम्बीरं वा कमलमुकुलं हेमगुच्छं यथेच्छं मङ्गल्यं वा कलयतु जनो भूपतेर्मन्मथस्य । एतद्द्वन्द्वं कलयति मतिर्मामकीना नवीना केनाप्यस्या हृदि विनिहितं मन्मथानन्दकन्दम् ॥ २५९ ॥

पुष्पेषोरभिषेकहेमकलशौ हारप्रभावाहिनीचक्राह्वौ मदनोन्मदद्विपपतेः कुम्भौ रतेः कन्दुकौ । कन्दौ बाहुमृणालिकायुगलयोर्लीलालतासत्फले नव्यौ रत्नसमुद्गकौ वहति सा लावण्यपूर्णौ स्तनौ ॥ २६० ॥ यूनां मोहमहाफलप्रसविनी नाभ्यालवालोत्थितां सेक्तुं लोमलतां मुखामृतनिधेर्लावण्यनामामृतम् । नेप्यन्सारणिकां विभज्य कृतवान्कूटद्वयं पार्श्वयोः पञ्चेषुस्तदिदं पयोधरयुगं लोकाः समाचक्षते ॥ २६१ ॥ उद्भिन्नं किमिदं मनोभवनृपक्रीडारविन्दद्वयं सूते तत्कथमेकतः किल लसद्रोमावलीनालतः । चक्रद्वन्द्वमिदं क्षमं तदपि न स्थातुं मुखेन्दोः पुरो लावण्याम्बुनि मग्नयौवनगजस्यावैमि कुम्भद्वयम् ॥ २६२ ॥ उद्भेदं प्रतिपद्य पक्वबदरीभावं समेत्य क्रमात्पुंनागाकृतिमाप्य पूगपदवीमारुह्य बिल्वश्रियम् । लब्ध्वा तालफलोपमां च ललितामासाद्य भूयोऽधुना चञ्चत्काञ्चनकुम्भजृम्भणमिमावस्याः स्तनौ बिभ्रतः ॥ २६३ ॥ रत्याप्तप्रियलाञ्छने कठिनतावासे रसालिङ्गिते प्रह्लादैकरसे क्रमादुपचिते भूभृद्गुरुत्वापहे । कोकस्पर्धिनि भोगभाजिजनितानङ्गे खलीनोन्मुखे भाति श्रीरमणावतारदशक बाले भवत्याः स्तने ॥ २६४ ॥ ( कञ्चुकी ) ॥ उपरि पीनपयोधरपातितापरकुटीव मनोभवभूपतेः । विजयिनस्त्रिपुरारिजिगीषया तव विराजति भामिनि कञ्चुकी ॥ २६५ ॥ (हारः) ॥ घटीयन्त्रायते हारो नाभिकूपे मृगीदृशः । संसेक्तुमिव लावण्यपयसा यौवनद्रुमम् ॥ २६६ ॥ हारः कुरङ्गशावाक्ष्या राजति स्थूलमौक्तिकः । नाभिलावण्यपानीयघटीयन्त्रगुणोपमः ॥ २६७ ॥ मातङ्गकुम्भसंसर्गजातपातकशङ्कया । स्नातीव मुक्तहारोऽस्याः स्फुरत्कान्तिगले जले ॥ २६८ ॥ मणिहारलता विभाति तन्व्याः स्तनसिंहासनसीम्नि तास्थिवांसम् । अभिषेक्तुमनङ्गदेवराजं गलशङ्खाद्गलितेव दुग्धधारा ॥ २६९ ॥ ग्रीवाद्भुतैवावटुशोभितापि प्रसाधिता माणवकेन सेयम् । आलिङ्गयतामप्यवलम्बमाना सरूपताभागखिलोर्ध्वकाया ॥ २७० ॥ स्तनातटे चन्दनपङ्किलेऽस्यां जातस्य यावद्युवमानसानाम् । हारावलीरत्नमयूखधाराकाराः स्फुरन्ति स्खलनस्य रेखाः ॥ २७१ ॥ निविडानुषक्तकुचकोकदंपतीमुखतारकापरिच्छेदेन शासितुम् । अवतारितेव निजतारकावली हरिणीदृशः स्फुरति हारवल्लरी ॥ २७२ ॥ एकावलीकलितमौक्तिककैतवेन तन्व्याः समुन्नतपयोधरयुग्मसेवाम् । चक्रुर्मनासि यमिनामतिनिर्मलानि कंदर्पमुक्तशरपातकृतान्तराणि ॥ २७३ ॥ मुक्तावली स्मरविदाहविपाण्डुमूले नद्धा चकास्ति जितकम्बुनि कण्ठकाण्डे । निश्चिन्वती मृगदृशो वदनं मृगाङ्क नक्षत्रपङ्क्तिरिव संपतिता नभस्तः ॥ २७४ ॥ मध्यदेशः ॥ युक्तं मध्ये कृशा तन्वी कार्मुकीकरणाय यत् । अत्रैव कुसुमास्त्रेण पीड्यते श्लिष्टमुष्टिना ॥ २७५ ॥ स्तनौ भारार्पणव्यग्रौ काञ्ची कलकलोन्मुखी । कस्यां दिशि न मध्यस्य तस्याः कार्श्यं सहेतुकम् ॥ २७६ ॥ स्मरमानसिकसमस्यात्स्यास्तानिमा निरवधिर्मध्यः । श्रीरेव पूरयति यां न गिरां देवी न चापि गुरुरस्याः ॥ २७७ ॥ वयःप्रकर्षादुपचीयमानस्तनद्वय-

स्योद्वहनश्रमेण । अत्यन्तकार्श्ये वनजायताक्ष्या मध्यो जगामेति ममैष तर्कः ॥ २७८ ॥ स्फुटमसदवलग्नं तन्वि निश्चिन्वते ते तदनुपलभमानास्तर्कयन्तोऽपि लोकाः । कुचगिरिवरयुग्मं यद्विनाधारमास्ते तदिह मकरकेतोरिन्द्रजालं प्रतीमः ॥ २७९ ॥ **नाभिः** ॥ मन्ये समाप्तलावण्यसारे सर्गे मृगीदृशः । अपूरयित्वेव गतो नाभिरन्ध्रं चतुर्मुखः ॥ २८०॥ कुचकुम्भौ समालम्ब्य तरन्ती कान्तिनिम्नगाम् । भ्रमादितस्ततो दृष्टा दृष्टिर्नाभौ निमज्जति ॥२८१॥ स्तनौ तुङ्गौ समारूढे चापन्यस्तभरे स्मरे। कोदण्डाटनिमुद्रेव जाता नाभी नतभ्रुवः ॥ २८२ ॥ उरोजवच्चक्रमनोज्ञरूपा केशावलीव भ्रमराजिता वा । संगीतवत्सत्पुटभेदहृद्या विद्येत नाभीसरसी मृगाक्ष्याः ॥ २८३ ॥ **वलित्रयम्** ॥ एकमेव बलिं बध्वा जगाम हरिरुन्नतिम् । तन्व्यास्त्रिवलिबन्धेऽपि सैव मध्यस्य नम्रता ॥ २८४ ॥ स्तनभाराय मध्येन त्रिवलिव्याजतः कृता । तस्याः शङ्कितभङ्गेन भ्रूभङ्गानामिवावलिः ॥ २८५ ॥ तदीयत्रिवलीमार्गसोपानारोहणश्रमः । अनङ्गत्वादनङ्गस्य जातो रत्येकगोचरः ॥ २८६ ॥ परिहृत्य दुरारोहं तस्याः स्तनतटं कृता । कंदर्परथसंचारमार्गालीव वलित्रयी ॥ २८७ ॥ दरिद्रमुदरं दृष्ट्वा चक्रे लावण्यपूर्णयोः । पन्थानं स्तनयोस्तस्यास्त्रिवलीविषमं विधिः ॥ २८८ ॥ राजति त्रिवली तस्याः स्तनभारोन्नतिक्रमात् । उपर्युपरि जातेव हारमुद्रापरंपरा ॥ २८९ ॥ मध्यत्रिवलीत्रिपथे पीवरकुचचत्वरे च चपलदृशाम् । छलयति मदनपिशाचः पुरुषं हि मनागपि स्खलितम् ॥ २९० ॥ मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला । आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ॥ २९१ ॥ अनन्यसाधारणकान्तिकान्ततनोरमुष्याः किमु मध्यदेशः । जगत्त्रयी जन्मभृतां निषण्णा चित्तावलीयं त्रिवलीमिषेण ॥ २९२ ॥ मध्यात्समानीय सुसारभागं वक्षोजमुत्पादयिता विधाता । अतिप्रयत्नात्रिवलीमिषेण सोपानवर्त्मत्रितयं चकार ॥ २९३ ॥ मत्वा चापं शशिमुखि निजं मुष्टिना पुष्पधन्वा तन्वीमेनां तव तनुलतां मध्यदेशे बभार । यस्मादत्र त्रिभुवनवशीकारमुद्रानुकारास्तिस्रो भान्ति त्रिवलिकपटादङ्गुलीसंधिरेखा ॥ २९४ ॥ **रोमावलिः** ॥ नाभिरन्ध्रं प्रविष्टास्याः श्यामला रोमवल्लरी । त्रस्ता तिमिरलेखेव मेखलामणिकान्तितः ॥ २९५ ॥ भाति रोमावली तस्याः पयोधरभरोन्नतौ । जाता रत्नशलाकेव श्रोणिवैदूर्यभूमितः ॥ २९६ ॥ नाभिसङ्गेन गौराङ्ग्याः शोभते रोममञ्जरी । कंदर्पहेमकटकाल्लाक्षाधारेव निर्गता ॥ २९७ ॥ नाभीवलयसंबद्धा रोमाली भाति सुभ्रुवः । सहिता निगडेनेव शृङ्खला स्मरदन्तिनः ॥२९८॥ रोमावली विलासिन्याः प्रविष्टा नाभिमण्डलम् । कियद्गाम्भीर्यमत्रेति तात्पर्यमिव बिभ्रती ॥ २९९ ॥ लिखन्त्याः कामसाम्राज्यशासनं यौवनश्रियः । गलितेव मषीधारा रोमाली नाभिगोलकात् ॥ ३०० ॥ जाने रात्रिषु तन्मध्ये ददाति शनकैः पदम् । गम्भीरनाभिकुहरप्रवेशशङ्कया स्मरः ॥ ३०१ ॥ कुचदुर्गराजधान्योर्मध्ये मार्गं मृगीदृशो मदनः । किम-

कृत नाभीवापीमपि रोमालीतमालवनरेखा ॥ ३०२ ॥ तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी नवरोमराजिः । नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः ॥ ३०३ ॥ गौरीव पत्या सुभगा कदाचित्कर्त्रीयमप्यर्धतनूसमस्याम् । इतीव मध्ये निदधे विधाता रोमावलीमेचकसूत्रमस्याः ॥ ३०४ ॥ रोमावलीरज्जुमुरोजकुम्भौ गम्भीरमासाद्य च नाभिकूपम् । मद्दृष्टितृष्णा विरमेद्यदि स्यान्नैषां बतैषा सिचयेन गुप्तिः ॥ ३०५ ॥ उन्मूलितालानविलाभनाभिश्छिन्नस्खलच्छृङ्खलरोमदामा । मत्तस्य सेयं मदनद्विपस्य प्रस्वापवप्रोच्चकुचास्तु वास्तु ॥ ३०६ ॥ रोमावलिभ्रूकुसुमैः स्वमौर्वीचापेषुभिर्मध्यललाटमूर्ध्नि । व्यस्तैरपि स्थास्नुभिरेतदीयैर्जैत्रः स चित्रं रतिजानिवीरः ॥ ३०७ ॥ गम्भीरनाभिह्रदसंनिवेशे रराज तन्वी नवरोमराजिः । मुखेन्दुभीतस्तनचक्रवाकद्वन्द्वोज्झिता शैवलमञ्जरीव ॥ ३०८ ॥ स्वर्णावदातद्युतिकायकाण्डे संपूर्णपीयूषमयूखमुख्यः । एणीदृशः पृष्ठविलम्बिवेणीबिम्बः पुरो राजति रोमराजी ॥ ३०९ ॥ प्रयोधरस्तावदयं समुन्नतो रसस्य वृष्टिः सविधे भविष्यति । अतः समुद्गच्छति नाभिरन्ध्रतो विसारि रोमालिपिपीलिकावलिः ॥ ३१० ॥ गभीरनाभीह्रदपार्श्ववर्तिनी विराजते लोमतती मृगीदृशः । मुखारविन्दस्य रसाभिलाषिणी द्विरेफपङ्क्तिश्चलितेव नीरवा ॥ ३११ ॥ समुदितकुचकुम्भमङ्गनाया हृदयमनङ्गमनङ्गजोऽधिशेते । तदखिलपदबन्धनाय रोमावलिरिह शृङ्खलिका विलोक्यते यत् ॥ ३१२ ॥ दत्तं मया पदमिदं नवयौवनाय त्वं सत्वरं क्वचन शैशव साधयेति । कामस्य हस्तलिखिताक्षरमालिकेव रोमावली विजयते जलजेक्षणायाः ॥ ३१३ ॥ नाभीबिलान्तरविनिर्गतपन्नगीयं संप्रस्थिता नयनखञ्जनभक्षणाय । नासामुदीक्ष्य- गरुडभ्रममुद्वहन्ती गुप्तेव पीनकुचपर्वतयोरधस्तात् ॥ ३१४ ॥ अतिबहुतरलज्जा शृङ्खलाबद्धपादो मदननृपतिवाहो यौवनोन्मत्तहस्ती । प्रकटितकुचकुम्भो लोमराजीकरेण पिबति सरसि नाभीमण्डलाख्ये पयांसि ॥ ३१५ ॥ अमुष्मिल्लावण्यामृतसरसि नूनं मृगदृशः स्मरः शर्वप्लुष्टः पृथुजघनभारे निपतितः । यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे शिखा धूमस्येयं परिणमति रोमावलिमिषात् ॥ ३१६ ॥ उत्तुङ्गस्तनपर्वतादवतरद्गङ्गेव हारावली रोमाली नवनीलनीरजरुचिः सेयं कलिन्दात्मजा । जातं तीर्थमिदं सुपुण्यजनक यत्रानयोः संगमश्चन्द्रो मज्जति लाञ्छनापहृतये नूनं नखाङ्कच्छलात् ॥ ३१७ ॥ उत्तुङ्गस्तनभार एष तरले नेत्रे चले भ्रूलते रागान्धेषु तदोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् । सौभाग्याक्षरपङ्क्तिरेव लिखिता पुष्पायुधेन स्वयं मध्यस्थापि करोति तापमधिक रोमावली केन सा ॥ ३१८ ॥ **पृष्ठभागः** ॥ अस्याः खलु ग्रन्थिनिबद्धकेशमल्लीकदम्बप्रतिबिम्बवेशात् । स्मरप्रशस्ती रजताक्षरेयं पृष्ठस्थलीहाटकपट्टिकायाम् ॥३१९॥ **नितम्बः** ॥ तन्नितम्बस्य निन्दन्ती वृद्धि परिजनाङ्गनाः । काञ्चीनवनवग्रन्थिग्रथनेन कदर्थिताः ॥ ३२० ॥ नितम्बबिम्बं बिम्बोष्ठी चन्द्रकान्तशिलाघनम् । धत्ते कंदर्पदोःस्तम्भप्र-

शस्तिफलकोपमम् ॥ ३२१ ॥ विस्तारिणा मुहुस्तस्याः श्रोणीबिम्बेन पीडिता । त्रुटिता त्रुटितास्मीति पूत्करोतीव मेखला ॥ ३२२ ॥ अपर्याप्तभुजायामः सखेदोऽस्याः सखीजनः । श्रोण्यां कथंचित्कुरुते रशनादामबन्धनम् ॥ ३२३ ॥ नितम्बगौरवेणासौ गौराङ्गी खिद्यते दृढम् । हारयत्यपरिस्पन्दा कन्दुकं क्रीडितेषु यत् ॥ ३२४ ॥ स कथं न स्पृहणीयो विषयरतैस्तन्नितम्बविन्यासः । शान्तात्मनापि विहितं विश्वसृजा गौरवं यत्र ॥ ३२५ ॥ पृथुवर्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया । विधिरेकचक्रचारिणं किमु निर्मितसति मान्मथं रथम् ॥ ३२६ ॥ चक्रेण विश्वं युधि मत्स्यकेतुः पितुर्जितं वीक्ष्य सुदर्शनेन । जगज्जिगीषत्यमुना नितम्बद्वयेन किं दुर्लभदर्शनेन ॥ ३२७ ॥ रोमावली दण्डनितम्बचक्रे गुणं च लावण्यजलं च बाला । तारुण्यमूर्तेः कुचकुम्भकर्तुर्बिभर्ति शङ्के सहकारि चक्रम् ॥ ३२८ ॥ **( काञ्ची )** ॥ बद्धा मणिमयकाञ्ची तस्याः परिणाहशालिनि नितम्बे । पङ्क्तिरिव सारसानां सुरसरितः पुलिनमण्डलाभोगे ॥ ३२९ ॥ काञ्चीगुणैर्विरचिता जघनेषु लक्ष्मीर्लब्धस्थितिः स्तनतटेषु च रत्नहारैः । नो भूषिता वयमितीव नितम्बिनीनां काञ्चीनिरर्गलमधार्यत मध्यभागैः ॥ ३३० ॥ **जघनम्** ॥ तस्याः पद्मपलाशाक्ष्यास्तन्व्यारतज्जघनं घनम् । दृष्टं सखिभिर्याभिस्ताः पुंभावं मनसा ययुः ॥ ३३१ ॥ अनङ्गरङ्गपीठोऽस्याः शृङ्गारस्वर्णविष्टरः । लावण्यसारसंघातः सा घना जघनस्थली ॥ ३३२ ॥ तदीयजघनाभोगगरिमा विस्मयास्पदम् । दूरपाती पृषत्कोऽभूद्येनानङ्गस्य साङ्गना ॥ ३३३ ॥ वपुरनुपम नाभेरूर्ध्वं विधाय मृगीदृशां ललितललितैरङ्गन्यासैः पुरा रभसादिव । तदनु सहसा खिन्नेनेव प्रजापतिना भृशं पृथुलपृथुला स्थूलस्थूला कृता जघनस्थली ॥ ३३४ ॥ **मदनमन्दिरम्** ॥ अङ्गेन केनापि विजेतुमस्या गवेष्यते किं चलपत्रपत्रम् । न चेद्विशेषादितरच्छदेभ्यस्तस्यास्तु कम्पस्तु कुतो भयेन ॥ ३३५ ॥ गौरवर्णवनितावराङ्गके रेजुरुत्थिततनूरुहाङ्कुराः । तर्पणाय मदनस्य वेधसा स्वर्णशुक्तिनिहितास्तिला इव ॥ ३३६ ॥ **ऊरू** ॥ मन्ये तदूरू संभाव्य हस्तसर्वस्वहारिणौ । वहन्त्यस्पृश्यताहेतोर्मातङ्गत्वं मतङ्गजाः ॥ ३३७ ॥ लम्भिताः कदलीस्तम्भास्तदूरूभ्यां पराभवम् । अत्यन्तमृदुभिर्लब्धो जडैः क्व जयडिण्डिमः ॥ ३३८ ॥ ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति । सपताकः कनकमयो विजयस्तम्भः स्मरस्येव ॥ ३३९ ॥ तरुमूरुयुगेण सुन्दरी किमु रम्भां परिणाहिना परम् । तरुणीमपि जिष्णुरेव तां धनदापत्यतपःफलस्तनीम् ॥ ३४० ॥ रम्भापि किं चिह्नयति प्रकाण्डं न चात्मनः स्वेन न चैतदूरू । स्वस्यैव येनोपरि सा दधाना पत्राणि जागर्त्यनयोर्भ्रमेण ॥ ३४१ ॥ विधाय मूर्धानमधश्चरं चेन्मुञ्चेत्तपोभिः स्वमसारभावम् । जाड्यं च नाञ्चेत्कदली बलीयस्तदा यदि स्यादिदमूरुचारुः ॥ ३४२ ॥ ऊरुप्रकाण्डद्वितयेन तस्याः करः पराजीयत वारणीयः । युक्तं ह्रिया कुण्डलनच्छलेन गोपायति स्वं मुखपुष्करं सः ॥ ३४३ ॥ अस्या मुनीनामपि मोहमूहे भृगु-

महान्यत्कुचशैलशीली । नानारदाह्लादि मुखं श्रितोरुर्व्यासो महाभारतसर्गयोग्यः ॥३४४॥ पश्यन्हतो मन्मथबाणपातैः शक्तो विधातुं न निमील्य चक्षुः । ऊरू विधात्रा हि कथं कृतौ तौ विन्यासवत्याः सुमतेर्वितर्कः ॥ ३४५ ॥ नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः । लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः ॥ ३४६ ॥ कदली कदली करभः करभः करिराजकरः करिराजकरः । भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः ॥ ३४७ ॥ **जङ्घे** ॥ जङ्घे तदीये संतापं यज्जनस्यानुरागिणः । जनयांचक्रतुस्तीव्रं तत्र हेतुर्विलोमता ॥ ३४८ ॥ हेममञ्जीरमालाभ्यां भाति जङ्घालताद्वयम् । लावण्यशाखिनः स्थानं कुङ्कुमेनेव वेष्टितम् ॥ ३४९ ॥ वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये । शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः ॥३५०॥ क्रमोद्गता पीवरताधिजङ्घं वृक्षाधिरूढिं विदुषी किमस्याः । अपि भ्रमीभङ्गिभिरावृताङ्गं वासो लतावेष्टितकप्रवीणम् ॥ ३५१ ॥ **चरणौ** ॥ अमूल्यस्य मम स्वर्णतुलाकोटिद्वयं कियत् । इति कोपादिवाताम्रं पादयुग्मं मृगीदृशः ॥ ३५२ ॥ जाग्रतः कमलाल्लक्ष्मीं यज्जग्राह तदद्भुतम् । पादद्वन्द्वस्य मत्तेभगतिस्तेये तु का स्तुतिः ॥ ३५३ ॥ स्तनभारोऽत्र वक्रेन्दुचन्द्रिकावरणं मम । इति तत्पादयोर्लग्ना वेद्मि प्राङ्गणपद्मिनी ॥ ३५४ ॥ अत्यपूर्वस्य रागस्य पूर्वपक्षाय पल्लवाः । पद्मानि पादयुग्मस्य प्रत्युदाहरणानि च ॥३५५॥ दृश्यन्ते मानसोत्तंसा राजहंसाः क्वचिद्यदि । गतौ चरणयोस्तस्याः प्रक्ष्यते यावदन्तरम् ॥३५६॥ नितम्बपीड्यमानेन पादयुग्मेन सुभ्रुवः । कृता भ्रुकुटिभङ्गीव नीलनूपुरमालया ॥३५७॥ चरणकमलं तदीयं लाक्षाबालातपेन संवलितम् । अध्यास्त भृङ्गमालावलिभिर्मणिखचितनूपुरव्याजात् ॥ ३५८ ॥ दशकैरवबान्धवान्दधानौ जडसंसर्गविमुक्तिसावधानौ । चरणौ नलिनेन तोलयन्तः कथमस्याः कवयो न यान्ति लज्जाम् ॥ ३५९ ॥ अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ । आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् ॥ ३६० ॥ अस्याः पदौ चारुतया महान्तावपेक्ष्य सौक्ष्म्याल्लवभावभाजः । जाता प्रवालस्य महीरुहाणां जानीमहे पल्लवशब्दलब्धिः ॥ ३६१ ॥ जगद्वधूमूर्धसु रूपदर्पाद्यदेतयाधायि पदारविन्दम् । तत्सान्द्रासिन्दूरपरागरागैर्ध्रुवं प्रवालप्रबलारुणं तत् ॥ ३६२ ॥ यानेन तन्व्या जितदन्तिनाथौ पदाब्जराजौ परिशुद्धपार्ष्णी । जाने न शुश्रूषयितुं स्वमिच्छू नतेन मूर्ध्ना कतरस्य राज्ञः ॥ ३६३ ॥ प्रियासखीभूतवतो मुदेदं व्यधाद्विधिः साधुदशत्वमिन्दोः । एतत्पदच्छद्मसरागपद्मसौभाग्यभाग्यं कथमन्यथा स्यात् ॥ ३६४ ॥ **गुल्फौ** ॥ अरुंधतीकामपुरंध्रिलक्ष्मीजम्भद्विपद्दारनवाम्बिकानाम् । चतुर्दशीयं तादिहोचितैव गुल्फद्वयाप्ता यदृश्यसिद्धिः ॥ ३६५ ॥ **पादाङ्गुल्यः** ॥ एष्यन्ति यावद्गणनाद्दिगन्तान्नृपाः स्मरार्ताः शरणे प्रवेष्टुम् । इमे पदाब्जे विधिनापि सृष्टास्तावत्य एवाङ्गुलयोऽत्र रेखाः ॥ ३६६ ॥ **नखाः** ॥ तस्याः

पादनखश्रेणिः शोभते किल सुभ्रुवः । रत्नावलीव लावण्यरत्नाकरसमुद्गता ॥३६७॥ तत्पादनखरत्नानां यदलक्तकमार्जनम् । इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥ ३६८ ॥ तद्वक्त्रं नेत्रपद्मं प्रकटितमसकृत्स्पर्धितं यन्मयैतज्जातं तस्मात्कृशत्वं ग्रहणमपि ततो जायमानः कलङ्कः । तत्सर्वं क्षम्यतां मे पुनरपि न करोम्येवमुक्त्वा तु तस्या गाढं लग्नः शशाङ्कश्चरणनखमणिच्छद्मना पादयुग्मम् ॥ ३६९ ॥ ( गमनम् ) ॥ सलीयमियमायाति कामिनी गजगामिनी । उन्नतं हि नखज्योतिः पुष्पैर्भुवमिवार्चती ॥ ३७० ॥ मारयन्त्या जनं सर्वं निरागसमिवाज्ञया । मातङ्गानां गतिर्यद्वक्त्राद्वगासीदसंशयम् ॥ ३७१ ॥ सा राजहंसैरिव संनताङ्गी गतेषु लीलाञ्चितविक्रमेषु । व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरसिञ्जितानि ॥ ३७२ ॥ ( कान्तिः )॥ सुन्दरी सा भवत्येवं विवेकः केन जायते । प्रभामात्रं हि तरलं दृश्यते नात्र संशयः ॥ ३७३ ॥ अवयवेषु परस्परबिम्बितेष्वतुलकान्तिषु राजति तत्तनोः । अयमयं प्रविभाग इति स्फुटं जगति निश्चिनुते चतुरोऽपि कः ॥ ३७४ ॥

---

## समग्रस्त्रीस्वरूपवर्णनम् ।

सा दृष्टा यैर्न वा दृष्टा मुषिताः सममेव ते । हृदयं हृतमेतेषामन्येषां चक्षुषोः फलम् ॥ १ ॥ मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः । पादाभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा ॥ २ ॥ गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता । शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ ३ ॥ फलायते कुचद्वन्द्वमियं हेमलतायते । अङ्गानि कुसुमायन्ते मनो मे भ्रमरायते ॥ ४ ॥ वक्त्रे गुरुत्वं यदि ते वृत्तशास्त्रविदो विदुः । कठिने कुचयुग्मेऽस्या वदतां किं नु हीयते ॥ ५ ॥ आवर्त एव नाभिस्ते नेत्रे नीलसरोरुहे । तरङ्गा वलयस्तेन त्वं लावण्याम्बुवापिका ॥ ६ ॥ राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम् । तपनीयशिलाशोभा कटिश्च हरते मनः ॥ ७ ॥ निर्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम् । क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा ॥ ८ ॥ अकृशं नितम्बभागे क्षामं मध्ये समुन्नतं कुचयोः । अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ९ ॥ अव्याजसुन्दरीं तां विज्ञानेनाद्भुतेन योजयता । उपकल्पिता विधात्रा बाणाः कामस्य विषदिग्धाः ॥ १० ॥ आलोक्य चिकुरनिकरं सततं सुमनोधिवासयोग्यं ते । कामोऽनिलं निसङ्गं परित्यज्य परामृशति साशङ्कः ॥ ११ ॥ आलपति पिकवधूरिव पश्यति हरिणीव चलति हंसीव । स्फुरति तडिल्लतिकेव स्वदते तुहिनांशुलेखेव ॥ १२ ॥ वेणीविन्ध्यमहीनं कृष्णं नेत्रान्तमचलरूपं तम् । कुचमस्याः स्वीकुर्वन्पुरुषो लीलां वहत्यहो शंभोः ॥ १३ ॥ अङ्गं भूषणनिकरो भूषयतीत्येष लौकिको वादः । अङ्गानि भूषणानां काममपि सुषुमामजीजनंस्तस्याः ॥ १४ ॥ सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ । हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले ॥ १५ ॥ मधुरः

सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः। चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः॥ १६॥ कलयति कुवलयमालाललितं कुटिलः कटाक्षविक्षेपः। अधरः किसलयलीलामाननमस्याः कलानिधिविलासम्॥ १७॥ तरुणिमनि कलयति कलामनुमदनधनुर्भ्रुवोः पठत्यग्रे। अधिवसति सकलललनामौलिमियं चकितहरिणचलनयना॥ १८॥ संन्यस्तभूषापि नवैव नित्यं विनापि हारं हसतीव कान्त्या। सौम्यं विनापि स्खलतीव भावैर्वाचं विना व्याहरतीव दृष्ट्या॥ १९॥ यतो यतोऽङ्गादपयाति कञ्चुकं ततस्ततः स्वर्णमरीचिवीचयः। यतो यतोऽस्या निपतन्ति दृष्टयस्ततस्ततः श्यामसरोजवृष्टयः॥२०॥ तदा तदङ्गस्य विभर्ति सभ्रमं विलेपनामोदमुचः स्फुरद्रुचः। दरस्फुरत्काञ्चनकेतकीदलात्सुवर्णमभ्यस्यति सौरभं यदि॥ २१॥ भ्रूयुग्ममुच्चैर्धनुरुज्झितज्या बाणाः कटाक्षाः कुटिला नितान्तम्। तथापि यूनां हृदयं भिनत्ति कोऽयं विलासो वनिताजनस्य॥ २२॥ अधरे मधुरा सरस्वती ननु कर्णे मणिकर्णिकाप्रवाहः। शिरसि प्रतिभाति चारुवेणी कथमेणीनयना न तीर्थराजः॥ २३॥ अलीकरूपो यदि मध्यभागः पयोधराकारभृतश्च केशाः। उत्सङ्गशोभापि सरोरुहाक्ष्याः करस्य शोभां कलयेन्न कस्मात्॥ २४॥ सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन। सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव॥ २५॥ केशः काशस्तवकविकासः कायः प्रकटितकरभविलासः। चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम्॥ २६॥ जानेऽतिरागादिदमेव बिम्बं बिम्बस्य च व्यक्तमितोऽधरत्वम्। द्वयोर्विशेषावगमाक्षमाणां नाम्नि भ्रमोऽभूदनयोर्जनानाम्॥ २७॥ प्रत्यङ्गमस्यामभिकेन रक्षां कर्तुं मघोनेव निजास्त्रमस्ति। वज्रं च भूषामणिमूर्तिधारि नियोजितं तद्द्युतिकार्मुकं च॥२८॥ भ्रूश्चित्ररेखा च तिलोत्तमास्या नासा च रम्भा च यदूरुसृष्टिः। दृष्टा ततः पूरयतीयमेकानेकाप्सरःप्रेक्षणकौतुकानि॥ २९॥ कर्णाक्षिदन्तच्छदबाहुपाणिपदादिनः स्वाखिलतुल्यजेतुः। उद्वेगभागद्वयताभिमानादिहैव वेधा व्यधित द्वितीयम्॥ ३०॥ यशः पदाङ्गुष्ठनखौ मुखं च बिभर्ति पूर्णेन्दुचतुष्टयं या। कलाचतुःषष्टिरुपैति वासं तस्यां कथं सुभ्रुवि नाम नास्याम्॥ ३१॥ वेणी विडम्बयति मत्तमधुव्रतालीमङ्गीकरोति गुणमैन्दवमास्यमस्याः। बाहू मृणाललतिकाश्रयमाश्रयन्ते पुङ्खोऽनुपुङ्खयति कामशरान्कटाक्षैः॥ ३२॥ भ्रूपल्लवं धनुरपाङ्गतरङ्गितानि बाणा गुणश्रवणपालिरिति स्मरेण। तस्यामनङ्गजयजंगमदेवतायामस्त्राणि निर्जितजगन्ति किमर्पितानि॥ ३३॥ बन्धूकबन्धुरधरः सितकेतकाभं चक्षुर्मधूककलिकामधुरः कपोलः। दन्तावली विजितदाडिमबीजराजिरास्यं पुनर्विकचपङ्कजबद्वदास्यम्॥ ३४॥ येनोत्पलानि च शशी च मृणालिकाश्च रम्भालताश्च कमलानि च निर्मितानि। नूनं स एव मृगशावदृशोऽपि वेधाः सृष्टिक्रमो यदयमेकतया चकास्ति॥ ३५॥ सा रामणीयकविधेरधिदेवता वा सौन्दर्यसारसमुदायनिकेतनं वा। तस्याः सखे

नियतमिन्दुसुधामृणालज्योत्स्नादि कारणमभून्मदनश्च वेधाः ॥ ३६ ॥ विनैवाम्भोवाहं वहलरुचिदीप्ताम्बरवलात्तडिल्लेखा हेमद्युतिविततिरम्या विलसति । विनैव स्वर्गङ्गां नभसि रभसव्यग्रशफरीपरीवर्तैः सार्धं स्फुरति विकचेन्दीवरवनम् ॥ ३७ ॥ तमःस्तोमः पूर्वं तदनु सकलः शीतकिरणस्ततः कोकद्वन्द्वं तदनु च न किंचित्पुनरभूत् । अधस्तस्याव-र्तस्तदनु कदलीकाण्डयुगलं ततो वाचो पद्मौ शिवशिव विधेः शिल्परचना ॥ ३८ ॥ पदाभ्यामुन्निद्रामधरयति शोणाम्बुजरुचि कराभ्यामादत्ते नवकिसलयानामरुणताम् । प्रवा-लस्य च्छायां दशनवसनाग्रेण पिवति स्मितज्योत्स्नापूरैरुपहसति कान्ति हिमरुचेः ॥३९॥ वहत्यस्या दृष्टिर्विकचनवनीलोत्पलतुलामखण्डस्याभिख्यां वदनमिदमिन्दोः कलयति । कुचौ किंचिन्मीलत्कमलतुलनां कन्दलयतस्तमःशोभां चित्रां चिकुरनिकुरं बंहिकुरुते ॥ ४० ॥ दायादत्वं मनसिजधनुर्भ्रूविलासस्य धत्ते योगक्षेमौ वहति नयनद्वन्द्वमिन्दीवराणाम् । तद्गात्राणां पुनरिह जगज्जैत्रलावण्यभाजामाभात्यग्रे मलवदखिल मूलवर्णं सुवर्णम् ॥ ४१ ॥ मुखं यदि किमिन्दुना यदि चलाश्चले लोचने किमुत्पलकदम्बकैर्यदि तरङ्गभङ्गी भ्रुवौ । किमात्मभवधन्वना यदि सुसंयताः कुन्तलाः किमम्बुरुहडम्बरैर्यदि तनूरियं किं श्रिया॥४२॥ इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः सुधाधाराधारश्चिरपरिणतं बिम्बमधरः । इमे नेत्रे रात्रिंदिवमधिकशोभे कुवलये तनुर्लावण्यानां जलधिरवगाहे सुखतरः ॥ ४३ ॥ लीलाब्जा-नां नयनयुगलद्वाविमादत्तपत्रः कुम्भावैभौ कुचपरिकरः पूर्वपक्षी चकार । भ्रूविश्रान्तिर्मद-नधनुषो विभ्रमानन्ववादीद्वक्त्रज्योत्स्ना शशधररुचं दूषयामास यस्याः ॥ ४४ ॥ तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत्स्मितं का सुधा तच्चक्षुर्यदि हारितं कुवलयैस्ताश्चेद्गिरो धिङ्मधु । धिक्कन्दर्पधनुर्भ्रुवौ यदि च ते किंवा वहु ब्रूमहे यत्सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः ॥ ४५ ॥ सौरभ्यं मृगलाञ्छने यदि भवेदिन्दीवरे वक्रता माधुर्यं यदि विद्रुमे तरलता कंदर्पचापे यदि । रम्भाया यदि विप्रतीपगमनं प्राप्तोपमानं तदा तद्वक्त्र तदुदीक्षणं तदधर-स्तद्भ्रूस्तदूरूयुगम् ॥ ४६ ॥ वेणीविल्लणमङ्गणं किमु वलन्नेणीदृशो मध्यमं सव्यानं किमिदं विद्युत्तिविषमाद्वासः स्तनाच्छ्रंसते । नृत्यन्तीव किमन्तिके वलितयोः स्निग्धा दृशोः कान्तयः साकूतस्मितगर्भितं किमु मुखं वक्तुं सखी वाञ्छति ॥ ४७ ॥ बाहू द्वौ च मृणालमास्यक-मलं लावण्यलीलाजलं श्रोणीतीर्थशिला च नेत्रशफरीधम्मिल्लशैवालकम् । कान्तायाः स्तन-चक्रवाकयुगल कदर्पबाणानलैर्दग्धानामवगाहनाय विधिना रम्यं सरो निर्मितम् ॥ ४८ ॥ जिघ्रत्याननमिन्दुकान्तिरधरं विम्बप्रभा चुम्बति स्प्रष्टुं वाञ्छति चारुपद्ममुकुलच्छायाविशेषः स्तनौ । लक्ष्मीः कोकनदस्य खेलति करावालम्ब्य किं चादरादेतस्याः सुदृशः करोति पदयोः सेवां प्रवालद्युतिः ॥ ४९ ॥ कर्णारुतुदमेव कोकिलरुतं तस्याः श्रुते भाषिते चन्द्रे लोकरुचिस्तदाननरुचेः प्रागेव संदर्शनात् । चक्षुर्मीलनमेव तन्नयनयोरग्रे मृगीणां वरं हैमी

वल्ल्यपि तावदेव ललिता यावन्न सा लक्ष्यते ॥ ५० ॥ चक्षुर्मेचकमम्बुजं विजयते वक्रस्य मित्रः शशी भ्रूसूत्रस्य सनाभिमन्मथधनुर्लावण्यपण्यं वपुः। लेखा कापि रदच्छदे च सुतनोर्गात्रे च तत्कामिनीमेनां वर्णयिता स्मरो यदि भवेद्वैदग्ध्यमभ्यस्यति ॥ ५१ ॥ स्निग्धस्मेरविलोलमुग्धमधुरा यन्नेत्रयोर्विभ्रमा यद्वाचामृष्टविलासपत्त्रलतिका धर्मोद्गमाद्गण्डयोः। यच्च प्रौढकदम्बकुड्मलसखी काप्यङ्गके विक्रिया तत्तस्यां किमपि स्फुटं रतिपतेर्दोर्दण्डविस्फूर्जितम् ॥ ५२ ॥ स्निग्धेन्द्रोपलसुन्दरः कचभरो वक्रं सगोत्रं विधोर्वक्षोजौ मणिकुम्भडम्बरमुपौ मध्योऽस्ति वा नास्ति वा। श्रोणिमण्डलमूरुदूर्वहमहो शोणाब्जतुल्ये पदे मन्ये मञ्जुगिरो मरालमहिलाध्येयो गतेर्विभ्रमः ॥ ५३ ॥ नेत्रोपान्तवतंसिते श्रुतिपुटे नीलोत्पलं निष्फलं हासश्रीपरिकर्मिते स्तनतटे हारोऽन्यहारः कथम्। पिण्डालक्तकपातनं चरणयोः पीडाफलं ताम्रयोर्वामाक्ष्या वपुषि स्वभावसुरभौ व्यर्थानुलेपव्यथा ॥ ५४ ॥ एतस्याः स्तनपद्मकोरकयुगं यस्याननेन्दोः सितज्योत्स्नाभिर्न भजत्यतो मृगदृशः शङ्के प्रकाशं पुनः। तस्मिल्लोचनपङ्कजं विकसितं भ्रूभङ्गसंसेवितं स्वान्ते संशयमातनोति सुतरामेतन्ममैवासकृत् ॥ ५५ ॥ पानायाधरतोऽमृतं वसतयेऽप्यस्याः स्तनक्ष्माधरोऽधस्तात्सज्जघनान्तकन्दरवरः सख्याय चक्षुर्मृगः। जप्यो मन्त्रवरो मनोहरकथा ध्यानाय वक्राम्बुजं चेत्थं देहतपःस्थले सति कथं सन्तो वनान्तं गताः ॥ ५६ ॥ कर्णोत्सङ्गविसर्पिणी नयनयोः कान्तिर्वसन्तोत्पलं लाक्षासंभ्रमनिर्व्यपेक्षमधुरं लावण्यमेवाञ्चति। हारोऽस्याः स्मितचन्द्रिकैव कुचयोरङ्गप्रभाकञ्चुकी तन्व्याः केवलमङ्गहारमधुना मन्ये परं भूषणम् ॥ ५७ ॥ अस्याश्चेदलकावली कृतमलिश्रेणीभिरेणीदृशः सौन्दर्यं यदि चक्षुषोः सरलयोः किं मन्मथस्यायुधैः। का प्रीतिः कनकारविन्दमुकुले पीनौ स्तनौ चेदतो मन्ये काचिदियं मनोभवकृता माया जगन्मोहिनी ॥ ५८ ॥ ऊर्ध्वं नीरदवृन्दमैन्दवमिदं बिम्बं तयो निर्मितं व्योम्नः पल्वलचित्रितस्य निहितौ शैलावुपर्युन्नतौ। किं चाधः पुलिनोच्चयस्य कदलीकाण्डाववारोपितौ तन्मन्ये चतुरस्य पुष्पधनुषः सर्गोऽयमन्यादृशः॥ ५९ ॥ भृङ्गालीमुदरे क्षिपन्ति शतशः पद्मानि शस्त्रीमिव प्रत्यागच्छति लङ्घनार्थमसकृद्व्योमाङ्गणं चन्द्रमाः। वक्रेणापहृते कुरङ्गसुदृशस्त्रैलोक्यरूपोच्चये प्रत्यावर्तनवाञ्छयेव कति न क्लेशं समातन्वते ॥ ६० ॥ वक्रं निर्मलमुन्नता कुचतटी मध्यप्रदेशः कृशः श्रोणीमण्डलमङ्गनाकुलगुरोर्देवस्य सिंहासनम्। कृत्वा चारुदृशश्चतुष्टयमिदं तुष्टाव मन्ये विधिर्हर्षाद्गद्गदगद्यपद्यरचनागर्भैश्चतुर्भिर्मुखैः ॥ ६१ ॥ मध्यं विष्णुपदं कुचौ शिवपदं वक्रं विधातुः पदं धम्मिल्लः सुमनःपदं प्रविलसत्काञ्ची नितम्बस्थली। वाणी चेन्मधुराधरोऽरुणधरः श्रीरङ्गभूमिर्वपुस्तस्याः किं कथयामि पुण्यचरितं मान्या सदा निर्जरैः ॥ ६२ ॥ यत्तीर्थाम्बुमुखाम्बुजासवरसो नेत्रे नवेन्दीवरे दन्तश्रेणिरखण्डिताक्षतचयो दूर्वा च रोमावली। उत्तुङ्गं च कुचद्वयं फलयुगं पात्रं कराम्भोरुहं तन्मन्ये मदनार्चनाहितमतिः स्वा-

ङ्गोपहारैरियम् ॥६३॥ दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव । मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली छन्दो नर्तयितुर्यथैव मनसः सृष्टं तथास्या वपुः ॥ ६४ ॥ नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः । कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्पर्धिनी स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटाः ॥ ६५ ॥ दृष्टिः कापि सुरा सुधा स्मितमिदं वक्त्रं कलाना निधिर्वक्षः कुम्भि अपौ दृशौ विजयते धन्वन्तरिः सत्कृपा । कान्तिः श्रीस्त्रिवलीतरंगलहरीनाभीगता वर्ततामेतस्यामचिरेण भाविकलने लावण्यवारांनिधौ ॥ ६६ ॥

---

## नायकदर्शनम् ।

न जाने संमुखायाते प्रियाणि वदति प्रिये । सर्वाण्यङ्गानि किं यान्ति नेत्रतामुत कर्णताम् ॥ १ ॥ यां यां प्रियः प्रैक्षत कातराक्षीं सा सा ह्रिया नम्रमुखी बभूव । निःशङ्कमन्याः सममाहितेर्ष्यास्तत्रान्तरे जघ्नुरमुं कटाक्षैः ॥ २ ॥ काचिन्निवारितबहिर्गमना जनन्या द्रष्टुं प्रियं भवनजालकमाससाद । तस्या विलोचनमदृश्यत दाशदत्तं मन्त्रोपरुद्धशफलोपमितं क्षणेन ॥ ३ ॥ कृच्छ्रेण कापि गुरुणैव जने निरोधमुल्लङ्घ्य नायकसमीपभुवं प्रतस्थे । हा हन्त शीघ्रगमनप्रतिरोधहेतुस्तस्याः पुनः स्तनभरोऽपि गुरुर्बभूव ॥ ४ ॥

---

## नायिकादर्शनम् ।

प्रियादर्शनमेवास्तु किमन्यैर्दर्शनान्तरैः । प्राप्यते येन निर्वाणं सरागेणापि चेतसा ॥१॥ क्षीरसागरकल्लोललोललोचनया तया । असारोऽपि हि संसारो सारवानिव लक्ष्यते ॥ २ ॥ सेयं सीधुमयी वा सुधामयी वा हलाहलमयी वा । दृग्भ्यां निपीतमात्रा मदयति मोदयति मूर्च्छयति च ॥ ३ ॥ सेय-ममाङ्गेषु सुधारसच्छटा सुपूरकर्पूरशलाकिका दृशो. । मनोरथश्रीर्मनसः शरीरिणी प्राणेश्वरी लोचनगोचरं गता ॥ ४ ॥ मदनमपि गुणैर्विशेषयन्ती रतिरिव मूर्तिमती विभाति येयम् । मम हृदयमनङ्गवह्नितप्तं भृशमिव चन्दनशीतलं करोति ॥५॥ पुरः स्थित्वा किंचिद्वलितमुखमालोकय सखे सखेदा. स्थास्यन्ति ध्रुवमिदमदिष्टास्तव दृशः । इतश्चञ्चत्काञ्चीरणितमुखरात्सौधशिखरादराकायां कोऽयं कवलयति चान्द्रेण महसा ॥ ६ ॥ अये केयं लीलाधवलगृहवातायनतले तुलाकोटिक्वाणैः कुसुमविशिखं जागरयति । अहो नेत्रद्वन्द्वं विकसति विलङ्घ्य श्रुतिमहो कथं न त्रैलोक्यं जयति मदनः स्वैरवदनः ॥ ७ ॥ तडिल्लेखा नेयं विलसति परं सौधशिखरे वसन्त्याः कस्याश्चित्कनकरुचिरा गात्रलतिका ।

अपीदं नोन्मज्जत्कुवलयवनं मीनतरलं परं तस्या एव स्फुरति नयनालोकललितम् ॥ ८ ॥ अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं रतिरपि रतिः कामः कामो मधूनि मधून्यपि । इति न भजते वस्तु प्रायः परस्परसंकरं तदियमबला धत्ते लक्ष्मीं कुतः सकलात्मिकाम् ॥ ९ ॥ केयं श्यामोपलविरचितोल्लेखहेमैकरेखालग्नैरङ्गैः कनककदलीकन्दलीगर्भगौरैः । हारिद्राम्बुद्रवसहचरं कान्तिपूरं वहद्भिः कामक्रीडाभवनवलभीदीपिकेवाविरस्ति ॥ १० ॥ अर्कच्छायं तिरयति सुधालिप्तविद्युन्मतल्ली चक्रप्रख्यं महति सुषुमामण्डले दूरमग्रम् । रक्तादर्शप्रतिफलमिव श्रीमदङ्गं वहन्ती दृष्टा काचित्तरलनयना देवतेव स्मरस्य॥११॥ नेयं विद्युद्भुवमधिगता काञ्चनी नापि वल्ली मन्दं मन्दं प्रचलति यतो नापि वा पन्नगस्य । चूडारत्नस्फुरदुरुशिखा क्वापि धत्ते सरोजं का वा तर्हि प्रकृतिसुभगा तत्सखे न प्रतीमः ॥ १२ ॥ वक्रोपान्तं नयनयुगलं सर्वतो निःक्षिपन्ती श्रोणीभाराच्छिथिलशिथिलन्यस्तपादारविन्दा । आरादालीकरकिसलये दत्तहस्तावलम्बा काचित्कान्त्या विकसितमहीचक्रमायाति तन्वी ॥ १३ ॥ इयं भुजगिनी श्रितालसदनेकपुष्पान्विता द्विरेफततिसेविता प्रमदखञ्जनालंकृता । फलद्वयभरानता विलसिताननैः पल्लवैर्विलोचनपथं गता भवति कापि हैमी लता ॥ १४ ॥ पातालाद्भुवनावलोकनपरा किं नागकन्योत्थिता मिथ्या तत्खलु दृष्टमेव हि मया तस्मिन्कुतोऽस्तीदृशी । मूर्ता स्यादिह कौमुदी न घटते तस्या दिवा दर्शनं केयं हस्ततलस्थितेन कमलेनालोक्यते श्रीरिव ॥ १५ ॥ अच्छिन्नामृतबिन्दुवृष्टिसदृशीं प्रीतिं ददत्या दृशां याताया विगलत्पयोधरपराद्दृष्टव्यतां कामपि । अस्याश्चन्द्रमसस्तनोरिव करस्पर्शास्पदत्वं गता नैते यन्मुकुलीभवन्ति सहसा पद्मास्तदेवाद्भुतम् ॥ १६ ॥ श्रोणीभारभरालसा दरगलन्माल्यापवृत्तिच्छलाल्लीलोत्क्षिप्तभुजोपदर्शितकुचोन्मीलन्नखाङ्कावलिः। नीलेन्दीवरदामदीर्घतरया दृष्ट्या धयन्ती मनो दोरान्दोलनलोलकङ्कणझणत्कारोत्तरं सर्पति ॥ १७ ॥ लग्नं पादतले नखेषु विलुठत्संसक्तमूर्वोर्युगे विश्रान्तं जघनस्थले निपतितं नाभीसरोमण्डले । शून्यं मध्यमवेक्ष्य रोमलतिकामालम्बमानं क्रमादारूढं स्तनयोः प्लुतं नयनयोर्लीनं मनः कैशिके ॥ १८ ॥ अस्या धामसरोवरे भुजविषे वक्त्रारविन्दे भ्रमन्नेत्रभ्रूभ्रमरे सुयौवनजले कस्तूरिकापङ्किले । वक्षोजप्रतिकुम्भिकुम्भदलनक्रोधादुपेत्य द्रुतं मग्नश्चित्तमतंगजः कथमसावुत्थाय निर्यास्यति ॥ १९ ॥ स्वैरं सस्मितमीक्षते क्षणमलं व्याजृम्भते वेपते रोमाञ्चं तनुते मुहुः स्तनतटे व्यालम्बते नाम्बरम् । आलिङ्गत्यपरां तनोति चिकुरं प्रत्युत्तरं याचते केयं कामकला विलासवसतिर्लोलेक्षणा भाविनी ॥ २० ॥ खेलत्खञ्जननेत्रया परिलसत्स्वर्णारविन्दास्यया पीनोत्तुङ्गनिरन्तरस्तनभरव्यालोलसन्मध्यया । स्फीतस्फीतनितम्बया क्षणमपि व्यालोकितश्चानया किं न स्याद्वशिनां वरः स्मरहरः स्मारैः शरैर्जर्जरः ॥ २१ ॥ सायं चन्द्रकलाभृतोद्रयगिरिस्पर्धां दधानः स्तनस्पर्शोत्तुङ्गतरो नखाङ्करुचिरः शोणाम्बराभ्यन्तरे । अस्याः

कं न विलोकनोत्कमकरोत्तीक्ष्णः कटाक्षः क्षणं मृङ्गाक्रष्टगरिष्ठकेतकदलभ्रान्ति वहन्नप्ययम् ॥ २२ ॥ उत्तुङ्गस्तनशैलदुस्तरमुरो निम्नातिनाभिस्थली भीमं देहवनं स्फुरद्भुजलतं लोमालिजालाकुलम् । व्याधः पञ्चशरः किरत्यतितरांस्तीक्ष्णान्कटाक्षाशुगांस्तन्मे ब्रूहि मनःकुरङ्ग शरणं कं सांप्रतं यास्यसि ॥ २३ ॥

## वियोगिनोऽवस्थावर्णनम् ।

प्रियाविरहितस्यास्य हृदि चिन्ता समागता । इति मत्वा गता निद्रा के कृतघ्नमुपासते ॥ १ ॥ गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोऽथवा । भ्रमति भुवने कंदर्पाज्ञा विकारि च यौवनं ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥ २ ॥ धत्ते चक्षुर्मुकुलिनि रणत्कोकिले बालचूते मार्गे गात्रं क्षिपति बकुलामोदगर्भस्य वायोः । दाहप्रेम्णा सरसबिसिनीपत्रमात्रान्तरायस्ताम्यन्मूर्तिः श्रयति बहुशो मृत्यवे चन्द्रपादान् ॥ ३ ॥ रम्यं द्वेष्टि यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते शय्योपान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः । दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो यदा गोत्रेषु स्खलितस्तदा भवति च व्रीडावनम्रश्चिरम् ॥ ४ ॥ प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं बिभ्रत्काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः । चिन्ताजागरणप्रताम्रनयनस्तेजोगुणैरात्मनः संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ ५ ॥ चन्द्रश्चण्डकरायते मृदुगतिर्वातोऽपि वज्रायते माल्यं सूचिकुलायते मलयजालेपः स्फुलिङ्गायते । रात्रिः कल्पशतायते विधिवशात्प्राणोऽपि भारायते हा हन्त प्रमदावियोगसमयः संहारकालायते ॥ ६ ॥

## वियोगिन्या अवस्थावर्णनम् ।

दह्यमानेऽपि हृदये मृगाक्ष्या मन्मथाग्निना । स्नेहस्तथैव यत्तस्थौ तदाश्चर्यमिवाभवत् ॥ १ ॥ अस्तमितविषयसङ्गा मुकुलितनयनोत्पला मुहुः श्वसिता । ध्यायति किमप्यलक्ष्यं बाला योगाभियुक्तेव ॥ २ ॥ लिखति न गणयति रेखा निर्झरबाष्पाम्बुधौतगण्डतटा । अवधिदिवसावसानं मा भूदिति शङ्किता बाला ॥ ३ ॥ आस्वाद्य निर्विशेषं विरहिवधूनां मृदूनि मांसानि । करकामिषेण मन्ये निष्ठीवति नीरदोऽस्थीनि ॥ ४ ॥ अपसारय घनसारं कुरु हारं दूर एव किं कमलैः । अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ ५ ॥ पातयति हृदयदेशे प्रियजनगर्भे पुनः पुनर्मुग्धा । वर्णितमदनातङ्का बाष्पवती भावमन्थरां दृष्टिम् ॥ ६ ॥ विश्रम्य विश्रम्य वनद्रुमाणां छायासु तन्वी विचचार काचित् । तनूत्तरीयेण करोद्धृतेन निवारयन्ती शशिनो मयूखान् ॥ ७ ॥ अपि मरणमुपैति सा मृगाक्षी विलसति कैव कथा रसान्तरस्य । अपि कथमधुना दधातु शान्तिं विषमशरज्वरतीव्रदेहदाहः

॥ ८ ॥ सा तोरणान्तिकमुपेत्य दिशोऽवलोक्य निःश्वस्य दीर्घमुपधाय करं कपोले । मत्वा च तं पुरत एव ससंभ्रमत्वाज्ज्ञात्वा समोहलिखिते च न किं किमासीत् ॥ ९ ॥ मदनदहनशुष्यत्क्लान्तकान्ताकुचान्तर्घनमलयजपङ्के गाढबद्धाखिलाङ्घ्रिः । उपरि विततपक्षो लक्ष्यतेऽलिर्निमग्नः शर इव कुसुमेषोरेष पुङ्खावशेषः ॥ १० ॥ नवकिसलयतल्पं कल्पितं तापशान्त्यै करसरसिजसङ्गात्केवलं म्लापयन्त्याः । कुसुमशरकृशानुप्रापिताङ्गारतायाः शिवशिव परितापं को वदेत्कोमलाङ्ग्याः ॥ ११ ॥ दरदलितहरिद्राग्रन्थिगौरे शरीरे स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः । वलति सति हि यस्मिन्सार्धमावर्त्य हेम्ना रजतमिव मृगाक्ष्याः कल्पितान्यङ्गकानि ॥ १२ ॥ किसलयमिव मुग्धं बन्धनाद्विप्रलूनं हृदयकुसुमशोषी दारुणो दीर्घशोकः । ग्लपयति परिपाण्डु क्षाममस्याः शरीरं शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ १३ ॥ परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु । कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदकान्तः कपोलः ॥ १४ ॥ परिम्लानं पीनस्तनजघनसङ्गादुभयतस्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् । इदं व्यस्तं न्यस्तं श्लथभुजलताक्षेपचलनैः कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥ १५ ॥ प्रयातेऽस्तं भानौ श्रितशकुनिनीडेषु तरुषु स्फुरत्संध्यारागौ शशिनि शनकैरुल्लसति च । प्रियप्रत्याख्यानद्विगुणविरहोत्कण्ठितदृशा तदारब्धं तन्व्या मरणमपि यत्रोत्सवपदम् ॥१६॥ लतामूले लीनो हरिणपरिहीनो हिमकरः स्खलन्मुक्ताकारा गलति जलधारा कुवलयात् । धुनीते बन्धूकं तिलकुसुमजन्मा हि पवनो गृहद्वारे पुण्यं परिणमति कस्यापि कृतिनः ॥१७॥ मरालश्रेणीभिर्नियतमुपनीतं सफलतां गतिस्पर्धा वैरं मृदुकलरवैरम्बुजदृशः । यदेताञ्शृण्वन्त्याः प्रियविरहवत्याः कृशतनोरगादस्यास्तम्भादहह गतिसंभावनमपि ॥ १८ ॥ अगारेऽस्मिन्कान्ते गिरिशमनिशानाथशकलं भुजंगानुत्तुङ्गान्सकलमपि वातायनपथे । निकुञ्जेषु श्येनानधिगृहशिरो राहुवलयं लिखन्त्या नीयन्ते शिवशिव तया हन्त दिवसाः ॥ १९ ॥ स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं प्रियायाः सावाधं तदपि कमनीयं वपुरिदम् । समस्तापः कामं मनसिजनिदाघप्रसरयोर्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ॥२०॥ कपोले पाण्डुत्वं किमपि जलधारां नयनयोस्तनौ कार्श्यं दैन्यं वचसि हृदि दावानलशिखाम् । अवज्ञां प्राणेषु प्रकृतिषु विपर्यासमधुना किमन्यद्वैराग्यं सकलविषयेष्वाकलयते ॥ २१ ॥ निकामं क्षामाङ्गी सरसकदलीगर्भसुभगा कलाशेषा मूर्तिः शशिन इव नेत्रोत्सवकरी । अवस्थामापन्ना मदनदहनोद्दाहविधुरामियं नः कल्याणी रमयति मनः कम्पयति च ॥ २२ ॥ वीणामङ्के कथमपि सखीप्रार्थनाभिर्विधाय स्वैरं रत्यां सरसिजदृशा गातुमारब्धमेव । तन्त्रीबुद्ध्या किमपि विरहक्षीणदीनाङ्गवल्लीमेनामेव स्पृशति बहुशो मूर्छना चित्रमेतत् ॥ २३ ॥ व्यजनमरुतः श्वासश्रेणीमिमामुपचिन्वते मलयजरसो धाराबाष्पं प्रपञ्चयितुं प्रभुः । कुसुमशयनं

कामास्त्राणां करोति सहायतां द्विगुणगरिमा कामोन्माथः कथं नु विरंस्यति ॥ २४ ॥ स्विन्नौ गण्डौ स्फुरितमधरं स्पन्दितं चूचुकाग्रं सन्नौ बाहू मसृणमुकुले लोचने भ्रूश्चलैव । अङ्गादङ्गादजनि पुलकश्रेणिरूरू सकम्पौ किं च श्वासास्तरलितदुकूलाञ्चलाश्चञ्चलाक्ष्याः ॥ २५ ॥ विषयविधुरा दृष्टिः श्वासानिला ग्लपिताधरास्तनुरपि भृशं म्लाना लूनेव पल्लवमञ्जरी । अपि च लवलीपाकोद्भेदाभिरामवदावदः स्फुरति कुचयोर्मूले गण्डे च कश्चन पाण्डिमा ॥ २६ ॥ पीनोत्तुङ्गस्तनकलशयोस्तारहारं न धत्ते हस्तेनापि स्पृशति सहसा नैव कर्पूरवीटीम् । मञ्चं नापि श्रयति शयितुं हंसतूलास्तराढ्यां तादृक्तन्वी गुरुजनभयाद्गोप्तुकामा स्वतापम् ॥ २७ ॥ गण्डे पाण्डौ कलयति पुनश्चान्दनान्पत्रभङ्गान्निद्रालाभे स्वयमरुणदृक्पृच्छति त्वान्निदानम् । प्रत्यासन्ने मधुरलपिते गृह्यके कीरशावे कण्ठे धत्ते कमलनयना चारु वैदूर्यहारम् ॥ २८ ॥ नीवीबन्धोच्छ्वसनमधरस्पन्दनं दोर्विषादः स्वेदश्चक्षुर्मसृणमधुराकेकरास्निग्धमुग्धम् । गात्रस्तम्भः स्तनमुकुलयोरुत्प्रबन्धः प्रकम्पो गण्डाभोगे पुलकपटलं मूर्छना चेतना च ॥ २९ ॥ संध्यां कोषं तत उपगतां हन्त रात्रिं कृपाणीं चन्द्रं चक्रं विरहविधुरा तारकापङ्क्तिमुग्राम् । तूणीरान्तर्गतशरततीः प्रज्वलत्पुङ्खभागं संनद्धास्त्रं कलयति पुनर्मन्मथं राक्षसेन्द्रम् ॥ ३० ॥ लीलावल्लीभवनकुहरे पत्ररन्ध्राच्चकोरीचञ्चुत्रस्तं शशिकरकणं वीक्ष्य मूर्च्छामुपैति । लीलारामात्पिकमुखरितात्का कथा सा बिभेति स्वालपेभ्यश्चकितनयना यत्कुहूकोमलेभ्यः ॥ ३१ ॥ तन्वङ्ग्या गुरुसंनिधौ नयनज यद्वारि संस्तम्भितं तेनान्तर्गलितेन मन्मथशिखी सिक्तो वियोगोद्भवः । मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता श्वासायाससमागतालिसरणिव्याजेन धूमावली ॥ ३२ ॥ मुग्धा स्वप्नसमागते प्रियतमे तत्पाणिसंस्पर्शनं रोमाञ्चाञ्चितया शरीरलतया संभाव्य कोपात्किल । मा मा वल्लभ संस्पृशेति सहसा शून्यं वदन्ती मुहुः सख्या नो हसिता सचिन्तमसकृत्संशोचिता प्रत्युत ॥३३॥ शीघ्रं भूमिगृहे गृहाण वसतिं प्राणैः किमु क्रीडसि प्राप्तां पश्यसि किं न दैवहतिकां ज्योत्स्नां गवाक्षोदरे । इत्थं मन्मथतीव्रसंज्वरजुषो गेहेषु वामभ्रुवामुद्गच्छन्ति कुरङ्गलाञ्छनभयाद्दीनाः सखीनां गिरः ॥ ३४ ॥ शय्या पुष्पमयी परागमयतामङ्गार्पणादश्नुते ताम्यन्त्यन्तिकतालवृन्तनलिनीपत्राणि दाहोष्मणा । न्यस्तं च स्तनमण्डले मलयजं शीर्णान्तरे दृश्यते क्वाथादाशु भवन्ति फेनिलमुखा भूषा मृणालाङ्कुराः ॥ ३५ ॥ आदातुं सकृदीक्षितेऽपि कुसुमे हस्ताग्रमालोहितं लाक्षारञ्जनवार्तयापि सहसा रक्तं तलं पादयोः । अङ्गानामनुलेपनस्मरणमप्यत्यन्तखेदावहं हन्ताधीरदृशः किमन्यदलकामोदोऽपि भारायते ॥ ३६ ॥ अङ्गासङ्गिमृणालकाण्डमयते भृङ्गावलीनां रुच नासामौक्तिकमिन्द्रनीलसरणिं श्वासानिलाद्धाहते । क्षिप्ता सा हिमवालुकापि कुचयोर्धत्ते क्षणं दीपतां तप्तायःपतिताम्बुवत्करतले धाराम्बु संलीयते ॥ ३७ ॥ केशैः कोमलमालिकामपि चिरं या बिभ्रती खिद्यते या गात्रेषु

घनं विलेपितमपि न्यस्तं न वोढुं क्षमा । दीपस्यापि शिखां न चापि भवने स्वप्नेऽपि या वीक्षितं तापं सा विरहानलस्य महतः सोढुं कथं शिक्षति ॥ ३८ ॥ उद्धूयेत तनूलतेति बिसिनीपत्रेण नो वीज्यते स्फोटः स्यादिति नाङ्कं मलयजक्षोदाम्भसा सिच्यते । स्यादस्यातिभरात्पराभव इति त्रासान्न वा पल्लवारोपो वक्षसि तत्कथं वरतनोराधिः समाधीयताम् ॥ ३९ ॥ निःश्वासानलविद्धदन्तवसना नेत्राम्बुसिक्तस्तनी हस्तन्यस्तकपोलदीनवदना हारैकभूषावती । बिभ्राणांसपदेन तुङ्गजघना विस्रंसिनीं वेणिकामास्ते स्थण्डिल एव पाण्डुमधुरक्षामालसैरङ्गकैः ॥ ४० ॥ क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं मध्यः क्लान्ततरः प्रकामविनतावंसौ छविः पाण्डुरा । शोच्या च प्रियदर्शना च मदनग्लानियमालक्ष्यते पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥ ४१ ॥ कर्पूराम्बुनिषेकभाजिसरसैरम्भोजिनीनां दलैरास्तीर्णेऽपि विवर्तमानवपुषः स्रस्तस्रजि संस्तरे । मन्दोन्मेषदृशः किमन्यदभवत्सा काप्यवस्था तदा यस्याश्चन्दनचन्द्रचम्पकदलश्रेण्यादि वह्नीयते ॥ ४२ ॥ आलीचालितपद्मिनीदलचलत्सर्वाङ्गमङ्गीकृता स्वाङ्गालिङ्गनमर्मरीकृतनवाम्भोजालिशय्या चिरात् । चैतन्यं कथमप्युपेत्य शनकैरुन्मील्य नेत्राञ्चलं वाला केवलमेव शून्यहृदया शून्यं जगत्पश्यति ॥ ४३ ॥ न क्रीडासु कुतूहलं वितनुते नालंकृतौ सादरा नाहारेऽपि च सस्पृहा न गणयत्यालापलोलां सखीम् । वाला केवलमङ्कैरनुकलक्षामैर्विविक्तस्थले ध्यायन्ती किल किंचिदन्तरधुना निस्पन्दमास्ते सदा ॥ ४४ ॥ केशैः केसरमालिकामपि चिरं या विभ्रती खिद्यते या गात्रेषु घनं विलेपनमपि न्यस्तं न सोढुं क्षमा । दीपस्यापि शिखां न वा स्वभवने शक्नोति या वीक्षितुं तापं सा विरहानलस्य महतः सोढुं कथ शक्ष्यति ॥ ४५ ॥ सोन्मेषो न सखीजनः परिजनः प्रागल्भ्यभूमिर्न वा वात्सल्यादपि भावितस्फुटवयोऽवस्थाविशेषो गुरुः । आयाता नवमल्लिकापरिमलक्रूराः शरद्वासराः कस्याख्यातु नितम्बिनी पितृगृहावस्थानदुःस्थं जनुः ॥ ४६ ॥

## वियोगिनो विप्रलापाः ।

यदि प्रियावियोगेऽपि रुद्यते दीनदीनकम् । तदिदं दग्धमरणमुपयोगं क्व यास्यति ॥१॥ दिव्यचक्षुरहं जातः सरागेणापि चक्षुषा । इहस्थो येन पश्यामि देशान्तरगतां प्रियाम् ॥२॥ नपुंसकमिति ज्ञात्वा तां प्रति प्रहितं मनः । तत्तु तत्रैव रमते हताः पाणिनिना वयम् ॥३॥ न मे दुःख प्रिया दूरे न मे दुःखं हृतेति सा । एतदेवानुशोचामि वयोऽस्या ह्यतिवर्तते॥४॥ यदि स्मरामि तन्वङ्गीं जीविताशा कुतो मम । अथ विस्मृत्य जीवामि जीवितव्यसनेन किम् ॥ ५ ॥ मुखं तस्याः स्मितस्मेरं किंचिदञ्चलसंवृतम् । मदालोकनलोलाक्षं स्मृत्वा मन्ये सुधां मुधा ॥ ६ ॥ तद्वियोगसमुत्थेन तच्चिन्ताविपुलार्चिषा । रात्रिंदिव शरीरं मे दह्यते मदना-

ग्निना ॥ ७ ॥ विशालाक्ष्याः कटाक्षेण विकृष्टं रश्मिनेव मे । हृदयं किं करिष्यामि न पुनर्विनिवर्तते ॥ ८ ॥ सति प्रदीपे सत्यग्नौ सत्सु तारारवीन्दुषु । विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ ९ ॥ दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम । मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥ १० ॥ अपूर्वो दृश्यते वह्निः कामिन्याः स्तनमण्डले । दूरतो दहते गात्रं हृदि लग्नस्तु शीतलः ॥ ११ ॥ नूनमयं मे पापः कान्ताविरहो रसायनीभूतः । वर्षसहस्राभ्यधिकान्नयामि कथमन्यथा दिवसान् ॥ १२ ॥ संगमविरहवितर्के वरमिह विरहो न संगमस्तस्याः । सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥ १३ ॥ अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे । यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति ॥ १४॥ अपसरति न चक्षुषो मृगाक्षी रजनिरियं च न याति नैति निद्रा । प्रहरति मदनोऽपि दुःखितानां बत बहुशोऽभिमुखीभवन्त्यपायाः ॥ १५ ॥ पुनरपि मिलनं यदाकदाचित्प्रियतमया कृपया भवेद्विधातुः । हरिरिव करवै हृदि प्रतिष्ठामिह रमणी तनवै तनोरभिन्नाम् ॥ १६ ॥ स्खलदंशुकमव्यवस्थतारं स्मितकान्ति स्नपिताधरप्रवालम् । असमाप्तनकारमात्तशोभं हरिणाङ्कं हरिणीदृशः स्मरामः ॥ १७ ॥ यत्राकृतिस्तत्र गुणा वसन्ति नैतद्धि सम्यक्कविभिः प्रणीतम् । येनातिचार्वङ्ग्यपि मे हृदिस्था दुनोति गात्रं विरहे प्रियासौ ॥ १८ ॥ पञ्चसायकमहेन्द्रजालिना पाणिपद्मसमुदञ्चिता स्वयम् । वर्धनाय मनसः प्रगल्भते पिञ्छिकेव मम चञ्चलेक्षणा ॥ १९ ॥ ग्रसति कोऽपि विमोहविधुंतुदो हृदयचन्द्रमसं मम दारुणः । तदपि हन्त तदन्तरशायिनी लगति चिह्नमृगीव मृगेक्षणा ॥ २० ॥ असुलभा सकलेन्दुमुखी च सा किमपि चेदमनङ्गविचेष्टितम् । अभिमुखीष्विव वाञ्छितसिद्धिषु व्रजति निर्वृतिमेकपदे मनः ॥ २१ ॥ तप्ते महाविरहवह्निशिखावलीभिरापाण्डुरस्तनतटे हृदये प्रियायाः । मन्मार्गवीक्षणनिवेशितदीनदृष्टेर्नूनं छमच्छमितवाष्पकणाः पतन्ति ॥ २२ ॥ कान्तामुखं सुरतकेलिविमर्दखेदसंजातघर्मकणविच्छुरितं रतान्ते । आपाण्डुर विलसदर्धनिमीलिताक्षं संस्मृत्य हे हृदय किं शतधा न यासि ॥ २३ ॥ अद्यापि तत्प्रचलकुण्डलमृष्टगण्डं वक्त्रं स्मरामि विपरीतरताभियोगे । आन्दोलनश्रमजलस्फुटसान्द्रबिन्दुमुक्ताफलप्रकरविच्छुरितं प्रियायाः ॥२४॥ निद्रार्धमीलितदृशोर्मदमन्थराणि नाप्यर्थवन्ति न च नाम निरर्थकानि । अद्यापि मे मृगदृशो मधुराणि तस्या न्यस्ताक्षराणि हृदये किमपि ध्वनन्ति ॥ २५ ॥ अद्यापि तां कनकचम्पकदामगौरीं फुल्लारविन्दनयनां तनुरोमराजिम् । सुप्तोत्थितां मदनविह्वललालसाङ्गीं विद्यां प्रमादगलितामिव चिन्तयामि ॥ २६ ॥ अद्यापि सा मनसि संप्रति वर्तते मे रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या । जीवेति मङ्गलवचः परिहृत्य कोपात्कर्णे कृतं कनकपत्त्रमनालपन्त्या ॥ २७ ॥ आसन्नमार्गमतिलङ्घ्य नतेन मूर्ध्ना पश्चात्प्रसङ्गवलितेन मुखेन यान्त्या । आरोपिताः कतिपये मयि पङ्कजाक्ष्या साकूतहासमनतिप्रकटाः कटाक्षाः ॥ २८ ॥

राजल्ललाटफलका कमनीयकूजत्काञ्चीगुणप्रणयिनी धृतकेशपक्षा । हा किं करोमि मम सा हृदयं प्रविष्टा नाराचयष्टिरिव पुष्पशिलीमुखस्य ॥ २९ ॥ यत्र क्षिपामि दृशमन्यदिदृक्षयाहं तत्राग्रतः स्फुरति केवलमेतदेव । तद्वक्त्रबिम्बमरुणाधरलोभनीयं ते लोचने तदलसालसमीक्षितं च ॥ ३० ॥ मन्दस्मितेन मधुराधरपल्लवेन कुम्भोन्नमत्कुचभरेण कृशोदरेण । विद्युन्निभाङ्गलतया च विचिन्त्यमाना चेतो धुनोति च धिनोति च चञ्चलाक्षी ॥ ३१ ॥ तामिन्दुसुन्दरमुखीं सुचिरं विभाव्य चेतः कथं कथमपि व्यपवर्तते मे । लज्जां विजित्य विनयं विनिवार्य धैर्यमुन्मथ्य मन्थरविवेकमकाण्ड एव ॥ ३२ ॥ यद्विस्मयस्तिमितमस्तमितान्यभावमानन्दमन्दममृतप्लवनादिवाभूत् । तत्संनिधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते ॥ ३३ ॥ पश्यामि तामित इतः पुरतश्च पश्चादन्तर्बहिः परित एव विवर्तमानाम् । उद्बुद्धमुग्धकनकाब्जनिभं वहन्तीमासक्ततिर्यगपवर्तितदृष्टि वक्त्रम् ॥ ३४ ॥ व्रीडायोगान्नतवदनया संनिधाने गुरूणां बद्धोत्कम्पस्तनकलशयोर्मन्युमन्तर्निगृह्य । तिष्ठेत्युक्तं किमिव नतया यातमुत्सृज्य बाष्पं मय्यासन्नश्चकितहरिणीहारिनेत्रत्रिभागः ॥ ३५ ॥ वारंवारं तिरयति दृशोरुद्गमं बाष्पपूरस्तत्संकल्पोपहितजडिमस्तम्भमभ्येति गात्रम् । सद्यः स्विद्यन्नयमविरतोत्कम्पलोलाङ्गुलीकः पाणिर्लेखाविधिषु नितरां वर्तते किं करोमि ॥ ३६ ॥ दलति हृदयं गाढोद्वेगं द्विधा न तु भिद्यते वहति विकलः कायो मोहं न मुञ्चति चेतनाम् । ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ ३७ ॥ हा हा देवि स्फुटति हृदयं स्रंसते देहबन्धः शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि । सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ ३८ ॥ कदा कान्तागारे परिमलमिलत्पुष्पशयने शयानः श्यामायाः कुचयुगमहं वक्षसि वहन् । अये स्निग्धे मुग्धे चपलनयने चन्द्रवदने प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ३९ ॥ तया गाढमुक्तो भ्रुवि धनुषि संधाय निशितः कटाक्षेषुर्नान्यैः सह पठनयोग्यः शरगणैः । पतन्गात्रे गात्रे परमनृतमास्त्रौदिव तदा दवीयानद्यायं दलयति पुनर्न व्रणयति ॥ ४० ॥ तदा मुग्धं वक्त्रं किसलयसखः सोऽधरमणिर्विशाले ते नेत्रे स्तनभरनता सा तनुलता । सलीलं तद्यातं जननयनसंजीवनसुधा प्रिया सा सा सा सेत्यजनि हृदयं तन्मयमहो ॥ ४१ ॥ कटाक्षेणापीपत्क्षणमपि निरीक्षेत यदि सा तदानन्दः सान्द्रः स्फुरति निहताशेषविषयः । सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः परीरम्भारम्भः क इव भविताम्भोरुहदृशः ॥४२॥ पुरस्ताद्गच्छन्ती सह सहचरीभिः प्रियतमा ममालापं श्रुत्वा सचकितपरावृत्तवदना । किमग्रे व्यासङ्गादहमहह यामीति विनयप्रणालीमालीनां यदकृत तदन्तर्व्यथयति ॥ ४३ ॥ समुत्कीर्णे तन्व्या निशितनयनान्ते न मृदिते स्तनद्वन्द्वस्पन्दैः स्मितलवसुधाभिः प्लुतिमति । मदन्तःके-

दारे मदनकृषिकारेण जनिता चिरादाशावल्ली किमिति न फलं हन्त लभते ॥ ४४ ॥ विलीयेन्दुः साक्षादमृतरसवापी यदि भवेत्कलङ्कस्तत्रत्यो यदि च विकचेन्दीवरवनम् । ततः स्नानक्रीडाजनितजडभावैरवयवैः कदाचिन्मुञ्चेयं मदनशिखिपीडाव्यतिकरम् ॥ ४५ ॥ परागैः कार्पूरैस्तुहिनसलिलैश्चान्दनरसैः सुधाभिर्ज्योत्स्नाभिः स्नपितमिव यः प्रागकृत माम् । स एवासौ मारः शिवशिव वियोगे मृगदृशः करालं काकोलं किरति मयि कालानलमपि ॥४६॥न दूतीसंचारो न सरसपरोक्षोक्तिकलना न सांमुख्ये हासः क्वचिदपि न वाचां व्यतिकरः । अहो चित्रं चेतः क्षणपरिचितालोकनवशान्मुहुर्धावंधावं व्रजति सुदृशं नो विरमति ॥ ४७॥ शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति । तया सारङ्गाक्ष्या.त्वमसि न कदाचिद्विरहितं प्रसक्ते निर्वाणे हृदय परितापं वहसि किम्॥४८॥ आः पात्री स्यामकृतकघनप्रेमविस्फारितानां सव्रीडानां सकलकरुणानन्दनादिन्धमानाम् । तेषां तेषां हृदयनिहिताकूतनिष्यन्दिनेत्रव्यापाराणां पुनरपि तथा सुभ्रुवो विभ्रमाणाम् ॥ ४९ ॥ तदङ्गमपि नाम तत्सहजकान्तिपूराप्लुतं सुवर्णकदलीदलोद्दलितगर्भगौरं पुनः । कठोरमदनव्यथापिशुनपाण्डिमाधिष्ठितप्रथीयकुचमण्डलं परिरभेय वीक्षेय वा ॥५०॥ हृदयमिषुभिः कामस्यान्तः सशल्यमिदं सदा कथमुपलभे निद्रां स्वप्ने समागमकारिणीम् । न च सुवदनामालेख्येऽपि प्रियामसमाप्य तां मम नयनयोरुद्बाष्पत्वं सखे न भविष्यति ॥५१॥ कुसुमशयनं न प्रत्यग्रं न चन्द्रमरीचयो न च मलयजं सर्वाङ्गीणं न वा मणियष्टयः । मनसिजरुजं सा वा दिव्या ममालमपोहितुं रहसि लघयेदारब्धा वा तदाश्रयिणी कथा ॥५२॥ इदमशिशिरैरन्तस्तापाद्विवर्णमणीकृतं निशि निशि भुजन्यस्तापाङ्गप्रवर्तिभिरश्रुभिः । अनतिलुलितज्याघाताङ्कं मुहुर्मणिबन्धनात्कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ॥ ५३॥ जाने कोपपराङ्मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया मा मा संस्पृश पाणिनेति रुदती गन्तुं प्रवृत्ता पुरः । नो यावत्परिरभ्य चाटुकशतैराश्वासयामि प्रियां भ्रातस्तावदहं शठेन विधिना निद्रादरिद्रीकृतः ॥ ५४ ॥ याताः किं नु मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते नो कार्या नितरां कृशासि कथयत्येवं सवाष्पे मयि । लज्जामन्युरतारकेन निपतत्पीताश्रुणा चक्षुषा दृष्ट्वा मां हसितेन भाविमरणोत्साहस्त्वया सूचितः ॥ ५५ ॥ श्वासा एव मृगीदृशो न गणिताः के नाम झञ्झानिलास्तीर्णा वाष्पपरंपरैव सरितां वृन्देषु कः संभ्रमः । सोढा कातरदृष्टिरेव कियती वज्राभिघातव्यथा प्रेमैवायमुपेक्षितो यदि तदा प्राणेषु कोऽनुग्रहः ॥ ५६ ॥ सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम् । सा क्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम् ॥ ५७ ॥ प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदयास्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि । यास्वन्तःकरणस्य बाह्यकरणव्यापार-

रोधी क्षणादाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ ५८ ॥ धन्या सा गृहदेहली स्पृशति या तत्पादपद्मप्रभां जाता सा सरसी रसाद्विशति सा यस्यां विहारेच्छया । वन्द्यः कोऽपि स एव यः खलु तया नेत्रेण सभाव्यते धिग्धिग्वेधसमेषु मां यदनयन्नैकं कथंचित्कथम् ॥ ५९ ॥ किं मे सद्गुरुसेवनैः प्रतिदिनं किं व्योमधामार्चनैः किं स्यादध्ययनेन वा सुरपुरप्राप्त्याथवा किं फलम् । एतस्याः कुचकुम्भनिर्भरपरीरम्भप्रभावोद्भवस्वेदाम्भोभिरनङ्गवह्निरधुना निर्वापितो नो यदि ॥६०॥ तन्वी सा यदि गायति श्रुतिकटुर्वीणाध्वनिर्जायते यद्याविष्कुरुते स्मितानि मलिनैवालक्ष्यते चन्द्रिका । आस्ते म्लानमिवोत्पलं नवमपि स्याच्चेत्पुरो नेत्रयोस्तस्याः श्रीरवलोक्यते यदि तडिद्वल्ली विवर्णेव सा ॥६१॥ तानि स्पर्शसुखानि ते च तरलस्निग्धा दृशोर्विभ्रमास्तद्वक्त्राम्बुजसौरभं स च सुधास्यन्दी गिरां वक्रिमा । सा बिम्बाधरमाधुरीति विषयासङ्गेऽपि मन्मानसं तस्यां लग्नसमाधि हन्त विरहव्याधिः कथं वर्तते ॥ ६२ ॥ तस्मिन्पञ्चशरे स्मरे भगवता भर्गेण भस्मीकृते जानाम्यक्षयसायकं कमलभूः कामान्तरं निर्ममे । यस्यामीभिरितस्ततश्च विशिखैरापुङ्खमग्नात्मभिर्जातं मे विदलत्कदम्बमुकुलस्पष्टोपमानं वपुः ॥ ६३ ॥ ज्योत्स्नां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकैर्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम् । चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥ ६४ ॥ किं तिष्ठामि किमु व्रजामि किमहं जागर्मि निद्रामि किं किं जानामि किमु भ्रमामि किमु वा सुख्यामि दुःख्यामि वा । किं नास्म्यस्मि किमित्यनल्पकलिते न क्वापि पक्षे स्थितः प्राप्या निर्वचनीयमेव कमपि क्रूरं विकारं सखे ॥ ६५ ॥ आसीनः स इतः स्थितः प्रचलितः स्वप्नायितो जाग्रतः पश्यन्मीलितलोचनो व्यवहरन्मौनं प्रपन्नोऽथवा । तां प्रेमाकुलवीक्षितां स्मितमुखीं सव्रीडमन्दागमां श्लिष्यन्ती प्रणयार्द्रमुग्धलपितां पश्यामि नक्तं दिवम् ॥ ६६ ॥ नीलेन्दीवरशङ्कया नयनयोर्बन्धूकबुद्ध्याधरे पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयोः । लीयन्ते कबरीषु बान्धवजनव्यामोहजातस्पृहा दुर्वारा मधुपा कियन्ति तरुणि स्थानानि रक्षिष्यसि ॥ ६७ ॥ सा मे यद्यपि सुन्दरी भगवतो मामेव चेतोभुवो न स्वप्ने न च जागरे नयनयोः पन्थानमासादिता । तामाकर्ण्य तथापि तादृशदशावैधुर्यमासेदुषीमानन्दाद्भुतशोककौतुकभयव्रीडाकुलं मे मनः ॥ ६८ ॥ सा संचारचमत्कृतिर्नयनयोः सभ्रूलताविभ्रमस्तद्बिम्बाधरपाटलस्मितयुतस्यास्यस्य सा वैखरी । सेयं संक्रमचातुरी चरणयोः सोऽप्यङ्गहारक्रमो दिष्ट्या तन्मम नेत्रपात्रमखिलं जायेत जीवामि च ॥६९॥ लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च । सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिश्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥७०॥ सा विद्याधरकन्यका किमु भुवं पुण्यैः प्रपन्ना नृणां लावण्यामृतसागराद्विमथिता लक्ष्मीः किमन्योत्थिता । आ ज्ञातं घनसारचन्दनसु-

धाज्योत्स्नामृणालादिभिः प्रारब्धा हृदयं मम भ्रमयितुं पौष्पेषवी शाम्बरी ॥७१॥हृत्वा पद्मवनद्युतिं प्रियतमेवेयं दिनश्रीर्गता रागोऽस्मिन्मम चेतसीव सवितुर्बिम्बेऽधिकं लक्ष्यते। चक्राह्वोऽहमिव स्थितः सहचरीं ध्यायन्नलिन्यास्तटे संजाताः सहसा ममैव भुवनस्याप्यन्धकारा दिशः ॥७२॥पादाङ्गुष्ठेन भूमिं किसलयरुचिना सापदेशं लिखन्ती भूयोभूयः क्षिपन्ती मयि सितशबले लोचने लोलतारे। वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना यन्मां नोवाच किंचित्स्थितमपि पुरतो मानसं तद्दुनोति ॥ ७३ ॥ **मदनं प्रति उक्तयः ॥** स्वयमप्राप्तदुःखो यः स दुनोति न विस्मयः। त्वं स्मर प्राप्तदाहोऽपि दहसीति किमुच्यते ॥ ७४ ॥ अद्यापि नूनं हरकोपवह्निस्त्वयि ज्वलत्यौर्व इवाम्बुराशौ। त्वमन्यथा मन्मथ मद्विधानां भस्मावशेषः कथमेवमुष्णः ॥ ७५ ॥ वृथैव संकल्पशतैरजस्रमनङ्ग नीतोऽसि मयातिवृद्धिम्। आकृष्य चापं श्रवणोपकण्ठे मय्येव युक्तस्तव बाणमोक्षः ॥ ७६ ॥ क्व रुजा हृदयप्रमाथिनी क्व च ते विश्वसनीयमायुधम्। मृदुतीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ॥ ७७ ॥ बाणाग्निमस्तकरुणो विकिरन्ममाङ्गे प्रायो न वेत्सि विषमास्त्रवर स्वपीडाम्। संताप एष भवता किमु नान्वभावी चण्डीपतेरलिकलोचनगोचरेण ॥ ७८ ॥ तव कुसुमशरत्वं शीतरश्मित्वमिन्दोर्द्वयमिदमयथार्थं दृश्यते मद्विधेषु। विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैस्त्वमपि कुसुमबाणान्वज्रसारीकरोषि ॥ ७९ ॥ हृदि बिसलताहारो नायं भुजंगमनायकः कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः। मलयजरजो नेदं भस्म प्रियारहिते मयि प्रहर न हरभ्रान्त्यानङ्ग क्रुधा किमु धावसि ॥ ८० ॥ पाणौ मा कुरु चूतसायकममुं मा चापमारोपय क्रीडानिर्जितविश्वमूर्च्छितजनाघातेन किं पौरुषम्। तस्या एव मृगीदृशो मनसिजप्रेङ्खत्कटाक्षानलश्रेणीजर्जरितं मनागपि मनो नाद्यापि संधुक्षते ॥ ८१ ॥ रे रे निर्दय दुर्निवार मदन प्रोत्फुल्लपङ्केरुहं बाणं संवृणु संवृणु त्यज धनुः किं पौरुषं मां प्रति। कान्तासङ्गवियोगदुःखदहनज्वालावलीढं वपुः शूराणां मृतमारणे न हि परो धर्मः प्रयुक्तो बुधैः ॥ ८२ ॥ आपुङ्खाग्रममी शरा मनसि मे मग्नाः समं पञ्च ते निर्दग्धं विरहाग्निना वपुरिदं तैरेव सार्धं मम। तत्कंदर्प निरायुधोऽसि भवता जेतुं न शक्तः परो दुःखी स्यामहमेक एव सकलो लोकः सुखं जीवतु ॥ ८३ ॥ बाणाः पञ्च मनोभवस्य नियतास्तेषामसंख्यो जनः प्रायोऽस्मद्विध एव लक्ष्य इति यल्लोके प्रसिद्धिं गतम्। दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसंख्यैरयं विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम् ॥ ८४ ॥ **चन्द्रं प्रति उक्तयः ॥** तारापते कुमुदिनीमनुकूलकान्तां पादेन पीडयसि कम्पयसि द्विजातीन्। विद्वेषमाचरसि किं च वियोगिलोके नक्तंचरस्य भवतः करुणा कुतः स्यात् ॥ ८५ ॥ अभिलषसि यदिन्दो वक्त्रलक्ष्मीं मृगाक्ष्याः पुनरपि सकृदब्धौ मज्ज संक्षालयाङ्कम्। सुविमलमथ बिम्बं पारिजातस्य गन्धैः सुरभय वद नो चेत्त्वं क्व तस्या मुखं क्व ॥ ८६ ॥ सूतिर्दुग्धसमुद्रतो

पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥ ५ ॥ इह वटवृक्षे यक्षः प्रतिवसति दिवापि यत्र भयशङ्का । तस्मिन्नभिनववध्वा नीता वीतोदयाः क्षणदाः ॥ ६ ॥ सुखशय्या ताम्बूलं विश्रब्धाश्लेषचुम्बनादीनि । तुलयन्ति न लक्षांशं त्वरितक्षणचौर्यसुरतस्य ॥ ७ ॥ दिवसे घटिकास्त्रिंशास्त्रिंशद्घटिकाः परं रजनौ । लक्षं नगरयुवानस्तात विधातः किमाचरितम् ॥ ८ ॥ आरोपिता शिलायामश्मेव त्वं भवेति मन्त्रेण । मग्नापि परिणयापदि जारमुखं वीक्ष्य हसितैव ॥ ९ ॥ कुलपतनं जनगर्हां बन्धनमपि जीवितस्य संदेहम् । अङ्गीकरोति सकलं वनिता परपुरुषसंसक्ता ॥ १० ॥ सखि सुखयत्यवकाशे प्राप्तः प्रेयान्यथा तथा न गृहे । वातादवारितादपि भवति गवाक्षानिलः शीतः ॥ ११ ॥ अम्भोरुहाक्षि शंभोश्चरणावाराधितौ केन । यस्मै विवलितवदना मदनाकूतं विभावयसि ॥ १२ ॥ द्वारि स्तम्भविलग्ना प्रियसखि दृष्टिं पथि क्षिपसि । प्रहिणोषि भाग्यभाजि प्रेयसि दूतीमिव भ्रमरीम् ॥ १३ ॥ सुभगं वदति जनस्तं निजपतिरिति नैष रोचते मह्यम् । पीयूषेऽपि हि भेषजभावोपहिते भवत्यरुचिः ॥ १४ ॥ इह नगरे प्रतिरथ्यं भुजंगसंबाधरुचिरसंचारे । सुन्दरि मम मतमेतन्नकुलप्रतिपालनं श्रेयः ॥ १५ ॥ केलिः प्रदहति मज्जां शृङ्गारोऽस्थीनि चाटवः कटवः । बन्धक्याः परितोषो न स्यादनभीष्टदपत्योः ॥ १६ ॥ संदिग्धे परलोके जनापवादे च जगति बहुचित्रे । स्वाधीने पररमणे धन्यास्तारुण्यफलभाजः ॥ १७ ॥ यदि भवति दैवयोगात्पुमान्विरूपोऽपि बन्धकी रहसि । न तु कृच्छ्रादपि भद्रं निजकान्तं सा भजत्येव ॥ १८ ॥ मया कुमार्यापि न सुप्तमेकया न जारमुत्सृज्य पुमान्विलोकितः । अनेन गोत्रस्थितिपालनेन मे प्रसन्नतामेतु भवोपकारिणी ॥ १९ ॥ विवादशीलां स्वयमर्थचोरिणीं परानुकूलां बहुपाकपाकिनीम् । आक्रोशिनीं दुर्विषहप्रकोपिनीं त्यजन्ति भार्यां दशपुत्रमातरम् ॥ २० ॥ पाणौ गृहीतापि पुरस्कृतापि स्नेहेन नित्यं परिवर्धितापि । परोपकाराय भवेदवश्यं वृद्धस्य भार्या करदीपिकेव ॥ २१ ॥ प्रियो मयैवावचितैः प्रसूनैर्हृष्टो हरस्थां तनुते सपर्याम् । अतो नतानेकलतावृतानि यास्यामि सायं विपिनानि सख्यः ॥ २२ ॥ शिरसि शिरसिजं दृशोर्निमेषं विटपिनि पल्लवमालये तृणं वा । गणयितुमपि पारयन्ति केचित्प्रियसखि के कथयन्तु जारसंख्याम् ॥ २३ ॥ पतिरतीव धनी सुभगो युवा परविलासवतीषु पराङ्मुखः । शिशुरलंकुरुते भवनं सदा तदपि सा सुदती रुदती कुतः ॥ २४ ॥ नाम्बुजैर्न कुसुमैरुपमेयं स्वैरिणीनयनपङ्कजयुग्मम् । नोदये दिनकरस्य नवेन्दोः केवलं तमसि यस्य विकासः ॥ २५ ॥ दृग्भङ्गभङ्गिमशतैरसतीरहस्यमन्वेषयन्कपटभिक्षुक लक्षितोऽसि । स्वस्य प्रभुर्न च भवांश्च ततः क्षमस्व भिक्षो पटो कणमिषादयमञ्जलिस्ते ॥ २६ ॥ ब्रह्मैव सत्यमखिलं नहि किंचिदस्ति तस्मान्न मे सखि परावरभेदबुद्धिः । जारे तथा निजवरे सदृशोऽनुरागो व्यर्थं किमर्थमिमतीति कदर्थयन्ति ॥ २७ ॥ जन्मैव मास्तु यदि वा न नितम्बिनीषु तत्रापि चेद-

इह नैव कुलाङ्गनासु । हा धिग्विधे कुलवधूरथ चेद्भवेयं नैवास्तु च क्वचन मे मनसोऽनुब-
न्धः ॥ २८ ॥ वयं बाल्ये बालांस्तरुणिमनि यूनः परिणतावपीच्छामो वृद्धान्परिणयविधौ
नः स्थितिरियम् । त्वयारब्धं जन्म क्षपयितुमनेनैकपतिना न मे गोत्रे पुत्रि क्वचिदपि सती-
लाञ्छनमभूत् ॥२९॥ दृशा किंचित्किंचिच्चलितभुजलीलाविलसितैः कराघातैः किंचिन्नख-
विलिखनैः किंचिदधिकम् । स्पृशन्त्यः संबाधे गुरुभिरनभिप्रेक्षितपथे यथेष्टं चेष्टन्ते स्फुट-
कुचतटाः पश्य कुलटाः ॥३०॥ अनार्यप्रज्ञानामिह जनवधूनां हि मनसो महाशल्यं कर्णे तन
नवकजम्बूकिसलयः । भ्रमन्भिक्षाहेतोरधिनगरि बुद्धोऽसि न मया त्वयैतावद्देशः पथिक व
विधेयः पुनरपि ॥३१॥ अयं रेवाकुञ्जः कुसुमशरसेवासमुचितः समीरोऽयं वेलानवविदलदे-
लापरिमलः । इयं प्रावृड्धन्या नवजलदविन्यासचतुरा वराधीनं चेतः सखि किमपि कर्तुं मृग-
यते ॥३२॥ गुरुत्रासादासादितभवदुपालम्भवचसां मुहुः स्मारं स्मारं कथमपि निशीथे सम-
गमम् । इदानीं मुञ्च त्वं दयित पुनरेष्यामि समभूदुषःकालीनोऽयं चटुलचटकालीकलकलः
॥ ३३ ॥ स्थितिर्गेहोपान्ते परिजनपरीहासकलना मुहुर्यातायाते सकृदपि गृहे व्याजगमनम् ।
मुहुस्तद्भोग्येऽपि क्षणपरिचयो वस्तुनि दृशः समुत्पन्नप्रेम्णः सकलमिदमापातसुखदम्
॥३४॥ ताम्बूलाक्तं दशनमसकृद्दर्शयन्तीह चेटी घोटीह्रेषाविकृतविरुतं हेतुहीनं हसन्ती ।
स्थानस्थानस्खलितपदविन्यासमाभासमाना यूनामग्रे वसति कुटिलं नर्तितोच्चैर्नितम्बम् ॥३५॥
ज्ञाता मैत्री सहजमधुरा यातिभिर्लोचितान्तैः कर्णाकर्णि प्रथितमयशो बन्धुवर्गैरभाणि ।
संप्रत्येवं तदपि न मनाङ्मुञ्चति प्राणनाथं को जानीते कुवलयदृशः कीदृशः प्रेमबन्धः ॥३६॥
भ्रूभेदैः कतिचिद्गिरा कुटिलया काश्चित्कियत्यः स्मितैः स्वैरिण्यः कथयन्ति मन्मथरसव्या-
पारवश्यं मनः । कासांचित्पुनरङ्गकेषु मसृणच्छायेषु मध्यस्थितो भावः काचपुटेषु पुष्करमिव
प्रव्यक्तमालोक्यते ॥ ३७ ॥ यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मी-
लितमालतीसुरभयः प्रौढाः कदम्बानिलाः । सा चैवास्मि तथापि चौर्यसुरतव्यापारलीला-
विधौ रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥ ३८ ॥ दृष्टिं हे प्रतिवेशिनि क्षणमि-
हाप्यस्मद्गृहे दास्यसि प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति । एकाकि-
न्यपि यामि तद्वनमितः स्रोतस्तमालाकुलं नीरन्ध्राः स्तनमालिखन्तु जठरच्छेदानलग्रन्थय
॥ ३९ ॥ शुश्रूषस्व गुरून्निवर्तय सखीर्वन्दस्व बन्धुस्त्रियः कावेरीतटसंनिविष्टनयने मुग्धे
किमुत्ताम्यसि । आस्ते पुत्रि समीप एव भवनादेलालतालिङ्गितन्यञ्चद्बालतमालदन्तुरदरी
तत्रापि गोदावरी ॥ ४० ॥ भद्रं तस्य तरोः स्वयं चिरकृतप्रस्थानकं कथ्यतां दुर्वारस्तम-
रण्यवह्निरदहद्धिग्दारुणं दुर्वचः । मा खिद्यस्व ततः प्रभृत्यनुदिनं तस्याः पतद्भिर्दृशोरम्भो-
भिः परिणद्धपल्लवघनच्छायस्तरुर्वर्धते ॥ ४१ ॥ स्वामी निःश्वसितेऽप्यसूयति मनोजिघ्रः
सपत्नीजनः श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः । तद्दूरादयमञ्जलिः किमधुना

दृग्भङ्गिभावेन ते वैदग्धीमधुरप्रपञ्चचतुर व्यर्थोऽयमत्र श्रमः ॥ ४२ ॥ आयातासि विमुञ्च वेपथुभरं दृष्टासि केनासि नो नीलं चोलममुं विमुञ्च हरतु स्वेदं निशीथानलः । इत्यन्तर्भयसन्नकण्ठमसकृद्यामीति तल्पं गता त्रस्यन्ती परिरभ्यते सुकृतिभिः स्वैरं नवस्वैरिणी ॥ ४३ ॥ सव्रीडार्धनिरीक्षणा यदुभयोर्यद्दूतिसंप्रेरणमद्य श्वो भविता समागम इति प्रीतिप्रसादं वचः । प्राप्ते कालसमागमे सरभसं जम्बूवनालिङ्गन तत्कामस्य फलं तदेव सुरतं शेषः पशूनां स्थितिः ॥ ४४ ॥ इन्दुर्यत्र न निन्द्यते न मधुरं दूतीवचः श्रूयते नोच्छ्वासा हृदयं दहन्त्यशिथिला नापैति कार्श्यं वपुः । साधूनामनुकूलिकां स्वगृहिणीमालिङ्ग्य यत्सुप्यते तत्किं प्रेम गृहाश्रमव्रतमिदं कष्टं समाचर्यते ॥ ४५ ॥ चेत्पौरादपि शङ्कसे हिमरुचोरप्यर्चिषो लज्जसे भोगीन्द्रादपि चेद्बिभेषि तिमिरस्तोमादपि त्रस्यसि । चेत्कुञ्जादपि दूयसे जलघटध्वानादपि क्षुभ्यसि प्रायः पुत्रि हतास्मि हन्त भविता त्वत्तः कलङ्कः कुले ॥ ४६ ॥ आः पाकं न करोषि पापिणि कथं पापी त्वदीयः पिता रण्डे जल्पसि किं तवैव जननी रण्डा त्वदीया स्वसा । निर्गच्छ त्वरितं गृहाद्बहिरितो नेदं त्वदीयं गृहं हा हा नाथ ममाद्य देहि मरणं जारस्य भाग्योदयः ॥ ४७ ॥ कार्ये सत्यपि जातु याति न बहिर्नाप्यन्यमालोकते साध्वीरप्यनुकुर्वती गुरुजनं श्वश्रूं च शुश्रूषते । विस्रम्भं कुरुते च पत्युरधिकं प्राप्ते निशीथे पुनर्निद्राणे सकले जने शशिमुखी निर्याति रन्तुं विटैः ॥ ४८ ॥ आकारेण शशी गिरा च परभृत्पारावतश्चुम्बने हंसश्चङ्क्रमणे समं दयितया रत्यां प्रमत्तो गजः । इत्थं भर्तरि मे समस्तयुवतिश्लाघ्येऽपि नो रोचते मद्भाग्येन विवाहितः पतिरिति स्यान्नैकदोषो यदि ॥ ४९ ॥ ज्ञातं ज्ञातिजनैः प्रमृष्टमयशो दूरं गता धीरता त्यक्ता ह्रीः प्रतिपादितोऽप्यविनयः साध्वीपदं प्रोज्झितम् । लुप्ता चोभयलोकसाधुपदवी दत्तः कलङ्कः कुले भूयो दूति किमन्यदस्ति यदसावद्यापि नागच्छति ॥ ५० ॥ देहे दुर्ललितस्य देवरशिशोः स्फोटव्रणो दारुणो यातस्तेन वनस्पतित्वचमुपाहर्तुं मया गम्यते । दृप्यन्तु श्वसितानि घर्मसलिलैः पत्राणि लुप्यन्तु वा वक्षो वा विलिखन्तु हन्त नखरैः क्रुद्धाः कपिश्रेणयः ॥ ५१ ॥ न्यस्तं पन्नगमूर्ध्नि पादयुगलं भक्तिर्विमुक्ता गुरोस्त्यक्ता प्रीतिरकारि किं न भवतो हेतोर्मया दुष्कृतम् । अङ्गानां शतयातना नयनयोः कोऽपि क्रमो रौरवः कुम्भीपाकपराभवश्च मनसो युक्तं त्वयि प्रस्थिते ॥ ५२ ॥ श्वश्रूः पद्मदलं ददाति तदपि भ्रूसंज्ञया गृह्यते सद्यो मर्मरशङ्कया न च तया संस्पृश्यते पाणिना । यातुर्वाचि सुहृद्गणस्य वचसा प्रत्युत्तरं दीयते श्वासः किं तु न मुच्यते हुतवहक्रूरः कुरंगीदृशा ॥ ५३ ॥ नारीणां खलु बन्धुरन्धुतमसः पाथोदरः सोदरः कुञ्जं नाभिगृहं निशा सहचरी सेव्यः स्मरः क्ष्मापतिः । इत्थं चारुचकोरचञ्चलदृशां यासां मतिर्जायते तासामेव यशः सुधांशुधवलं तासां च सौख्यं तदा ॥ ५४ ॥ कोकः स्तोकविमुक्तमौक्तिकभरो निःस्पन्दमिन्दीवरं चापं चामलवर्जितं हिमकरक्रोडे तमः क्रीडति ।

वातः कातरयत्यपाकृतरसं बन्धूकमेतावता वार्ता कापि कदापि पाणिपिहिता कस्यापि वा तिष्ठति ॥ ५५ ॥ हंसैः शैवलमञ्जरीति कबरी चञ्चूभिराकर्षिता वक्त्रे चन्द्रधिया चकोरवनिता चक्रे नखैरक्रमम् । भृङ्गैः पङ्कजकोरकप्रतिभया वक्षोरुहो वीक्षितस्तन्मातः करवै पुनर्न सरसीतोयावगाहोद्यमम् ॥ ५६ ॥ आस्तां विश्वसनं सखीषु विदिताभिप्रायसारे जने तत्राप्यर्पयितुं दृशं सुरुचिरां शक्नोमि न व्रीडया । लोकोऽप्येष परोपहासकुशलः सूक्ष्मेङ्गितज्ञोऽप्यलं मातः कं शरणं व्रजामि हृदये जीर्णोऽनुरागानलः ॥ ५७ ॥ कार्येणापि विडम्बनं परगृहे श्वश्रूर्न संमन्यते शङ्कामारचयन्ति यूनि भवनं प्राप्ते मिथो यातरः । वीथीनिर्गमनेऽपि तर्जयति च क्रुद्धा ननान्दा पुनः कष्टं हन्त मृगीदृशां पतिगृहं प्रायेण कारागृहम् ॥५८॥ एकान्ते च तनौ गृहं शशिमुखो यान्यादृशो दृश्यते क्षिप्रं साधय यातु पुत्रि सदने भुक्तान्यमावासकम् । श्वश्र्वा संभ्रमिता किलेति बहुशः संप्रेरयन्त्या वधूः पान्थं वीक्ष्य बभञ्ज सस्मितमुखी सैवार्धसिद्धोदनम् ॥ ५९ ॥ संपत्कस्याद्य तारा भवति तरलिता यत्पुरो नेत्रतारा दृष्टा केनाद्य काञ्ची यदभिमुखगता वेपते रत्नकाञ्ची । उग्रः कस्याद्य तुष्टः सखि यदनुमते कश्चिदुग्रोऽनुतापः स्नातं केनाद्य वेणीपयसि विलुलिता यत्कृते कापि वेणी ॥६०॥ पश्यन्ति स्निग्धमुग्धं प्रतिकलमधुरैर्मोहयन्त्यङ्गहारैः साकूतैर्मन्दहासैरपि परपुरुषाञ्शश्वदानन्दयन्ति। चेष्टन्ते चेत एते किमपि परिचयाद्धारयिष्यन्ति तेषां प्राणान्को वेद लोके परजलजदृशां चित्तमत्यन्तलोलम् ॥६१॥ **पान्थसंकेतः** ॥ ग्रामेऽस्मिन्प्रस्तरप्राये न किंचित्पान्थ विद्यते । पयोधरोन्नतिं दृष्ट्वा वस्तुमिच्छसि चेद्वस ॥ ६२ ॥ पान्थ मन्दमते किंवा संतापमनुविन्दसि । पयोधरं समाशास्व येन शान्तिरवाप्नुयात् ॥६३॥ वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः । अहमेकाकिनी बाला तवेह वसतिः कुतः ॥६४॥ त्वामिव पथिक प्रियो मे विटपिस्तोमेषु गमयति क्लेशान् । किमितोऽन्यत्कुशलं मे संप्रति यत्पान्थ जीवामि ॥६५॥ किमिति कृशासि कृशोदरि किं तव परकीयवृत्तान्तैः। कथय तथापि मुदे मम कथयिष्यति पान्थ तव जाया ॥६६॥ भो पान्थ पुस्तकधर क्षणमत्र तिष्ठ वैद्योऽसि किं गणितशास्त्रविशारदोऽसि । केनौषधेन मम पश्यति भर्तुरम्बा किं वागमिष्यति पतिः सुचिरप्रवासी ॥ ६७॥ एकाकिनी यदबला तरुणी तथाहमस्मिन्गृहे गृहपतिश्च गतो विदेशे । शङ्कां विशेत्तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥ ६८ ॥ भवनमिव मदीयं निर्जनः पान्थ पन्थाः कुसुमशर इवास्मिस्तस्करा दुर्निवाराः । गृहप इव पतङ्गोऽप्येष यातो दिगन्तान्मदनसुभग भूयो नैव गन्तुं समीहे ॥ ६९ ॥ यामिन्येषा बहलजलदैर्बद्धभीमान्धकारा निद्रां यातो मम पतिरसौ क्लेशितः कर्मदुःखैः । बाला चाह मनसिजभयात्त्रासगाढप्रकम्पा ग्रामश्चोरैरयमुपहतः पान्थ निद्रां जहीहि ॥७०॥ इयं सुरतरंगिणी न पुनरत्र नौसंगमो भवेत्तरणिमज्जनं पथिक नैव पान्थागमः । निधाय हृदये सदा विपुलचारुकुम्भद्वयं सखे घनघनागमे घनरसस्य पारं व्रज

॥ ७१ ॥ वाणिज्येन गतः स मे गृहपतिर्वार्तापि न श्रूयते प्रातस्तज्जननी प्रसूततनया जामातृगेहं गता । बालाहं नवयौवना निशि कथं स्थातव्यमस्मिन्गृहे सायं संप्रति वर्तते पथिक हे स्थानान्तरं गम्यताम् ॥ ७२ ॥ रे रे पान्थ कुतो भवान्नगरतो वार्ता न चापि श्रुता बाढं ब्रूहि युवा पयोदसमये हित्वा प्रियां जीवति । सत्यं जीवति जीवतीति कथिता वार्ता मयापि श्रुता विस्तीर्णा पृथिवी जनोऽपि विविधः किं किं न संभाव्यते ॥ ७३ ॥ शून्यं वेश्म चिरायितो गृहपतिर्जाताधुना शर्वरी स्थातुं नोचितमत्र गच्छ निभृतं लोकैरनालक्षितः । इत्थं लोलदृशा ह्यसाध्वभिहितो दासीमुखेनाध्वगः स्थित्वा किंचिदिव क्व यामि रजनी प्राप्तेत्युदीर्य स्थितः ॥ ७४ ॥ यामः सुन्दरि याहि पान्थ दयिते शोकं वृथा मा कृथाः शोकस्ते गमने कुतो मम ततो बाष्पं कथं मुञ्चसि । शीघ्रं न व्रजसीति मां गमयितुं कस्मादियं ते त्वरा भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे संभ्रमः ॥ ७५ ॥ स्मर्तव्या वयमिन्दुसुन्दरमुखि प्रस्तावतोऽपि त्वया स्यादेवं यदि नाथ दास्यति विधिर्जातिस्मरत्वं मम । एकस्मिन्नपि जन्मनि प्रियतमे जातिस्मरत्वं कुतः प्राणाः पान्थ समं त्वयैव चलिताः क्वाद्यापि जन्मैकता ॥ ७६ ॥

---

## वेश्यागर्हणम् ।

वेश्यासौ मदनज्वाला रूपेन्धनसमेधिता । कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ १ ॥ अयं च सुरतज्वाला कामाग्निः प्रणयेन्धनः । नराणां यत्र हूयन्ते यौवनानि धनानि च ॥ २ ॥ इह सर्वस्वफलिनः कुलपुत्रमहाद्रुमाः । निष्फलत्वमलं यान्ति वेश्याविहगभक्षिताः ॥ ३ ॥ धनाशा कैतवस्नेहो वितथैश्चित्ततोषणम् । एकमप्यस्ति नास्मासु कथं वेश्यासमा वयम् ॥ ४ ॥ कष्टं जीवति गणिका गणकोऽपि च राजसेवको वैद्यः । दिवसे दिवसे मरणं परस्य यश्चित्तरञ्जनं वृत्तिः ॥ ५ ॥ न पर्वताग्रे नलिनी प्ररोहति न गर्दभा वाजिधुरं वहन्ति । यवाः प्रकीर्णा न भवन्ति शालयो न वेशजाताः शुचयस्तथाङ्गनाः ॥ ६ ॥ हारहीरकहिरण्यभूषणैस्तोषमेति गणिका धनैषिणी। प्रेमकोमलकटाक्षवीक्षितैरेव जीवति कुलाङ्गनाजनः ॥ ७ ॥ एता हसन्ति च रुदन्ति च वित्तहेतोर्विश्वासयन्ति पुरुषं न च विश्वसन्ति । तस्मान्नरेण कुलशीलसमन्वितेन वेश्याः श्मशानघटिका इव वर्जनीयाः ॥ ८ ॥ जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च । यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ९ ॥ केशः कुन्दमिषादिवोपहसति द्रव्यैर्विहीनाञ्जनान्यूनां ग्रन्थिघनं विलोकितुमिवोद्ग्रीवस्तनास्तिष्ठति । प्रेमच्छेदकृपाणवल्लिसुषमां रोमालिरालम्बते यस्याः सा कथमस्तु चेतसि चमत्काराय वाराङ्गना ॥ १० ॥ वाप्यां स्नाति विचक्षणो द्विजवरो मूर्खो-

ऽपि वर्णाधमः फुल्लां नाम्यति वायसोऽपि हि लतां या नामिता बर्हिणा। ब्रह्मक्षत्रविशस्तरन्ति च यया नावा तयैवेतरे त्वं वापीव लतेव नौरिव जनं वेश्यासि सर्वं भज ॥ ११ ॥

---

## अष्टनायिकाः।

**स्वाधीनपतिका** ॥ अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः। किं त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः पतिर्नान्यतो दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःखितम् ॥ १ ॥ श्वश्रूः पश्यति नैव पश्यति यदि भ्रूभङ्गवक्रेक्षणा मर्मच्छेदपटुप्रतिक्षणमसौ ब्रूते ननान्दा वचः। अन्यासामपि किं ब्रवीमि चरितं स्मृत्वा मनो वेपते कान्तः स्निग्धदृशा विलोकयति मामेतावदागः सखि ॥ २ ॥ **खण्डिता** ॥ सत्यमेव गदितं त्वया विभो जीव एक इति यत्पुरावयोः। अन्यदारनिहिता नखव्रणास्तावके वपुषि पीडयन्ति माम् ॥ ३ ॥ नवनखपदमङ्गं गोपयस्यंशुकेन स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम्। प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्पन्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥ ४ ॥ भवतु विदितं व्यर्थालापैरलं प्रिय गम्यतां तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः। तव परि तथा रूढं प्रेम प्रपन्नमिमां दशां प्रकृतितरले का नः पीडा गते हतजीविते ॥ ५ ॥ जातस्ते निशि जागरो मम पुनर्नेत्राम्बुजे शोणिमा निःपीतं भवता मधु प्रविततं व्याघूर्णितं मे मनः। भ्राम्यद्भृङ्ग घने निकुञ्जभवने लब्धं त्वया श्रीफलं पञ्चेषुः पुनरेष मां बहुतरैः क्रूरैः शरैः कृन्तति ॥ ६ ॥ प्रातः प्रातरुपागतोऽसि जनिता निर्निद्रता चक्षुषोर्मन्दाया मम गौरवं व्यपहृतं प्रोत्पादितं लाघवम्। किं तद्यन्न कृतं त्वया रमण भीर्मुक्ता मया गम्यते दुःखं तिष्ठति यच्च पथ्यमधुना कर्तास्मि तच्छ्रोष्यसि॥७॥ **अभिसारिका** ॥ इह जगति रतीशप्रक्रियाकौशलिन्यः कति कति न निशीथे सुभ्रुवः संचरन्ति। मम तु विधिहताया जायमानस्मितायाः सहचरिपरिपन्थी हन्त दन्तांशुरेव ॥८॥ चित्रोत्कीर्णादपि विषधराद्भीतिभाजो निशायां किं नु ब्रूमस्त्वदभिसरणे साहसं नाथ तस्याः। ध्वान्ते यान्त्या यदतिनिभृतं बालयात्मप्रकाशत्रासात्पाणिः पथि फणिफणारत्नरोधी व्यधायि ॥ ९ ॥ अम्भोजाक्ष्याः पुरनवलताधाम्नि सकेतभाजश्चेतोनाथे चिरयति भृशं मोहनिद्रां गतायाः। स्वच्छं नाभीह्रदवलयित कान्तरत्नांशुजालं तोयभ्रान्त्या पिबति हरिणी विस्मयं च प्रयाति ॥१०॥ किमुत्तीर्णः पन्थाः कुपितभुजगीभोगविषमो विसोढा भूयस्यः किमिति कुलपालीकटुगिरः। इति स्मारं स्मारं दरदलितशीतद्युतिरुचौ सरोजाक्षी शोणं दिशि नयनकोणं विकिरति ॥ ११ ॥ जनो दुर्लक्ष्णोऽयं कुलममलिनं वर्त्म विषमं पतिश्छिद्रान्वेषी प्रणयिवचनं दुःपरिहरम्। अतः काचित्तन्वी रतिविहितसंकेतगतये गृहद्वारं वारं निरगमदथ प्राविशदथ ॥ १२ ॥ सितं वसनमर्पितं वपुषि नीलचोलभ्रमान्मया मृगमदाशया मलयजद्रवः सेवितः

। करेण परिबोधितः स्वजनशङ्कया दुर्जनः परं परमपुण्यतः सखि न लङ्घिता देहली ॥१३॥ प्रत्यावृत्य यदि व्रजामि भवनं वाचां भवेत्प्रच्यवो निर्गच्छामि निकुञ्जमेव यदि वा को वेद किं स्यादितः। तिष्ठामो यदि वा क्वचिद्वनतटे किं जातमेतावता मध्ये वर्त्म कलानिधेः समुदयो जातः किमातन्यताम् ॥ १४ ॥ भ्रातः कङ्कण किं कदाप्यासि घनाश्लेषेषु विश्लेषितं दूरे किङ्किणि किं कृताप्यासि रतारम्भे रणत्कारिणि। किं मञ्जीर बहिः कृतोऽप्यसि रहस्तल्पाधिरोहे मया संकेताध्वनिबद्धवैरमिव यन्मौखर्यमालम्बसे ॥ १५ ॥ उत्क्षिप्तं करकङ्कणद्वयमिदं बद्धा दृढं मेखला यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता। आरब्धे रभसान्मया प्रियसखि क्रीडाभिसारोत्सवे चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः ॥ १६ ॥ एषा फुल्लकदम्बनीपसुरभौ काले घनोद्भासिते कान्तस्यालयमागता समदना हृष्टा जलार्द्रालका। विद्युद्वारिदगर्जितैः सचकिता त्वद्दर्शनाकाङ्क्षिणी पादौ नूपुरलग्नकर्दमधरौ प्रक्षालयन्ती स्थिता ॥ १७ ॥ मार्गे पङ्कचिते घनान्धतमसे निःशब्दसंचारया गन्तव्या च मया प्रियस्य वसतिर्मुग्धेति कृत्वा मतिम्। आजानूद्धृतनूपुराः करतलेनाच्छाद्य नेत्रे भृशं कृच्छ्रेणाप्तपदस्थितिः स्वभवने पन्थानमभ्यस्यति ॥ १८ ॥ छिद्रान्वेषणतत्परः प्रियसखी प्रायेण लोकोऽधुना रात्रिश्चापि घनान्धकारबहला गन्तुं न ते युज्यते। मा मैवं सखि वल्लभः प्रियतमस्तस्योत्सुका दर्शने युक्तायुक्तविचारणा यदि भवेत्स्नेहाय दत्तं जलम् ॥ १९ ॥ दूती विद्युदुपागता सहचरी रात्रिः सहस्थायिनी दैवज्ञो दिशति स्वनेन जलदः प्रस्थानवेलां शुभाम्। वाचं माङ्गलिकीं तनोति तिमिरस्तोमोऽपि झिल्लीरवैर्जातोऽयं दयिताभिसारसमयो मुग्धे विमुञ्च त्रपाम् ॥ २० ॥ **कलहान्तरिता** ॥ न वरीभरीति कबरीभरे स्रजो न चरीकरीति मृगनाभिचित्रकम्। विजरीहरीति न पुरेव मत्पुरो विवरीवरीति न च विप्रियं प्रिया ॥ २१ ॥ तत्तद्वदत्यपि यथावसरं हसन्त्यप्यालिङ्गनेऽपि न निषेधति चुम्बनेऽपि। किं तु प्रसादनभयादपि निह्नुतेन कोपेन कोऽपि विहितोऽद्य रसावतारः ॥ २२ ॥ न तिर्यगवलोकितं भवति चक्षुरालोहितं वचोऽपि परुषाक्षरं न च पदेषु संगच्छते। हिमार्त इव वेपते सकल एव बिम्बाधरः प्रकामविनते भ्रुवौ युगपदेव भेदं गते ॥ २३ ॥ मय्यायाते सपदि शयनादुत्थितं चाटु वाक्यं बध्वा पाणी बहु निगदितं क्षालितं पादपद्मम्। दत्त्वा वीटीं सविनयमथोद्वीजितं तालवृन्तैर्ब्रूते कोपं कुवलयदृशो भूयसी भक्तिरेव ॥ २४ ॥ पयःपीठं दत्ते त्वरितमभिधत्ते न च वचः समाज्ञामाधत्ते शिरसि न विधत्ते च मिलनम्। इति स्वान्ते गोपायितनिबिडकोपा प्रतिपदं कृशोदर्याश्चर्यात्प्रियमहह पर्याकुलयति ॥ २५ ॥ आनन्द क्वचिदञ्च मुञ्च हृदयं चातुर्यधैर्ये त्वया स्थेयं क्वेति विचार्यतां रसिकते निर्याहि पर्याकुला। रक्ताम्भोजपरीतपद्मद नदत्पक्ष्मोपमानक्षम क्षुभ्यत्पक्ष्मचलाचलेक्षणयुगं पश्यामि तस्या मुखम् ॥ २६ ॥ मानम्लानमना मनागपि नतं